# श्रीविष्णुसहस्रनामस्तोत्रम्

(प्रथमसम्पुटम्)

तारकब्रह्मानन्दसरस्वतीयविवृतिसमेतश्रीशाङ्करभाष्यसहितम्




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६१

ORIENTAL RESEARCH INSTITUTE, SANSKRIT SERIES 106

GENERAL EDITOR

H. DEVEERAPPA, M.A.,

*Director*

# VIṢṆUSAHASRANĀMASTOTRAM

VOL. I

WITH

THE ŚĀNKARABHĀṢYA

AND

THE VIVṚTI OF BHĀṢYA

BY

TĀRAKABRAHMĀNANDASARASWATY

EDITOR

VIDWAN R. RAMA SASTRY

*Research Assistant I*



ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1961

# अनुक्रमणिका

# भू मि का

॥ हरेर्नाम जपन् मर्त्यः कलौ याति परां गतिम् ॥

[भगवान् वेदव्यासः]

विदितमेवैतत्समेषां विदुषां यत् पूज्यतमः करुणावारिराशि-धर्मरक्षको भगवान् युगव्यवस्थां कुर्वन्नादौ गतकल्पीयं वेदं स्मृत्वैक-रूपतया तं ब्रह्मादिद्वारा लोके निःश्वासवदनायासेन प्रवर्तयामासेति। गच्छता कालेन मनुष्याणामुत्साहतपोयोगादिजप्रभावपठनधारणा-दिशक्तिक्षयपर्यालोचनया जगतो हिताय तत्तदात्मनावतीर्य प्रत्येक-स्मिन्नपि चतुर्युगे द्वापरे द्वापरे एकतयावस्थितं वेदमनन्ताभिः शाखाभिः ऋग्यजुस्सामाथर्वणात्मना विभज्यासौ वेदव्यास इत्य-न्वर्थाभिधानो भवति। स एव सत्यभामा भामेतिवन्नामैकदेश-विवक्षया व्यास इत्यप्यभिधीयते। यस्मिन् चतुर्युगे यां मूर्ति-मवलम्ब्य वेदं विभजति सैव भगवतो मूर्तिर्वेदव्यासाभिधाना भवति। तदुक्तं विष्णुपुराणे (३-३-७)—

"यया स कुरुते तन्वा वेदमेकं पृथक् प्रभुः।
वेदव्यासाभिधाना तु सा सा मूर्तिर्मधुद्विषः॥" इति।

तदेवं भगवान् गतेषु स्वायम्भुवादिषु षट्सु मन्वन्तरेषु प्रति-द्वापरयुगं वेदं विभज्य सप्तमेऽस्मिन् वैवस्वतमन्वन्तरेऽपि प्रकृत-चतुर्युगीयद्वापरयुगे पराशरात्सत्यवत्यामवतीर्य कृष्णद्वैपायननामा वेदं विभज्याष्टाविंशतितमो वेदव्यासोऽभवत्। एवमन्ये चास्मिन् मन्वन्तरे कृष्णद्वैपायनात्पूर्वं तत्तच्चतुर्युगीयद्वापरयुगे तत्तदात्मनाव-

तीर्य वेदं विभज्य सप्तविंशतिर्व्यासा व्यतीयुः * । व्यक्तं चेदं विष्णुपुराणे (३-३-५)—

"द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हिते ॥" इति ।

स्तोत्रेऽप्यस्मिन् "सर्वदृग्व्यासः" इत्यत्र व्यासपदस्य पृथङ्नामत्वे भाष्यविवृत्योर्विषयोऽयं स्फुटमभिधीयते स्म ॥

अतः सर्वजगद्धितैषी भगवानेवाखिलजगत्प्रतिष्ठाहेतुतया निखिलजगदाधारभूतं धर्मं संस्थापयन् 'धर्मो रक्षति रक्षितः' इति धिया धर्मस्थापनाय धर्मानुष्ठानमेव परं मन्वानस्तदनुष्ठानाय धर्मज्ञानस्यावश्यकत्वाद्धर्मस्य च वेदबोधिततया वेदेनैव धर्मावगमो भवतीति तदवगमाय वेदाध्ययनतद्धारणतदर्थचिन्तनादेरत्यावश्यकतां पश्यन् मनुष्याणामोत्साहतपोयोगाध्ययनधारणादिशक्तिं पर्यालोच्याध्ययनधारणादिसौकर्याय प्रतिद्वापरयुगं तत्तद्वेदव्यासात्मनावतीर्य वेदविभजनेनात्मनः कृतकृत्यतां विजानन् स्वकीयजगद्धितैषितां सम्यग्व्यानञ्जीत् ॥

[भारतं तदुद्भवं च]

अयमेव निरवधिकृपापयःपारावारः परमपुरुषः कृष्णद्वैपायनो वेदव्यासो वेदार्थस्य सुखप्रतिपत्त्यै वेदोपबृंहणान्यनेकानि पुराणा-

---

* प्रथमद्वापरयुगे स्वयम्भूः वेदव्यासः, द्वितीये प्रजापतिः (मनुः), तृतीये उशनाः, चतुर्थे बृहस्पतिः, पञ्चमे सविता, षष्ठे मृत्युः, सप्तमे इन्द्रः, अष्टमे वसिष्ठः, नवमे सारस्वतः, दशमे त्रिधामा, एकादशे त्रिशिखः, द्वादशे भारद्वाजः, त्रयोदशे अन्तरिक्षः, चतुर्दशे वर्णी, पञ्चदशे त्रैयारुणः, षोडशे धनञ्जयः, सप्तदशे ऋतुञ्जयः, अष्टादशे जयः, एकोनविंशे भरद्वाजः, विंशे गौतमः, एकविंशे हर्यात्मा, द्वाविंशे वाजश्रवाः, त्रयोविंशे सोमशुष्कायणः तृणबिन्दुः, चतुर्विंशे वाल्मीकिनामा ऋक्षो भार्गवः, पञ्चविंशे शक्तिः, षड्विंशे पराशरः, सप्तविंशे जातुकर्णः, इत्येवं सप्तविंशतिर्वेदव्यासाः विष्णुपुराणे तृतियांशे तृतीयाध्याये निरूपिताः ।

न्यन्यांश्चानेकान् धर्मग्रन्थान् विरचय्य*संसारसागरनिमग्नसर्वलोकसमुद्दिधीर्षया समस्तविद्यास्थानभूतमखिलपुरुषार्थबोधकं भारतं नामेतिहासरत्नं रचयामास†। यदेतत् "भारतः पञ्चमो वेदः" इति वेदवदखिलपुरुषार्थप्रतिपादकतया वेदसमानवैभवं प्रचकास्ति। धर्मार्थकाममोक्षेषु चतुर्ष्वपि पुरुषार्थेषु अत्रोक्ता एवान्यत्रोक्ताः, अत्रानुक्ता अन्यत्र नोक्ता इत्यनन्यादृशमस्य माहात्म्यम्। तदुक्तम्—

"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ!।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" ॥

इत्यादिना ॥ (भार. स्वर्गा. ५-४४)

[स्तोत्रवैभवम्]

महर्षयोऽपि लोकानुजिघृक्षयैवैतेषु पुराणेतिहासादिषु तत्र तत्र शैववैष्णववैनायकसारस्वतादीन्यनेकानि स्तोत्राणि परिजगुः।

---

* प्रथमं शतकोटिप्रविस्तरं पुराणमेव ब्रह्मणा कृतम्। ततश्च तन्मुखाद्वेदा निस्सृताः। प्रतिद्वापरयुगञ्च भगवान् जनानां ग्रहणधारणाद्यसामर्थ्यं मन्वानः सकललोकहिताय व्यासरूपेणावतीर्य पुराणं वेदञ्च विभजतीति पुराणप्रसिद्धिः। व्यक्ता चैषा स्कान्दे—

पुराणं सर्वशास्त्राणामादौ तु ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवासीदस्मिन् कल्पान्तरे मुने!।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥
स्मृत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः।
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुने!।
व्यासरूपं विभुः कृत्वा संहरेत्स युगे युगे ॥ इति।

† "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्।
को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥"

इति भगवदवतारस्य कृष्णद्वैपायनस्यैव भारतकर्तृत्वं स्पष्टीकृतम्।

स्तुतिभिश्च सर्वेऽपि तृप्यन्ति। लोके जनैः स्वस्वेष्टसम्पादनाय स्वाम्यादयः स्तूयमाना दृश्यन्ते। वेदेष्वपि इन्द्रादयस्तत्र तत्र स्तूयन्ते। तद्यथा—

"यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः।
न त्वा वज्रिन् सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी॥"
(तै. सं. २-४-१४)

"त्वꣳ सोमासि सत्पतिः। त्वꣳ राजोत वृत्रहा।
त्वं भद्रो असि क्रतुः॥" (तै. सं. ४-३-१३)

इत्यादि। देवताश्च स्तुत्यादिना प्रसन्नाः पुरुषांस्तदभिलषितेन योजयन्तीत्येतदपि—

"स एवैनं भूतिं गमयति" (तै. सं. २-१-१)

"तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति (तै. सं २-५-४)
इत्यादिनिगमेनैवावगम्यते॥

किञ्च स्तुत्या असाधारण्येन स्तूयमानस्य स्वरूपं सुपरिचीयते। चेतोऽवस्थितिश्च स्तुत्ये तत्स्वरूपपरिचयेनैव भवति। गुणैः सहस्रशः स्वरूपे निरूपिते स्तुत्यस्यासाधारणपरिचयात्तत्सौख्यातिशयेनान्यत्रानासक्तं चित्तं तत्रैव निलीयते। तदनुगुणतया क्रमशो विषयेभ्यो विनिवृत्तं मनः स्तुत्यैकनिष्ठं परिचिततदसाधारणस्वरूपतया पुनर्विषयेष्वनासक्तं न बाह्येषु प्रवर्तते। तदेवं क्रियासमभिहारेणार्थानुचिन्तया नामावृत्तौ मनसो नामार्थे स्थैर्यं सम्भवति। तदत्र शिवविष्णुदेव्यादिपराण्यनेकानि स्तोत्राण्युक्तविधया मनसः स्तुत्यैकनिष्ठतापादनेन तत्तत्स्वरूपासाधारणपरिचयावहानि भवन्ति। तथा च सर्वमपि स्तोत्रजातं भगवदुद्देशेन क्रियमाणं मनसो भगवन्निष्ठतां सम्पादयत् भगवतः स्तोतृजनाभिमुखीकरणेन स्तोतुर्भगवत्कृपाविषयतामापादयति। जातायाञ्च भगवत्कृपायां सर्वमपि स्तोतृसमीहितं भगवान् स्वयमेव पूरयतीति महदिदं स्तोत्रमाहात्म्यम्॥

[विष्णुसहस्रनामस्तोत्रावतारः तत्प्राशस्त्यं च]

तदिह विष्णुसहस्रनामस्तोत्रमपि भगवत्प्रीत्युद्देशेन विधीयमानं भगवदेकमनस्कस्य स्तोतुर्भगवत्प्रियतमत्वापादनेन तमनन्य-

साधारणैहिकामुष्मिकवैभवेन संयोज्य, अन्ते निरतिशयपरमानन्देन योजयति। तदुक्तमत्र फलश्रुतौ—

"युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः" इति॥

मन्त्रास्तद्द्रष्टारो महर्षयश्चैकैकमपि भगवतो विष्णोर्नाम तत्तत्फलविशेषसाधकं सर्वफलसाधकं च मन्वानास्तानि नामानि मन्त्रेषु पुराणेतिहासादिषु च ददृशुः परिजगुश्च। तदुक्तम्—

"ऋग्वेदे च यजुर्वेदे तथैवाथर्वसामसु।
पुराणे सोपनिषदि तथैव ज्योतिषेऽर्जुन!॥

साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च।
बहूनि मम नामानि कीर्तितानि महर्षिभिः॥

गौणानि तत्र नामानि कर्मजानि च कानिचित्।" इति।
अत्रापि च "ऋषिभिः परिगीतानि" (विष्णुस. १३) इति॥

भगवान् कृष्णद्वैपायनस्तु कृतत्रेताद्वापरयुगेषु* क्रमेण ध्यानयजनार्चनैरायाससाध्यैर्यत्फलमवाप्यते तत् कलियुगे भक्त्या भगवन्नामकीर्तनेनैवानायासेन सुखसाध्यं मन्वानस्तानि ऋषिपरिगीतानि सर्वादरणीयानि विशिष्य कलियुगजनिजुषां मनुष्याणामत्यादरणीयानि सकलशास्त्रसारभूतविष्णुप्रतिपादकतया सारभूतभगवन्नामानि सहस्रनामस्तोत्रात्मना सङ्गृह्य सकलवेदपुराणेतिहाससाराकरेऽस्मिन् भारते अनुशासनपर्वणि निबबन्ध॥

सत्स्वप्यनेकेषु विष्णोर्मुक्तकनामसु अनायासेन सकलपुरुषार्थसाधकमखिलपापभयापहमिदं विष्णुसहस्रनामस्तोत्रं तेभ्यो वेदाधिकानन्तमुक्तकनामभ्यो महत्तमं स्मर्यते। तदुक्तम्—

"विष्णोरेकैकनामानि सर्ववेदाधिकानि च।
तेभ्योऽनन्तनामभ्योऽधिकं नामसहस्रकम्"॥इति।

---

* "ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥
इति श्लोकोऽत्रानुसन्धेयः।

अत एवासेतुहिमाचलान्तर्वर्तिभिरनेकैरास्तिकमहाजनैः प्रत्यहं सायं प्रातः सन्ध्यात्रयेऽपि वा भगवतो विष्णोः प्रियचिकीर्षया स्तोत्रमिदं विशेषतः पठ्यते । तत्तत्फलाकाङ्क्षिभिश्च तदा तदा स्तोत्रमिदमावर्तयद्भिः स्वस्वेष्टसिद्धिरवाप्यत इत्यनेकजनविदितं तथानुभूतमद्याप्यनुभूयते च ॥

[विष्णुसहस्रनामस्तोत्रस्य सर्वधर्मोत्कर्षः]

बहुलायाससाध्यदेशकालादिनियमानेककारकसापेक्षश्रौतादिकर्मणां सहसैवानुष्ठातुमशक्यतया न सुखसाध्या ततोऽभ्युदयनिःश्रेयसावाप्तिः । भगवन्नामसङ्कीर्तनस्य तु यागहोमादाविव हिंसायाः, कायक्लेशस्य, ऋत्विगादिपुरुषान्तरस्य, चरुपुरोडाशादिद्रव्यनियमस्य, प्राचीनप्रवणादिदेशनियमस्य, दर्शादिकालनियमस्य चानपेक्षितत्वात् द्रागेवानुष्ठातुं सुशकतया अनायासेनैवैतत्सहस्रनामकीर्तनतोऽभ्युदयनिःश्रेयसप्राप्तिः सुलभेति विज्ञायते । अत एवात्र भाष्येऽपि "अस्य स्तुतिलक्षणस्यार्चनस्याधिक्ये किं कारणम् ?" इति प्रश्नस्य "उच्यते—हिंसादिपुरुषान्तरद्रव्यान्तरदेशकालादिनियमानपेक्षत्वमाधिक्ये कारणम्" इत्युत्तरमभिधाय "तानि वक्ष्यामि भूतये" इत्यत्र भूतये इत्यस्य "पुरुषार्थचतुष्टयसिद्धये पुरुषार्थार्थिनाम्" इत्यर्थविवरणेन धर्मार्थकामसिद्धये मोक्षसिद्धये चैतत्स्तोत्रविनियोगः कथितः ॥

किञ्च बहुलायाससाधितमपि श्रौतस्मार्तधर्मजातं प्रामादिकापराधलेशतो न फलाय कल्पते । भगवन्नामसु न तादृशं वैगुण्यापादकं किञ्चिदस्ति । भगवन्नामस्वपि सत्स्वपि सन्निन्दादिनामापराधेषु *—

---

* "सन्निन्दाऽसति नामवैभवकथा श्रीशेशयोर्भेदधी-
रश्रद्धा श्रुतिशास्त्रदेशिकगिरां नाम्न्यर्थवादभ्रमः ।
नामास्तीति निषिद्धवृत्तिविहितत्यागौ च धर्मान्तरैः
साम्यं नामनि शङ्करस्य च हरेर्नामापराधा दश ॥"

इति दश नामापराधा अभियुक्तसङ्गृहीता ज्ञेयाः ।

"नामापराधयुक्तानां नामान्येव हरन्त्यघम् ।
अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च ॥"

इति पद्मपुराणवचनेन भगवन्नामसङ्कीर्तनस्यैवानवरताभ्यासात् सन्निन्दादिनामापराधनिवारकत्वादितराभ्युदयनिःश्रेयससाधनापेक्षयाधिकतमत्वमविप्रतिपन्नमेव ॥

[भगवन्नामस्मरणस्य प्रायश्चित्तोत्तमता]

आयाससाध्यतपःकर्माद्यनेकेषु प्रायश्चित्तेष्वपि अनायाससाध्यभगवन्नामस्मरणस्यैवोत्कृष्टप्रायश्चित्तता स्मर्यते ;—

"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि च ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥"

इत्यादिना । (वि. पु. २-६-३९)

"यस्य स्मृत्या च नामोक्त्या तपोहोमक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥"

इत्यादिना च भगवत्स्मरणतन्नामकीर्तनादेः तपोहोमादिसर्वधर्मसञ्जातन्यूनतापरिहारेण तेषां सकलगुणपूर्णतापादकत्वं स्पष्टमेव ॥

[विष्णुसहस्रनामस्तवपाठस्य सर्वधर्मश्रैष्ठ्यम्]

'अयं गौः गवां श्रेष्ठः' इत्यादौ लोके निर्धारणषष्ठ्यन्तपदसमभिव्याहारे श्रेष्ठादिशब्दैरेकस्य गोः सजातीयेतरसकलगवापेक्षया श्रैष्ठ्यप्रतिपादनवदत्रापि स्तोत्रे (श्लो. ८) —

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥"

इति पूर्वोक्तश्रौतस्मार्तादिसकलधर्माणां मध्ये कः परम इति प्रश्नस्य प्रतिवचने एष सर्वधर्माणामधिकतम इति पूर्वोक्तसजातीयेतरसकलधर्मापेक्षया भक्त्या भगवन्नामकीर्तनरूपधर्मस्यैवाधिकतमत्वं कण्ठत एवाभिहितम् ॥

जपयज्ञश्च हिंसाराहित्येनेतरसकलधर्मनियमराहित्येन च प्रवर्तते । अत एव सर्वधर्मोत्कर्षोऽस्येत्यभिप्रायेणैव भगवता "यज्ञानां

जपयज्ञोऽस्मि" (भ. गी. १०-२५) इत्यभिहितं गीतायाम्। तदेवमाद्यनेककारणैः पूर्वं शान्त्यनुशासनपर्वणोरन्यत्र च तत्र तत्र प्रतिपादितदेशकालादिसापेक्षसकलधर्मापेक्षयैतत्सहस्रनामजपयज्ञस्यानायाससाध्यत्वादितरसकलधर्माधिकतमत्वं निर्विवादमेव॥

[विष्णुसहस्रनामस्तवजपे भक्तेरावश्यकता तदुपपादनं च]

अत्र "यद्भक्त्या" इत्युक्त्या भगवत्तात्पर्यरूपभक्तिरप्यावाश्यकीत्युक्तं भवति। भक्तिस्तावद्भावव्युत्पत्त्या भक्तिर्भजनं अन्तःकरणस्य भगवदाकारतारूपा। तदुक्तम्—

"द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥" इति।

(भक्तिरसा. श्लो. ३)

भज्यते—सेव्यते अनेन भगवदाकारमन्तःकरणं क्रियत इति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनादिसाधनं चाभिधीयते। अन्तःकरणस्य सदा भगवदाकारत्वमपि चित्तद्रवीभावेनैव भवति। चित्तं हि जतुवत्स्वतः कठिनम्। जतुनस्त्वन्तराग्निसंयोगं न द्रवीभावः। द्रवीभूतश्चाग्न्यादिना काकलादौ यत्र क्वापि वा संलग्नं तत् तत्रैव निलीयते। एवं भगवद्गुणैर्विलीनं चित्तमपि यदा भगवति संलग्नं तत्रैव दृढं निलीयते तदा भगवानपि तच्चित्तं स्वायत्तीकृत्य तादृशान्तःकरणयुतं भक्तं मृत्युसंसारसागरात्समुद्धरति॥

मृत्युर्हि बन्धको विषयः। अविद्यापि स्वकार्यविषयद्वारैव पुरुषं बध्नाति। अतो विषय एवेन्द्रियद्वारा मनः स्वस्मिन् विशेषेण षिणोति—बध्नाति-बन्धको भवति। बन्धनार्थकषिञ्धातोर्ग्युपसृष्टान्निष्पन्नस्य विषयशब्दस्य तदर्थकत्वात्। तत्तदिन्द्रियद्वारा विषयसम्बन्धाद्द्रवीभूतं चेतो जतुवद्विषये निलीय विषयनाशे नश्यदिव सत् पुनर्विषयान्तरं गृह्णाति, तन्नाशे च पुनर्विषयान्तरमित्येवमनवरतोर्मिमालिसागरोपमासह्यविषयसम्बन्धात्पुनः पुनर्जायते, विषयनाशे नश्यति चेति विषय एव सदा विनाशशीलः सागरोपमो मृत्युः॥

भगवांस्तु सच्चिदानन्दात्मकोऽविनश्वरः। अतस्तत्र मनोलये मनसो विनश्वरविषयसम्बन्धराहित्यात्सदा भगवदाकारमानसं भक्तं भगवान् पुनर्बन्धकविषयविमुखीकरणेन स्वात्मन्येवावस्थापयन्नचिरादेव मृत्युसंसारसागरात्समुद्धरति। तदुक्तं भगवता—

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ! मय्यावेशितचेतसाम्॥" इत्यादि।

(भ. गी. १२-७)

एतादृशभक्तिसाधनमपि श्रवणादिभेदेन नवविधम्। तदुक्तम्—

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥" इति।

(श्रीभाग. ७-५-२३)

(१) तत्र श्रवणं नाम सगुणस्य निर्गुणस्य वा भगवतः शब्दादवगतिः तादृशशब्दस्य श्रोत्रेण ग्रहणं च।

(२) सगुणस्य निर्गुणस्य वा बोधकशब्दस्योच्चारणं कीर्तनम्।

(३) "स चैवंगुणः" इत्याकारिका स्मृतिः स्मरणम्।

(४) विष्णुप्रतिमादिपादसम्बन्धिगृहलेपनादिकं विष्णुभक्तानां पादसंवाहनादि च पादसेवनम्।

(५) विष्णुप्रतिमादौ गन्धपुष्पाद्यर्पणरूपो विष्णुप्रीतिहेतुः श्रवणादिभिन्नो व्यापारः अर्चनम्।

(६) विष्णुप्रतिमादेर्विष्णुभक्तानां च पूजाबहिर्भूतनमस्कारो वन्दनम्।

(७) दासस्येव परमेश्वरप्रीतिफलकत्वेन तस्मिन् सकलकर्मार्पणं दास्यम्।

(८) विश्वासो मित्रवृत्तिश्च सख्यम्। तत्राद्यः "न मे भक्तः प्रणश्यति" इत्यादिभगवद्वाक्यविषयकः। द्वितीया तु बन्धुभावेन हिताशंसनरूपा।

(९) स्वस्वीयदेहादिसङ्घातस्य भगवदेकभजनार्थं भगवत्यर्पणं आत्मनिवेदनम्॥

एवं भगवद्गुणतत्कथाश्रवण-तत्कीर्तन-तत्स्मरण-तदीयालयादिशोधन-तद्भक्तपादवाहन-तदर्चन-तद्वन्दन-तद्दास्य-तदात्मनिवेदनरूपनवविधभक्त्या भगवत्परत्वमापादितस्य मनसः सर्वदा स्थिरतया तदाकारतैव परमभक्तिः ॥

[भक्तेर्योगादिसाधनेभ्योऽतिशयः]

इयं च भक्तिर्योगादिसाधनेभ्यो विशिष्यते । तदुक्तं भागवते—
"नो साधयति मां योगो न साङ्ख्यं धर्म उद्धव ! ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥" इति ।
(भागवतम् ११-१४-२०)

गीतायां च—

"न वेदयज्ञाध्ययनैर्न दानैः
न च क्रियाभिर्न तपोभिरुग्रैः ।" (भ. गी. ११-४८)

इत्यादिना वेदाध्ययनादीनां भगवद्दर्शनसाधनत्वमपोह्य "भक्त्या त्वनन्यया शक्यः" (भ. गी. ११-५४), "भक्त्या मामभिजानाति" (भ. गी. १८-५५) इत्यादिना तद्दर्शने भक्तेः परमोपायता निरूपिता । इयं च पर्यवसानतो ज्ञाने परिसमाप्यते ॥

[भक्त्या नामसङ्कीर्तनस्य सर्वधर्मोत्तमत्वोपसंहारः]

अतश्च "कलौ सङ्कीर्त्य केशवम्" इत्यादिवचनपर्यालोचनया कलियुगे चेतसः स्थिरतया भगवदाकारतापादनपूर्वकभगवन्नामसङ्कीर्तनरूपार्चनस्यैव भगवत्प्रियतमत्वे मुख्योपायत्वावगमादयमुपायः श्रेयःकाङ्क्षिभिः श्रद्धया विधेयः । अनेन च भगवति वशीकृते भक्तपरायणो भगवानपि प्रह्लादादिकमिव भक्तमिमं "न मे भक्तः प्रणश्यति" (भ. गी. ९-३१) इत्युक्तरीत्या संसारसागरादुद्धृत्य सच्चिदानन्दात्मकं स्वस्वरूपमनुभावयन् तस्मै नानाविधाः परमाश्चर्यकरीः सिद्धीश्च प्रदर्शयन् सर्वदैनं—

"निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः"
(भ. गी. १२-८)

इत्युक्तरीत्या निस्संशयं स्वस्वरूपे परमानन्देऽवस्थापयति । अत एवात्रापि—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥"

इति सदा भगवदाकारतापन्नमनसा तन्नामसङ्कीर्तनमेव सर्वधर्मोत्तममिति व्यक्तमभ्यधायि ॥

[विष्णुसहस्रनामस्तोत्रव्याख्यानानि एतद्ग्रन्थमुद्रणावश्यकता च]

अस्य च विष्णुसहस्रनामस्तोत्रस्य श्रीशङ्करभगवत्पादाचार्यैः,* श्रीपराशरभट्टापरनामधेयश्रीरङ्गनाथदेशिकैः, श्रीसत्यसन्धयतिभिः, श्रीविद्याराजैः, श्रीवादिराजैः, श्रीमदानन्दतीर्थशिष्यादिभिरन्यैश्च भाष्यादिकं व्यलेखि। तत्र श्रीशाङ्करभाष्यं स्तोत्रेण सह बहुत्र मुद्रितमपि अस्य भाष्यस्य श्रीतारकब्रह्मानन्दसरस्वतीविरचितं विवृतिनामकमेकं व्याख्यानं धातुप्रत्ययादिविवेकेन नामार्थविवेचने भाष्यस्यात्यन्तोपकारकमद्ययावत्प्रायः कुत्राप्यमुद्रितम्। अतोऽनया

---

* विष्णुसहस्रनामस्तोत्रभाष्यं पदशैल्यादिपरिशीलनेन श्रीशङ्करभगवत्पादाचार्यैर्न कृतमिति केचिन्मन्यन्ते। श्रीशङ्कराचार्यैर्बाल्य एव कृतमिदं भाष्यमिति केषाञ्चिदभिप्रायः। प्रायशः पदार्थविवरणादौ गीताभाष्यशैल्या श्रीशङ्करभगवत्पादाचार्यकृतमेवेदमित्यभियुक्तजनाशयः। केरलप्रान्तीयमेप्पत्तूरनारायणभट्टतिरिप्रणीते गुरुवातालयेश (गुरुवायूर्श्रीकृष्ण) स्तोत्रात्मके नारायणीयाख्यग्रन्थे—

"श्रीशङ्करोऽपि भगवान् सकलेषु ताव-
त्त्वामेव मानयति यो न हि पक्षपाती।
त्वन्निष्ठमेव स हि नामसहस्रकादि
व्याख्यद्भवत्स्तुतिपरश्च गतिं गतोऽसौ ॥" (नारा. १०-९०-५)

इत्यस्मिन् पद्ये श्रीशङ्करभगवत्पादाचार्यस्यैव विष्णुसहस्रनामभाष्यकर्तृत्वं व्यक्तं प्रत्यपादि। ग्रन्थोऽयं १९१२तमक्रिस्ताब्दे तिरुवनन्तपुरे (Travancore) त. गणपतिशास्त्रिभिः प्रकाशितः। नारायणभट्टाः 1590तमक्रिस्ताब्दे आसन्निति एतदीयभूमिकायामुपलभ्यते। एतद्भाष्यविवृतावपि "भाष्यं तैरुपदिष्टार्थं भगवत्पादनिर्मितम्। विष्णोर्नामसहस्रस्य" इति श्रीशङ्करभगवत्पादाचार्याणामेव विष्णुसहस्रनामस्तोत्रभाष्यकर्तृत्वं व्यक्तं प्रत्यपादि।

प्राच्यविद्यासंशोधनसंस्थया स्तोत्रमिदं समं भाष्यविवृतिभ्यां प्रकाशितं समस्तास्तिकजनोपकारमावहेदिति मनीषया भाष्यविवृतिभ्यां यथाक्रमं संयोज्य ससंशोधनं सम्मुद्य प्राकाशि ॥

[श्रीशङ्करभगवत्पादाचार्याणां देशकालादिपरिचयः]

एतत्स्तोत्रभाष्यकाराः श्रीशङ्करभगवत्पादाचार्याः श्रीमहेश्वरावतारभूताः प्रायः सर्वेषां विदुषां विदितचरा एव। क्षीणे वैदिकमताचारे प्रवृद्धे चावैदिकमतप्रचारे वैदिकमतधर्मसंस्थापनायैतेषामवतारः समजनि। शिवगुरुः सती (आर्याम्बा) चेति केरळब्राह्मण-(नम्बूतिरि) दम्पती एतेषां मातापितरौ। कल्यादौ द्विसहस्रवत्सरान्ते* वत्सरसहस्रद्वितयात्परं † वा सूर्यकुजशनिषु स्वस्वोच्चस्थेषु, गुरौ च केन्द्रस्थिते, शुभयुते शुभवीक्षिते शुभलग्ने ‡ केरळदेशान्तर्गतकालटिनामकाग्रहारमेते जन्मनालञ्चक्रुः ॥

---

* "कल्यादौ द्विसहस्रान्ते लोकानुग्रहकाम्यया।
चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति ॥"
(इति भविष्योत्तरपुराणे)

† "सहस्रद्वितयात्परम्" इति शिवरहस्ये।

‡ "लग्ने शुभे शुभयुते सुषुवे कुमारं
श्रीपार्वतीव सुखिनी शुभवीक्षिते च।
जाया सती शिवगुरोर्निजतुङ्गसंस्थे
सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥"
(इति माधवीयशङ्करविजये २-७१)

"ततः सा दशमे मासि सम्पूर्णशुभलक्षणे।
दिवसे माधवर्तौ च स्वोच्चस्थे ग्रहपञ्चके ॥
मध्याह्ने चाभिजिन्नाममुहूर्ते चार्द्रया युते।
उदयाचलवेलेव भानुमन्तं महौजसम् ॥
प्रासूत तनयं साध्वी गिरिजेव षडाननम्।"
(इति चिद्विलासशङ्करविजये अ. ५)

जाताश्चैते बाल्य एवाखिलविद्यापारमापेदिरे। ततो दैवात् तदैव दिवं गते पितरि मातुरनुज्ञया तुरीयाश्रमालङ्कारभूता इमे गोविन्दभगवत्पादेभ्यो विदिताखिलवेदान्ततत्त्वा आसेतुहिमाचलान्तर्गतसकलभूमण्डलेऽप्यौपनिषदमद्वैतमतं संस्थाप्यानेकान्यवैदिकमतानि निराकृत्य शैवादिषण्मतानि च स्थापयामासुः। रचयामासुश्च ब्रह्मसूत्रभाष्याद्यनेकवेदान्तग्रन्थान् नैकविधानि स्तोत्ररत्नानि बहूनि तन्त्ररत्नानि च। ततो मात्रा स्मृतमात्रा मातरमुपेत्येहलोकं त्यजन्तीं तां परमात्मस्वरूपप्रदर्शनेन विष्णुपदं गमयामासुः। ततश्च विहितजनन्यौर्ध्वदैहिका जनानां धर्मं बोधयन्तोऽनेकान् वादिनो विजित्य गच्छता कालेन भरतखण्डे चतसृष्वपि दिक्षु मठान् निर्माय तत्तदाम्नायादिभिस्तत्र तत्र वैदिकधर्मबोधनाय स्थापयामासुः सुरेश्वर-पद्मपाद-हस्तामलक-त्रोटकाख्यान् चतुरः शिष्यमुख्यान्। तदनु सर्वज्ञपीठारोहणेन स्वकीयसर्वज्ञतां प्रकटीचक्रुः।

---

"उच्चस्थेष्वर्कभौमार्किषु विबुधगुरौ केन्द्रसंस्थे सुलग्ने।
पञ्चम्यां माधवे मास्यभिजिति समये शुक्लपक्षे शिवर्क्षे॥"

(इति जगद्गुरुजयचम्पूप्रबन्धे १–९०)

"साध्वी सा किल नवमेऽथ मासि पूर्णे
सल्लग्नेऽधिपशशिसंश्रिते कुलीरे।
केन्द्रोच्चैर्गुरुशनिभूमिसूनुसूर्यैः
प्रासोष्टामितमहसं सुखेन सूनुम्॥"

(इति गुरुवंशकाव्ये १–५९)

आनन्दगिरिशङ्करविजये द्राविडदेशान्तर्गतचिदम्बरक्षेत्रे विशिष्टाभिधायां ब्राह्मण्यां चिदम्बरेश्वरस्यैव शङ्कराचार्यात्मना अवतार उक्तः। कूष्माण्डशङ्करविजये कूष्माण्डफलाच्छङ्कराचार्यावतारः कथितः।

ततः स्वकर्तव्यमशेषं परिसमाप्य स्वस्य द्वात्रिंशे वयसि परिपूर्णे महेन्द्रादिभिः प्रबोधिता महोक्षमारुह्य सजयघोषं निजरूपेण कैलासमुपजग्मुः * ॥

[शङ्करभगवत्पादाचार्यकालविषयेऽभिप्रायविशेषाः]

श्रीशङ्करभगवत्पादाचार्यावस्थितिकालविषये क्रिस्तपूर्वापरीभावेन बहवोऽभिप्राया उपलभ्यन्ते । तेषु कतिचिदत्र वाचकविज्ञानाय सङ्गृह्यन्ते । तद्यथा—

(१) श्रीजगद्गुरुकूडलिशृङ्गेरिमहासंस्थानात् प्रकटितकर्णाटभाषामयोपन्यासमालायां (११) क्रिस्तशकीयद्वादशशताब्द्याः क्रिस्तपूर्वचतुर्थशताब्द्याश्चान्तरालकाले इन्डियन् आन्टिक्करिप्रभृत्यनेकग्रन्थनिरूपणपूर्वकमनेकेषामभिप्रायानुपवर्ण्य, अन्ते मठीयपरम्परापट्टिकानुरोधेन (A.D. 18–A.D. 50) क्रिस्तशकीयाष्टादशवत्सरात् क्रिस्तशकीयपञ्चाशवत्सरं यावत् श्रीमदाचार्यावस्थितिरुपपादिता ॥

(२) गुरुनाथकृतशङ्करकालविचारे संस्कृतवाङ्मये क्रिस्तपूर्वापरीभावेनानेकमतानि निरूप्य क्रिस्तशकीयाष्टमनवमशताब्द्योराचार्यावस्थितौ बहुमतोपपादनपूर्वकं यावन्निष्कृष्टैकनिर्णयं बहुमतानुरोध एव स्वाभिप्रायो निवेदितः ॥

---

*माधवीयशङ्करविजयानुरोधेनैवमाचार्याणां कैलासगमनमुक्तम् । आनन्दगिरिशङ्करविजये काञ्च्यामाचार्यदेहत्याग उक्तः । शिवरहस्येऽपि " स काञ्च्यामथ सिद्धिमाप " इति काञ्च्यामेवाचार्यदेहत्यागो निरूपितः । " काञ्च्यां विमुच्य वपुराद्दतमिच्छयैव " इति व्यासाचलीयशङ्करविजये । " काञ्चीपुरे स्थितिमवाप स शङ्करार्यः " इति पतञ्जलिचरितकाव्ये । दत्तात्रेयगुहां प्रविश्यादृश्यतां गता इति केचित् ।

" अवलम्ब्य कराग्रेण दत्तात्रेयः स तापसः ।
प्रविवेश गुहाद्वारं दत्वाज्ञां जनसन्ततेः ॥
क्रमाजगाम कैलासं प्रमथैः परिवेष्टितम् । "

(इति चिद्विलासशङ्करविजये अ. ३२)

(३) द्राविडभाषामयश्रीजगद्गुरुदिव्यचरित्रभूमिकायां, आङ्गलभाषामये "* शङ्कराचार्यः तस्य कामकोटिपीठश्च" इत्यस्मिन् ग्रन्थे च (B.C. 509) कलियुगे २५९३तमनन्दनवत्सरे श्रीमदाचार्यकालो निवेदितः ॥

(४) † वृत्तपत्रिकायामेकस्यां शृङ्गेरिमठपत्राधारतः क्रिस्तपूर्वत्रिचत्वारिंशद्वत्सरपर्यन्तमाचार्यावस्थितिकालो नीतः ॥

(५) एतत्संस्थाग्रन्थकोशागारस्थहस्तलिखितकर्णाटभाषामयशङ्करविजयसङ्ग्रहे (O. R. I. K. A. 247) ‡ कलियुगे द्विसहस्रवत्सरानन्तरं वैशाखशुक्लपक्षे आर्द्रानक्षत्रेऽभिजिन्मुहूर्ते श्रीमदाचार्यावतारमुक्त्वा § अत्रैव स्थलान्तरे (क्रि. पू. ४४) विक्रमशकीयचतुर्दशेश्वरवत्सरे वैशाखशुक्लपञ्चम्यामार्द्रानक्षत्रेऽभिजिन्मुहूर्ते श्रीमदाचार्यावतारोऽभिहितः ॥

केचित्तु—

"प्रासूत ‖ तिष्यशरदामतियातवत्या-
मेकादशाधिकशतोनचतुस्सहस्र्याम् ।
संवत्सरे विभवनाम्नि शुभे मुहूर्ते
राधे सिते शिवगुरोर्गृहिणी दशम्याम् ¶ ॥"

---

* Shankaracharya and his Kamakotipeetta 1931.

† कर्णाटभाषामये प्रजावाण्यभिधदैनन्दिनपत्रे । (Dated 5-7-1960).

‡ इयमत्र मातृका ಶಂಕರವಿಜಯಸಂಗ್ರಹ —(O. R. I. K. A. 247 124/3ನೆ ಪತ್ರದಲ್ಲಿ) "ಕಲಿಯುಗದಲ್ಲಿ ಎರಡು ಸಾವಿರದ ವತ್ಸರದ ಮೇಲೆ ವೈಶಾಖ ಶುಕ್ಲಪಕ್ಷದಲ್ಲಿ ಆರಿದ್ರಾನಕ್ಷತ್ರದಲ್ಲಿ ಅಭಿಜಿನ್ಮುಹೂರ್ತದಲ್ಲಿ ಚತುರ್ಭುಜ ತ್ರಿಣೇತ್ರಯುಕ್ತನಾದ ಪರಶಿವನೇ ಅವತರಿಸಿದ್ದಲ್ಲಿ ಆರ್ಯಾಂಬನು ನೋಡಿ."

§ (124/12ನೆ ಪತ್ರದಲ್ಲಿ) "ಶಂಕರಾಚಾರ್ಯರು ಅವತರಿಸಿದ್ದು ವಿಕ್ರಮಶಕ ೧೪ನೆ ಈಶ್ವರವತ್ಸರದ ವೈಶಾಖ ಶುದ್ಧ ೫ ಆರ್ದ್ರಾ ನಕ್ಷತ್ರ ಅಭಿಜಿನ್ಮುಹೂರ್ತದಲ್ಲಿ ಅವತರಿಸಿ ವಿಕ್ರಮಶಕ ೨೨ನೆ ಪಾರ್ಥಿವ ಸಂವತ್ಸರದ ಚೈತ್ರಶುದ್ಧ ೫ಯಲ್ಲೂ ಸನ್ಯಾಸಾಶ್ರಮ ಅಂಗೀಕರಿಸಿ ವಿಕ್ರಮಶಕ ೩೦ನೆ ವಿಜಯಸಂವತ್ಸರದ ಚೈತ್ರ ಶುದ್ಧ ೧೫ಯಲ್ಲೂ ಸುರೇಶ್ವರಾಚಾರ್ಯರಿಗೆ ಸನ್ಯಾಸಾಶ್ರಮಕೊಟ್ಟು ವಿಕ್ರಮಶಕ ೪೬ನೆ ಸೌಮ್ಯ ಸಂವತ್ಸರದ ಜ್ಯೇಷ್ಠಶುದ್ಧ ೧೨ಲ್ಲಿ ಗುಹಾಪ್ರವೇಶ ಮಾಡಿದರು."

‖ ४०००–१११=३८८९, अधुना कलिवत्सराः ५०६१–३८८९=११७२, अधुना क्रिस्तशकाब्दाः १९६०–११७२=७८८, ¶ सदानन्दशङ्करविजयसारे.

इत्याद्यवष्टम्भेन अष्टाशीत्यधिकसप्तशततम (क्रि. श. ७८८) क्रिस्त-शकवत्सरे विभववैशाखशुक्लदशम्यां श्रीशङ्करभगवत्पादाचार्याव-तारमभ्युपगच्छन्तो वैशाखशुक्लदशम्यां श्रीशङ्कराचार्यजयन्ती-माचरन्ति ॥

किञ्च श्रीशङ्करभगवत्पादाचार्यकृतत्वेनोपलभ्यमाने देव्यप-राधक्षमापणस्तोत्रे पञ्चमश्लोके "मया पञ्चाशीतेरधिकमपनीते तु वयसि" इति पठ्यते। स्तोत्रस्यास्यादिशङ्करभगवत्पादाचार्य-कृतत्वाङ्गीकारे पञ्चाशीत्यधिकवत्सरजीवित्वं द्वात्रिंशद्वत्सरपरमा-युषां श्रीमदाचार्याणां नोपपद्यते। द्वात्रिंशद्वत्सरपरमायुष्ट्वं च श्रीशङ्करभगवत्पादाचार्याणां सर्वसम्प्रतिपन्नम्। अत आचार्यनाम्ना अनेके प्रथिता आसन्नित्यवगम्यत इति केचिदभिप्रयन्ति। सर्वथात्र विमर्शका एव प्रमाणम् ॥

[भाष्यपूर्वपीठिकासमालोकनम्]

भाष्ये तावत्पूर्वपीठिकायामादौ "आदिस्त्वं सर्वभूतानाम्" इत्यादिना "विना किञ्चित्त्वया न हि" इत्यन्तेन हरिवंशगतमहेश्वर-वचनेन हरिहरैक्यानुसन्धानमेव परमं मङ्गलमिति प्रदर्श्य "किमेकम्" इत्यारभ्य "जन्मसंसारबन्धनात्" इत्यन्तेन स्तोत्र-भागेन भीष्मं प्रति युधिष्ठिरकृतषट्प्रश्नानां "जगत्प्रभुम्" इत्यारभ्य "तानि वक्ष्यामि भूतये" इत्यन्तेन स्तोत्रभागेन समाधानं विभ-ज्योपपादितम्। ऐहिकामुष्मिकश्रेयस्साधनानां पूर्वोक्तसर्वधर्माणां मध्ये भक्त्या भगवन्नामजपस्यैवाधिकतमत्वं व्यक्तमुपपादितं "ध्यायन् कृते" इत्यादिप्रमाणनिकरप्रदर्शनेन। "अतिपातक-युक्तोऽपि" इत्यादिप्रमाणनिकरप्रदर्शनेन च प्रवित्रतमत्वं परमा-त्मन एवेति विशदीकृतम्। "एको देवः" इत्यादिश्रुत्यादि-प्रमाणनिकरनिर्देशेन च परमेश्वरस्यैवैकदैवतत्वं जीवपरयोरभेदोप पादनेन सुष्ठु प्रशंसितम्। विष्णुचिन्तनात्मकमानसस्नानस्यैतत्स-हस्रनामजपानुरूपत्वं "यस्मिन् देवाश्च" इत्यादिना "मानसं स्नानं विष्णुचिन्तनम्" इत्यन्तेन प्रमाणनिकरेण सचमत्कारमुप-पादितम्। निर्गुणस्यैकस्यापि परमात्मनो मायाशबलस्य सगुणस्य

गुणवशान्निमित्तशक्तिवशेन भिन्नभिन्नफलसाधकानि सहस्रनामानि सम्भवन्तीत्यभिहितं "एकस्यैव" इत्यादिना ॥

तदेवं परमात्मा भगवान् विष्णुरेक एव पुरुषोत्तमः सर्वदेवतासार्वभौमो जगत्प्रभुर्जन्मादिविनाशान्तषड्भावविकाररहितः सर्वजगत्सृष्टिस्थितिसंहारकारणभूतः सर्वलोकनियन्ता पवित्रतमः परममहातेजोरूपः परममहातपोरूपः सत्यज्ञानानन्दादिलक्षणो मुक्तानां परमा गतिः परममङ्गलं च। स एव सर्वदेवतामयो विष्णुदेवताब्रह्मविशेष्यमुखेन पुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गकनामभिरभिधीयते। तस्य नामसहस्रमनायासेन समस्तपापघ्नं समस्तभयघ्नं च भवतीत्यैहिकामुष्मिकश्रेयःकाङ्क्षिभिरिदं स्तोत्रं सदा विष्ण्वेकमानसैः पठनीयमिति विस्तरेणोपपादि ॥

[नामभाष्यनिरीक्षणम्]

ततश्च विश्वादिसर्वप्रहरणायुधान्तानां विष्णोर्नाम्नां सहस्रस्य यथासम्भवं यौगिकार्थादिकं प्रदर्श्य, तत्र तत्र सप्रमाणं सारतमत्वं विष्णोरुपपाद्य, शर्वः शिवः स्थाणुरित्यादिमहेश्वरनामभिरपि हरिरेव स्तूयत इत्यभ्यधायि। अन्यत्र प्रसिद्धानामप्यादित्यादिनाम्नामादित्यादेर्विष्णुविभूतित्वेन विष्णुपरत्वमुपपाद्य *आम्रेडितनाम्नां च यथासम्भवमर्थान्तरमुपवर्ण्य पुनरुक्तिदोषः पर्यहारि। एकार्थकनाम्नामपि शब्दभेदेनापौनरुक्त्यमुपपाद्य क्वचित्क्वचिद्विशेषणविशेष्यभावेन पदद्वयं मिलित्वैकं नामेति स्पष्टीकरणेन नाम्नां सहस्रता सुष्ठु प्रत्यपादि ॥

[उत्तरपीठिकाभाष्यपरामर्शः]

उत्तरपीठिकायां च सहस्रनामस्तोत्रपाठस्य प्रयोजनमुक्त्वा अस्य पठनाधिकारः सदा परमेश्वरानुरक्तानां कामक्रोधाद्यकलुषितमनसां त्रैवर्णिकानामेव, इतरेषां तु तादृशानां श्रवण एवाधिकार

---

* आम्रेडितनामानि च वाचकसुखावगमायात्रैव भूमिकान्तेऽकारादिक्रमेण सङ्गृहीतानि।

इति सप्रमाणमुपावर्णि। तदेवं श्रुतिस्मृतिन्यायैः सहस्रनामार्थमुपवर्ण्य भाष्यं हरिपादयोः समार्पि ॥

भाष्यमपि "रचिता हरिपादयोः" इत्यन्तमिति मुद्रितैर्बहुभिर्भाष्यकोशैर्विज्ञायते। भाष्यविवृतिरपि एतावत्पर्यन्तमेव भाष्यमित्याशयेनात्रैव व्यरंसीत्। तदनुरोधेनैतत्पुस्तकेऽपि आदौ भाष्यसमाप्तिं निर्दिश्य (पुटं 646) हस्तलिखितमातृकान्तरपरिशीलनतो विष्णुधर्मगतैकचत्वारिंशाध्यायनिर्देशपूर्वकं "तस्मै नमोऽस्तु कृष्णाय संसारक्लेशहारिणे" इत्यन्तग्रन्थे भाष्यसमाप्तिदर्शनानुरोधेन पुनस्तत्र भाष्यसमाप्तिः प्रादर्शि ॥ (पुटम् 653)

[श्रीशङ्करभगवत्पादाचार्यतदुपकारयोः स्मरणम्]

तदेवमर्थज्ञानपुरस्सरं विष्णुसहस्रनामपठनश्रवणादौ श्रीशङ्करभगवत्पादाचार्यमात्रकृतस्यास्य भाष्यस्यात्यावश्यकत्वाद्भाष्यमिदं सर्वादरणीयमेवेति चिरस्मरणीया इमे आचार्यास्तदुपकारश्च ॥

[विवृतिपरिशीलनम्]

एतद्विवृतिकाराः श्रीतारकब्रह्मानन्दसरस्वतीयतिवराः स्वग्रन्थादौ श्रीमाधवोमाधवौ व्यासमुनिं च प्रणम्यैतत्स्तोत्रभाष्यकारान् श्रीशङ्करभगवत्पादाचार्यानपि प्रणेमुः। ततश्च श्रीशङ्करभगवत्पादाचार्याणामेवैतद्विष्णुसहस्रनामभाष्यकर्तृत्वं कण्ठत एवावादिषुः—

"भाष्यं तैरुपदिष्टार्थं भगवत्पादनिर्मितम्।
विष्णोर्नामसहस्रस्य यथामति विविच्यते" ॥ इति।

एतेषां गुरवः (पितरः) विद्यागुरवश्च श्रीगोपालानन्दसरस्वतीयतिवराः। तदुक्तमेतैरेव ग्रन्थारम्भे—

"श्रीगोपालानन्दयतीन् गुरून् विद्यागुरूनपि" इति।

ग्रन्थान्ते च "श्रीगोपालसरस्वतीयतिवरान्तेवासिना" इत्यनेन स्वस्य गोपालानन्दसरस्वतीयतिवरान्तेवासित्वं स्पष्टीकृतम्। गोपालानन्दसरस्वतीयतिवराश्चेमे 'अखण्डात्मप्रकाशकारा एव भवेयुरुतान्ये' इत्ययमंशो विमर्शनीय एव। कौ चैतेषां मातापितरा-

वित्यत्र नोपलभ्यते किञ्चिद्भ्रमकम्। विवृतौ "यस्य निःश्वसितम्" इत्यादिसायणाचार्यग्रन्थानुवादात् (पुटम् 487) एते सायणाचार्येभ्योऽर्वाचीना एवेति विज्ञायते। सायणाचार्याः शालिवाहनीयत्रयोदशशताब्द्युत्तरार्धमध्यासतेति विमर्शकराद्धान्तः। प्रायो दक्षिणदिग्भाग एवैतद्विवृतिमातृकोपलब्ध्या * दक्षिणदिशास्वेव क्वचिदेतेषां विवृतिकाराणां निवासः समभूदिति ज्ञायते। वेदे शब्दन्यायवेदान्तमीमांसासाङ्ख्ययोगेषु पुराणेष्वितिहासेषु चैतेषां नैपुण्यमनन्यादृशमिति तत्र तत्र विवरणसन्दर्भेषु स्पष्टमेवैतद्वाचकमहाशयानाम्। विवरणशैल्यप्यतिसरला सुखबोधा हृदयङ्गमा चेति विशदमेव विवृतिवाचकानाम्। भाष्ये प्रक्षिप्तभागा वर्तन्त इत्यभिप्रेत्य तत्कालुष्यनिवारणार्थमेवैतद्विवृतिरचनारम्भ एतेषाम्। तदुक्तमेतैः "प्रक्षेपकालुष्यनिरासहेतोर्व्याख्या हरेर्नामसहस्रभाष्ये" इत्यादिना। किन्त्वत्रायं प्रक्षिप्तभाग इति न विशिष्य किमपि कथितं विवेचितं वा। तथापि विवृतिरहितभागस्य तत्र तत्र भाष्ये समुपलम्भाज्ज्ञायते प्रायशः स एव प्रक्षिप्तभाग इति। विवृतिराहित्यमपि तत्र तत्र टिप्पण्यां निर्दिष्टम्। नाम्नां धातुप्रत्ययादिनिर्देशद्वारा अवयवार्थप्रदर्शनपूर्वकं भाष्यार्थस्पष्टीकरणेन क्वचित्क्वचिदपूर्वार्थविशदीकरणेन तत्र तत्रापेक्षितप्रमाणवाक्यप्रदर्शनेन च वाचकलोकस्य परमोपकारमावहन्तीयं भाष्यविवृतिः हेम्नःपरमामोद इवातिमनोहरेत्युक्तिर्नातिशयोक्तिः। पूर्वमनवगतार्थप्रदर्शनेन नामापौनरुक्त्योपपादनप्रकारोऽत्रातीव हृदयङ्गमः॥

[विवृत्यभिवन्दनम्]

तदेवं बहुश्रुतयतिनतल्लजतारकब्रह्मानन्दसरस्वतीनां † स्वधर्मभूतनामार्थस्मृतिरूपेयं विष्णुसहस्रनामभाष्यविवृतिस्तेषां चिरस्मरणीयतां बोधयन्ती समस्तास्तिकजनमनोविनोदमावहति।

---

* शृङ्गगिरौ चेन्नपुर्यां महीशूरपुर्यां च विवृतिमातृका उपलब्धाः.

† "यतर्येन्मननं स्वधर्मः" इति ग्रन्थारम्भगतविवृतिपद्यांशोऽत्रानुसन्धेयः.

[सहस्रनामस्तोत्रत उपलभ्यमाना नीतयः]

स्तोत्रेऽस्मिन् नाम्नां सहस्रस्य स्वातन्त्र्येण विष्णुप्रतिपादकत्वेऽपि क्वचित्क्वचित्कतिपयनामपदानामन्वयवशेनार्थविशेषप्रतीत्या नीतिविशेषा उपलभ्यन्ते। तद्यथा —

(१) "अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत्" (वि. श्लो. ९३) इत्यत्र अमानी मानदः, मान्यः इत्यन्वयेन यः स्वयममानी सन् अन्येषां मानदः स मान्य इत्यमानिनः सतो मानदस्य मान्यत्वं प्रतीयते। न केवलं मान्यत्वमेव तस्य, किन्तु लोकस्वामित्वमपि भवतीति उपरितनलोकस्वामिपदेन बोध्यते। न चापि लोकस्वाम्येव सः, अपि तु लोकत्रयधारकोऽपि भवतीति तदुपरितनत्रिलोकधृत्पदेन बोध्यते। एवञ्चैतत्स्तोत्रभागात् यः स्वाभिमानवर्जमन्यान्मानयति स तैर्लोकस्वाम्येव क्रियते। सर्वलोकेष्वप्येवम्भावं तं सर्वे लोकाः त्रिलोकस्वामिनमेव कुर्वन्तीति अमानिनो मानदस्यानन्यादृशोऽयं महिमेति बोधनेन सर्वैरपि मानवैरेवं वर्तितव्यमिति लोकनीतिरुपलभ्यते ॥

(२) एवं "महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः" (वि. श्लो. ३३) इत्यत्र यथाश्रुतान्वयेन महेष्वासादिविजयसामग्रीको राज्यपालकः अतिशयितस्थिरैश्वर्यः सत्पुरुषाणामाश्रयो भवतीत्यर्थप्रतीत्या राज्यपालकैर्महापुरुषैः शत्रुनिबर्हणोपयोगितत्तदायुधैः शत्रुनिबर्हणेनैश्वर्यं स्थिरीकृत्य धर्मसंरक्षणाय धर्मबद्धादराः सत्पुरुषा रक्षणीयाः, तन्मुखेन राज्यं च परिपालनीयमिति नीतिरुपलभ्यते ॥

(३) एवं "अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः।" (वि. श्लो. ३७) इत्यत्र अग्रणीः=अग्रेसरः, ग्रामणीः=ग्रामनायकः, (ग्रामाधिकारी) न्यायः=नीतियुतः, नेता=निर्वाहकः सन्, समीरणः= स्वार्थपक्षपातादिराहित्येन गन्धादिकं वहन् वायुसमः, श्रीमान्= सर्वजनश्लाघ्यैश्वर्यसम्पन्नो भवतीत्यर्थप्रतीत्या ये ये बहुजनसमाजग्रामाद्यग्रयायिनस्ते सर्वेऽपि स्वार्थपक्षपातादिराहित्येन

सङ्घकार्यं निर्वर्तयन्तः सर्वजनश्लाघाद्यनेकविधैश्वर्यभागिनो भवेयुः, अतः समाजग्रामादिनेतृभिः सर्वैरप्यग्रेसरैः स्वार्थपक्षपातादिराहित्येन न्यायतो वर्तितव्यमिति नीतिरुपलभ्यते ॥

(४) एवं "औषधं जगतः सेतुः सत्यधर्मपराक्रमः" (वि. श्लो. ४४) इत्यत्रान्वयवशात् सत्यधर्मपराक्रमशाली पुरुषो जलमर्यादाविधायकप्रसिद्धसेतुवज्जगतः सुखदुःखकारणधर्माधर्मव्यवस्थापनेन जगतः सौख्यं सम्पादयन् जगत्सेतुप्रायः सर्वरोगनिवारणेन सुखोपधायकप्रसिद्धौषधवद्भवतीत्यर्थप्रतीत्या लोकव्यवस्थापकैर्महापुरुषैः सत्यधर्मावलम्ब्य पराक्रमप्रयोगतो धर्माधर्ममर्यादापरिपालनेनौषधीभूय जगद्रक्षणीयमिति नीतिरुपलभ्यते ॥

(५) एवं "क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः" (वि. श्लो. ४७) इत्यत्रान्वयवशात् यः सत्पुरुषाणां कोपशमनेन क्रोधकारिणां दुष्टानां छेदनेन च सर्वान् स्वबाहुतया परिकल्पयन् (सर्वान् स्ववशीकुर्वन्) वर्तते स भूमिपालको भवतीत्यर्थप्रतीत्या राज्यपालकैः सदसद्विवेचनेन सत्पुरुषाणां कोपप्रशमनानुत्पादाभ्यां क्रोधकार्यसत्पुरुषनिग्रहेण च सर्वे स्ववशीकार्या इति नीतिरुपलभ्यते ॥

(६) एवं "ईश्वरो विक्रमी धन्वी मेधावी" (वि. श्लो. २२) इत्यत्र मेधावी विक्रमी धन्वी ईश्वर इत्यन्वयतः बुद्धिमतः पराक्रमवतो धनुर्धारिणः पुरुषस्येश्वरत्वमुक्तं ज्ञायते। अत ईश्वरत्वमिच्छद्भिर्मानवैर्बुद्धिमद्भिः पराक्रमशालिभिरायुधधारिभिश्च भवितव्यमिति नीतिरवगम्यते ॥

(७) एवं "अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः" (वि. श्लो. १०२) इत्यत्र यः स्वयमपापः आकारेङ्गितादिभिरयमीदृश इति परैर्निश्चेतुमशक्यो दुष्टानां भयं जनयति, साधूनां भयमपाकरोति च स साक्षाद्दयाशीलस्य विष्णोरंशभूत इत्यर्थप्रतीत्या लोके दयालुभिः परहृदयागोचरैः भगवदंशैः पुरुषधौरेयैः स्वयं पापाना-

चरणेन दुष्टनिग्रहशिष्टपरिपालनाभ्यां स्वकीयभगवदंशता समर्थनीयेति नीतिरुपलभ्यते ॥

(८) एवं "कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः" (वि. श्लो. ४५) इत्यत्र यथाश्रुतान्वयेन यो जनानामसद्विषयेष्वाशां नाशयन् सद्विषयेष्वाशां जनयन् सर्वेषामभिरूपतमः, अत एव सर्वैरर्थ्यमानः तेषामभीष्टदानेन मनोरथं पूरयति स एव प्रभुरित्यर्थप्रतीत्या सदा सर्वोत्कर्षाभिलाषिभिः पूर्णैश्वर्यैर्महापुरुषैर्जनसामान्यस्यासद्विषयाशानिवर्तनेन सद्विषयेच्छाजननेन च 'अहो! कियद्धितैष्ययम्; साध्वसाधुविवेचनेन सर्वेषामसद्विषयेषु नैराश्यमुत्पाद्य सद्विषयेष्वाशां जनयित्वा सर्वानपि सन्मार्गे प्रवर्तयति। अतोऽभिरूप(मनोहर)तमोऽयमेव सेवितव्यः' इति मत्या सर्वेषामपि प्रार्थनीयतां गतैः तथा समागतानां सर्वेषामपि सदा अभीष्टवितरणेन स्वकीयं प्राभवं संरक्षणीयमिति नीतिरुपलभ्यते। दिङ्मात्रमिदमुपदर्शितम् ॥

[स्तोत्रादिनिवेशः]

अस्य च स्तोत्रस्य भाष्यविवृती स्तोत्रानुगुणतया तत्तत्पुटपरिमिततया संयोज्य तत्तत्स्थलेऽभितापेक्षितांशविवरणाय मदुपज्ञा लघ्वी काचिट्टिप्पणी चात्र वाचकजनसौकर्याय तत्तत्पुटाधोभागे समयोजि। मुद्रितान् हस्तलिखितांश्चानेकान् स्तोत्रभाष्यकोशानालक्ष्य पाठान्तराणि च तत्तत्पुटाधोभागे न्यवेशयन्त। तथा विवृतिपाठान्तराणि च समगृह्यन्त ॥

[अनुबन्धपरिचयः]

अनुबन्धे चादौ स्तोत्रपाठार्चनयोः सौकर्याय स्तोत्रनामावली निवेशिता। ततो नामार्थानुसन्धानाय भाष्यानुगुणतया सङ्गृहीतो मदुपज्ञभाष्यार्थसङ्ग्रहश्च निवेशितः। यश्च प्रतिनाम कारिकार्धेन क्वचित्क्वचित्किञ्चित्किञ्चिदधिकेन क्वचित्काचिन्नामद्वयं कारिकार्धेनेत्येवं कारिकारूपो नामभाष्यार्थमात्रं सङ्गृह्णन् नामसहस्रस्या-

चार्याभिप्रेतार्थानुसन्धानेऽतीवोपकरोति । ततश्चाकारादिक्रमेण सहस्रनामानि नामपुटाङ्कैः सह निवेश्यान्ते भाष्यविवृत्युपलब्धप्रमाणानि च यथालाभमाकरनिर्देशपूर्वकमकारादिक्रमेण न्यवेश्यन्त॥

[एतन्मुद्रणोपयुक्तमातृकापरिचयः]

एतत्स्तोत्रमुद्रणे स्तोत्रभाष्ययोरनेका मातृका एतत्संस्थाकोशागारस्था एव *मुद्रिता †हस्तलिखिताश्च सहायभूताः । विवृतेस्तु मातृकात्रयमुपलब्धम । तत्र—

(१) एका एतत्कोशागारस्थिता कर्णाटकलिपिलिखिता काकलमयी प्रायः शुद्धा A 148 सङ्ख्यान्विता समग्रा च ॥

(२) अन्या चेन्नपुरी(Madras)स्थराजकीयप्राचीनपुस्तकालयस्थमातृकाप्रतिकृतिः एतत्संस्थाकोशागारीया देवनागरीलिपिलिखिता काकलमयी तत्र तत्राशुद्धा S. B. 1139 सङ्ख्यान्विता समग्रा च ॥

(३) अपरा कल्याणपुरी(Bangalore)स्थशङ्करमठपाठशालायां अद्वैतवेदान्तप्रधानोपाध्यायानां श्रीमतां विदुषां वि. एस्. रामचन्द्रशास्त्रिणां सकाशादासादिता शृङ्गगिरिमठीयसरस्वतीपुस्तकभाण्डारस्थ(नं. २४३)सङ्ख्याङ्किततालपत्रमातृकायाः प्रतिकृतिः देवनागरीलिपिलिखिता प्रायः शुद्धा समग्रा च ॥

मातृकादात्रभिनन्दनम्

मुद्रणे चास्य मातृकादानेन साह्यं विहितवतामुपकारश्चिरं स्मर्यते । वितीर्यन्ते चैषामनन्ता धन्यवादाः ॥

---

* मुद्रितकोशाः A 38, B 2574, B 2776 प्रभृतयः. † हस्तलिखितमातृकाः 1652, 118, 382, 1336, 3781, 1968, 2666, C 436 प्रभृतयः.

[भूमिकोपसंहारः]

एवमनेकमातृकापरिशीलनेन ससंशोधनं परिष्कृत्य सम्मुद्रय प्रकटितमिदं सर्वधर्मोत्तमश्रीविष्णुसहस्रनामस्तोत्रं समस्तास्तिकजनमनस्तोषमावहदनायासेनैहिकामुष्मिकश्रेयोवितरणेन सर्वानानन्देन तुन्दिलयच्च सर्वलोकहितावहं भूयात्। अनेन च प्रीयतां हरिः॥

स्तोत्रामृतमिदं विष्णोर्भक्त्या कलिमलापहम्।
वक्तृश्रोत्रपुटैः पीत्वा मोदन्तामिह मानवाः॥

इति शम्

ओरियन्टल् रिसर्च्
इन्स्टिट्यूट्
मैसूरु
२४-१२-१९६०

इत्थं सुधीविधेयः
विद्यालङ्कारः, तर्क-मीमांसा-वेदान्तविद्वान्
आर्. रामशास्त्री
मैसूरुप्राच्यविद्यासंशोधनालये
रिसर्च् असिस्टेण्ट् I

# आम्रेडितनामानि

| क्रमाङ्कः | नामानि | | आम्रेडनम् | नामसङ्ख्या |
|---|---|---|---|---|
| १ | अक्षोभ्यः | | २ | ८०१, ९९९ |
| २ | अच्युतः | .... | २ | १००, ३१८ |
| ३ | अजः | .... | ३ | ९५, २०४, ५२१ |
| ४ | अनघः | .... | २ | १४६, ८३१ |
| ५ | अनन्तः | .... | २ | ६५९, ८८६ |
| ६ | अनलः | / | २ | २९३, ७११ |
| ७ | अनिरुद्धः | | २ | १८५, ६३८ |
| ८ | अनिर्देश्यवपुः | | २ | १७७, ६५६ |
| ९ | अनिर्विण्णः | | २ | ४३५, ८९२ |
| १० | अनिलः | | २ | २३४, ८१२ |
| ११ | अपराजितः | .... | २ | ७१६, ८६२ |
| १२ | अमितविक्रमः | | २ | ५१६, ६४१ |
| १३ | अमेयात्मा | | २ | १०२, १७९ |
| १४ | अमोघः | | २ | ११०, १५४ |
| १५ | आदित्यः | .... | २ | ३९, ५६३ |
| १६ | आदिदेवः | .... | २ | ३३४, ४९० |
| १७ | ईश्वरः | | २ | ३६, ७४ |
| १८ | उद्भवः | .... | २ | ३७३, ७९० |
| १९ | ऋद्धः | .... | २ | २७८, ३५१ |
| २० | कान्तः | .... | २ | २९६, ६५४ |
| २१ | कुमुदः | | २ | ५८९, ८०७ |
| २२ | कृतज्ञः | | २ | ८२, ५३३ |
| २३ | कृतागमः | | २ | ६५५, ७८९ |
| २४ | कृष्णः | .... | २ | ५७, ५५० |

| क्रमाङ्कः | नामानि | आम्रेडनम् | नामसङ्ख्या |
|---|---|---|---|
| २५ | केशवः .... | .... २ | २३, ६४८ |
| २६ | क्षामः .... | .... २ | ४४३, ८५४ |
| २७ | गहनः .... | .... २ | ३८२, ५४४ |
| २८ | गोपतिः | .... २ | ४९५, ५९२ |
| २९ | गोप्ता | २ | ४९६, ५९३ |
| ३० | गोविन्दः | २ | १८७, ५३९ |
| ३१ | चक्री | २ | ९०८, ९९५ |
| ३२ | चतुरात्मा | .... २ | १३७, ७६९ |
| ३३ | चतुर्व्यूहः | .... २ | १३८, ७६७ |
| ३४ | तारः | .... २ | ३३८, ९६८ |
| ३५ | दक्षः | .... २ | ४२३, ९१७ |
| ३६ | दुर्धरः | .... २ | २६६, ७१५ |
| ३७ | धाता ... | .... २ | ४३, ९५१ |
| ३८ | नियमः .... | .... २ | १६१, ८६५ |
| ३९ | निवृत्तात्मा ... | .... ३ | २२९, ५९७, ७७४ |
| ४० | पद्मनाभः ... | .... ३ | ४८, १९६, ३४६ |
| ४१ | पवनः .... | .... २ | २९१, ८११ |
| ४२ | पुण्यः .... | .... २ | ६८७, ९२५ |
| ४३ | पुरुषः .... | .... २ | १४, ४०६ |
| ४४ | पुष्कराक्षः .... | .... २ | ४०, ५५६ |
| ४५ | प्रजापतिः ..... | .... २ | ६९, १९७ |
| ४६ | प्रणवः .... | .... २ | ४०९, ९५७ |
| ४७ | प्रभुः .... | .... २ | ३५, २९९ |
| ४८ | प्रमाणम् | .... २ | ४२८, ९५९ |
| ४९ | प्राणदः | .... ४ | ६५, ३२१, ४०८, ९५६ |
| ५० | प्राणः | ... ३ | ६६, ३२०, ४०७ |
| ५१ | भीमः .... | २ | ३५७, ९४८ |
| ५२ | भोक्ता .... | .... ३ | १४३, ५००, ८८८ |
| ५३ | महाकर्मा .... | .... २ | ६७२, ७८७ |

| क्रमाङ्कः | नामानि | आम्रेडनम् | नामसङ्ख्या |
|---|---|---|---|
| ५४ | महीधरः .... | २ | ३१७, ३६९ |
| ५५ | माधवः .... | ३ | ७२, १६७, ७३५ |
| ५६ | मार्गः .... | २ | ३६५, ३९७ |
| ५७ | यज्ञः | २ | ४४५, ९७१ |
| ५८ | यमः | २ | १६२, ८६६ |
| ५९ | वसुः | ३ | १०४, २७०, ६९६ |
| ६० | वसुप्रदः | २ | ६९३, ६९४ |
| ६१ | वसुमनाः | २ | १०५, ६९७ |
| ६२ | वायुवाहनः | २ | ३३१, ८५६ |
| ६३ | वासुदेवः | ३ | ३३२, ६९५, ७०५ |
| ६४ | विक्रमी | २ | ७५, ९०९ |
| ६५ | विजयः | २ | १४७, ७०८ |
| ६६ | विधाता | २ | ४४, ४८४ |
| ६७ | विभुः | २ | २४०, ८८० |
| ६८ | विश्वयोनिः | २ | ११७, १४९ |
| ६९ | विष्णुः | ३ | २, २५८, ६५७ |
| ७० | वीरः .... | ३ | ४०१, ६४३, ६५८ |
| ७१ | वीरहा .... | ३ | १६६, ७४१, ९२७ |
| ७२ | वेदवित् | २ | १२८, १३१ |
| ७३ | शिवः | २ | २७, ६०० |
| ७४ | शुचिः | २ | १५५, २५१ |
| ७५ | शुभाङ्गः .... | २ | ५८६, ७८२ |
| ७६ | शौरिः .... | २ | ३४०, ३४४ |
| ७७ | श्रीनिवासः | २ | १८३, ६०७ |
| ७८ | श्रीमान् | ४ | २२, १७८, २२०, ६१३ |
| ७९ | सतां गतिः | २ | १८४, ४५० |
| ८० | सत्यः | ३ | १०६, २१२, ८६९ |
| ८१ | सर्वज्ञः .... | २ | ४५३, ८१५ |
| ८२ | सर्वः .... | २ | २५, ७२७ |

| क्रमाङ्कः | नामानि | | | आवर्तनम् | नामसङ्ख्या |
|---|---|---|---|---|---|
| ८३ | सविता | | .... | २ | ८८४, ९६९ |
| ८४ | सहिष्णुः | | .... | २ | १४४, ५६५ |
| ८५ | सिद्धः | | .... | २ | ९७, ८१९ |
| ८६ | सिंहः | | .... | २ | २००, ४८८ |
| ८७ | सुखदः | | | २ | ४५९, ८८९ |
| ८८ | सुपर्णः | .... | | २ | १९२, ८५५ |
| ८९ | सुव्रतः | .... | | २ | ४५५, ८१८ |
| ९० | संवत्सरः | .... | | २ | ९१, ४२२ |
| ९१ | स्थविष्ठः | | | २ | ५३, ४३६ |
| ९२ | स्रष्टा | .... | .... | २ | ५८८, ९९० |
| ९३ | हिरण्यगर्भः | .... | .... | २ | ७०, ४११ |
| ९४ | हुतभुक् | .... | .... | २ | ८७९, ८८७ |

# एतद्ग्रन्थोपयुक्तसङ्केताक्षरविवरणसूची

छान्दो, छा. उ.=छान्दोग्योपनिषत्

ऋ. सं.—ऋग्वेदसंहिता

ऋ. सं. म. सू. व.—ऋग्वेदसंहिता, मण्डलं, सूक्तं, वर्गः

वि. स.—विष्णुसहस्रनामस्तोत्रम्

जै. सू.=जैमिनिसूत्रम्

पा. सू.=पाणिनिसूत्रम्

भ. गी.—भगवद्गीता

तै. उ.=तैत्तिरीयोपनिषत्

कठ, कठ. उ.—कठोपनिषत्

मुण्ड, मु. उ.—मुण्डकोपनिषत्

बृ. उ, बृह. उ.—बृहदारण्यकोपनिषत्

श्वे, श्वेता.—श्वेताश्वतरोपनिषत्

गण, ग. सू.—गणसूत्रम्

उ. उणा.=उणादिसूत्रम्

नामलि, नाम.—नामलिङ्गानुशासनम् (अमरकोशः)

योग, यो. सू.—योगसूत्रम्

ब्र. सू.—ब्रह्मसूत्रम्

विष्णु, वि. पु.—विष्णुपुराणम्

मनु=मनुस्मृतिः

हरि, हरिवं, हरि. अ.—हरिवंशः, अध्यायः

बृहन्ना. पु.—बृहन्नारदीयपुराणम्

वि. ध.–विष्णुधर्मः

तै. आ.=तैत्तिरीयारण्यकम्

नृ. उत्तर. उ, नृसिंह. उत्तर, नृसिंहो.–नृसिंहोत्तरतापनीयोपनिषत्

ईश, ईश. उ.–ईशावास्योपनिषत्

ऐत. आ.–ऐतरेयारण्यकम्

वराह. उ.–वराहोपनिषत्

या. स्मृ.=याज्ञवल्क्यस्मृतिः

याज्ञ. प्राय. अ. श्लो.–याज्ञवल्क्यस्मृतिः, प्रायश्चित्ताध्यायः, श्लोकः

गौड.=गौडपादीयकारिका

तै. ब्रा.–तैत्तिरीयब्राह्मणम्

उद्यो. अ.–उद्योगपर्व, अध्यायः (भारतम्)

ऐ. आर, ऐ. आ.=ऐतरेयारण्यकम्

भार. आदि.–भारतं, आदिपर्व

आ. ब्रा.–आर्षेयब्राह्मणम्

कैव, कै. उ.–कैवल्योपनिषत्

प्रश्न, प्र. उ.=प्रश्नोपनिषत्

माण्डू. उ.–माण्डूक्योपनिषत्

माण्डू. का. आ.=माण्डूक्यकारिका आगमप्रकरणम्

आप. ध. सू.–आपस्तम्बधर्मसूत्रम्

अरण्य. प. अ.–अरण्यपर्व, अध्यायः

श्रीभा, भाग.–श्रीभागवतम्

वि. स्मृ.–विष्णुस्मृतिः

मैत्रा. उ.–मैत्रायणीयोपनिषत्

शान्ति, शान्तिप.–शान्तिपर्व (भारते)

भार. उद्योग, उद्योगप.–भारते उद्योगपर्व

तै. आ, याज्ञिक्यु.–तैत्तिरीयारण्यकं, याज्ञिक्युपनिषत्

ईश. शां. भा.—ईशावस्योपनिषत् शाङ्करभाष्यम्

वा, वार्ति.=वार्तिकम्

केन.—केनोपनिषत्

शा. भा.—शाङ्करभाष्यम्

अनु.—अनुशासनपर्व (भारते)

आदि.—आदिपर्व (भारते)

ऐत, ऐ. उ.—ऐतरेयेपनिषत्

कौषी, कौ. उ.—कौषीतक्युपनिषत्

निरु.=निरुक्तम्

वायु. पु.=वायुपुराणम्

मा. पु.=मार्कण्डेयपुराणम्

भट्टि.=भट्टिकाव्यम्

महाना.—महानारायणोपनिषत्

आप, आ. श्रौ.=आपस्तम्बश्रौतसूत्रम्

मुद्गल. उ.—मुद्गलोपनिषत्

सुबाल.—सुबालोपनिषत्

ब्र. पु.=ब्रह्मपुराणम्

गौ. ध. सू.—गौतमधर्मसूत्रम्

जाबाल.—जाबालोपनिषत

पञ्च. अध्यास.—पञ्चपादिका अध्यासभाग

भाग. पू.=भागवतं पूर्वार्धम्

सू. सं. यज्ञ.—सूतसंहिता यज्ञवैभवखण्डः

वा. रा.—वाल्मीकिरामायणम्

भार. मोक्ष.—भारते मोक्षधर्मपर्व

भार. शान्ति.—भारते शान्तिपर्व

अनर्घ.—अनर्घराघवं नाटकम्

वा. रा. बाल.=वाल्मीकिरामायणं बालकाण्डम्

निरुक्त. नि.=निरुक्ते निघण्टुसमाम्नायः

वा. रा. अयो.=वाल्मीकिरामायणं अयोध्याकाण्डः

ऋ. सं. सा. भा. श्लो.=ऋक्संहितासायणभाष्यश्लोक

मत्स्य. पु.=मत्स्यपुराणम्

हरि. भवि.=हरिवंशे भविष्यपर्व

शै. पु.=शैवपुराणम्

शां. भा. क. उ.=शाङ्करभाष्यं कठोपनिषत

लिङ्ग. पु.=लिङ्गपुराणम्

अनुशा.=अनुशासनपर्व.

# अशुद्धसंशोधनी

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| विद्यााया | विद्यया | ४ | १० |
| क्रापणये | कृपाणये | ३४ | २० |
| एष | एषः | ४२ | ५ |
| इस्यादि | इत्यादि | ,, | २३ |
| तस्वात् | तत्वात् | ,, | २४ |
| दाह्यभदं | दाह्यभेदं | ४५ | १७ |
| नित्या इति | नित्य इति | ४७ | २० |
| किञ्चन | किञ्च | ५५ | ६ |
| अहंब्रह्म | अहं ब्रह्म | ६२ | १२ |
| (वि. पु. १-१८-९०) | (वि. पु. १-१७-९०) | ७१ | २० |
| । तथा च | , तस्य च | ७४ | १० |
| पापरिभ्रष्टः | पापपरिभ्रष्टः | ७७ | १४ |
| (आदि. ७-४) | (उद्यो. ४२-३५) | ८२ | ६ |
| वस्तृषु | वस्तुषु | ९१ | १६ |
| पुंसेऽच्युतः | पुंसोऽच्युतः | ११४ | २१ |
| शेतु | हेतु | ,, | २३ |
| स्यदि- | स्यादि- .... | १२६ | १२ |
| निवेशित | निवेशिते | १३३ | ४ |
| यति | याति | ,, | ६ |
| चारिणे | चारिणो .... | १४३ | ११ |

| अशुद्धम् | शुद्धम् | | पृष्टम् | पङ्क्तिः |
|---|---|---|---|---|
| भवविकारः | भावविकारः | | १४४ | ११ |
| आत्माविज्ञान | आत्मा विज्ञान | | १४५ | १४ |
| अव्यवधनेनेति | अव्यवधानेनेति | | १५० | ,, |
| नाम । निधये | नाम निधये | | १६५ | १३ |
| हिरण्यमयः | हिरण्मयः | | १७० | ५ |
| मित | र्मित | | ,, | ८ |
| हिरण्यमयः | हिरण्मयः | | ,, | ११ |
| ॥ ९८ ॥ | ॥ १८ ॥ | | १७४ | ५ |
| भवगः | भगवः | | २०० | ६ |
| [1] निर | [2] निर | .... | २०४ | १७ |
| (पा. सू. ९-४-२५) | (पा. सू. १-४-२५) | .... | २०६ | १२ |
| सुत | सूतः | | २०७ | २ |
| स्याद्वा " सत्य | स्याद्वा । सत्य | .... | २१३ | ४ |
| प्रचा | पचा | | २३० | १० |
| प्राशुः | प्रांशुः | | २३२ | २ |
| मंहत् | महत् | | २३८ | १३ |
| पष्ठ्या | षष्ठ्या | | २५५ | २२ |
| स्येति सहस्र | स्येति । सहस्र | | २५७ | १९ |
| श्रुतेः [2] अनादि | श्रुतेः । [2] अनादि | .... | २५९ | ६ |
| श्री घृषा | श्रि घृषा | | २६१ | १३ |
| कथ | कथं | | २६६ | २१ |
| नारायणः उत्क्रम्— | नारायणः । उत्क्रम्— | | २६७ | ,, |
| पुरुषणा | पुरुषाणां | | २८९ | ६ |
| उतरत्र | उत्तरत्र | | २९५ | २३ |
| श्वरस्य | शूरस्य | .... | ३०० | १७ |

| अशुद्धम् | शुद्धम् | पुटम् | पङ्क्तिः |
|---|---|---|---|
| बाह्वादि | [2] बाह्वादि | ३०० | १७ |
| रुपादन | रुपादान | ३१२ | २३ |
| उदारान्तरे | उदरान्तरे | ३१३ | १७ |
| ,, | ,, | ३१४ | ४ |
| ब्रह्मचर्यदीना | ब्रह्मचर्यादीना | ३१७ | १२ |
| विरज परः | विरजः परः | ३२२ | २१ |
| वा प्राणः | प्राणः | ३२७ | ७ |
| इति । पूर्श | इति पूर्श | ,, | ९ |
| द्वितीयं | द्विधा | ३२८ | १७ |
| द्विधा | द्वितीयं | ,, | २० |
| सृष्टिश्चेयं, | सृष्टिश्चेयं | ३३२ | ९ |
| इतिश्रुतेः | इत्यादिश्रुतेः | ३४२ | ६ |
| प्रतिषिद्धं | प्रतिषिद्धं, | ३४९ | ११ |
| तत्सखं | तत्सुखं | ३५३ | ७ |
| विर्भत | विर्भूत | ३५६ | ११ |
| सहस्राशुः | सहस्रांशुः | ३६० | २ |
| सवभू | सर्वभू | ३६१ | ४ |
| सवषां | सर्वेषां | ,, | २१ |
| इति—वद्वा | इतिवद्वा | ३६३ | ५ |
| श्रासा दव | श्रासौ देव | ,, | २१ |
| शब्देनापान | शब्देनापौन | ,, | २२ |
| मुक्त | मुक्तिं | ३७५ | १० |
| येनति | येनेति | .... ३७८ | १४ |
| अनुदात्ततश्च | अनुदात्तेतश्च | ,, | १६ |
| धर्मज्ञानादयो | धर्माः-ज्ञानादयो | ३७९ | ९ |

| अशुद्धम् | शुद्धम् | | पुटम् | पङ्क्तिः |
|---|---|---|---|---|
| अत्मा | आत्मा | .... | ३८२ | ९ |
| ज्ञानेति | ज्ञानेति | | ३८७ | ८ |
| अनम्यां | अनन्यां | | ४०७ | १७ |
| विनिर्मोह | विनिर्मोक्ष | | ४१४ | २० |
| विधेयात्मा | अविधेयात्मा | .... | ४३० | ९ |
| भतिः | भूतिः | .... | ४३२ | ६ |
| सव | सर्वं | | ,, | १६ |
| कतु | क्रतु | .... | ४५३ | १० |
| तद्विद् परावण | तद्विद: परायण | .... | ४५८ | २० |
| औणाविक | औणादिक | .... | ४५९ | ११ |
| घञ् | घञ् | | ४७७ | ९ |
| भक्तनां | भक्तानां | | ४८१ | ५ |
| शृङ्गः | शृङ्गः | | ४८६ | २ |
| (यज्ञिक्यु १२) | (याज्ञिक्यु. १०-१०-२) | .... | ,, | ६ |
| बध्य | बध्व | | ४८९ | २२ |
| समावृत्तो | समावर्तो | | ४९३ | २० |
| दौर्ले | दौर्ले | .... | ४९५ | ११ |
| लभ्य | लभ्य: | .... | ,, | १४ |
| भृङ्गी | भृङ्गी | | ५०२ | २ |
| वषर्ण | वर्षण | | ५११ | १७ |
| वर्तन | वर्तमानोऽपि | | ५१७ | ३ |
| " एकोऽश्वो | " एको अश्वो | .... | ५२२ | १२ |
| हाथ | हार्थ | | ,, | २१ |
| भय | भयं | .... | ५२४ | १६ |
| कर्मेत्ति | कर्मेति | .... | ५३१ | ९ |

| अशुद्धम् | शुद्धम् | | पुटम् | पङ्क्तिः |
|---|---|---|---|---|
| भाष्ये | भाष्यविवृतौ | .... | ५३१ | २३ |
| धत | धृत | .... | ५३७ | ४ |
| सवर्वृत्तिके | सर्ववृत्तिके | | ५४० | ८ |
| समाध्धत्ते। स्वात्मानं | समाधत्ते स्वात्मानं | | ,, | १० |
| भावात्। नास्य | भावात् नास्य | | ५४७ | ४ |
| काङ्क्ष्क्षयते | काङ्क्ष्यते | .... | ५४९ | १५ |
| रावलाचनः | रविलोचनः | .... | ५५५ | २ |
| दुखं | दुःखं | | ५५७ | १६ |
| अखिान्नो नि | अखिन्नोऽनि | .... | ५५९ | ९ |
| (भ. गी. ३-२३) | (भ. गी. ६-२३) | | ,, | १७ |
| अधट्ट | अघट | .... | ५६१ | २० |
| समुत्क्षित्याविव | समुत्क्षित्य विव | .... | ५६७ | १५ |
| चतुर्थ्यन्तम्। " नमो | चतुर्थ्यन्तम्, नमो | .... | ५७८ | १० |
| ननपोक्ष्य | नपेक्ष्य | .... | ५८१ | ७ |
| शोभ्मना | शोभनानि | .... | ५८४ | १६ |
| कप्रत्ययस्य | कप्प्रत्ययस्य | | ५८६ | २१ |
| कप्रत्ययेन | कप्प्रत्ययेन | | ,, | २२ |
| कप्रत्यय | कप्प्रत्यय | .... | ५८७ | ४ |
| ,, | ,, | | ,, | १० |
| इतराणे | इतरेण | .... | ५९२ | १४ |
| न भावति। किन्त्वेकात्मक इति एवशब्देन | न भवति, किन्त्वेकात्मक इति। एवशब्देन | | ५९३ | १८ |
| इत्याग्नीध्रीये | इत्याग्नीध्रीये | .... | ५९८ | १९ |
| वेदीरस्कन्धो | वेदिस्कन्धो | .... | ६०५ | ३ |
| (छा.. उ. १-२-४) | (छा. उ. ६-२-४) | .... | ६१२ | ९ |

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| हिरण्याक्ष. | हिरण्याक्षं | ६१२ | १४ |
| " ज्ञानादव | " ज्ञानादेव | ६२८ | ४ |
| सम्यज्ज्ञानेन | सम्यग्ज्ञानेन | ६२९ | १० |
| इत्यदिना | इत्यादिना | ६३५ | १४ |
| सख | सुख | ६३६ | ३ |
| इत्यादि नाशुभेति | इत्यादि । नाशुभेति | ६३७ | ११ |
| महात्म्य | माहात्म्य | ६३८ | ७ |
| इत्यादि-श्रुति | इत्यादिश्रुति | ६३९ | २३ |
| इत्यनन | इत्यनेन | .... ६४० | ५ |
| प्रथमं | प्रथमः | ,, | २ |
| ,, | ,, | ,, | ११ |
| शिरस्नात | शिरस्स्नात | | १५ |
| (छ. उ. ६-३-२) | (छा. उ. ६-३-२) | ६४१ | १७ |
| देवाः | वेदाः | ६४२ | ११ |
| ज दुष्टजे | च दुष्टजे | ६५० | १४ |
| एकार्णवे हि पर्यङ्क | एकार्णवेऽहिपर्यङ्क | ,, | १८ |
| जगदुरुं | जगद्गुरुं | ६५१ | ,, |
| सुहृद्भ्रातॄ | सुहृद्भ्रातृ | ६५२ | १२ |
| अनिर्विणः | अनिर्विण्णः | .... ६६६ | ९ |
| विरजाय | विरजसे | ६९९ | २१ |
| जरन्नवं | जरन्नेवं | ७३४ | १० |
| तियस्य | तिर्यस्य | ७६६ | ३ |
| चतुमूर्ति | चतुर्मूर्ति | ७६९ | ५ |
| पूर्जित | पूजित | ७७८ | १५ |

॥ श्रीरस्तु ॥

श्रीगुरुगणेशशारदाभ्यो नमः

# श्रीविष्णुसहस्रनामस्तोत्रम्

## तारकब्रह्मानन्दसरस्वतीविरचितविवृतिसमेत-
## श्रीशाङ्करभाष्यसमलङ्कृतम्

भाष्यम्

*सच्चिदानन्दरूपाय कृष्णाया[1]क्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे [2]बुद्धिसाक्षिणे ॥
कृष्णद्वैपायनं व्यासं सर्वलोकहितैषिणम् ।
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ॥

विवृतिः

श्रीमाधवोमाधवविघ्नराजान्
वाग्देवतां व्यासमुनिं महान्तम् ।
श्रीशङ्करं भाष्यकृतं च भक्त्या
नमाम्यहं लोकहितावतारम् ॥ १ ॥

श्रीगोपालानन्दयतीन् गुरून् विद्यागुरूनपि ।
प्रणम्य श्रीमदद्वैतानन्दाञ्छमदमालयान् ॥ २ ॥

---

* पुष्पचिह्नितं श्लोकद्वयं भाष्यादावेतद्व्याख्यानतोऽनुपलभ्यमानमपि मुद्रितानेक-पुस्तकानुरोधेन हस्तलिखितपुस्तकानुरोधेन च संयोजितम् .

[1] याभीष्टदायिने–**पा**.  [2] लोकसा–**पा**.

## भाष्यम्

"आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तस्सर्वमभूद्विश्वं त्वयि सर्वं प्रलीयते ॥
अहं त्वं [1] हि महादेवस्त्वमेवाहं जनार्दन ॥
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

## विवृतिः

भाष्यं तैरुपदिष्टार्थं भगवत्पादनिर्मितम् ।
विष्णोर्नामसहस्रस्य यथामति विविच्यते ॥ ३ ॥

क सर्वविद्भाषितभाष्यमेत-
द्व्याख्याप्रयत्नः क च मेऽल्पबुद्धेः ।
तथापि वैगुण्यमिह क्षमन्तां
सन्तो यतेर्यन्मननं स्वधर्मः ॥ ४ ॥

इह खलु युधिष्ठिरो भगवान् परमकारुणिकः शान्तनवाद्भीष्माद्धर्मप्रवक्तुः श्रुतिस्मृत्याचारप्रमाणकान् सर्वान् धर्मानायाससाध्यानल्पफलाञ्छ्रुत्वा सकलपुरुषार्थसाधनभूतस्सुखसम्पादनो धर्मोऽनुक्त इति मत्वा तादृशं धर्मं धर्मप्रवक्तारं भीष्मं पप्रच्छ। स च भीष्मो युधिष्ठिरं प्रष्टारं प्रति विष्णुनामसहस्रस्तवजपरूपमुक्तस्वरूपं धर्ममुवाच। तच्च विष्णुनामसहस्रं भगवान् बादरायणमुनिर्भारते [2]शान्तिपर्वणि [3]दानधर्मे श्लोकैरुपनिबबन्ध। तद्व्याचिख्यासुः श्रीशङ्करभगवत्पादाचार्यो "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्ति, अध्येतारश्च सिद्धार्था यथा स्युः" (महाभाष्यम् १-१-१) इति व्याकरणमहाभाष्योक्तप्रयोजनं मङ्गलं हरिहरैक्यानुसन्धानरूपं

[1] सर्वगो देव—पा. [2] विष्णुसहस्रनामपाठस्य भारतेऽनुशासनपर्वणि निबन्धनदर्शनादत्र शान्तिपर्वणीत्युक्तिश्चिन्त्या। [3] दानधर्मः श्लो. पा.

## भाष्यम्

**नामानि तव गोविन्द! यानि लोके महान्ति च।**
**तान्येव मम नामानि नात्र कार्या विचारणा॥**
**त्वदुपासा जगन्नाथ! सैवास्तु मम गोपते!॥**
**यश्च त्वां [1]द्वेष्टि भो देव! स मां द्वेष्टि न संशयः॥**
**त्वद्विस्तारो यतो देव! ह्यहं भूतपतिस्ततः।**
**न तदस्ति [2]मनाग्देव! यत्ते विरहितं क्वचित्॥**

## विवृतिः

सम्पादयितुं विष्णुनाम्नां शिवनामत्वोक्त्या शिवद्वेषराहित्येन क्रियमाणविष्णुसहस्रनामस्तवकीर्तनेन शिवोऽपि तुष्यतीति दर्शयितुं च हरिवंशे कैलासयात्रायां विष्णुं प्रति शिववचनं पठति "आदिस्त्वं सर्वभूतानां" इत्यादि "विना किञ्चित्त्वया नहि" इत्यन्तम्॥

केषुचित्पुस्तकेषु आदिस्त्वमित्यादिहरिवंशवचनं उत्तरत्र "विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च" इत्यादिभविष्यत्पुराणवचनानन्तरं [3]पठ्यते। तस्मिन् पक्षे "सहस्रमूर्तेरि" त्यग्रिमश्लोकस्यैव मङ्गलार्थत्वमिति बोध्यम्॥

नन्विदं भाष्यं नारम्भणीयम्। विषयप्रयोजनयोरभावात्। न च व्याख्येयविषयप्रयोजनाभ्यामेव तद्वत्त्वम्। अज्ञातार्थकनामसहस्रं विषयः, तदर्थज्ञानं वा प्रयोजनमिति वाच्यम्। व्याख्येयस्य सहस्रनामस्तवस्य जपमन्त्रत्वेन [4]अनुष्ठानार्थस्यार्थज्ञानस्यानपेक्षणान्नामार्थावगतेः स्वातन्त्र्येण पुरुषार्थत्वे प्रमाणाभावेन तामुद्दिश्य प्रेक्षावतां प्रवृत्त्यनुपपत्तेश्चेति चेत्, न; नामार्थज्ञानपूर्वकजपादिना फलभूयस्त्वावगमात्, अर्थज्ञानस्य स्वातन्त्र्येणापि फलवत्त्वावगमाच्च। "यदेव

[1] द्विषते देव—**पा.** [2] विना देव—**पा.** [3] दृश्यते—**पा.** [4] अनुष्ठानस्यानपेक्षणा—**पा.**

भाष्यम्

यदासीद्वर्तते यच्च यच्च भावि जगत्पते ।
सर्वं त्वमेव देवेश विना किञ्चित्त्वया न हि " ॥

इति हरिवंशे कैलासयात्रायां महेश्वरवचनम् ।

सहस्रमूर्तेः पुरुषोत्तमस्य
सहस्रनेत्राननपादबाहोः ।
सहस्रनाम्नां स्तवनं प्रशस्तं
निरुच्यते जन्मजरादिशान्त्यै ॥

विवृतिः

विद्याया [1]करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति " (छा–उ– १–१–१०) इति श्रुतेः ।

" यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ (निरुक्तं १–१८)

इत्यर्थज्ञानरहितपाठादे[2]र्निन्दनात् । "योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा "(निरुक्तं–१-१८) इति फलवचनात् ।" उत त्वः पश्यन्" (ऋ.सं. १०-७१-४) इत्याद्यृचा अर्थज्ञानप्रशंसनात् । इहापि "शुचिस्तद्गतमानसः" (वि.स.श्लो. १२५) इति नामार्थानुसन्धानपूर्वकसहस्रनामकीर्तनोक्तेश्च । तस्मात् ज्ञानस्य फलवत्त्वान्नामार्थज्ञानाय भाष्यमारम्भणीयम् । एवमारम्भणीयत्वे सिद्धे विषयप्रयोजने दर्शयन्नेव चिकीर्षितं प्रतिजानीते—**सहस्रमूर्तेरिति ।** अत्र सहस्रमूर्तेरित्यादिना विषयो दर्शितः । **जन्मजरादिशान्त्यै** इत्यनेन नामार्थानुसन्धानपूर्वकजपेन चित्तशुद्धिज्ञानोत्पत्तिप्रणाड्या मोक्षः प्रयोजनमिति च दर्शितम् । **सहस्रनाम्नां स्तवनं निरुच्यत** इति । अवयवार्थप्रदर्शनपूर्वकं नाम्नां विवरणं क्रियत इत्यर्थः ॥

---

[1] कुरुते—**पा.** [2] निन्दादर्शनात्—**पा.**

## श्रीविष्णुसहस्रनामस्तोत्रम्

श्रीवैशम्पायन उवाच—

# श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।

भाष्यम्

**श्रीवैशम्पायन उवाच—श्रीवैशम्पायनो जनमेजयं प्रत्युवाच—श्रुत्वेति । धर्मान्–अभ्युदयनिश्श्रेयसहेतुभूतान्**

विवृतिः

अत्र युधिष्ठिरो भीष्ममुखादनेकप्रकारान् धर्मान् श्रुत्वाप्यपरितुष्यन् भीष्मं परमं धर्मं पप्रच्छ। [1]युधिष्ठिरं प्रति भीष्मो यदुवाच तत्सर्वं वैशम्पायनो जनमेजयं प्रत्युवाच। तच्च शौनकादीन् प्रति सौतिरवोचादिति सम्बन्धमभिप्रेत्याह—**श्रीवैशम्पायन उवाचेति।** अत्र प्रकरणाज्जनमेजय इति सम्बध्यते। धर्मानित्यत्र लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति धर्मस्य लक्षणप्रमाणजिज्ञासायां "चोदनालक्षणोऽर्थो धर्मः" (जै. सू–१. १. २) इति धर्मस्य लक्षणप्रमाणपरजैमिनिसूत्रार्थं हृदि निधाय व्याचष्टे—**धर्मान् अभ्युदयनिश्श्रेयसहेतुभूतान् चोदनालक्षणानिति।** अत्रेत्थमधिकरणम्—धर्मो मानलक्षणाभ्यां रहितस्तदुपेतो वेति संशये पूर्वपक्षः—लक्षणप्रमाणाभ्यां वस्तुसिद्धिः। अत [2] एवाहुः—

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्" इति ॥

सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्ध आकारो लक्षणम्। तेन लक्षणेन [3] लक्ष्यवस्तुनि सम्भावनाबुद्धौ जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति। तद्यथा—सास्नादिमती गौरित्युपश्रुत्य [4] चतुष्पात्सु जीवेषु लक्षणलक्षितं पदार्थमन्विष्य

---

[1] तं प्रति–**पा.** [2] एवाह–**पा.** [3] लक्ष्ये व–**पा.** [4] सा च?–**पा.**

## विवृतिः

'इयं गौः' इति चक्षुषावगच्छति। [1] एवं सत्यलौकिकत्वाद्धर्मस्य नास्ति लक्षणम्। तत्र कुतः प्रमातुमुद्योगः? कथञ्चिदुद्योगेऽपि न तत्र प्रमाणसद्भावः शङ्कितुमपि शक्यः। न तावदत्र प्रत्यक्षं क्रमते। धर्मस्य रूपादिरहितत्वात्। अत एव व्याप्तिग्रहाभावान्नास्त्यनुमानम्। प्रत्यक्षानुमानमूलश्च शब्दस्य सङ्गतिग्रहः। ततो व्युत्पत्त्यभावान्नागमोऽपि तत्र प्रवर्तते। तस्माद्धर्मो [2] लक्षणप्रमाणरहित इति प्राप्ते—ब्रूमः; माभूच्चक्षुरादिगम्यो लौकिक आकारः। तथापि चोदनागम्यस्वर्गसाधनत्वादिलक्षण आकारोऽस्ति। तेनार्थत्वे सति चोदनागम्यो धर्म इति लक्षणं भवति। अर्थो धर्म इत्युक्ते ब्रह्मणि चैत्यवन्दनादौ घटादौ चातिव्याप्तिः। तद्व्यवच्छेदाय चोदनागम्य इत्युक्तम्। तावत्येवोक्ते विधिगम्ये नरकफलकत्वे[3]नानर्थरूपे श्येनाद्याभिचारकर्मण्यतिव्याप्तिः। तद्व्यवच्छेदाय [4] अर्थ इत्युक्तम्॥

यद्यपि श्येनस्य शत्रुवधः फलम्। न तु नरकः; तथापि तस्य वधस्य नरकहेतुत्वाद्वधद्वारा [5] श्येनोऽनर्थः। न चैवमग्नीषोमीयहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम्। तस्याः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावात्। यतश्चोदनागम्यत्वे सत्यर्थत्वं लक्षणमत एव गम्ये धर्मे गमकं विधिवाक्यं प्रमाणम्॥

यद्यपि प्रत्यक्षानुमानयोरविषयो धर्मः। तथापि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः सम्भवति। तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मः। यश्चोदनालक्षणोऽर्थः [6] स धर्म इति [7] लक्षणपक्षे, अर्थो यो धर्मः स चोदनालक्षण इति [8] प्रमाणपक्षे च [9] वचनव्यक्तिर्द्रष्टव्येति॥

---

[1] एवं च स–**पा.** [2] लक्षणरहित–**पा.** [3] नाधर्मरूपे–**पा.** [4] धर्म–**पा.**
[5] श्येनोऽधर्मः–**पा.** [6] समर्थ इ–**पा**?. [7] लक्षणः पक्षे–**पा**? [8] प्रमाणपरत्वपक्षे–**पा.**
[9] वचनं व्याप्ति–**पा**?

भाष्यम्

**[1]चोदनालक्षणान्, अशेषेण—कार्त्स्न्येन, पावनानि—पापक्षयकराणि धर्मरहस्यानि च, सर्वशः—सर्वप्रकारैः, श्रुत्वा**

विवृतिः

अत्र भाष्ये **अभ्युदयनिश्श्रेयसहेतुभूतान्** इत्यनेन सूत्रस्थार्थपदस्य विवरणं कृतमिति बोध्यम्। अत्राभ्युदयनिश्श्रेयसपदयोरेकैकपदोपादाने प्रवृत्तिलक्षणे निवृत्तिलक्षणे च धर्मेऽव्याप्तिरित्युभयोपादानम्। असम्भववारणाय अभ्युदयनिश्श्रेयसान्यतरहेतुभूतानीति विवक्षणीयम्। **कार्त्स्न्येनेति**। कार्त्स्न्यविशिष्टान् कृत्स्नानित्यर्थः। **सर्वशः सर्वप्रकारैरिति** पावनानीत्यनेन सम्बध्यते। [2]इत्थम्भूते तृतीया। प्रायश्चित्तव्रतोपवासाद्यनेकप्रकारविशिष्टानि पावनानि चेत्यर्थः॥

[3]**सर्वशः सर्वप्रकारैः** इत्येतद्भाष्यं सर्वशब्दस्य प्रकारकार्त्स्न्यपरत्वाभिप्रायं बोध्यम्। अन्यथा प्रस्तुते प्रकारार्थालाभात्। अत्र सर्वशब्दार्थस्य कथञ्चित्कारकत्वसम्भवेऽपि सर्वशब्दस्य बहुशब्दतत्पर्याय-[4]तद्विशेषत्वाभावान्न "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" (पा. सू. ५-४-४२) इत्यनेन शस्प्रत्ययः सम्भवति। नापि "सङ्ख्यैकवचनाच्च वीप्सायाम्" (पा. सू. ५-४-४३) इत्यनेन। वीप्साया अत्राभावात्। तस्मात्स्वार्थमात्रेऽयं शस्। "सर्वस्य द्वे" (पा. सू. ८-१-१) इति सूत्रे एकैकश इति भाष्यकारोदाहरणेन स्वार्थिकशसो ज्ञापितत्वात्। उक्तं च धातुवृत्तौ —एकैकशः पितृसंयुक्तानित्यत्र शसः प्रायश इत्यादिवदत्यन्तस्वार्थिकत्वाद्वीप्साया अनभिधानाद्द्विर्वचनम्। तथा च "सर्वस्य द्वे" (पा. सू. ८-१-१) इत्यत्र भाष्यम्—यत्र च तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्। यथा एकैकशो

[1] वेदलक्षणान्—**पा.** [2] इत्थंभावे—**पा.** [3] सर्वदा—**पा** ?. [4] तद्विषयत्वा—**पा.**

## स्तोत्रम्

**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

## भाष्यम्

**युधिष्ठिरो–धर्मपुत्रः, शान्तनवं–शन्तनुपुत्रं भीष्मं, सकलपुरुषार्थसाधनं सुखसम्पाद्यमल्पप्रयासमनल्पफलमनुक्तमिति कृत्वा, पुनः–भूय एव, अभ्यभाषत–प्रश्नं कृतवान् ॥ १ ॥**

## विवृतिः

ददातीति। इदमेव भाष्यमत्यन्तस्वार्थिकशसो मूलमिति। सर्वश इत्यस्य श्रुत्वेत्यनेन वा सम्बन्धः। तस्मिन् पक्षे प्रणिपातपरिप्रश्नसेवादिभिः सर्वैः प्रकारैः श्रुत्वेत्यर्थो बोध्यः। तथा च राजधर्मे—

ततः पुनः स गाङ्गेयमभिवाद्य पितामहम्।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः॥
के धर्माः सर्वधर्माणां चातुर्वर्ण्यस्य के पृथक्।
चतुर्णामाश्रमाणां च राजधर्माश्च के मताः॥ इति॥

**युधिष्ठिर इति**। अत्र "हलदन्तात्सप्तम्याः संज्ञायाम्"(पा. सू. ६-३-९) इति संज्ञात्वात्सप्तम्या अलुक्। "गवियुधिभ्यां स्थिरः" (पा. सू. ८-३-९५) इति षत्वम्। युधि युद्धे स्थिरो न तु चञ्चल इति। "युद्धे चाप्यपलायनम्" (भ. गी. १८-४३) इति भगवद्वचनात्। स्वस्यायाससाध्ययुद्धादिरूपधर्मानुष्ठानसामर्थ्येऽप्यनायासेन सकलपुरुषार्थसाधनधर्मलाभमिच्छतामर्थे प्रश्नो युज्यत इति सूच्यते युधिष्ठिरशब्देनेत्यभिप्रेत्याह–**युधिष्ठिरो धर्मपुत्र इति**। **शन्तनुपुत्रं भीष्मं** इत्यनेन चित्राङ्गदविचित्रवीर्ययोः शङ्काव्यावृत्तिः। पूर्वमनेकविधधर्मोपदेशे श्रुतेऽपि तत्रापरितोषं प्रश्नबीजं दर्शयति **सकलपुरुषार्थसाधनमिति**। पूर्वकृतधर्मप्रश्नापेक्षया द्वितीयोऽयं प्रश्न इत्यभिप्रेत्याह **पुनर्भूय इति** ॥ १ ॥

## स्तोत्रम्

युधिष्ठिर उवाच—

**किमेकं दैवतं लोके किं वाप्येकं परायणम्।**

### भाष्यम्

**किमेकं दैवतं, देवतेत्यर्थः। स्वार्थे तद्धितप्रत्ययविधानात्। लोके–लोकनहेतुभूते समस्तविद्यास्थाने, उक्तमिति प्रथमः प्रश्नः।**

### विवृतिः

**युधिष्ठिरः शान्तनवमभ्यभाषत** इत्यनेन युधिष्ठिरप्रश्ने लब्धेऽपि पुनः **युधिष्ठिर उवाच** इत्येतदितिहासपुराणशैलीमनुसृत्येत्यभिप्रेत्याह—**युधिष्ठिर उवाचेति**। करिष्यमाणषट्प्रश्नीमध्ये प्रथमं प्रश्नं व्याख्यातुं प्रतीकं गृह्णाति **किमेकं दैवतमिति**। दैवतपदं व्याचष्टे–**देवतेति**। दैवतमित्यत्राण्प्रत्ययस्यार्थो न दर्शित इति शङ्का न कार्या। स्वार्थे[1]तलन्ताद्देवताशब्दात् "प्रज्ञादिभ्यश्च" (पा. सू. ५-४-३८) इति स्वार्थेऽण्विधानादित्यभिप्रेत्याह–**स्वार्थे तद्धितविधानादिति**। लोक्यते प्रमीयते अनेन धर्मब्रह्मस्वरूपमिति करणार्थे "अकर्तरि च कारके" (पा. सू ३-३-१९) इति घञन्ताल्लोकशब्दाच्चतुर्दश विद्यास्थानान्युच्यन्त इत्याह–**लोके लोकनहेतुभूत इति**। **समस्तविद्यास्थान इति**—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

इति सङ्ख्यात इत्यर्थः। लोक इत्यनेन सप्तम्यन्तेनापेक्षितं पूरयति **उक्तमिति**। **लोके** समस्तविद्यास्थाने **उक्तं** प्रतिपादितं **एकं** अद्वितीयं

---

[1] तलन्तादेव देवता–**पा.**

भाष्यम्

**किं वाप्येकं परायणम्—एतस्मिन् लोके एकं परायणं च किम् ? परं अयनं [1]प्राप्यं स्थानं परायणम् । यदाज्ञया प्रवर्तन्ते सर्वे ; [2]यस्मिन्निरीक्षिते हृदयग्रन्थिर्भिद्यते ;**

विवृतिः

**दैवतं** यत् तत् **किं** इति योजना । द्वितीयप्रश्नवाक्यव्याख्यानाय व्याख्येयवाक्यमादत्ते—**किं वाप्येकं परायणमिति ।** अत्र पूर्ववाक्याल्लोक इति पदमनुषज्य वापीति समुच्चयार्थकत्वं चाश्रित्य वाक्यस्थपदानि योजयति **एतस्मिन् लोके एकं परायणं च किमिति ।** अत्र वाक्ये **लोक** इति पूर्वोक्तार्थकं उक्तमिति च पूर्ववत्पूरणीयम् । **एक** पदमद्वितीयपरं मुख्यार्थकं वा । समासान्तर्गतपरपदमुत्कृष्टार्थकम् । ईयते प्राप्यत इति "कृत्यल्युटो बहुलम्" (पा. सू. ३-३-११३) इतीण्धातोः कर्मणि ल्युडन्तमयनपदमित्यभिप्रेत्य अयनपदविवरणपूर्वकं विगृह्णन्नेव समासं दर्शयति [3]**परं अयनं** [4]**प्राप्यमिति** । "भीषास्माद्वातः पवते" (तै. उ. २-८) "भयादस्याग्निस्तपति" (कठ. उ. ६-३) इत्यादिश्रुतिमनुसृत्य प्राप्यस्य परशब्दोक्तप्रकर्षमाह—**यदाज्ञया प्रवर्तन्ते सर्व इति ।** "**भिद्यते हृदयग्रन्थिः**" (मु. २-२-८) इत्यादिश्रुत्यर्थं हृदि निधाय प्राप्यस्य प्रकर्षमाह—**यस्मिन्निरीक्षित** इत्यादि । **यस्मिन्निरीक्षिते** साक्षात्कृते सति, बुद्धेश्चिदात्मनश्च ग्रन्थिवद्दृढसंश्लेषरूपत्वादन्योन्याध्यासो ग्रन्थिः ; स **भिद्यते** नश्यति । **सर्वसंशयाः** आत्मा देहातिरिक्तो न वा ? अतिरिक्तत्वेऽपि कर्तृत्वादिधर्मयोगी वा न वा ? अकर्तृत्वेऽपि तस्य ब्रह्मणाऽभेदोऽस्ति वा न वा ?

---

[1] प्राप्तव्यं–**पा.** [2] यस्मिन्नधिगते–**पा.** [3] परमं–**पा.** [4] प्राप्तव्यमिति–**पा.**

भाष्यम्

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**
**(मु. २-२-८.)**

**इति श्रुतेः; यस्य च विज्ञानमात्रेणानन्दलक्षणो मोक्षः प्राप्यते ; यद्विद्वान्न बिभेति कुतश्चन ; यत्प्रविष्टस्य न विद्यते पुनर्भवः ;**

विवृतिः

अभेदेऽपि तज्ज्ञानं कर्मादिसहितं मुक्तिसाधनं केवलं वेत्याद्याः । **छिद्यन्ते** नश्यन्ति । **कर्माणि** सञ्चितानि पुण्यापुण्यलक्षणानि । **क्षीयन्ते** स्व[1]निदानानाद्यविद्यानाशेन नश्यन्तीत्यर्थः। "ब्रह्मविदाप्नोति परम्" (तै.उ. २-१) इत्यादिश्रुतिमाश्रित्य प्राप्यस्य प्रकर्षमाह—**यस्य चेति** । कर्मसमुच्चयं वारयितुं **मात्र**पदम् । "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" (तै. उ. २-९) इति श्रुतिमाश्रित्य प्रकर्षमाह—**यद्विद्वानिति** । आनन्दस्वरूपं ब्रह्म लक्षणया वृत्त्या शब्देषु बोधयत्सु तथैव यः पुमान् मनसा वेत्ति स पुमान् कुतोऽपि न बिभेति । अद्वितीयानन्दं प्रमाणतो विजानतः भयकारणमेव नास्तीत्यभिप्रेत्य **कुतश्चनेत्युक्तम्** । "द्वितीयाद्वै भयं भवति" (बृह. १—४—२) इति श्रुत्या स्वातिरिक्तं वस्तु भयकारणं दृष्टम् । तच्चैहिकं व्याघ्रादिकं, पारलौकिकं पापादिकं, अद्वितीये ब्रह्मणि नास्तीत्यर्थः । "न च पुनरावर्तते" (छा. उ. ८-१५ १)—

"मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" । (भ. गी. ८—१६)

इत्यादिश्रुतिस्मृत्यनुसारेण प्रकर्षमाह—**यत्प्रविष्टस्येति** । "ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड. ३-२-९) इति श्रुतिमाश्रित्य[2]प्रवेष्टुः प्रवेशकर्मणो भेदमा-

[1] निदानाज्ञाननाशेन—**पा.** [2] प्रवेष्टृप्रवेशकर्मणोः भेद—**पा.**

भाष्यम्

**यस्य च वेदनात्तदेव भवति ; "ब्रह्म वेद ब्रह्मैव भवति" (मु. ३-२-९) इति श्रुतेः। यद्विहायापरः पन्थाः नृणां नास्ति ; "नान्यः पन्था विद्यतेऽयनाय" (श्वेता. ३-८) इति श्रुतेः। तदुक्तं एकं परायणम्। लोके तत् किमिति द्वितीयः प्रश्नः।**

विवृतिः

शङ्कां निराकुर्वन् प्रकृष्टत्वमाह—**यस्य च वेदनादिति**। "नान्यः पन्था विद्यतेऽयनाय "(श्वेता.३-८)इति श्रुत्यनुसारेण प्रकृष्टत्वमाह **यद्विहायेति**। यदीयकर्मोपासनाज्ञानानि विना निश्श्रेयसगमनायान्य उपायो निश्श्रेयसार्थिनां नास्तीत्यर्थः। उक्तसप्तविधप्रकृष्टत्वविशिष्टं प्राप्यं दर्शयति—**तदुक्तमेकं परायणमिति। लोके** लोकनहेतुभूते समस्तविद्यास्थाने प्रतिपादितं यदेतादृशं प्राप्यं तत्किमिति [1]वाक्यार्थमाह—**लोके तदिति**। किमेकं दैवतमिति प्रथमप्रश्ने लोके—लोकनहेतुभूते समस्तविद्यास्थाने उक्त[2]मित्येतद्भाष्यानन्तरं यदाज्ञया प्रवर्तन्ते सर्वे इति वाक्यं बहुषु पुस्तकेषु दृश्यते। तस्मिन् पक्षे यदाज्ञया प्रवर्तन्ते सर्वे तदेकं दैवतं किमिति पूर्वेण सम्बन्धो द्रष्टव्यः॥

**स्तुवन्तः** [3]**अर्चन्तः** इति पदद्वयं "लक्षणहेत्वोः क्रियायाः" (पा. सू. ३-२-१२६) इति विहितशतृप्रत्ययान्तम्। **मानवा** [4]इति योग्यप्राणिमात्रोपलक्षणम्। गजेन्द्रादेरपि स्तुत्यादावधिकारात्। तथा च योग्यप्राणिमात्रस्य स्वर्गापवर्गलक्षणशुभप्राप्तेः साध्यस्य साधनभूतं कस्य देवस्य स्तवनमर्चनं चेति वाक्यार्थमभिप्रेत्य स्तुत्यर्चनविषयकौ द्वौ प्रश्नौ व्याचष्ट **किमिति**। बह्वीनां देवतानां मध्ये [5]एकस्य निर्धारणार्थत्वं

---

[1] वाक्यमाह—**पा.** [2] मिति भाष्यान—**पा.** [3] अर्चयन्तः—**पा?** [4] इति च योग्य—**पा.** [5] एकस्य तेन शब्देन—**पा.**

स्तोत्रम्

**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥२॥**
**को धर्मः सर्वधर्माणां भवतः परमो मतः ।**

भाष्यम्

**कं**–कतमं देवं, **स्तुवन्तः**– गुणकीर्तनं कुर्वन्तः, **कं** कतमं देवं, **अर्चन्तः**–बाह्यमाभ्यन्तरं चार्चनं बहुविधं कुर्वन्तः, **मानवाः**-मनुसुताः, **शुभं**–कल्याणं स्वर्गापवर्गादिफलं, **प्राप्नुयुः**–लभेरन् ? इति पुनः प्रश्नद्वयम् ॥ २ ॥

**को धर्मः**–पूर्वोक्तलक्षणः, **सर्वधर्माणां**–सर्वेषां धर्माणां मध्ये, **भवतः परमः**–प्रकृष्टो धर्मः, **मतः**–अभिप्रेत इति पञ्चमः प्रश्नः ।

विवृतिः

प्रश्नस्य मत्वा तमर्थं तेन शब्देन विवृणोति–**कं कतममिति** । स्तुतिरिह गुणकीर्तनमित्याह–**गुणसङ्कीर्तनमिति** । **अर्चन्तः** अर्चयन्तः । "आ धृषाद्वा" (ग. सू. २०२) इति णिज्विकल्पः । अर्चन्त इत्यनेन बाह्याभ्यन्तरात्मकमुभयविधमर्चनमुक्तमित्याह–**बाह्यमाभ्यन्तरं चेति** । **बहुविधमिति** । शास्त्रोक्तानेकोपचारयुक्तमित्यर्थः ॥ २ ॥

**मत** इत्यत्र "मनु अवबोधने" इत्यस्मादिच्छार्थकात् "मतिबुद्धि" (पा. सू. ३-२-१८८) इत्यादिना कर्मणि वर्तमाने क्तः । "क्तस्य च वर्तमाने" (पा. सू. २-३-६७) इति भवच्छब्दात् षष्ठी । [1]भवता इष्यमाणः प्रकृष्टो धर्मः सर्वेषां धर्माणां मध्ये क [2]इत्यर्थमभिप्रेत्य पञ्चमं प्रश्नं व्याचष्टे–**को धर्म इति** । **पूर्वोक्तलक्षण इति** । अभ्युदयनिश्श्रेयसहेतुभूतश्चोदना [3]लक्षणो धर्म इत्युक्तलक्षण इत्यर्थः ॥

[1] भवतां इष्यमाणः–**पा.** [2] इत्यभि–**पा.** [3] लक्षणो धर्म इत्यर्थः–**पा.**

स्तोत्रम्

**किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥३॥**

भाष्यम्

**किं**—जप्यं, **जपन्**-उच्चोपांशुमानसलक्षणं जपं कुर्वन् , **जन्तुः**—जनन-

विवृतिः

पूर्ववज्जपन्नित्यस्य हेत्वर्थकशतृप्रत्ययान्ततया जपन् मुच्यत इति हेतुहेतुमद्भावावगमात्कस्य जप्यस्य जपः जन्मसंसारबन्धन-मुक्तिहेतुरिति वाक्यार्थमभिप्रेत्य जप्यविषयं षष्ठं प्रश्नं व्याचष्टे—**किमिति ।** उच्चोपांशुमानसान् जपानन्यतमत्वेन क्रोडीकृत्य जप-शब्दार्थमाह—**उच्चेति ।** तथा चोक्तम्—

यश्शब्दो बोधजननः परेषां शृण्वतां स्फुटम् ।
[1]स्वाध्यायवाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥
ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकः ।
उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपात् ॥
यत्पदाक्षरसङ्गत्या परिस्पन्दनवर्जितम् ।
चिन्तनं सर्वशब्दानां मानसं तं जपं विदुः ॥ इति ॥

जायते इति **जन्तुः ।** "कमिमनिजनि" (उणा. ७५) इत्यादिना तुप्रत्यये निष्पन्नः प्राणि[2]सामान्यवचनो जन्तुशब्दः साम-र्थ्याद्योग्यप्राणिविषयः । तथा च यागादाविव नाधिकारलक्षणोक्ताना-मेवात्राधिकारः । अपि तु देवादीनामन्धपङ्ग्वादीनां त्रैवर्णिकानां चाधिकार इत्यभिप्रेत्याह—**जन्तुर्जननधर्मेत्यादि ।** स्त्रीशूद्रयोस्तु

---

[1] अत्र 'स्वाध्यायो वाचिकः' इति स्यादिति प्रतिभाति । [2] सामान्ये जन्तु-**पा.**

**भाष्यम्**

**धर्मा । अनेन जन्तुशब्देन जपार्चनस्तवनादिषु यथायोग्यं सर्वप्राणिनामधिकारं सूचयति । जन्मसंसारबन्धनात्, जन्म अज्ञानविजृम्भितानामविद्याकार्याणामुपलक्षणम् । संसारः–अविद्या, ताभ्यां जन्मसंसाराभ्यां यद्बन्धनं तस्मात्, मुच्यते–मुक्तो भवति, इति षष्ठः प्रश्नः । मुच्यते जन्मसंसारबन्धनात् इतीदमुपलक्षणमितरेषां फलानामपि । एतद्ग्रहणं तु मोक्षस्य प्राधान्यख्यापनार्थम् ॥ ३ ॥**

**विवृतिः**

नाधिकारः । [1]उत्तरत्र तदधिकारस्य भाष्ये प्रतिषेधात् । [2]संसारपदार्थे जन्मनोऽप्यन्तर्भावात्पृथग्जन्मग्रहणं व्यर्थमित्याशङ्क्य जन्मनोऽविद्याकार्यमात्रोपलक्षणत्वं संसारशब्दस्य करणव्युत्पत्त्या सर्वकार्योपादानाविद्यापरत्वं चाश्रित्य व्याचष्टे—**जन्मेत्यादि । ताभ्यामिति ।** ताभ्यामुपाधिभ्यां निमित्तभूताभ्यामात्मनि धर्मिधर्माध्यासात्मकं यद्बन्धनं तस्मान्मुच्यत इत्यर्थः । ननु मोक्षमात्रफलोक्तिरयुक्ता । फलान्तराणामपि वक्ष्यमाणत्वादित्याशङ्क्य मुक्तिफलोक्तेरुपलक्षणत्वमाश्रित्याह—**इदमिति ।** अनेकपुरुषार्थसाधनत्वेऽपि सहस्रनामस्तवजपस्य मोक्षफलेनान्येषामुपलक्षणत्वोक्तिर्मोक्षस्य प्राधान्यादित्याह — **एतद्ग्रहणमिति ॥ ३ ॥**

---

[1] "शूद्रः सुखमवाप्नुयात्" (वि.स.श्लो. १२३) इत्यत्रेत्यर्थः. [2] "यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे विहाय । तद्विद्वान्नामरूपाद्विमुक्तः" इति श्रुतौ श्रवणात् नामरूपमात्रविमुक्तिरुक्तेति तदनुसारेण संसारपदार्थे–**पा.**

## स्तोत्रम्

श्रीभीष्म उवाच—

### जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।

भाष्यम्

**षट् प्रश्नाः कथिताः। तेषु पाश्चात्योऽनन्तरो जप्य-विषयः षष्ठः प्रश्नः अनेन श्लोकेन परिह्रियते—भीष्म उवाचेति। सर्वेषां बहिरन्तश्शत्रूणां भयहेतुः–भीष्मः, मोक्षधर्मादीनां**

विवृतिः

कृतानां षण्णां प्रश्नानां मध्ये [1]जप्यविषयं प्रश्नं समाधत्त इत्याह—**भीष्म उवाचेति**। बिभेत्यस्मादिति भीष्मः। "ञिभी भये" इत्यस्मात् "भियः षुग्वा" (उणा. १४५) इति मक्प्रत्ययः षुगागमश्चेत्यभिप्रेत्य भीष्मशब्दस्यावयवार्थमाह—**शत्रूणामिति**। न केवलं बाह्यशत्रूणां भयहेतुः, किन्त्वान्तराणां कामादीनामपीत्याह—**सर्वेति**। कामादीनां शत्रुत्वं "काम एष क्रोध एषः" (भ—गी. ३-३७) इति,

"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण" ॥ (भ—गी. ३-३९)

इति च भगवतोक्तम्। कोपस्य शत्रुत्वं विष्णुपुराणेऽपि दर्शितम्—

"अपराधिनि कोपस्ते कोपे कोपः कथं न ते।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि"॥ इति ।

उत्तरदाने सामर्थ्यं दर्शयति—**मोक्षधर्मादीनां प्रवक्ता सर्वज्ञ इति**। आदिशब्देन राजधर्मादीनां ग्रहणम्। आदौ जप्यविषय-प्रश्नस्योत्तरदाने नियामकमाह—**पाश्चात्योऽनन्तर इति**। तथा

---

[1] जपवि—पा.

स्तोत्रम्

## स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

भाष्यम्

**प्रवक्ता सर्वज्ञः। जगत्प्रभुमिति। जगत्–जङ्गमाजङ्गमात्मकं, तस्य प्रभुः–स्वामी तम्, देवदेवं–देवानां ब्रह्मादीनां देवम्, अनन्तं–देशतः कालतो वस्तुतश्चापरिच्छिन्नम्, पुरुषोत्तमं–क्षराक्षराभ्यां कार्यकारणाभ्यामुत्कृष्टम्, नामसहस्रेण –नाम्नां सहस्रेण, स्तुवन्–गुणसङ्कीर्तनं कुर्वन्, सततोत्थितः–**

विवृतिः

चाऽव्यवहिततयोपस्थितत्वादादौ तस्यैवोत्तरदानमिति भावः। "जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु" इत्यभिधानाज्जगच्छब्दो जङ्गमवाची सन् स्थावरस्याप्युपलक्षण इत्याह—**जगदिति**। देवानां द्योतनात्मकानामपि देवो द्योतनात्मक इत्याह—**देवानामिति**। "अनन्तं" इत्यत्रान्तशब्देनाभाव उच्यते। न विद्यतेऽन्तोऽभावोऽस्येत्यभावमात्रप्रतियोगित्वलाभेन व्यापित्वनित्यत्वसर्वात्मकत्वलाभ इत्यभिप्रेत्याह—**देशत इत्यादिना** ॥

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः" (गीता १५-१६, १७)

इति भगवद्वचनानुसारेण क्षराक्षरे कार्यकारणे पुरुषौ, ताभ्यामुत्तम उत्कृष्टः पुरुषोत्तमः। "पञ्चमी विभक्ते" (पा. सू. २-३-४२) इति पुरुषपदात् पञ्चम्यां "पञ्चमी" इति योगविभागात्समास इत्यभिप्रेत्य पुरुषोत्तमपदं व्याचष्टे—**क्षराक्षराभ्यामिति**। **नामसहस्रेणेति**।

स्तोत्रम्

## तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।

भाष्यम्

निरन्तरमुद्युक्तः, पुरुषः–[1] पूर्णत्वात् पुरि शयनाद्वा पुरुषः, "सर्वदुःखातिगो भवेत्" इति सर्वत्र सम्बध्यते ॥ ४ ॥

उत्तरेण श्लोकेन चतुर्थः प्रश्नः परिह्रियते—तमेव चार्चयन्–बाह्यमभ्यर्चनं कुर्वन्, नित्यं–सर्वेषु कालेषु,

विवृतिः

नामसहस्रस्योच्चोपांशुमानसलक्षणं त्रिविधं जपं [2] कुर्वीतेत्यर्थः । **निरन्तरमिति** । मध्ये अन्यविषयकव्यापाररहिततद्व्यापारवानित्यर्थः । **पूर्णत्वादिति** । वस्तुतोऽपरिच्छिन्नत्वादित्यर्थः ॥

पिपर्ति पूरयति व्याप्नोति स्वात्मना सर्वं दृश्यमिति **पुरुषः** "पॄ पालनपूरणयोः" इत्यस्माद्बाहुलकात्कुषन्प्रत्यये रूपं द्रष्टव्यम् । **पुरि शयनाद्वेति** । पूर्शब्दे उपपदे "अन्येष्वपि दृश्यते" (पा. सू. ३-२-५०) इत्यपिशब्दात् शीङो डप्रत्ययः । पृषोदरादित्वात्साधुत्वम् । तथा च पुरि शरीररूपायां जीवरूपेण अन्तर्यामिरूपेण च शेते वर्तत इति पुरुष इति निर्वचनं बोध्यम् ॥ ४ ॥

जप्यविषयकप्रश्नस्याव्यवहिततयोपस्थितत्वात्तस्यैवोत्तरदाने प्रकृते प्रश्नक्रमस्य त्यक्तत्वादवशिष्टप्रश्नोत्तरदाने इच्छैव नियामिकेत्यभिप्रेत्य "तमेव चार्चयन्" इति चतुर्थप्रश्नप्रतिवचनार्थकः श्लोक इत्याह—**उत्तरेणेति** । **तमेवेति** । देवान्तरं व्यावर्तयत्येवकारेण । **बाह्यमिति** । आन्तरस्यार्चनस्य ध्यायन्नित्यनेन वक्ष्यमाणत्वादिति भावः । **सर्वेष्विति** । प्रतिदिनं त्रिकालमेककालं वेत्यर्थः । तदुक्तं भगवता शौनकेन—

---

[1] पुरि शयनाद्वा पूर्णत्वाद्वा–**पा.** [2] कुर्वन्तीत्यर्थः–**पा.**

### स्तोत्रम्

**ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥५॥**

### भाष्यम्

**भक्तिः–भजनं तात्पर्यं, तया भक्त्या, पुरुषं अव्ययं–विनाशविक्रियारहितं, तमेव च ध्यायन्–आभ्यन्तरार्चनं कुर्वन्, [1]स्तुवन्––व्याख्यातम् । नमस्यन्––नमस्कारं कुर्वन्,**

### विवृतिः

"प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत् । इति ।
अशक्तौ विस्तरेणैव प्रातस्सम्पूज्य केशवम् ।
मध्याह्ने चैव सायाह्ने [2]स्तुवन् पुष्पाञ्जलिं क्षिपेत् ॥
मध्याह्ने वा विस्तरेण संक्षेपेणाथ वा हरिम् ।
सम्पूज्य भोजनं कुर्यात्" ॥ इति च ॥

अर्चनस्यापि भक्तित्वा[3]त्तद्भिन्नतात्पर्यरूपा भक्तिरत्राङ्गत्वेन गृह्यत इत्याह–**भक्तिः भजनमिति** । ध्यायन्निति तमेवेत्यनेन पूर्वेणान्वयः । आद्यः चकारः बाह्यार्चनेनान्तरार्चनस्य समुच्चयार्थः । स्तुवन्नमस्यन्नित्यनयोः द्वितीयेन तमेवेत्यनेन सम्बन्धः । **व्याख्यातमिति**–[4]"स्तुवन्तः कम्" इत्यत्रेत्यर्थः । पूर्वोक्तमिति पाठे अस्य व्याख्यानमिति शेषः ॥

ननु अर्चयन् ध्यायन्नित्यनेनैव बाह्यमानसपूजापरेण तदन्तर्गतस्तुतिनमस्कारयोरपि प्राप्तौ स्तुवन्नमस्यन्निति पुनरुक्तिः किमर्थेत्याशङ्क्य पत्रपुष्पसम्पादनानधिकारिणां यत्यादीनां [5]तद्विशेषभूतस्तुतिनमस्कारा-

---

[1] स्तुवन्-पूर्वोक्तरीत्या भक्त्या–**पा.** [2] ततः पुष्पा–**पा.** [3] त्तद्भिन्ना तात्प–**पा.**
[4] स्तुवन्तः कं कमित्य–**पा.** [5] तद्धेतुभूत–**पा.**

### भाष्यम्

**पूजाविशेषभूतमुभयं स्तुतिनमस्कारलक्षणं, यजमानः–पूजकः फलभोक्ता; अथवा "अर्चयन्" इत्यनेनोभयविधमर्चनमुच्यते। "ध्यायन् स्तुवन्नमस्यंश्च" (वि–स–५) इत्यनेन मानसं वाचिकं कायिकं चोच्यते ॥ ५ ॥**

### विवृतिः

भ्यामनुष्ठिताभ्यां सम्पूर्णमर्चनमनुष्ठितं भवतीति पृथगुक्तिरित्यभिप्रेत्याह– [1] **पूजाविशेषभूतमिति**। यद्वा भगवत्परेणार्चनव्यतिरिक्तकालेऽपि स्तुतिनमस्कारपरेण भवितव्यमिति पृथगुक्तिरित्यभिप्रेत्याह —[2] **पूजाविशेषभूतमिति**। द्वितीयश्चशब्दः स्तुत्या समुच्चयार्थ इत्याह––**उभयमिति**। अस्य कुर्वन्नित्यनेन सम्बन्धः। अर्चयन्नित्यादिभिरपेक्षितं विशेष्यं दर्शयति—**यजमानः पूजक इति**। तमेवाव्ययं पुरुषं भक्त्या अर्चयन् ध्यायंश्च तमेव स्तुवन् नमस्यंश्च यजमानः सर्वदुःखातिगो भवेदिति योजना। यद्वा अर्चयन्नित्यनेनैव बाह्यमानसार्चने गृह्येते। ध्यायन् स्तुवन्नमस्यन्निति तु पूर्ववदर्चनव्यतिरिक्तकालेऽपि ध्यानस्तुतिनमस्कारा अनुष्ठेया इत्येतत्परम्। [3]पूजायां त्रिविधकरणव्यापारत्वबोधनार्थं वा यत्यादिविषयं वेत्यभिप्रेत्य व्याख्यानान्तरमाह—**अथवेति**। भाष्ये कायिकं चेत्यनन्तरं कर्मार्चनमित्यध्याहृत्य योजनीयम्। अत्र ध्यायन्नित्यनेनोक्तमानसपूजा बाह्यपूजायाः पूर्वं कार्या ॥

"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमौ स्नानवसनाभरणानि च ॥

---

[1] पूजाशेषभूत–**पा.** [2] पूजाशेषभूत–**पा.** [3] पूजायाः–**पा.**

स्तोत्रम्

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।**

भाष्यम्

**तृतीयं प्रश्नं परिहरति त्रिभिरुत्तरैः पादैः । अनादिनिधनं-षड्भावविकारशून्यं, विष्णुं–[1]व्यापकं, सर्वस्य लोक्यत इति लोकः दृश्यवर्गो लोकः तस्य नियन्तॄणां ब्रह्मादीनामपि ईश्वरत्वात्**

विवृतिः

गन्धः पुष्पं तथा धूपो दीपो नैवेद्यमेव च ।
नमस्कार इति प्रोक्ता उपचारास्तु षोडश ॥ "

इत्युक्तषोडशोपचारैर्मानसैरभ्यर्चयेदिति क्रमरत्नमालोक्तेः ।

" मानसैरुपचारैश्च पूजां सम्यक् समाचरेत् ।
बहिर्यागप्रसिद्ध्यर्थं " ॥

इति शौनकोक्तेश्च ॥ ५ ॥

" अनादिनिधनम् " इत्यादिभिस्त्रिभिः पद्यैः स्तुतिविषयस्तृतीयः प्रश्नः समाधीयत इत्याह—**तृतीयमिति** । " अनादिनिधनम् " इत्याद्यन्तविक्रियाप्रतिषेधान्मध्यस्था अपि विकाराः प्रतिषिद्धा भवन्तीत्याह—**षड्भावेति** । लोक्यत इति लोकः । कर्मणि घञ् । सर्वश्चासौ लोको दृश्यवर्गश्च, तस्य महानीश्वरो नियन्ता ; महत्त्वं चास्य [2]तन्नियन्तॄणां ब्रह्मादीनामपीश्वरत्वादित्याह—**सर्वस्येत्यादिना** ।

अध्यक्षयति पश्यतीत्यध्यक्षः । लोक्यत इति लोको दृश्यवर्गः । सर्वस्य लोकस्य दृश्यवर्गस्य अध्यक्षः स्वाभाविकबोधेन द्रष्टा लोका-

---

[1] व्यापनशीलम्—**पा.**　[2] तन्नियम्यानामपी—**पा.**

स्तोत्रम्

लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥६॥

भाष्यम्

सर्वलोकमहेश्वरम्, लोकं—दृश्यवर्गं, स्वाभाविकेन बोधेन साक्षात् पश्यतीति लोकाध्यक्षः तं, नित्यं—निरन्तरं, स्तुवन् "सर्वदुःखातिगो भवेत्" इति त्रयाणां साधारणं फलवचनम्। सर्वाण्याध्यात्मिकादीनि दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगः। भवेत्—स्यात् ॥ ६ ॥

पुनरपि तमेव स्तुत्यं विशिनष्टि—ब्रह्मण्यं-ब्रह्मणे—स्रष्ट्रे,

विवृतिः

ध्यक्ष इति विशेषणान्तरं व्याचष्टे—लोकमिति। त्रयाणामिति। जपार्चनस्तुतीनामित्यर्थः। फलाकाङ्क्षायां स्तुत्येव जपार्चनाभ्यामपि "सर्वदुःखातिगो भवेत्" इति फलवाक्यं सम्बध्यते। अपेक्षितक्रियापदानुक्त्या अनुषङ्गद्योतनादित्याह—सर्वदुःखातिग इति। आध्यात्मिकादीनीति आदिपदेन आधिभौतिकाधिदैविके गृह्येते ॥ ६ ॥

ब्रह्मण्यमित्यादेः प्रश्नान्तरोत्तरपरत्वभ्रमं निरस्यति पुनरपीति। तथाचानादिनिधनमित्यादिद्वितीयान्तैः पदैः ब्रह्मण्यमित्यादीनामपि द्वितीयान्तानां पदानां सामानाधिकरण्यात् स्तुवन्नित्यनेनान्वयो बोध्यः। ब्रह्मण्यमिति। अत्र ब्रह्मणे हित इति विग्रहे "खलयव" (पा. सू. ५-१-७) इत्यादिना ब्रह्मन्[1]शब्दाद्यत्प्रत्ययो हितार्थे बोध्यः। ब्रह्मन शब्दस्य च—

वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः। (नामलि. ३-३-११४) इत्यमरोक्तार्थेषु तत्त्वव्यतिरिक्तैकैकमर्थं गृहीत्वा व्याचष्टे—ब्रह्मणे स्र

[1] शब्दात्तद्धितार्थेयत्—पा.

स्तोत्रम्

**ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।**

भाष्यम्

**ब्राह्मणाय, तपसे, श्रुतये वा हितं; [1]सर्वान् धर्मान् जानातीति**

विवृतिः

**इति ।** हितमिति तद्धितार्थः सर्वत्र सम्बध्यते । ब्रह्माणं स्रष्टारं प्रति हितत्वं "यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेता. ६-१८) इति श्रुत्या सृष्ट्यर्थमपेक्षितवेदोपदेशादिनेति बोध्यम् । **ब्राह्मणायेति ।** ब्राह्मणजातिं प्रति हितत्वं च—

यं देवं देवकी देवी दीप्तमग्निमिवारणिः ।
भौमस्य ब्रह्मणो गुप्त्यै वसुदेवादजीजनत् ॥

इति ब्राह्मणगुप्त्यर्थमवतरणाद्बोध्यम् । **तपस इति ।**

"मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः" ।

इत्युक्ततपसः "ईश्वरप्रणिधानाद्वा" (यो. सू. १-२३) इति पतञ्जलिवचनादीश्वरप्रणिधानस्य तादृशतपस्सिद्धिहेतुत्वाद्धितत्वं बोध्यम् । **श्रुतय इति ।** श्रुतिहितत्वं च श्रुतिचोरं सोमकं हत्वा श्रुत्याहरणाद्बादरायणाद्यात्मना वेदप्रवर्तनाद्वा बोध्यम् । [2]शास्त्रयोनित्वाधिकरणन्यायेन ऋग्वेदाद्यात्मकस्य शास्त्रस्य कर्तृत्वात् तदर्थभूतान् प्रवृत्तिलक्षणान्निवृत्तिलक्षणांश्च धर्मान् जानातीति सर्वधर्मज्ञः । ज्ञाधातोः "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यये रूपमित्याशयेनाह–**सर्वानिति ।**

---

[1] सर्वधर्मान् जा–**पा.** [2] "शास्त्रयोनित्वात्" (ब्र. सू. १-१-३) इति सूत्रसूचितं शास्त्रयोनित्वाधिकरणम् । तत्र अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतकस्य ऋग्वेदादेः सर्वज्ञकल्पस्य शास्त्रस्य कारणं ब्रह्मापि सर्वज्ञमिति निर्णयः कृतः । तन्न्यायेनेत्यर्थः ॥

स्तोत्रम्

## लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

भाष्यम्

सर्वधर्मज्ञः तं, लोकानां–प्राणिनां, कीर्तयो–यशांसि, ताः स्वशक्त्यनुप्रवेशेन [1] वर्धयतीति तं, लोकैर्नाथ्यते–याच्यते, लोकानुपतपति, आशास्ते, लोकानामीष्टे इति वा लोकनाथः तं,

विवृतिः

धार्मिकत्वादिप्रयुक्तकीर्तिमतां हरिश्चन्द्रयुधिष्ठिरप्रभृतीनां लोकानां याः कीर्तयस्तासां तेषु [2] तद्वृद्धिहेतुस्वशक्त्यनुप्रवेशेन [3] तदीयप्रकृष्टेष्टकीर्तिहेतुभूतपुण्यकर्मानुसारेण वृद्धिं कुर्वन् कीर्तिवर्धनः तम्, "फलमत उपपत्तेः" (ब्र. सू. ३-२-३८) इति [4] न्यायादित्याशयेन व्याचष्टे–**लोकानामिति**। नाथतेः "नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु" इति चतुर्ष्वर्थेषु अनुशासनात् तत्रैकैकमर्थं गृहीत्वा व्याचष्टे—**लोकैरित्यादिना**। लोकैः कर्मिभिरुपासकैः मुमुक्षुभिश्च तत्तत्पुरुषार्थं प्रति नाथ्यते याच्यत इति नाथतेर्याच्ञार्थात् कर्मणि घञि कृद्योगलक्षणषष्ठ्या समास इत्यभिप्रेत्याह–**लोकैरिति**। लोकान् पापिनः नाथते उपतपतीति "कर्मण्यण्" (पा. सू. ३-२-१) इत्यणि उपपदसमास इत्युपतापार्थक[5]त्वमभिप्रेत्याह—**लोकानुपतपतीति**। लोकान् सृज्यान् सृष्टिकाले प्राप्ते नाथते आशास्ते इच्छतीति प्रत्ययसमासौ पूर्ववदित्याशीरर्थमभिप्रेत्याह–**आशास्त इति**। लोकानित्यनुकृष्यते। लोकान्नाथते ईष्टे इत्यैश्वर्यार्थं गृहीत्वा व्याचष्टे–**लोकानामिति**। पूर्ववत् प्रत्ययसमासौ। लोकानामीष्टे इत्यत्र भाष्ये "अधीगर्थ" (पा. सू. २-३-५२) इत्यादिना कर्मणि शेषे षष्ठी। महद्भूतमिति पदद्वयं गृहीत्वा व्याचष्टे—

---

[1] वर्धयन्तं–**पा.** [2] तद्वृद्धि–**पा.** [3] तदीयप्रकृष्टहेतुकीर्तिहेतु–**पा.** [4] कर्मणां क्षणिकत्वादीश्वरस्यैव फलदातृत्वोपपत्तेरीश्वर एव सर्वजन्तूनां फलदातेति न्यायार्थः.
[5] त्वमाश्रित्याह–**पा.**

स्तोत्रम्

# एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।

भाष्यम्

महद्भूतमिति। महत् ब्रह्म, विश्वोत्कर्षेण वर्तमानत्वात्, भूतं-परमार्थसत्यं, सर्वभूतभवोद्भवम्-सर्वभूतानां भवः-संसारः यत्सकाशादुद्भवति तम् ॥ ७ ॥

[1]पञ्चमः प्रश्नः परिह्रियते—एष इति। सर्वेषां वेद-लक्षणानां धर्माणां एष-वक्ष्यमाणो धर्मः अधिकतमः इति, मे-

विवृतिः

**महद्भूतमितीति** । मह्यते पूज्यते इति महत्। "मह पूजायाम्' इत्यस्य "वर्तमाने पृषद्बृहन्महत्" (उणा. २४१) इत्यादिना निपातः। पूज्यत्वं च सर्वज्ञत्वसर्वेश्वरत्वादिभिरुत्कर्षेण वर्तमानत्वादित्याह–**महदिति**। महच्छब्दस्य विशेष्यनिघ्नतया विशेष्यं दर्शयति–**ब्रह्मेति**। भूतिशब्दः सत्तार्थः क्तिन्प्रत्ययान्तः। तस्मात्प्रशंसायामर्श आद्यच् मत्वर्थीयः। [2]प्रशस्तत्वं च परमार्थत्वमेवेत्यभिप्रेत्याह–**भूतमिति** । यद्वा—

"भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः"।

इत्यभिधानात् सत्यार्थको भूतशब्दः। सत्यत्वं च सङ्कोचकप्रमाणा-भावात् कालत्रयाबाध्यत्वमित्यभिप्रेत्याह–**भूतमिति**। उद्भवत्यस्मादित्यु-द्भवः। बाहुलकादपादाने अप्प्रत्ययः। सर्वभूतानां भवस्य—संसारस्य उद्भवः—उत्पत्तिकारणं सर्वभूतभवोद्भवः। यद्वा उद्भवतीत्युद्भवः। पचाद्यच्। सर्वभूतानां भवः–संसारः उद्भवः–उत्पत्तिमान्यस्मादिति पञ्चम्यर्थे बहुव्रीहिरित्यभिप्रेत्याह–**सर्वभूतानामिति** ॥ ७ ॥

**एष म** इत्यादिना [3]परमधर्मविषयकः पञ्चमः प्रश्नः समाधीयत इत्याह—**पञ्चम इति**। [4]**वेदलक्षणानामिति**। वेदप्रमाणकाना-मित्यर्थः। **वक्ष्यमाण इति**। स्तुतिरूप इत्यर्थः। **मे मम**

[1] पञ्चमं प्रश्नं परिहरति–**पा.** [2] प्रशस्तत्वं च परमार्थत्वं च पर–**पा.** [3] परम-धर्मविषयकपञ्चमप्रश्नं समाधत्त इत्याह–**पा.** [4] चोदनालक्षणानामिति–**पा.**

स्तोत्रम्

**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥**

भाष्यम्

**मम, मतः–अभिप्रेतः। यद्भक्त्या–तात्पर्येण, पुण्डरीकाक्षं–हृदयपुण्डरीके प्रकाशमानं वासुदेवं, स्तवैः–[1] गुणसङ्कीर्तनलक्षणैः स्तुतिभिः, सदा अर्चेत्–[2] सत्कारपूर्वकमर्चनं करोति, नरः–मनुष्यः इति यत् एष धर्मः इति सम्बन्धः। अस्य स्तुतिलक्षण-**

विवृतिः

**मतोऽभिप्रेत इति**। मया अभिप्रेयमाण इत्यर्थः। **पुण्डरीकं**–हृदयपुण्डरीकं तत्स्थमन्तःकरणं, तदक्ष्णोति [3] व्याप्नोतीति पचाद्यच्। व्याप्तिश्चात्रान्तःकरणसम्बन्धादभिव्यक्तिरेवेत्यभिप्रायेणाह — **पुण्डरीकेति**। स्तवशब्दात् [4] प्रकृत्यादित्वात्तृतीया। सा चाभेदे। अभेदश्च स्तुत्यभिन्नमर्चनमित्यर्चनविशेषणमित्यभिप्रेत्याह—**स्तवैरिति**। "विधिनिमन्त्रणामन्त्रणाधीष्ट" (पा. सू. ३-३-१६१) इति अधीष्टे लिङ्। सत्कारपूर्वकमुत्तमं प्रति प्रेरणं यत्तदात्मकाधीष्टवाचिना लिङा सत्कारपूर्वकत्वं विशेष्यांशपरित्यागेन लक्ष्यते। पूर्ववण्णिज्विकल्प इत्याशयेनाह—**अर्चेदित्यादि**। उत्तरार्धोक्तमर्थमनूद्य तस्य सर्वधर्माधिक्यं विधीयत इति महावाक्यार्थमाह—**इति यदिति**। स्तुतिलक्षणस्य धर्मस्याधिक्ये हेत्वाकाङ्क्षामुद्भाव्य हेतूनुपन्यस्यति—**अस्येत्यादिना**। यागहोमादिधर्मेष्विव हिंसापेक्षा, हिंसादीत्यादिशब्देन कायक्लेशादिर्गृह्यते। ऋत्विगादिपुरुषान्तरापेक्षा, चरुपुरोडाशादिद्रव्यनियमापेक्षा, प्राचीनप्रवणादिदेशदर्शादिकालनियमापेक्षा चास्य स्तुतिलक्षणस्य धर्मस्य नास्ती-

[1] गुणनामसङ्कीर्तै–**पा**. [2] नमस्कारपू–**पा.** [3] प्राप्नोतीति–**पा**. [4] प्रकृत्यादीत्यादिना तृ–**पा**.

भाष्यम्

स्यार्चनस्याधिक्ये किं कारणम्? उच्यते—हिंसादिपुरुषान्तर-द्रव्यान्तर[1]देशकालादिनियमानपेक्षत्वमाधिक्ये कारणम्।

"ध्यायन् कृते यजन् यज्ञैः त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्"॥
(वि. पु. ६-२-१७)

इति विष्णुपुराणवचनात्।

"जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते"॥ (मनु २ ८७)

इति मनुवचनात्।

"जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते"॥

इति महाभारते।

"यज्ञानां जपयज्ञोऽस्मि" (भ. गी.१०–१५)

इति भगवद्वचनम्। एतत्सर्वमाभिप्रेत्य—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः"।

इत्युक्तम्॥ ८॥

विवृतिः

त्याधिक्यमित्यर्थः। आदिशब्देनाधिकार्यादि गृह्यते। आधिक्ये कारणमुक्त्वा प्रमाणमप्याह—ध्यायन्नित्यादि॥ ८॥ "परमं यो महत्" इत्युत्तरश्लोकेन "किं वाऽप्येकं परायणम्" इति द्वितीयप्रश्नं समाधत्त

[1] दिग्देश–**पा.**

स्तोत्रम्

## परमं यो महत्तेजः

भाष्यम्

द्वितीयं प्रश्नं समाधत्ते—परमं-प्रकृष्टं, महत्-बृहत्, तेजः-चैतन्यलक्षणं सर्वावभासकं, "येन सूर्यस्तपति तेजसेद्धः" (तै. ब्रा. ३-१२-९) "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" (बृ. ६-४-१६),

"न तत्र सूर्यो भाति न चन्द्रतारकम्।

विवृतिः

इत्याह--**द्वितीयमिति**। श्लोकं व्याचष्टे—**परमं प्रकृष्टमिति**। नित्यमित्यर्थः। नित्यत्वरूपप्रकृष्टत्वेन विशेषणात्तेजसश्चैतन्यरूपत्वलाभ इत्याह—**तेजश्चैतन्यलक्षणमिति**। बृहत्त्वेन विशेषणात् सर्वावभासकत्वसिद्धिरित्याह—**सर्वेति**। तस्य सर्वावभासकत्वे श्रुतिस्मृती उदाहरति—**येनेति**। यच्छब्दस्य "नावेदविन्मनुते तं बृहन्तम्" (शाट्या. उ. ४) इति तच्छब्देन सम्बन्धः। **येन** चैतन्यज्योतिषा **इद्धः** प्रकाशितः **सूर्यस्तपति** स्वविषयान्[1] प्रकाशयति तं बृहन्तं नावेदविन्मनुते। तथा च सर्वजगदवभासकसूर्यस्यापि भासकत्वात् सर्वावभासकत्वमित्यर्थः। **तदिति**। **तत्** कालापरिच्छिन्नं [2]ब्रह्म, **ज्योतिषां** सर्वलोकप्रकाशकानामादित्यादीनां, **ज्योतिः** प्रकाशकं, **आयुः** जीवनहेतुत्वादायुर्गुणकं, **अमृतं** कालासंस्पृष्टत्वेन मरणादिधर्मरहितं, **देवाः** सत्त्वप्रधानाः अग्नीन्द्रादयः, **उपासते** नैरन्तर्येण चिन्तयन्ति। **ह** किलेति श्रुत्यर्थः। **न तत्रेति**। तत्रेति विषयसप्तमी। तत्र तस्मिन् ब्रह्मणि विषये, सूर्यादयो भासकत्वेन

---

[1] प्रकाशयन्तं बृहन्तं—पा. [2] बृहत्—पा.

स्तोत्रम्

**परमं यो महत्तपः ।**

भाष्यम्

**नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥**

**तमेव भान्तमनुभाति सर्वं**

**तस्य भासा सर्वमिदं विभाति " (मुण्ड.-२-२-१०)**

**इत्यादिश्रुतेः । "यदादित्यगतं तेजः" (भ. गी. १५-१२) इत्यादिस्मृतेश्च । परमं तपः–तपति आज्ञापयतीति तपः ।**

विवृतिः

न भासन्ते । यथा घटादिविषये आलोकादिकं भासकत्वेन भासते तद्वत् । दीपादिरूपस्याग्नेः ब्रह्मणि विषये भासकत्वाभावे कैमुतिकन्याय-माह—**कुतोऽयमिति** । इतश्च सूर्यादेर्न ब्रह्मणि भासकत्वमित्याह—**तमेवेति** । यथा सूर्यादिप्रकाश्यो घटादिर्न सूर्यादिप्रकाशकः, एवं ब्रह्मप्रकाश्यः सूर्यादिः न ब्रह्मप्रकाशक इत्यर्थः । ननु गुरौ गच्छति शिष्यस्यानुगमनं स्वनिष्ठगमनकृतम् । एवं सूर्यादेः स्वनिष्ठभानकृत-मनुभानं किं नेत्याह—**तस्येति** । यथा 'अयो दहति' इत्यत्रायःपिण्डस्य दाहक्रिया वह्निनिष्ठैव तथा सूर्यादेर्भानं ब्रह्मनिष्ठमेव । न पृथग्भान-मित्यर्थः । **यदादित्येति । आदित्यगतं यत्तेजश्चै**तन्यात्मकं यच्चन्द्रमसि यच्चाग्नौ स्थितं तेजो जगदखिलमवभासयते, तत्तेजो मामकं–मदीयं विद्धि । यद्यपि स्थावरजङ्गमेषु प्रकाशमानं चैतन्यात्मकं ज्योतिरस्ति, तथापि सत्त्वोत्कर्षेणादित्यादीनामुत्कर्षात्तत्रैवाविस्तरां चैतन्यज्योतिरित्या-दिभिस्तेजो विशेष्यत इत्यर्थः ॥

तपत्याज्ञापयतीति तपः । तपेरसुन् । आज्ञापनस्या-ऽप्रतिहतत्वं परमत्वं, महदित्यनवच्छिन्नत्वं, तच्चाज्ञापनस्य सर्व-विषयकत्वरूपमित्यभिप्रेत्य द्वितीयपादं व्याचष्टे—**परमं तप इति** ।

## भाष्यम्

**" य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति " (बृ. ५-७-१) इत्यन्तर्यामिब्राह्मणे सर्वनियन्तृत्वं श्रूयते। " भीषास्माद्वातः पवते " (तै. उ. २-८) इत्यादि तैत्तिरीयके। तपति ईष्टे इति वा तपः। तस्यैश्वर्यमनवच्छिन्नमिति महत्त्वम्। " एष सर्वेश्वरः " (बृ. ६-४-२२ इत्यादिश्रुतेः।**

## विवृतिः

अत्र बृहदारण्यकश्रुतिमुदाहरति—**य इममिति**। **यः** अतिप्रसिद्धः अव्याकृताभिमानी सर्वकारणभूतः **इमं च लोकं** इदं जन्म, **परं च लोकं** जन्मान्तरं, ब्रह्मादिस्तम्बपर्यन्तानि सर्वाणि भूतानि च सूत्रबद्धानि **अन्तरः** सर्वप्रत्यक्तमः सन् **यमयति** सूत्रबद्धदारुयन्त्रवाह इव नियच्छति प्रेरयतीति श्रुत्यर्थः। श्रुत्यन्तरमाह—**भीषेति**। **यः** पूर्वजन्मनि प्रकृष्टे ज्ञानकर्मणी अनुष्ठायास्मिन् जन्मनि वायुदेवत्वेनोत्पन्नः सोऽयं तथाविधमहिमान्वितोऽपि सन्नस्मादन्तर्यामिरूपाद्ब्रह्मणो **भीषा** भयेन निरन्तरमनलसः सञ्चरति। एवं सूर्यादिषु योजनीयम्। अग्निश्चेन्द्रश्च स्वस्वव्यापारं कुरुत इति शेषः। उक्तदेवताचतुष्टयापेक्षया पञ्चमो मृत्युरपि क्षीणायुषः प्राणिनो नाशयितुं तत्र तत्र सहसा धावतीत्यर्थः ॥

तप्यते ईष्टे इति तपः। परमत्वं च तस्य स्वामित्वलक्षणस्यैश्वर्यस्य यावदीशनीयभावित्वम्। महत्त्वं चैश्वर्यस्य मर्यादाराहित्यमिति तपश्शब्दस्यैश्वर्यमर्थमादाय व्याख्यानान्तरमाह—**तपतीष्ट इतीति**। यो देवः परमं—सत्यज्ञानादिलक्षणं महत्—महनीयं पूज्यं

स्तोत्रम्

**परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥**

भाष्यम्

**परमं—सत्यादिलक्षणं परं ब्रह्म, महनीयतया महत्, परमं—प्रकृष्टं पुनरावृत्तिशङ्कावर्जितं, परायणं—परं अयनं परायणम्, परमग्रहणात् सर्वत्र अपरमं तेजः–आदित्यादिकं व्यावर्त्यते। सर्वत्र यो देव इति विशेष्यते। यो देवः परमं तेजः, परमं तपः, परमं ब्रह्म, परमं परायणं स एकं [1]परायणमिति वाक्यार्थः॥ ९॥**

विवृतिः

ब्रह्मेत्यभिप्रेत्य तृतीयं पादं व्याचष्टे—**परममिति। महनीयतयेति।** ब्रह्मशब्देनैव बृहत्वलाभान्महच्छब्दः पूज्यवचनः। न बृहत्त्वार्थक इत्यर्थः। यो देवः परमं प्रकृष्टं पुनरावृत्तिशङ्कावर्जितं परायणं प्राप्तव्यमिति तुरीयं पादं व्याचष्टे—**परममिति।** वाक्यचतुष्टये परमग्रहणस्य व्यावर्त्यमाह—**परमेति। तेजः–आदित्यादिकमिति।** अपरमस्यानित्यस्य तेजस आदित्यादेः, अपरमस्याज्ञापयितू राजवैवस्वतादेः, अपरमस्येश्वरस्येन्द्रादेः, अपरमस्य ब्रह्मणोऽपरमप्राप्यस्य च हिरण्यगर्भादेः व्यावृत्तिरित्यर्थः। चतुर्ष्वपि वाक्येषु पुल्लिङ्गयच्छब्दापेक्षितं देव इति विशेष्यं दर्शयन् उक्तश्लोकार्थानुवादेन विधेयसमर्पकवाक्याध्याहारेण महावाक्यार्थमाह—**यो देव इत्यादि। एकं परायणमिति।** केवलं प्राप्यमित्यर्थः। मुख्यं प्राप्यमिति वा॥ ९॥

---

[1] सर्वभूतानां परा–**पा.**

स्तोत्रम्

## पवित्राणां पवित्रं यः

भाष्यम्

प्रथमप्रश्नस्योत्तरमाह— पवित्राणां–पावनानां तीर्थादीनां पवित्रम्। परमस्तु पुमान् ध्यातो दृष्टः कीर्तितः स्तुतः सम्पूजितः स्मृतः प्रणतः पाप्मनः सर्वानुन्मूलयतीति परमं पवित्रम्। संसारबन्धनहेतुभूतं पुण्यापुण्यात्मकं कर्म, तत्कारणं चाज्ञानं सर्वं नाशयति स्वयाथात्म्यज्ञानेनेति वा पवित्राणां पवित्रम्।

("[1] अतिपातकयुक्तोऽपि ध्यायन्निमिषमच्युतम्।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥

विवृतिः

"किमेकं दैवतम्" इति प्रश्न उत्तरेण श्लोकेन समाधीयत इत्याह—प्रथमेति। तीर्थादीनामिति। अत्रादिशब्देन वेदाध्ययनव्रतोपवासादेर्ग्रहणम्। तीर्थादीनामिति निर्धारणे षष्ठी। पावनानां तीर्थादीनां मध्ये ध्यानादिना कृत्स्नसवासनपापोन्मूलनाद्विष्ण्वाख्यं ब्रह्म परमं पवित्रमित्यर्थः। स्वयाथात्म्यज्ञानेन संसारहेतुभूतपुण्यापुण्यात्मकं कर्म, तत्कारणमज्ञानं च नाशयतीति पवित्राणां पवित्रमित्यर्थान्तरमाह—संसारबन्धनेति। ध्यानकीर्तनादीनां सर्वपापनाशकत्वमित्यत्र पुराण-

---

[1] "अतिपातक" इत्यारभ्य "करो हि सः" इत्यन्तस्य धनुरङ्कितभागस्य विवृतौ विवरणादर्शनात् विवृतानां च "यन्नाम" इत्यादीनां "तस्मिन् दृष्टे परावरे" इत्यन्तानां भाष्यक्रमव्यत्यासदर्शनात् तदनुरोधेन विवरणरहितस्यास्य भागस्य धनुरङ्केन पृथङ्निर्देशः कृतः।

भाष्यम्

हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः! पठत ध्यात केवलम् ॥

हरिवं—अ. २८०

ध्यायन् कृते यजन् यज्ञैस्त्रैतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

(वि. पु. ६-२-१७)

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

(बृहन्ना. पु. ११-९९)

ज्ञानतोऽज्ञानतोवापि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥
यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥

(वि. पु. ६-८-५७)

शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
शान्तिः कलौ ह्यघौघस्य नामसङ्कीर्तनं हरेः ॥

(वि. ध. ६६-७४)

हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥
स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः ।
विष्णोस्सम्पूजनान्नित्यं सर्वपापं प्रणश्यति ॥

भाष्यम्

कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥
(वि. पु. ६-८-२१)

सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ।
पापराशिं हरत्याशु तूलराशिमिवानलः ॥
कलावत्रापि दोषाढ्ये विषयासक्तमानसः ।
कृत्वापि सकलं पापं गोविन्दं संस्मरन् शुचिः ॥
वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय! देवेन्द्रत्वादिकं फलम् ॥
(वि. पु २-६-४३)

लोकत्रयाधिपतिमप्रतिमप्रभाव-
मीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् ।
जन्मान्तरप्रलयकल्पसहस्रजात-
माशु प्रणाशमुपयाति नरस्य पापम् ॥

एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृतेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥
शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रापणये ।
संसारमूलबन्धानामुद्वेजकनरो हि सः) ॥
यन्नामकीर्तनं भक्त्या विलायनमनुत्तमम् ।

विवृतिः

वचनानि पठति—यन्नामे[1]त्यादीनि भिद्यते हृदयग्रन्थिरित्येतदन्तानि । द्वादशाब्दादिप्रायश्चित्तैः पापमेव विनश्यति । तत्संस्कारस्त्ववशिष्यते । भक्त्या विष्णुनामकीर्तनमशेषाणां ससंस्काराणां पापाना-

[1] त्यादि भिद्यते—पा.

भाष्यम्

**मैत्रेयाशेषपापानां धातूनामिव पावकः ॥**

(वि. पु. ६-८-२०)

**अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।**
**पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥**

(वि. पु. ६-८-१९)

**प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।**
**यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥**

(वि. पु. २-६-३९)

विवृतिः

**मनुत्तमं विलायनं** विनाशकम् । न चान्येन निश्शेषपापक्षयः स्यादिति दृष्टान्तेनाह—**धातूनामिति** । यथा **धातूनां** सुवर्णादीनामुद्वर्तन-प्रक्षालनादिकं धात्वन्तरसंयोगजं मलं न नाशयति । किन्तु **पावक एव** । अतः सर्वोत्तममिदमेवेत्यर्थः । अत्र भक्तिग्रहण[1]मुत्तरत्राव-शेनापीत्यपिशब्दात्कैमुतिकन्यायसूचनार्थम् । **अवशेनापीति** । **अवशेन-यदृच्छयापि** हरिनामसङ्कीर्तनं सर्वपापक्षयकरम् । किमुत भक्त्या । मुक्तिफलं हि तदित्यभिप्रायः । यथा अकस्मादागतं सिंहं दृष्ट्वा त्रस्तं हरिणमवरुन्धन्तो वृकास्तं विसृज्य पलायन्ते तद्वन्नामकीर्तनपरं पुमांसं सर्वाणि पापानि मुञ्चन्तीत्यर्थः । स्मरणं पापनाशकमित्यत्रा-प्युदाहरति—**प्रायश्चित्तानीति** । **तपःकर्मात्मकानीति** । कृच्छ्रचान्द्रा-यणाश्वमेधाद्यात्मकानीत्यर्थः । **तेषामशेषाणां कृष्णानुस्मरणं** सकृदेव सर्व[2]पापघस्मरत्वा[3]न्मोक्षान्तं पुनः पापप्रवृत्तिनिवारकत्वाच्च **परं**—सर्वो-त्तमं प्रायश्चित्तमित्यर्थः । तेभ्यः परमिति वक्तव्ये तेषामिति वचनं

[1] मुत्तरश्लोके अवशेनापी—**पा.** [2] पापहरणान्मो—**पा.** [3] न्मोक्षान्ततया पुनः—**पा.**

भाष्यम्

ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।
प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येति वै श्रुतिः ॥
संसारसर्पसन्दष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥
नित्यं सञ्चिन्तयेद्देवं योगयुक्तो जनार्दनम् ।
[1]सास्य रक्षा परा मन्ये को हिनस्त्यच्युताश्रयम् ॥

विवृतिः

तपःकर्मात्मकानां प्रायश्चित्तानामपि देशकालकर्त्रादिवैगुण्येन सदोषत्वात्तेषामपि साद्गुण्यकरं प्रायश्चित्तं कृष्णानुस्मरणं परम् । न तत्र देशकालादिकृतवैगुण्यसम्भव इत्येवमभिप्रायम् ॥

ध्यानं पापनिवर्तकमित्यत्राप्युदाहरति—**ध्यायेदिति । ध्यायेदिति** यत् सा **सर्वस्य दुष्कृतस्य प्रायश्चित्ति**रित्यर्थः । नामश्रवणस्य [2]पापनिवर्तकत्वज्ञानोत्पत्तिद्वारा मोक्षहेतुत्वमित्यत्र प्रमाणमाह—**संसारेति ।** संसाररूपेण सर्पेण सन्दष्टः, अत एव नष्टचेष्टः, तस्यैकं—मुख्यं, भेषजं—औषधं, कृष्णेति मन्त्रः, तं श्रुत्वा मुक्तः स्यादित्यर्थः । पापान्मुक्तः स्यादिति वार्थो बोध्यः । **सर्वदेति ।** **अमङ्गलं**—दुःखं तत्साधनं तज्ज्ञापकं चेत्यर्थः । **हृदिस्थ इति ।** ध्यानादिविषयतया **हृदिस्थ** इत्यर्थः । **नित्यं सञ्चिन्तयेदिति । योगयुक्तो जनार्दनं चिन्तयेत्** इति यत् **सास्य चिन्तकस्य परा रक्षेति**

---

[1] सास्य मन्ये परा रक्षा—**पा.** ? [2] पापनिवृत्तिश्च—**पा.**

भाष्यम्

रूपमारोग्य[1]मायुश्च भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः ॥
चिन्त्यमानः समस्तानां क्लेशानां हानिदो हि यः ।
समुत्सृज्याखिलं चिन्त्यं सोऽच्युतः किं न चिन्त्यते ॥
गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु ।
यत् पापं विलयं याति स्मृते नश्यति तद्धरौ ॥
मुहूर्तमपि यो ध्यायेन्नारायण[2]मतन्द्रितः ।
सोऽपि सिद्धिमवाप्नोति किं पुनस्तत्परायणः ॥
एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥

विवृतिः

**मन्य** इत्यर्थः । **रूपमिति** । ध्यानस्यापवर्गो मुख्यं फलं, रूपादिकमानुषङ्गिकं फलमित्यर्थः । **चिन्त्यमान इति** । **चिन्त्यमानः** सन् **क्लेशानां**–अविद्यास्मितादीनां, **हि**–यस्मात्, **हानिदो**–नाशकः, **योऽच्युतः स किं न चिन्त्यते** ? अविद्यामूलकत्वात् पापानां अविद्याद्यभावे न पापप्रसक्तिरित्यर्थः । **गङ्गास्नानेति** । गङ्गास्नानापेक्षया हरिस्मरणं पापनिवृत्तौ परं साधनमित्यर्थः । **मुहूर्तमपीति** । **सिद्धिमिति** । पापनिवृत्तिमित्यर्थः । **एकस्मिन्निति** । **दस्युभिर्मुषितेन** यथा **आक्रन्द्यते**–रुद्यते, एवं **एकस्मिन्नपि मुहूर्ते ध्यानवर्जिते** सति ध्यानाभ्यासवता पुरुषेण **भृशं**–तीव्रं, **आक्रन्दितुं**––रोदितुं, **युक्त**मित्यर्थः ।

---

[1] मर्थाश्च–**पा.** [2] मनामयः–**पा.**

भाष्यम्

जनार्दनं भूतपतिं जगद्गुरुं
स्मरन् मनुष्यः सततं महामुने !
दुःखान्यशेषाण्यपहन्ति साधय-
त्यशेषकार्याणि च यान्यभीप्सते ॥
एवमेकाग्रचित्तः सन् संश्रितो मधुसूदनम् ।
जन्ममृत्युजराग्राहं संसाराब्धिं तरिष्यति ॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥
(वि. पु. ६-७-७४)

इत्यादिवचनात् पवित्राणां पवित्रम् ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥
(मु. उ. २-२८)

विवृतिः

**जनार्दनमिति । दुःखानीति ।** तन्मूलानि पापानि चेत्यर्थः । तत्स्मरणस्य न दुःखनिवृत्तिमात्रं फलम् । अन्यान्यपि ईप्सितानि भवन्तीत्याह—**साधयत्यशेषकार्याणीति । एवमेकाग्रेति ।** स्पष्टोऽर्थः । **यथाग्निरिति । चित्तस्थितः**—ध्यानादिविषय इत्यर्थः । साक्षात्कारस्य सकार्याविद्यानिवर्तकत्वात् । "पवित्राणां पवित्रमि"ति व्याख्याने श्रुतिमुदाहरति—**भिद्यत इति ।** श्रुतिर्व्याख्याता ॥

मङ्गलशब्दितानामानन्दानां समुद्रस्थानीयब्रह्मानन्दलेशभूतानां पुण्यतारतम्यवशात् प्राणिनामन्तः[1]करणेऽभिव्यज्यमानानां तत्साध-

[1] करणे भिद्यमानानां—**पा.**

स्तोत्रम्

**मङ्गलानां च मङ्गलम् ।**
**दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥१०॥**

भाष्यम्

**मङ्गलानां च मङ्गलमिति । मङ्गलं—सुखं तत्साधनं तज्ज्ञापकं च, तेषामपि परमानन्दलक्षणं परमं मङ्गलमिति मङ्गलानां च मङ्गलम् । दैवतं देवतानां च—देवानां देवः, द्योतनादिभिः समुत्कर्षेण वर्तमानत्वात् । भूतानां योऽव्ययः—व्ययरहितः, पिता—जनकः, यो देवः स एकं दैवतं लोके, इति वाक्यार्थः ॥**

विवृतिः

नानां तज्ज्ञापकानां च सुखसमुद्रस्थानीयः परमात्मा परम-मङ्गलमित्यभिप्रेत्याह—**मङ्गलमिति** । दीव्यन्तीति देवाः । ततः [1]स्वार्थतलन्तात् "प्रज्ञादिभ्यश्च" (पा. सू. ५-४-३८) इति स्वार्थेऽणि दैवतशब्दः । देवताशब्दोऽपि तलन्तः स्त्रीलिङ्गः । तथा च **देवतानां च दैवतं** द्योतमानानामपि मध्ये समुत्कर्षेण द्योतमानत्वा-दित्यभिप्रेत्याह—**देवानां देव इति** । द्योतनादिभिरित्यादिशब्देन "दिवु क्रीडे"त्यादिधातुपाठोक्तमोदादयो गृह्यन्ते । मोदमानानां मध्ये समुत्कर्षेण मोदमानमित्याद्यपि द्रष्टव्यम् । **अव्यय इति** प्रसिद्ध-पितृव्यावृत्त्यर्थ इत्याह—**व्ययरहित इति** । इत्थमुद्देशसमर्पकवाक्यार्थ-मुक्त्वा विधेयसमर्पकवाक्याध्याहारेण महावाक्यार्थमाह—**यो देवः स एकमित्यादि** । यो देवः परमपवित्रं परममङ्गलादिरूपः स एष चतुर्दशविद्यास्थानप्रतिपाद्यमेकं दैवतमित्यर्थः ॥

---

[1] स्वार्थे तल—**पा.**

भाष्यम्

**एको देवः सर्वभूतेषु गूढः**
**सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिवासः**
**साक्षी चेता केवलो निर्गुणश्च ॥**
**यो ब्रह्माणं विदधाति पूर्वं**
**यो वै वेदांश्च प्रहिणोति तस्मै ।**
**त१ँह देवमात्मबुद्धिप्रकाशं**
**मुमुक्षुर्वै शरणमहं प्रपद्ये ॥** (श्वे-६-११,१८)

विवृतिः

एकं दैवतमित्यत्र श्रुतीरुदाहरति —**एको देव इत्यादि** । **सर्वभूतेषु एकः**–अद्वितीयः, **देवः**-स्वप्रकाशकः, तथापि मायावृतत्वान्न प्रकाशत इत्याह—**गूढ इति** । ननु जीवेनासम्बन्धाद्भिन्नत्वाद्वा देवस्याभानं, न तु मायागूढत्वादिति नेत्याह—**सर्वव्यापी सर्वभूतान्तरात्मेति** । देवस्य विभुत्वात् सर्वप्राणिप्रत्यक्त्वाच्चावरणादेवाभानमित्यर्थः । प्रत्यक्त्वे कर्तृत्वं स्यादिति चेन्न, **कर्माध्यक्षः**-क्रियासाक्षीत्यर्थः । तर्हि साक्ष्यमस्तीति द्वैतापत्तिरिति नेत्याह—**सर्वभूताधिवास इति** । सर्वभूतानामधिष्ठानं भूत्वा साक्षी भवति । साक्ष्यमधिष्ठाने साक्षिणि कल्पितमिति भावः । साक्षिशब्दार्थमाह—**चेता केवल इति** । बोद्धृत्वे सत्यकर्ता साक्षीति लोकप्रसिद्धम् । **निर्गुणश्चेति** । न केवलं निर्गुणः, दोषरहितश्चेति दोषाभावसमुच्चयार्थकारः । **यो ब्रह्माणमिति** । **यः**-निस्सङ्गसुखबोधवपुः परमेश्वरः, **ब्रह्माणं**-सर्वजीवसमष्टिरूपं हिरण्यगर्भं, **विदधाति**–अवान्तरसर्गस्थित्यन्तकर्तृत्वेन स्वमायया ससर्ज, **पूर्वं**–सर्गादौ, **यः**–परमेश्वरः, **वै**–प्रसिद्धः, **वेदांश्च प्रहिणोति**–प्रददौ, **तस्मै**-प्रथमहिरण्यगर्भाय, प्रलये विच्छि-

भाष्यम्

**इति श्वेताश्वतराणां मन्त्रोपनिषदि । "सेयं देवतैक्षत" (छा. ६-२-२) "एकमेवाद्वितीयं" (छा. ६-२-१) इति छान्दोग्ये ॥**

**ननु कथमेको [1]देवः? जीवपरयोर्भेदात् । न । "तत्सृष्ट्वा तदेवानुप्राविशत् (तै-उ. २-६)" "स एष इह**

विवृतिः

असम्प्रदायानां वेदानां तस्मादितराधिकारिषु सम्प्रदायसिद्ध्यर्थं परमेश्वरस्तस्मै वेदान् प्रददौ । तं-एवम्भूतं, ह-एवार्थे, [2]तमेव देवं—ज्ञानस्वभावं, **आत्मबुद्धिप्रकाशं** - आत्मबुद्धिं 'अहं ब्रह्मास्मी'ति स्वविषयां बुद्धिं प्रकाशयतीत्यात्मबुद्धिप्रकाशः तम् ; अथवा आत्मैव बुद्धिरात्मबुद्धिः, बुद्धिर्नाम ज्ञानं—स्वरूपानुभवः, स एव प्रकाशोऽस्येत्यात्मबुद्धिप्रकाशस्तमिति योजयितव्यम् । **मुमुक्षुः वै**—प्रसिद्धौ । मुमुक्षुत्वाद्यधिकारसम्पत्तिमेंऽनुभवसिद्धेति यावत् । **शरणमहं प्रपद्ये**—मुमुक्षुरहं मोक्षसिद्ध्यर्थं शरणं प्रपद्ये, इति श्वेताश्वतरमन्त्रयोरर्थः । अनयोर्मन्त्रयोरेकशब्दादेकवचनाच्च एको देव इति लभ्यत इति बोध्यम् । एको देव इत्यत्र छान्दोग्यमुदाहरति—**सेयमिति** "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा. ६-२-१) इत्युक्त्वा सद्रूपा एका देवता सेति परामृश्यते ॥

ननु कथमेको देवः ? श्रुतिस्मृत्यादिषु प्राप्तृत्वप्राप्तव्यत्वानुग्राह्यत्वानुग्राहकत्वज्ञातृत्वज्ञातव्यत्वादिना जीवपरभेदावगमादिति शङ्कते—**नन्विति** । सदिति श्रुतिमाश्रित्य समाधत्ते—**नेति** । परस्यैव जीवरूपेण प्रवेशप्रतिपादकश्रुती उदाहरति—**तदिति** । हिरण्यगर्भादिस्थावरा[3]न्तं शरीरजातं यत् किञ्चिदस्ति **तत्** सर्वं **सृष्ट्वा तदेव**—सृष्टं शरीरजातं, परमात्मा **अनुप्राविशदि**त्यर्थः । **स एष इति** । **सः**—अविद्यया

---

[1] देवः ? कथं जीवपरयोर्भेदः ? उच्यते—तत्सृ—**पा.** [2] तमेव ज्ञान—**पा.**
[3] रात्मशरीर—**पा.**

भाष्यम्

**प्रविष्ट आनखाग्रेभ्यः[1] (बृ. १-४-७)" इत्यादिश्रुतिभ्योऽविकृतस्य परस्य बुद्धितद्वृत्तिसाक्षित्वेन प्रवेशश्रवणा[2]न्न भेदः ॥**

विवृतिः

आश्रयो विषयश्च, [3]**एष**—बुद्धिसाक्षित्वेनोपलभ्यमानः सर्वैर्जन्तुभिः, **इह**—हिरण्यगर्भादिपिपीलिकान्तेषु सप्राणेषु सान्तःकरणेषु, अन्तर्बहिर्वर्तमान एक एव जलभाजनेष्वाकाशवत् **प्रविष्टः**— प्रवेशनं-अनाद्यविद्याविषयवशादविद्याकार्येषु सान्तःकरणेष्वहं ममेति [4]**भ्रमं** कृतवान् । किं क्वचिदेव शरीरे? नेत्याह— **आनखाग्रेभ्य इति । आनखाग्रेभ्यः**— नखाग्रमर्यादं; यद्यपि चैतन्यं सर्वत्रैकरूपम्, तथापि नखाग्रकेशमूले वर्जयित्वा अहमभिमानालम्बनं सर्वस्य सर्वस्मिन् शरीर इत्यनेनाभिप्रायेणानखाग्रेभ्य इत्युक्तिरिति बृहदारण्यकश्रुत्यर्थः ॥

अत्रेदं चिन्त्यते—यः परमात्मा स्रष्टास्ति स किं तेनैव रूपेण प्राविशत्? किं वा रूपान्तरेणेति? तत्र सृष्ट्वेति क्त्वाप्रत्ययेन सृष्टिप्रवेशयोः समानकर्तृकत्वावगमात् स्रष्टृरूपेण प्रवेश इति चेत्, न; मृत्पिण्डवदुपादानस्य प्रवेशानुपपत्तेः । न खलु यो मृत्पिण्डो घटाकारेण [5]परिणमते स एव तं घटमनुप्रविशति । तथा शरीराकारेण परिणतस्य स्रष्टुस्तेष्वेव शरीरेषु कथं प्रवेशो घटेत? ॥

ननु तर्हि रूपान्तरेण प्रवेशोऽस्तु । यथा मृत्पिण्डविकारे घटे पुनरन्या चूर्णरूपा मृत् प्रविशति तथा ईश्वररूपेण प्रवेशाभावेऽपि जीवरूपेण प्रवेशः स्यात् । मैवम् । अद्वयस्य रूपद्वयाभावात् । तदज्ञी-

---

[1] पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् (बृ. २-५-१८) इत्यादि–**पा.** [2] णादभेदः–**पा.** [3] एवं बु–**पा.** [4] भ्रमः चिद्धातोः तत्कृतत्वात्–**पा.** [5] विपरिणमते–**पा.**

## विवृतिः

कारेऽपि प्रवेष्टव्यप्रदेशाभावादुपादानत्वेन सर्वकार्येषु पूर्वमेवानुगतोऽवतिष्ठते। तथा सति परमात्मशून्यप्रदेशाभावे कुत्रायं प्रविशेत्? अवस्थिते परमात्मन्येव प्रविशत्विति चेत्, न; "तदेवानुप्राविशत्" (तै. उ. २–६) इति सृष्टे कार्ये प्रवेशश्रवणात्। सृष्टं शरीररूपं कार्यं पुनर्जीवलक्षणकार्यान्तराकारेण परिणमते, सोऽयं परिणामः प्रवेश इति चेत्, न; कुम्भाकारपरिणामस्य पुनः शरीराकारपरिणामादर्शनात्। जलसूर्यकादिप्रतिबिम्बवत् प्रवेशः स्यादिति चेत्, नैवम्; अपरिच्छिन्नत्वादमूर्तत्वाद्विप्रकृष्टदेशावस्थितस्य प्रतिबिम्बाधारस्याभावाच्च। परिच्छिन्नो मूर्तश्च सूर्यबिम्बो विप्रकृष्टदेशस्थे जलादौ प्रतिबिम्बितो भवति। ब्रह्म न परिच्छिन्नम्। नापि मूर्तम्। न च ब्रह्मणो विप्रकृष्टदेशवर्ती कश्चिदुपाधिरस्ति। तस्मान्न केनापि प्रकारेण प्रवेश उपपादयितुं शक्यते॥

अत्रोच्यते—जगत्सृष्टिवदयं प्रवेश उपपादनीयः। अचिन्त्यरचनारूपं जगद्यथा परमेश्वरो मायावलम्बेन ससर्ज, तथा [1]मायावलम्बेनैव [2]प्राविशत्। अथोच्येत—येयमाकाशादिका मायासृष्टिः न तां वस्तुबुद्ध्या प्रतिपादयति श्रुतिः। किं तर्हि? मृद्घटन्यायेन कार्यस्य कारणव्यतिरेकेणाभावं विवक्षित्वा ब्रह्मण आनन्त्यं पूर्वं प्रतिज्ञातमुपपादयितुं भ्रान्तिसिद्धा सृष्टिरनूद्यत इति, तर्हि प्रतिज्ञातं गुहाहितत्वं पञ्चकोशोपन्यासद्वारेण "ब्रह्म पुच्छं" (तै. उ. २–४) इत्युपपाद्य पुनरपि तदेव स्पष्टीकर्तुं भ्रान्तिसिद्धः प्रवेशोऽनूद्यताम्। यथा कश्चित् पुमान् गृहं निर्माय तत्र प्रविश्यान्तरवस्थित उपलभ्यते, एवं ब्रह्मापि आकाशादिकार्यदेहं सृष्ट्वा तस्यान्तः प्रविष्टमिव हृदयपुण्डरीकेऽवस्थितायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञातृ इत्येवं विशेषवदुपलभ्यते। सोऽयमस्य प्रवेश उपचर्यत इति॥

---

[1] मायाबलेनैव–**पा.** [2] प्रविशतु–**पा.**

## भाष्यम्

प्रविष्टानामितरेतरभेदात् [1]परात्मैकत्वं कथमिति चेत्—न ; एको देवो बहुधा निविष्टः" (तै. आ. ३-१४) "एकः सन् बहुधा विचारः" (तै. आ. ३-११) 'त्वमेकोऽसि बहून‌नुप्रविष्टः" (तै. आ. ३–१४) इत्येकस्यैव बहुधा प्रवेशश्रवणात् प्रविष्टानां परस्य च न भेदः। "हिरण्यगर्भः" इत्यष्टौ

## विवृतिः

ननु परस्यैवाविकृतस्य प्रवेशे प्रविष्टानामितरेतरभेदात्तदभिन्नस्य परस्यापि नानात्वापत्तिरिति शङ्कते—**प्रविष्टानामिति**। न परस्यानेकत्वम्, एकत्वश्रुतिविरोधादिति परिहरति—**नेति**। परः स्वगतभेदवान्, अनेकाभिन्नत्वात्, अनेकवदिति पूर्वपक्ष्यनुमाने, अनेके तत्त्वतः स्वगतभेदहीनाः, एकाभिन्नत्वात्, एकवदिति प्रत्यनुमानं, रज्जौ सर्पाद्यनेकाभिन्नत्वेऽपि एकत्वेन स्वगतभेदवत्त्वाभावात् प्रतिबिम्बानेकत्वेऽपि बिम्बस्यैकत्वाच्च व्यभिचार आगमविरोधश्च बोध्यः। नञर्थं विवृणोति—**प्रविष्टानामिति**। एतदनन्तरं इतरेतरभेदादिति शेषः। प्रविष्टानामितरेतराभेदात्तदभिन्नस्य परस्यात्मनोऽनेकत्वलक्षणो भेदश्च नेत्यर्थः। अत्र हेतुमाह—**एकस्यैवेति**। एकस्यैव बहुधा प्रवेशश्रवणं दर्शयति—**एको देव इत्यादि**। एको देव इति श्रुतिः स्पष्टार्था। **एकः सन्निति**। **एक** एव **सन्** परमात्मा **बहुधा**—बहुप्रकारेण भूत्वा भिन्नभिन्नेषूपाधिषु **विचारः**—विविधचरणवान् भवतीत्यर्थः। **त्वमेक इति**। **बहून्**—उपाधीन्, **अनुप्रविष्टः** सन् बहुभूतोऽपि **त्वमेक एवासीत्यर्थः**। नन्वित्यादि न भेद इत्यन्तो ग्रन्थः केषुचित्कोशेषु न दृश्यते। [2]एकं दैवतमित्यत्र तैत्तिरीयमन्त्रानुदाहरति—**हिरण्येति**।

---

[1] परानेकत्वं इति—**पा.** [2] एकदैवतमित्यत्र—**पा.**

## भाष्यम्

**मन्त्राः " कस्मै देवाय " (तै. सं. ४-१-८) इत्यत्र एकारलोपे-नैकदेवत्वप्रतिपादकाः तैत्तिरीयके ।**

**अग्निर्यथैको भुवनं प्रविष्टो**
**रूपं रूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा**
**रूपं रूपं प्रतिरूपो बहिश्च ॥**

## विवृतिः

ननु " हिरण्यगर्भः समवर्तताग्रे " ( तै. सं. ४-१-८) इत्यादि-मन्त्रेषु एकत्वप्रतिपादकशब्दानुपलम्भात् कथमेकत्वप्रतिपादकतेत्याशङ्कय " कस्मै देवाये"त्यत्र कस्मा इति प्रजापतिवाचकः कशब्दो न भवति । तथा सति तस्यासर्वनामत्वेन स्मायादेशानुपपत्तेः । किन्त्वेकशब्दः । तस्य सर्वादिगणपाठात् स्मायादेशे छान्दस्या प्रक्रियया एकारलोपेन कस्मा इति रूपनिष्पत्तिरित्याह–**कस्मा इत्यादिना** । **कस्मै**— एकस्मै अद्वयाय, **देवाय**–प्रकाशात्मकाय, **हविषा** परिचरणसाधनभूतेन द्रव्येण, **विधेम**—परिचरेम इति श्रुत्यर्थः ।

आत्मैकत्वे कठश्रुतीरुदाहरति—**अग्निरित्यादि** । **यथा** खल्वयम**ग्निः** स्वयं **एक** एव, भवन्त्यस्मिन् भूतजातानीति **भुवनं**–अयं लोकः, तमिमं **प्रविष्टः** सन् **रूपं रूपं**–काष्ठादिकं [1] सर्वं दाह्यभेदं प्राप्य तत्त**त्प्रतिरूपो बभूव**—दाह्यसमानाकृतिर्भवतीत्यर्थः । **तथा एक** **एव** सच्चिदानन्दस्वरूपः परमात्मा **सर्वभूतान्तरात्मा**—सर्वेषां भूता-

---

[1] सर्वदाह्यादिभेदं–**पा.**

भाष्यम्

वायुर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च॥
सूर्यो यथा सर्वलोकस्य चक्षु-
र्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः॥

विवृतिः

नामन्तरात्मा भूत्वा **रूपं रूपं**—तत्तद्देवमनुष्यादिशरीरं प्रविश्य तत्त-त्प्रतिरूपो बभूव; तथा **बहिश्च**—प्रपञ्चाद्बहिरपि, स्वेन निरुपाधिकेना-विकृतरूपेणावतिष्ठते। **यथा** वा **वायुः** स्वयं **एक** एव सन् **भुवनं प्रविष्टः रूपं रूपं**—नानाव्यञ्जनरूपं प्राप्य प्रतिरूपो भवति। **एकस्तथे-**त्यादि समानम्।

एवमेकस्यैवात्मनस्तत्तत्प्रतिरूपत्वेनावस्थाने तत्तत्कृतसंसारानु-भवोऽपि स्यादित्याशङ्क्य सदृष्टान्तं निर्लेपतामाह—**सूर्य इति**। **यथा सूर्यः सर्वलोकस्य चक्षुः**—एकांशेन चक्षुरिन्द्रियस्योपकारं कुर्वन् चक्षुर्भूतोऽपि—चक्षुषो विषयालोकसंयोगेनोपकारं कुर्वन्नपि, [1]अशुच्यादि-दर्शनजनितैः **चाक्षुषैः**—आध्यात्मिकैः, **बाह्यैश्च**—अशुच्यादिसंसर्ग-**दोषैश्च न लिप्यते**—न स्पृश्यते, **तथा एक** एवात्मा **सर्वभूतान्त-रात्मा** सन्नपि **बाह्यः**—तस्मात्सर्वस्माद्भूतजाताद्विभक्तः सन् तदीयदुः-

---

[1] अशुभादि-**गा.**

भाष्यम्

**एको वशी सर्वभूतान्तरात्मा**
**एकं रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषां सुखं शाश्वतं नेतरेषाम् ॥**
**नित्यो नित्यानां चेतनश्चेतनाना-**
**मेको बहूनां यो विदधाति कामान् ।**

विवृतिः

**खेन न लिप्यते** । अविद्यया ह्यात्मनः संसारदुःखप्रतिप्रत्तिः । न च सा परमार्थोपाधौ विद्यत इति अशनायादिना संसारदुःखेन कथं परमार्थभूतस्य [1]परमात्मनो लेपसम्भव इत्यर्थः ॥

**एको वशीति । एकः**—सर्वमुख्यः । न चानेन सदृशोऽधिको वा [2]कश्चिदस्ति । **वशी**—स्वतन्त्रः । यतः सर्वं जगदस्य वशे वर्तते । तदपि कुत इत्यत आह—**सर्वेति** । सर्वान्तरात्मत्वमपि कुत इत्यत आह—**एकमिति** । [3]**एकमेव रूपं**—विशुद्धज्ञानलक्षणं आत्मीयं रूपं, **बहुधा** बहुप्रकारं, विचित्रोपाधिभेदवशेन **यः करोति तमात्मस्थं**—आत्मनि—शरीरे हार्दाकाशमध्ये, स्थितं—अभिव्यक्तं, गुरुशास्त्रोपदेशेन **ये पश्यन्ति**—साक्षादनुभवन्ति, **धीराः**—विवेकिनः, **तेषां**—[4]ब्रह्मीभूतानामेव, **सुखं शाश्वतं**—नित्यनिरतिशयानन्दाभिव्यक्तिर्भवति । **इतरेषां**—अज्ञानिनां तु यच्छब्दस्पर्शादिविषययोगसुखं तच्छाश्वतं **न** भवति । शुभकर्मोपस्थापितबुद्धिवृत्त्यनुविधायित्वेन तस्य क्षणिकत्वादित्यर्थः । **नित्या इति** व्यावहारिकरीत्या यत्सत्तानुवेधबलेन नित्याः; यच्चैतन्या-

[1] आत्मनः—**पा.** [2] कश्चिदस्ति द्वितीयो वा—**पा.** [3] एकं एकरसं—**पा.**
[4] ब्रह्मभूतानामेव—**पा.**

भाष्यम्

**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥**

**इति कठवल्लीषु (२-२-९-१३)**

**"ब्रह्म वा इदमग्र [1]असीदेकमेव तदेकं सन्न व्यभवत्" (बृह. १-४ ११) "नान्योऽतोऽस्ति द्रष्टा" (बृह. ३-७-२३)**

विवृतिः

नुवेधबलेन देवमनुष्यादयो हि सचेतनाः स **नित्यानां नित्यः चेतनानां चेतन** इत्युच्यते । किञ्च सर्वज्ञः सर्वेश्वरो **य एकः बहूनां**— कामिनां संसारिणां कर्मानुरूपं **कामान्**—[2] स्वर्गादिफलानि स्वानुग्रहनिमित्तांश्च कामान्, अनायासेन **विदधाति**—प्रयच्छतीत्येतत् । **तमात्मस्थं येऽनुपश्यन्ति धीराः** । पूर्ववत् । **तेषां शान्तिः**— उपरतिः, **शाश्वती**—नित्या स्वात्मभूतैव स्यात् । **नेतरेषां**—अनेवंविधानामिति कठवल्लीश्रुत्यर्थः । एकत्वे बृहदारण्यकश्रुतिमुदाहरति— **ब्रह्म वा इति । ब्रह्म वा इदमग्र आसीत्** । यदग्निं सृष्ट्वा अग्निरूपापन्नं **ब्रह्म** ब्राह्मणजात्यभिमानाद्ब्रह्मेत्याभिधीयते । **वा इदं**—क्षत्रादिजातं ब्रह्मैवाभिन्नमासीदेकमेव । नासीत्क्षत्रादिभेदः । **तत्**—ब्रह्म, **एकं सत्**—क्षत्रादिपरिपालयित्रादिशून्यं सत्, **न व्यभवत्**—न विभूतवत्—[3] कर्मणे नालमासीत् । अतोऽन्तर्यामिणोऽन्यो **द्रष्टा नास्तीति**

---

[1] आसीत्तदेकं—**पा.** [2] स्वर्गफलानि—**पा.** [3] कर्मणि नाल—**पा.**

भाष्यम्

इत्यादि बृहदारण्यके। "अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्" (ईश. ४)

"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः"। (ईश ७)

इतीशावास्ये ॥

विवृतिः

बृहदारण्यकश्रुतिद्वयार्थः । **अनेजदिति** । **अनेजत्**—कम्पनमकुर्वत, **एकं**—सर्वेषु भूतेष्वभिन्नम्, इदमित्थं चेन्मनसा प्राप्यमित्यत आह—**मनसो जवीयः**—मनसो वेगवत्तरम् । मनसा साक्षादनाप्यानामपि रूपादीनां चक्षुरादिभिराप्यत्वदर्शनादिदमपि तथास्त्वित्यत आह—**नैनद्देवा इति** । **एनत्**—ईश्वरस्वरूपं, **देवाः**—चक्षुरादयः, **नाप्नुवन्**—नाधिगतवन्तः । मनसा इन्द्रियैश्चानाप्तत्वेन परिच्छेदशङ्कां प्राप्तां वारयति—**पूर्वमिति** । **पूर्वं**-प्रथमं, **अर्षत्**—गतवत्, सर्वतो गतमित्यर्थः ॥

**यस्मिन्**—ईश्वरस्वरूपे आनन्दात्मनि, **सर्वाणि भूतानि**—स्पष्टं। कल्पितं स्वरूपं परित्यज्य **आत्मैवाभूत्**—अकल्पितमानन्दस्वरूपमेवाभूत् । भूतानामानन्दात्मभवने कारणमाह—**विजानत इति** । **विजानतः**—ईशात्मकमहमिदमस्मीति विज्ञानवतः, **तत्र**—ईशात्मविज्ञातृस्वरूपे देशकालवस्तुपरिच्छेदशून्ये, **कः** आक्षेपे। **मोहः**—द्वैतभावः आत्मावरणरूपः, कः आक्षेपे पूर्ववत् । **शोकः**—विक्षेपरूपः—दुःखवृक्षस्य बीजरूपः । विजानत इति शब्दस्यार्थमाह—**एकत्वमन्विति** ॥

भाष्यम्

**"सर्वेषां भूतानामान्तरः पुरुषः स म आत्मेति विद्यात्"** (ऐत. आर. ३-२-४)

**"आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किञ्चन मिषत्"।** (ऐत. आ. २-४-१) **"एकं सद्विप्रा बहुधा वदन्ति"**

विवृतिः

अभेदे ऋग्वेदश्रुतिमुदाहरति—**सर्वेषामिति । भूतानां**—भवनधर्मकाणां, **सर्वेषामान्तरः पुरुषः**—अभ्यन्तरः पुरुषः पूर्णः भूतेषु विक्रियमाणेष्वपि **आत्मा समः**—एकरूपः—निर्विशेष इति **विद्यात्** ॥

**आत्मा वा इति ।** अखण्डैकरसः सर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थः आत्मशब्देनात्र विवक्षितः । **वै** शब्दोऽवधारणार्थः । **इदं**—इदानीं (सर्वजन) प्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगत्, **अग्रे**—सृष्टेः पूर्वं, **आत्मैवासीत्**—न तु तत्कार्यभूतं नामरूपात्मकं जगदासीत् । नाप्यात्मगोचरौ शब्दप्रत्ययावास्ताम् । एकादिशब्दैरखण्डैकरसत्वमेव स्पष्टीक्रियते । तत्रैकशब्देन स्वगतभेदो व्यावर्त्यते । वृक्षवन्नानात्मको न भवति, किन्त्वेकात्मक इत्यर्थः । एवशब्देन सजातीया[1]त्मान्तरव्यावृत्तिः । योऽयमेकः स एव, न त्वन्यः कश्चित्तादृश इत्यर्थः । नान्यदित्यादिना विजातीयभेदो निरस्यते । **अन्यत्**—प्रकृतात्मनो विलक्षणं, **किञ्चन**—किञ्चिदपि, **न मिषत्**—नासीत् । धातूनामनेकार्थत्वान्नासीदित्युक्तं भवति । नच मायाशक्त्या सद्वितीयत्वं शङ्क्यम् । आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्ग्रहणानर्हत्वादित्यैतरेयकवाक्ययोरर्थः ॥

ऋग्वेदस्थान् मन्त्रानाह—**एकमित्यादि ।** वस्तुतः **एकं**—अद्वयमेव, [2] **सत्—सन्तं,** आत्मानं स्वमायाशक्त्या अनेकरूपमापन्नं वदन्ती-

---

[1] यात्मान्तरभेदव्यावृत्तिः—**पा.** [2] सत् ब्रह्म—**पा.**

भाष्यम्

(ऋ. सं. मं. १. सू. १६४. व. ४६) "एकं सन्तं बहुधा कल्पयन्ति" (ऋ. सं. मं. १०. सू. ११४. व. ५.) "एको विममे त्रिभिरित्पदेभिः" (ऋ. सं. मं. १. सू. १५४. व. ३) "एको दाधार भुवनानि विश्वा" (ऋ. सं. मं. १. सू. १५४. व. ४) "एक एवाग्निर्बहुधा समिद्धः" (ऋ. सं. अष्ट. ६. अध्या. ४. वर्ग. १६) इति ऋग्वेदे। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा. ६-२) इति छान्दोग्ये।

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।**

विवृतिः

त्यर्थः। **एकं सन्तामिति** पूर्ववत्। **एको विमम इति**। एक एव विष्णुः स्वमायारचितबृहच्छरीरः, **त्रिभिरित्पदेभिः**–त्रिभिरेव पदैः, त्रीन् लोकान् **विममे**–मानं–परिच्छेदं कृतवानित्यर्थः। **एक इति**। **एक एव** विष्णुः, **विश्वा भुवनानि**–कृत्स्नं जगत्, **दाधार**–धृतवानित्यर्थः॥

छान्दोग्यमुदाहरति **सदेवेति**। इदं वाक्यं सद्रूपं जगत्कारणमनभ्युपगच्छतां सौगतानां, अद्वितीयं जगत्कारणमनभ्युपगच्छतां तार्किकाणां च मतनिरासाय। तथा च यत् **अग्रे**–सृष्टेः पूर्वं, **असीत्** तत् **सत् एकं अद्वितीयं** चेति श्रुत्यर्थः॥

तत्रैव गीतावचनान्युदाहरति–**सर्वेत्यादि**। सर्वेषु भूतेष्वधिष्ठानतया स्थितं सर्वानुस्यूतसन्मात्रं **मां**–ईश्वरं तत्पदलक्ष्यं, स्वेन स्वंपदलक्ष्येण सह **एकत्वं**–अत्यन्ताभेदं, **आस्थितः** घटाकशो महाकाश इत्यत्रेवोपाधिभेदनिराकरणेन निश्चिन्वन्, यो [1] **भजति**,–अहं ब्रह्मास्मीति वेदान्तवाक्यजेन साक्षात्कारेणापरोक्षीकरोति, सोऽविद्यातत्कार्यनिवृत्त्या जीवन्मुक्तः [2] कृतकृत्य एव भवति। यावत्तस्य बाधितानुवृत्त्या

[1] भवति–**पा.** [2] कृतकृत्यो भवति–**पा.**

भाष्यम्

सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
(भ-गी. ६-३१)

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥
(भ-गी. ५-१८)

विवृतिः

शरीरादिदर्शनमनुवर्तते तावत्प्रारब्धकर्मप्राबल्यात्सर्वकर्मत्यागेन याज्ञवल्क्यादिवद्विहितेन कर्मणा वा जनकादिवत्प्रतिषिद्धेन कर्मणा वा दत्तात्रेयादिववत् **सर्वथा**—येन केनापि रूपेण, **वर्तमानोऽपि**—व्यवहरन्नपि, **स योगी**—ब्रह्माहमस्मीति विद्वान्, **मयि**—परमात्मन्येव, अभेदेन **वर्तते**। सर्वथा [1]अस्य मोक्षं प्रति नास्ति प्रतिबन्धशङ्का। "तस्य ह न देवाश्च नाभूत्या ईशते। आत्मा ह्येषां स भवति" (बृह. १-४-१०) इति श्रुतेः। देवाः महाप्रभावा अपि तस्य [2]मोक्षाभावाय नेशते। किमुतान्ये क्षुद्रा इत्यर्थः। ब्रह्मविदो निषिद्धकर्मणि प्रवर्तकयो रागद्वेषयो[3]रभावेन निषिद्धकर्मासम्भवेऽपि तदङ्गीकृत्य ज्ञानस्तुत्यर्थमिदमुक्तं **सर्वथा वर्तमानोऽपीति** ॥

**विद्याविनयेति** । **विद्या**—वेदार्थपरिज्ञानं ब्रह्मविद्या च । **विनयो**— निरहङ्कारत्वम्, अनौद्धत्यमिति यावत् । ताभ्यां **सम्पन्ने**—ब्रह्मविदि विनीते च **ब्राह्मणे**—सात्त्विके सर्वोत्तमे, तथा **गवि** संस्कारहीनायां राजस्यां मध्यमायां, तथा **हस्तिनि शुनि श्वपाके च**—अत्यन्ततामसे सर्वाधमेऽपि, सत्त्वादिगुणैस्तज्जैश्च संस्कारैरस्पृष्टमेव समं

---

[1] तस्य—**पा.** [2] मोक्षाभवनाय—**पा.** [3] रसम्भवेन—**पा.**

भाष्यम्

**अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥**
**(भ–गी. १०–२०)**

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥**
**(भ–गी. १३–३०)**

विवृतिः

ब्रह्म द्रष्टुं शीलं येषां ते **समदर्शिनः, पण्डिताः**—ज्ञानिनः, यथा गङ्गातोये तटाकेषु सुरायां मूत्रे च प्रतिबिम्बितस्यादित्यस्य न तद्गुणदोषसम्बन्धः तथा ब्रह्मणोऽपि चिदाभासद्वारा प्रतिबिम्बितस्य नोपाधिगुणदोषसम्बन्ध इति प्रतिसन्दधानाः सर्वत्र समदृष्ट्यैव रागद्वेषराहित्येन परमानन्दस्फूर्त्या जीवन्मुक्तिमनुभवन्तीत्यर्थः ॥

**अहमात्मेति**। सर्वभूतानां आशये—हृद्देशे, अन्तर्यामिरूपेण प्रत्यगात्मरूपेण च स्थित **आत्मा** चैतन्यानन्द[1]घनः, त्वया अहं वासुदेव एवेति ध्येयः। हे **गुडाकेश !**—जितनिद्र ! इति ध्यानसामर्थ्यं सूचयति ॥

**यदा भूतेति। यदा**—यस्मिन् काले, **भूतानां**—स्थावरजङ्गमानां सर्वेषामपि जडवर्गाणां **पृथग्भावं**—पृथक्त्वं—परस्परभिन्नत्वं, **एकस्थं**—एकस्मिन्नेवात्मनि सद्रूपे स्थितं—कल्पितं, कल्पितस्याधिष्ठानादनतिरेकात् सद्रूपादनतिरिक्तं, **अनुपश्यति**—शास्त्राचार्योपदेशमनु स्वयमालोचयति ‘आत्मैवेदं सर्वं’ इति। एवमपि मायावशात् **ततः**—एकस्मादात्मन **एव विस्तारं**—पृथग्भावं च स्वप्नमायावदनुपश्यति। **ब्रह्म सम्पद्यते तदा**—सजातीयविजातीयभेददर्शनाभावाद्ब्रह्मैव सर्वानर्थशून्यं भवति तस्मिन् काल इत्यर्थः ॥

[1] घनः अहं–**पा.**

**भाष्यम्**

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥**
**(भ-गी. १३-३३)**

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥**
**(भ-गी. १८-६६)**

**इति भगवद्गीतासु ॥**

**हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।**
**ओमित्येवं सदा विप्राः! पठत ध्यात केशवम् ॥**

विवृतिः

**यथेति । रविरेक एव कृत्स्नं**—सर्वं, **लोकं**—देहेन्द्रियादि-सङ्घातं, रूपवद्वस्तुमात्रमिति यावत् । **प्रकाशयति । न च** प्रकाश्य-धर्मैर्लिप्यते । न वा प्रकाश्यभेदाद्भिद्यते । **तथा क्षेत्री**—क्षेत्रज्ञः, **एक एव कृत्स्नं क्षेत्रं प्रकाशयति** हे **भारत!** अत एव प्रकाशत्वान्न प्रकाश्यधर्मैर्लिप्यते । नवा प्रकाश्यभेदाद्भिद्यत इत्यर्थः ॥

**सर्वधर्मानिति** । सर्वे च ते धर्माश्च सर्वधर्माः तान् । सर्वधर्म-शब्देनात्राधर्मोऽपि गृह्यते । सर्वाणि कर्माणीत्येतत् । **परित्यज्य**—सन्न्यस्य, **मामेकं**—सर्वात्मानं समं सर्वभूतस्थितमीश्वरमेकं, अहमेवेति **शरणं व्रज**—न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । **अहं त्वा**—त्वां एवं निश्चितबुद्धिं, **सर्वपापेभ्यो मोक्षयिष्यामि** स्वात्मभावप्रकाशकरणेनेति गीतावचनानामर्थः । **हरिरेक** इत्यादिश्लोकद्वयं स्पष्टार्थम् । अत्रैकपदा-दद्वैतावगतिः ॥

भाष्यम्

आश्चर्यं खलु देवानामेकस्त्वं पुरुषोत्तम! ।
धन्यश्चासि महाबाहो! लोके नान्योऽस्ति कश्चन ॥
(हरि. अ. २८०)

इति हरिवंशे। [1]भवति च मनोर्माहात्म्यख्यापिनी श्रुतिः— "यद्वै किञ्चन मनुरवदत्तद्भेषजम्" इति (तै. सं. २-२-१०) मनुना चोक्तम्—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥ इति ॥
(मनु. १२-९१)

सृष्टिस्थित्यन्त[2]करणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥
(वि. पु. १-२-६६)

तस्मान्न विज्ञानमृतेऽस्ति किञ्चि-
त्क्वचित् कदाचिद्द्विज! वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदा-
द्विभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ (वि-पु. २-१२-४३)

विवृतिः

एकत्वे विष्णुपुराणवचनान्युदाहरति **सृष्टीत्यादि** । सृष्टि-स्थित्यन्तकरणं निमित्तं यस्यास्तां, ब्रह्मा विष्णुः शिव इत्यात्मस्वरूपं यस्यां सा तथोक्ता तां **संज्ञां**, **एकः**—अद्वितीयः, **जनार्दनः**—सच्चिदानन्द-लक्षणः परमात्मा, त्रिगुणात्मिकां मायाशक्तिमधिष्ठाय **याति**—प्राप्नोतीत्यर्थः । **तस्मादिति** । विज्ञानात्मकस्य ब्रह्मणोऽद्वितीयत्वमुक्तं पूर्वार्धेन । नन्वद्वितीयत्वे कथं जीवजडभेदप्रतीतिरित्याशङ्क्य अज्ञातं विज्ञानमेव भिन्नप्रपञ्चरूपेण प्रतीयत इत्याह—**विज्ञानमिति** ।

---

[1] अत्र भवतीत्यारभ्य मनुवचनं केषु चित्पुस्तकेषु न दृश्यते । अस्य विवृतिरपि नोपलभ्यते. [2] करणां—**पा.**

भाष्यम्

ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादिनिरस्तसङ्गम् ।
एकः सदैकः परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥
(वि. पु. २-१२-४४)

यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्? सोऽहमित्येतद्विफलं वचः ॥
(वि. पु. २-१३-९१)

विवृतिः

निजानां कर्मणां भेदेन विभिन्नं चित्तं येषां तैः, [1] **विज्ञानं एकमेव बहुधा**—नानावस्तुरूपेण, **अभ्युपेत**मिति तदेवोपपादितम् ॥

**ज्ञान**मिति । **विशुद्धं**—विषयोपरागशून्यं, **विमलं**—रागादि-शून्यं, अत एव **विशोकं**—स्वतः अशेषाणां चित्ताद्युपाधीनां लोभादिभि-र्निरस्तः सङ्गो यस्य तथाभूतं, **ज्ञानं** सदैकमेव, **स** एव **परमः**—सर्वोत्तमः, **परेशः**—परमेश्वरः **वासुदेवः**, **यतः अन्यत्**—व्यतिरिक्तं किञ्चिदपि **नास्ती**त्यर्थः ॥

**यदेति** । मत्तोऽन्यः सजातीयो विजातीयो वा यदि कोऽप्यस्ति तदा तद्व्यवच्छेदेन एषोऽहमिति वक्तुं युज्येत । यदा तु सर्वदेहेषु एक एवात्मा साक्षितयावस्थितः तदा को भवानिति बहुषु निर्धारणरूपं तव प्रश्नवचः, सोऽहमित्यन्यव्यावृत्त्या मम प्रतिवचश्च विफलमित्यर्थः ॥

---

[1] विज्ञानं चित्तमेकमेव—**पा.**

भाष्यम्

**सितनीलादिभेदेन यथैकं दृश्यते नभः ।**
**भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥**
**एकः समस्तं यदिहास्ति किञ्चि-**
**त्तदच्युतो नास्ति परं ततोऽन्यत् ।**
**सोऽहं स च त्वं स च सर्वमेत-**
**दात्मस्वरूपं त्यज भेदमोहम् ॥**
**इतीरितस्तेन स राजवर्य-**
**स्तत्याज भेदं परमार्थदृष्टिः ।**
**(वि. पु. २-१६-२३, २४)**

विवृतिः

अप्रत्यक्षेऽप्यात्मनि प्रत्यक्षभेदभ्रमं [1]आकाशदृष्टान्तेन सम्भावयन्नाह—**सितेत्यादि । एक इति । यत्किञ्चिदिह**—प्रपञ्चे, **अस्ति तत्समस्तं एकोऽच्युत** एवेत्यनात्मभेदं [2]निरस्यात्मभेदं निराकरोति—**सोऽहमिति ।** यद्वा योऽच्युतः स एकोऽद्वितीयः । ननु जडानां तद्भिन्नानां सत्त्वान्नाद्वितीयत्वमत आह—**यदिति । इह**—प्रपञ्चे, **यत्किञ्चिदस्ति तत्समस्तं ततः**—अच्युतात्, **परं**—परमार्थभूतं **अन्यन्नास्त्येव** । जडजातस्य मिथ्यात्वात् न तेन सद्वितीयतेति भावः ।

नन्वेवमपि जीवैः सद्वितीयत्वमत आह—**सोऽहमिति । अहं त्वं च सः**—स एव । आवाभ्यामन्यदपि **यदात्मस्वरूपं**—जीवस्वरूपमस्ति, **एतत्सर्वं स** एवेति योजना । **इतीति । इति**—अनेन प्रकारेण, **तेन राजवर्यः**—सौवीरः, **ईरितः**—उपदिष्टः सन्, **परमार्थ-**

[1] आकारदृ—**पा.**　[2] निरस्यामेदं—**पा.**

भाष्यम्

सकलमिदमहं च वासुदेवः
परमपुमान् परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान् विहाय दूरात् ॥
(वि. पु. ३-७-३२)

यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥
विभूतयस्तु यास्तस्य तासामेव परस्परम् ।
आधिक्यं न्यूनता बाध्यबाधकत्वेन वर्तते ॥
(वि. पु. ५-१-३०, ३१ )

भवानहं च विश्वात्मन्नेकमेव हि कारणम् ।
जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥

विवृतिः

**दृष्टिः**—उपदेशजनितपरमार्थदर्शनः, भेदं—भेदभ्रमं, **तत्याजेत्यर्थः** । **सकलमिदमित्यादि** दूतं प्रति यमस्य वचनं स्पष्टार्थम् ॥

**यदाहेति** । भारपीडितया भूम्या यदुक्तं विष्णोः सर्वात्मकत्वं एतत्सत्यमिति भूमेरुक्तीरनुमोदते ब्रह्मा । हे दिवौकसः ! **अहं**—ब्रह्मा, **भवः**—शर्वः, भवन्तः—इन्द्रादयश्च, **सर्वं नारायणात्मकमिति** । सर्वस्य विष्णुविभूतित्वेऽपि कंसादयो बाधकाः, अन्याः प्रजाः बाध्याः, आधिक्यं बाधकत्वे हेतुः, न्यूनत्वं बाध्यत्व इति यदाहेत्यादेरर्थः ॥

प्रलम्बवधे रामं प्रति कृष्णस्य वचनं **भवानिति** । **भवान्**-सङ्कर्षणः, अहं—ईश्वरश्च, सदेवेत्यादिवाक्योक्तं यत् **एकं कारणं**—कारणत्वोपलक्षितं चिन्मात्रं, **तदेव** । भेदेनावस्थानं त्वावयोः **जगत्यर्थे**—जगत्प्रयोज-

भाष्यम्

त्वया यदभयं दत्तं तद्दत्तमभयं मया।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर! ॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम्।
मत्तो नान्यदशेषं यत्तत्त्वं ज्ञातुमिहार्हसि ॥
अविद्यामोहितात्मानः पुरुषा [1] भिन्नदर्शिनः।
वदन्ति भेदं पश्यन्ति चावयोरन्तरं हर! ॥
(वि. पु. ५–३३–४७, ४८, ४९)

इति विष्णुपुराणे ।

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव वा ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥

विवृतिः

नाय। बाणयुद्धे हरं प्रति हरेर्वचनं त्वयेत्यादिश्लोकद्वयम्। त्वयेति। अविभिन्नमिति छेदः। हे शङ्कर! आत्मानं मत्तः अविभिन्नं–अभिन्नं द्रष्टुमर्हसि इत्यर्थः ॥

न केवलं त्वमेव मदभिन्नः, अपि तु सर्वं जगदपीत्याह–य इति। सदेवासुरमानुषमिदं सर्वं जगत् यः–उपनिषत्प्रसिद्धः, सोऽहमेव। अविद्येति। अविद्यया–आवरणात्मिकया, मोहिताः–अनात्मस्वात्माभिमानरूपमोहयुक्ताः, पुरुषाः भिन्नं द्रष्टुं शीलमेषामिति भिन्नदर्शिनः इति विष्णुपुराणवचनानामर्थः। विष्णोरन्यमित्यादिश्लोकद्वयं स्पष्टार्थम् ॥

[1] भिन्नदृष्टयः.

भाष्यम्

ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः।
ब्रह्माणं च ततस्तस्माद्ब्रह्महत्यासमं त्वघम् ॥

इति भविष्यत्पुराणे श्रीमहेश्वरवचनम्। [1]अपि च-"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" (ब्र.सू. ४-१-३) आत्मेत्येवं शास्त्रोक्तलक्षणः

विवृतिः

ब्रह्मात्मैक्ये चतुर्थाध्यायप्रथमपादस्थं शारीरकसूत्रमाह—अपि चेति। यच्छास्त्रप्रतिपाद्यं ब्रह्म तत् जीवेन ज्ञात्रा स्वव्यतिरिक्ततया ग्रहीतव्यं, [2] दुःखिसुखिनोर्जीवब्रह्मणोरेकत्वविरोधादितिप्राप्ते—सिद्धान्तसूत्रं—आत्मेति। तद्व्याचष्टे—आत्मेत्येवमिति। तत्रो-

---

[1] [आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान्।
त्वत्तस्सर्वमभूद्विश्वं त्वयि सर्वं प्रलीयते ॥
अहं त्वं * हि महादेवस्त्वमेवाहं जनार्दन!।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते! ॥
नामानि तव गोविन्द! यानि लोके महान्ति च।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
त्वदुपासा जगन्नाथ! सैवास्तु मम गोपते।
यश्च त्वां द्वेष्टि भो देव! स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारो यतो देव! अहं भूतपतिस्ततः।
न तदस्ति † मनाग्देव यत्ते विरहितं क्वचित् ॥
यदासीद्वर्तते यच्च यच्च भावि जगत्पते!।
सर्वं त्वमेव देवेश! विना किञ्चित्त्वया न हि ॥
इति हरिवंशे कैलासयात्रायां महेश्वरवचनम्।]

(अस्य कुण्डलितपाठस्य ग्रन्थादौ पठितत्वादत्र पठितव्यता नास्ति)

[2] दुःख्यदुःखिनोः–**पा.**

* सर्वगो देव–**पा.** † विना देव–**पा.**

भाष्यम्

**परमात्मा प्रतिपत्तव्यः। तथा हि—परमात्मप्रक्रियायां जाबाला आत्मत्वेनैवैनमभ्युपगच्छान्ति "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" (वराह उ. २-३४) इति। तथा अन्येऽपि "यदेवेह तदमुत्र यदमुत्र तदन्विह" (कठ. २-१-१०) "स यश्चायं पुरुषे।**

विवृतिः

पगच्छन्तीति सूत्रभागं व्याचष्टे—**तथाहीत्यादिना।** उपगच्छन्तीत्यस्य कर्तारश्शाखिन इति दर्शयति—**जाबाला इति।** जाबालानामभ्युपगममुदाहृत्य कठानामभ्युपगममाह—**तथा अन्येपीति। इह**-अस्मिन् कार्यकरणसङ्घाते, **यत्** अवस्थितं सच्चिदानन्दैकरसं तत्त्वं **तत्**—तदेव, **अमुत्र**—अमुष्मिन् जगत्कारणत्वोपाधौ, **यच्चामुत्र तदनु**—तदेव, **इह**—कार्यकरणसङ्घात इति श्रुत्यर्थः॥

तैत्तिरीयकाणामुपगममाह—**स य इति।** अत्र पुरुषशब्देन बुभुत्सुर्मनुष्यो विवक्षितः। तस्मिन् पुरुषे कश्चिदानन्दो विद्यते। तत्सद्भावे यौक्तिकप्रसिद्धिरनुभवप्रसिद्धिश्च (स) सोऽयमित्येताभ्यां क्रमेण निर्दिश्यते। तत्र यौक्तिकप्रसिद्धिः श्रुत्यन्तरे प्रपञ्चिता। "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृह. उ. ४-५-६) इति प्रतिज्ञया पुत्रवित्तादिरूपस्य सर्वस्य भोग्यजातस्य आत्मशेषतया प्रियत्वे सत्यात्मनः परमप्रीतिविषयत्वेनानन्दरूपत्वमुपपादितं भवति। तथा 'सर्वदा अहं भूयासं, कदाचिदपि ममासत्त्वं माभूत्' इत्येवमात्मन आनन्दरूपत्वं सर्वैः प्राणिभिरनुभूयते। चकारो बुभुत्सुसजातीयप्राण्यन्तरगतानन्दसमुच्चयार्थः। तेनाध्यात्मिकः आधिभौतिकश्च सर्वोऽप्यानन्दः सङ्गृहीतो भवति। आदित्यदेहे स्थित आनन्दः परोक्षः असाविति शब्देन विवक्षितः। चकारः आदित्यसजातीयदेवतान्तरगतानन्दसमुच्चयार्थः।

## भाष्यम्

**यश्चासावादित्ये। स एकः" (तै. उ. ३-२-९) "तदात्मानमेवावेदहं ब्रह्मास्मीति" (बृ. ३-४-१०) "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" (बृ. २-५-१९) "स वा एष**

## विवृतिः

तेनाधिदैविकः सर्वोऽप्यानन्दः सङ्गृहीतो भवति। एवं सत्यध्यात्ममधिभूतमधिदैवं च सर्वेषूपाधिषु योऽस्य आनन्दोऽस्ति स सर्वोऽपि स्वरूपेणैक एव, न भिद्यते, मनुष्यानन्दो देवानन्द इत्युपाधिपरामर्शपुरस्सरमेव भेदप्रतीतिरित्यर्थः ॥

वाजसनेयिनामुपगममाह—**तदित्यादि**। **तत्**—ब्रह्म सर्वात्मस्वरूपं स्वभावतोऽविद्यया असर्वात्मकमिव प्राप्तं **आत्मानमेव**—स्वरूपं सत्यज्ञानानन्दादिलक्षणं--नान्यत्, **अवेत्**--ज्ञातवत्, ज्ञानमनुकरोति--**अहंब्रह्मास्मीतीति**। **तदेतदिति**। **अपूर्वं**--अकार्यं, **अनपरं**--अकारणं, **अनन्तरं**—अन्तराले जात्यन्तररहितं, **अबाह्यं**—बाह्यशून्यं—त्रिविधपरिच्छेदशून्यमित्यर्थः। यदेतादृशं ब्रह्म तदेवैतत्समस्तं जगत्, न तद्व्यतिरेकेणास्ति। किं पुनस्तद्ब्रह्मात्मनोर्वान्तरम्? नेत्याह—**अयमिति**। **अयं**—प्रत्यगात्मैव ब्रह्म, कोऽसौ प्रत्यगात्मा? तत्राह—**सर्वानुभूरिति**। यः सर्वात्मना सर्वमनुभवति स **सर्वानुभूः**। द्रष्टा श्रोता मन्ता विज्ञाता स एव प्रत्यगात्मेत्यर्थः। **स वा इति**। **स वै**—वेदान्तवेद्य एव, **एषः**—नित्यापरोक्षः, **आत्मा**—प्रत्यक्तमः, **महान्**—देशादिपरिच्छेदशून्यः सर्वगतः, **अजरः**—जरारहितः, **अमरः**—मरणरहितः, अमृतं—आनन्दः तद्यस्य सः **अमृतः**, **अभयः**—स्वातिरिक्तस्य कस्यचिदभावात् कुतोऽपि भयरहितः, अत एव **ब्रह्म**—अपरिच्छिन्नमित्यर्थः॥

## भाष्यम्

**महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म " (बृ. उ. ४-४-२५) इत्येवमादयः आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति च-बोधयन्तिचात्मत्वेनेश्वरं वेदान्तवाक्यानि। " एष त आत्मा अन्तर्याम्यमृतः " (बृ. उ. ३-७-३) " यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते " (केन. १-५) " तत्सत्यं स आत्मा तत्त्वमसि " (छा. ६-८) इत्येवमादीनि ॥**

**ननु प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यति— तदयुक्तम्। गौणत्वप्रसङ्गात्। वाक्यवैरूप्याच्च। यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति। यथा— ' मनो ब्रह्म ' ' आदित्यो ब्रह्म ' (छा. ३-१८-१९) इति।**

## विवृतिः

ग्राहयन्तीति सूत्रशेषं व्याचष्टे—**ग्राहयन्ति चेति**। तान्येव वेदवाक्यानि ग्राहयितॄणि दर्शयति—**एष इति** ॥

ननु तत्त्वमस्यादिवाक्यं नैक्यप्रतिपादकम्, " मनो ब्रह्म (छा. ३-१८-१) इत्यादिवत्सामानाधिकरण्यस्य गौणत्वादिति शङ्कते—**नन्विति**। प्रतीकोपदेशत्वे ब्रह्मादिपदानां दृष्टिलाक्षणिकत्वापातान्मुख्ये सम्भवति जघन्यार्थग्रहणायोगादिति समाधत्ते—**तदयुक्तमिति**। प्रतीकोपदेशवाक्यस्य अभेदवाक्यस्य च व्यतिहारतदभावाभ्यां वैषम्यान्न प्रतीकोपदेशत्वमिति हेत्वन्तरमाह—**वाक्यवैरूप्याच्चेति**। सङ्ग्रहवाक्यं व्याचष्टे—**यत्र हीति**। प्रतीकोपदेशं दर्शयति **मन इत्यादिना**। [1]मन आदित्यं वा ब्रह्मदृष्टिविषयं कृत्वा उपासीतेति तदर्थः।

---

[1] मन आदिब्रह्म—**पा.**

भाष्यम्

**इह पुनः "त्वमहमस्मि, अहं वै त्वमसि" इत्याह। अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः ॥**

**भेद[1]दृष्टेरपवादाच्च। तथा हि--"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" (बृ. उ. १-४-१०) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (कठ. २-१-१०) यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति" (कठ. २-१-१४)**

विवृतिः

**इह पुनरिति**। "त्वमहमस्मि अहं च त्वमसि" इति व्यतिहारोक्त्या ऐक्यतात्पर्यावगमादिति भावः ॥

भेददृष्टिनिन्दावाक्येभ्यश्चैक्यावगमान्न भेदः सिद्ध्यतीत्याह—[2]**भेददृष्टेरिति**। तान्येव वाक्यानि दर्शयति—**तथाहीति**। **अथ य** इति **मृत्योः स** इति च स्पष्टार्थम्। **यथोदकमिति**। **यथोदकं दुर्गे**—दुर्गमे देशे उच्छ्रिते, **वृष्टं**—सिक्तं, **पर्वतेषु**—पर्ववत्सु, निम्नप्रदेशेषु, **विधावति**—[3]विशीर्णं सद्विनश्यति, **एवं धर्मान्**—आत्मनो भिन्नान्, आत्मनश्च **पृथक् पश्यन्**—पृथगिव प्रतिशरीरं पश्यन्, **तानेव**—शरीरभेदानुवर्तिनः, **अनुविधावति**—शरीरभेदमेव पुनः प्रतिपद्यत इत्यर्थः। यद्वा "योनिमन्ये प्रपद्यन्ते" (कठ. २-२-७) इत्यादिषूक्तानां कर्मोपासनाकर्तृत्वतत्फलभोक्तृत्वादीनां "तस्मिन् लोकाः श्रिताः सर्वे" (कठ. २-२-८) इत्याद्युक्तानां जीवव्यावृत्तानां सर्वप्रपञ्चाश्रयत्वसर्वान्तरत्वादीनां यथाक्रमं

---

[1] दृष्ट्यपवादाच्च-**पा.** [2] भेददृष्टीति–**पा.** [3] विकीर्णं–**पा.**

भाष्यम्

**"द्वितीयाद्वै भयं भवति" (बृह. उ. १-४-२) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं**

विवृतिः

जीवधर्माणां परमात्मधर्माणां च विरुद्धत्वात्तदाश्रययोः कथमैक्यमित्याकाङ्क्षायां "यथोदकं" (कठ. उ. २-१-१४) इत्यादिना धर्मव्यवस्थां मन्यमानस्तानेव धर्माननुवर्तत इति संसारानुवृत्तिमुक्त्वा "यथोदकं शुद्धे" (कठ. २-१-१५) इत्यादिना अध्यस्तसकलधर्मप्रहाण्या जीवपरैक्यं जानन्नेव मुक्तो [1]भवतीत्युच्यत इत्यर्थः ॥

**द्वितीयादिति। द्वितीयात्**—अन्यस्मात्, **वै भयं भवति।** अद्वितीय[2]दर्शिनस्तु द्वितीयदर्शनाभावान्न भयं भवतीत्यर्थः। **यदा हीति। एषः**—लौकिकः पुमान्, **एतस्मिन्**—ब्रह्मणि, **उत्**—अप्यर्थे, **अरं**—अल्पार्थे, अल्पमपि **अन्तरं**—भेदं स्वात्मातिरिक्तत्वं, **यदा कुरुते**—स्वात्मनो भेदेन ब्रह्म पश्यति, **अथ**—तदैव, **तस्य** जन्ममरणादिसंसार**भयं भवति।** जीवब्रह्मभेदस्य वास्तवत्वा[3]भावादित्यभिप्रायेणाल्पमपीत्युक्तम्। [4]भेददर्शिनः संसारावाप्तिं श्रुत्यन्तरसिद्धां हिशब्देन दर्शयति। ननु यः पुमान् कर्मकाण्डार्थं उपास्यं सगुणं ब्रह्म वा जानाति तस्यापि विद्यावत्त्वेन निर्गुणब्रह्मज्ञानिवन्मुक्तिः स्यादित्याशङ्क्य निराचष्टे—**तत्त्वेवेति**। तुशब्दो मुक्तिशङ्कानिराकरणार्थः। **अमन्वानस्य विदुषः**—ब्रह्मतत्त्वमजानतो भेददर्शित्वात् अत्यन्तविमूढस्यैव, **तदेव भयं**—जन्ममरणादिसंसारभयं भवति। विद्यान्तरयुक्तस्यापि ब्रह्मतत्त्वज्ञानराहितस्य संसारभयमस्तीत्यर्थः ॥

---

[1] भवतीत्यन्वय इत्युच्यते—**पा.** [2] दर्शने तु-**पा.** [3] भावाभिप्रायेण—**पा.** [4] भेददर्शनतः—**पा.**

भाष्यम्

विदुषोऽमन्वानस्य" (तै. उ. २-७) "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" (बृह. उ. ४–५–७) इत्येवमाद्या भूयसी श्रुतिर्भेद-दृष्टिमपवदति। तथा "आत्मैवेदं सर्वम्" (छा. उ. ७–२५–२) आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" (बृह. उ. ४–५–६) "इदं सर्वं यदयमात्मा" (बृह. उ. ४–२–६) "ब्रह्मैवेदं सर्वम्" (नृसिंहो. ७–३) इति श्रुतिः। तथा स्मृतिरपि—

"यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव!।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि"॥
(भ. गी. ४-३५)

विवृतिः

सर्वमिति। यः—अनाद्यविद्यादूषितचित्तः पुमान्, आत्मनः—सच्चिदानन्दाद्वितीयैकरसाद्बुध्यादिसाक्षिणः, अन्यत्र—भिन्नतया, सर्वं वेद तं—अयथार्थदर्शिनं, सर्वं—कर्तृ, परादात्—निराकुर्यात्। यथा लोके सन्मणिः अयथाबुद्धः सन् रज्जुर्वा सर्पतया बुद्धा सती अयथार्थदर्शिनं पुरुषं स्वीयेन प्रयोजनेन न प्राप्नोति, तद्वत्कारणभूतादात्मनो भेदरहितं तत्कार्यं सर्वं ततो भेदेनावगतं सदयथादर्शिनं पुरुषं स्वीयेन प्रयोजनेन न प्राप्नोतीत्यर्थः॥

एवं तत्त्वमस्यादिवाक्यानां अभेदतात्पर्यग्राहकतया भेदनिन्दावाक्यान्युक्त्वा प्रकृताभेदवाक्यान्येवोदाहरति—तथेति। आत्मैवेदमित्यादि। ननु जीवे ईश्वरे च भूतानां प्रतिष्ठितत्व[1]निर्देशे भेदवादा[2]नुमतिः

---

[1] निर्देशात्—पा. [2] नुमितिः—पा.

भाष्यम्

क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ।

" सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् " ॥
(भ. गी. १८-२०)

इत्यद्वैतात्मज्ञानं सम्यग्दर्शनमित्युक्तं भगवतापि । तस्मा[1]दात्मेत्येवेश्वरे मनो दधीत ।

[2] [' भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ।' इति ॥

विवृतिः

स्यादित्याशङ्क्याह—क्षेत्रज्ञेति । सर्वभूतेष्विति । अव्याकृतहिरण्यगर्भविराट्संज्ञेषु बीजसूक्ष्मस्थूलरूपेषु समष्टिव्यष्ट्यात्मकेषु भूतेषु—भवनधर्मकेषु उत्पत्तिविनाशशीलेषु दृश्यवर्गेषु, विभक्तेषु—परस्परव्यावृत्तेषु नानारसेषु, अव्ययं-उत्पत्तिविनाशादिसर्वविक्रियाशून्यं, अदृश्यं अविभक्तं—अव्यावृत्तं, सर्वत्रानुस्यूतमधिष्ठानतया—बाधावधितया चैकं [3] अद्वितीयं, भावं—परमार्थसत्तारूपं स्वप्रकाशमानन्दमात्मानं, येन—अन्तःकरणपरिणामभेदेन वेदान्तवाक्यविचारपरिनिष्पन्नेन, ईक्षते—साक्षात्करोति, तत्—मिथ्याप्रपञ्चबाधकं अद्वैतात्मदर्शनं, सात्त्विकं—सर्वसंसारविच्छित्तिकारणं, ज्ञानं विद्धि । द्वैतदर्शनं तु राजसं तामसं च संसारकारणम् , न सात्त्विकमित्यभिप्रायः । उपपादितमैक्यमुपसंहरति—तस्मादिति । श्रुतिस्मृतिमानसिद्धत्वादित्यर्थः ।

---

[1] दात्मन्येवेश्वरे-पा. [2] [ ] एतच्चिह्नान्तर्गतग्रन्थभागः केषुचित्कोशेषु दृश्यते । अस्य विवृतौ विवरणं न दृश्यते । [3] कमद्वितीयभाव-पा.

भाष्यम्

'अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ! ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ॥
(भ. गी. १०-४२) इति च ।

अविद्योपाधिपक्षेऽपि प्रमाणवादः समस्ति—

'एक एव महानात्मा सोऽहङ्कारोऽभिधीयते ।
स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥' इति

श्रीविष्णुपुराणे—

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' ॥
(वि. पु. ६-७-९६)

'परात्मनो मनुष्येन्द्र ! विभागोऽज्ञानकल्पितः ।
क्षये तस्यात्मपरयोर्विभागोऽभाग एव हि ॥' इति ।

विष्णुधर्मे—

'यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित् ॥
तथा द्वन्द्वैरनेकैस्तु जीवे च मलिने कृते ।
एकस्मिन्नपरे जीवा मलिनाः सन्ति कुत्रचित् ॥' इति ।

ब्रह्मयाज्ञवल्क्ये—

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैकोऽप्यनेकेषु जलाधारेष्विवांशुमान् ॥'
(याज्ञ. प्राय. १४४)

भाष्यम्

'क्षरात्मानावीशते देव एकः' (श्वेता. १·१०) इति श्वेताश्वतरे। छान्दोग्ये—'स एकधा भवति' (छा. ७-२६-२) इत्यादि। 'स तत्र पर्येति' (छा. ८-१२-३) 'स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते' (छा. ८-१२-५) 'परोऽविकृत एवात्मा स्वात्मायं जीवः' इति श्रुतेः। 'स एष इह प्रविष्टः' (बृ. १-४-७) इति बृहदारण्यकश्रुतिः।' 'आत्मेत्येवोपासीत' (बृ. १-४-७) इति। 'तदेतद्ब्रह्मापूर्वम्' (बृ. २-५-१९) इत्यादि। 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता' (बृ. ३-७-२३) इत्यादि। 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' (बृ. ४-४-२२) इत्यादि। 'अथ योऽन्यां देवतामुपास्ते' (बृ. १-४-१०) 'ऐतदात्म्यमिदं सर्वम्' (छा. ६-८-७) इति। क्षेत्रज्ञं चापि मां विद्धि' (भ. गी. १३-२) इति ॥

योगियाज्ञवल्क्ये—

निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः।
सकाशादात्मनस्तद्वत्प्रभवन्ति जगन्ति हि॥
(याज्ञ. प्रा. अ. श्लो. ६९)

अजः शरीरग्रहणात् स जात इति कीर्त्यते। इति ब्राह्मे।
"सर्पवद्रज्जुखण्डस्तु निशायां वेश्ममध्यगः।
एको हि चन्द्रो द्वौ व्योम्नि तिमिराहतचक्षुषः॥
आभाति परमात्मा च सर्वोपाधिषु संस्थितः।
नित्योदितः स्वयंज्योतिः सर्वगः पुरुषः परः॥

भाष्यम्

अहङ्काराविवेकेन कर्ताहमिति मन्यते ॥ इति ।

एवमेवायं पुरुषः प्राज्ञेनात्मना (बृ. उ. ४-३-२१) इति । " सता सोम्य तदा सम्पन्नो भवति " (छा. उ. ६-८-१) इति ।

स्वमायया स्वमात्मानं मोहयन् द्वैतमायया ।
गुणाहृतं स्वमात्मानं लभते च स्वयं हरिः ॥ इति ।

" उत्क्रामन्तं स्थितं वापि " (भ-गी. १५-१०) इति । " अज्ञानेनावृतं ज्ञानम् " (भ-गी. ५-१५) इति । " अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् " । " असीदिदं तमोभूतम् " इति । " वाचारम्भणम् " ( छा. उ. ६-१-६ ) इत्यादि । " यत्र हि द्वैतमिव भवति तादितर इतरं पश्यति " ( बृह. उ. २-४-१४ ) " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं जिघ्रेत् " ( बृह. उ. ४-५-१५ ) इति ।

" यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥

(ईशा. उ. ७) " यत्र नान्यत् पश्यति नान्यत् " ( छा. उ. ७-१४-१ ) इत्यादि । " भेदोऽयमज्ञाननिबन्धनः " इत्यादि । " नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " ( कठ. उ. २-१-११ ) इति । " विश्वतश्चक्षुः " ( श्वेताश्व. उ. ३-३) इत्यादि । " यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः " ( श्वेता. ५-२ ) इति च । " अजामेकां लोहितशुक्लकृष्णाम् " ( श्वेताश्व. उ. ४-५) इत्यादि । " अजो ह्येको जुषमाणोऽनुशेते " (श्वेताश्व. उ. ४-५) देवात्मशक्तिं विदधे " इति । " न तु तद्द्वितीयमस्ति ततोऽ-

भाष्यम्

न्यद्विभक्तं यत्पश्येत्" (बृह. उ. ४-३-२३) इत्यादि। एक एव रुद्रो न द्वितीयाय तस्थे" (अथर्वशि उ. ५) इति।

" मनो[1]विजृम्भितं चैतद्यत्किञ्चित्सचराचरम्।
मनसो ह्यमनीभावे [2]द्वैताभावात्तदाप्नुयात्"॥
(गौड. ३-३१)

[3]यद्यद्वैतं प्रपञ्चस्य तन्निवर्त्यं हि चेतसा।
मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः॥
यथा स्वप्ने द्वयाभासं चित्तं चलति मायया।
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया॥
(गौड. ४-६१) इत्यादि गौडपादे।

" तर्केणापि प्रपञ्चस्य मनोमात्रत्वमिष्यताम्।
दृश्यत्वात्सर्वभूतानां स्वप्नादिविषयो यथा॥"

" द्वितीयाद्वै भयं भवति" (बृह. उ. १-४-२) इति च।

" ज्ञाते त्वात्मनि नास्त्येतत् कार्यकारणतात्मनः।" इति च। एको देवः सर्वभूतेषु गूढः" (श्वे. उ. ६-११) इति। "असङ्गो ह्ययं पुरुषः" (बृह. उ.४-३-१५) इति च।

" विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत्।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः॥
सर्वत्र दैत्याः! समतामुपेत समत्वमाराधनमच्युतस्य॥
(वि. पु. १-१८-९०)

---

[1] दृश्यमिदं द्वैतं-पा. [2] द्वैतं नैवोपलभ्यते-पा. [3] अत्र 'यदि द्वैतं' इति स्यात्।

भाष्यम्

सर्वभूतात्मके तात! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः " ॥
(वि. पु. १-१९-३७) इति ।

" तत्त्वमसि " ( छा. उ. ६-८-७ ) " अहं ब्रह्मास्मि " (बृह. उ. १-४-१० ) " इदं सर्वं यदयमात्मा " (बृह. उ. २-४-६) " अयमात्मा ब्रह्म " ( माण्डू. उ. २ ) " तरति शोकमात्मवित् " ( छा. उ. ७-१-३) इति । " तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ईश.उ. ७) इत्यादिश्रुतिस्मृतीतिहासपुराणलौकिकेभ्यश्च ]

[1]सिद्धाऽर्थेऽपि वेदस्य प्रामाण्यमेष्टव्यम्—" स्वपक्षसाधनैरकार्यमप्यर्थजातमाह चेत्, तथैव परोऽपि वेद [2]चेच्छ्रुतेः परात्म-

विवृतिः

ननु तत्त्वमस्यादिवाक्यानां कथं प्रामाण्यम्? कार्यान्वितेऽर्थे सङ्गतिग्रहात्, पदानां कार्यान्वितार्थशाब्दानुभवं प्रत्येव हेतुत्वावधारणादित्याशङ्क्य " पुत्रस्ते जातः " इत्यादौ सिद्धेऽर्थे सङ्गतिग्रहात् पदानां कार्यानन्वितार्थशाब्दानुभवं प्रत्यपि हेतुत्वदर्शनादित्यभिप्रायेण समाधत्ते—**सिद्धार्थेऽपीति** । अकार्यपराणामपि पदानां बोधकत्वमित्यत्राभियुक्तोक्तिमाह—**स्वपक्षेत्यादि** । **स्वपक्षस्य**—शब्दनित्यत्वादेः, यानि **साधनानि**—साधकानि हेत्वादिवाक्यानि तैः, **अकार्यमपि**—कार्यानन्वितमपि, **अर्थं आह चेत्**—प्रतिपादयति चेत् वक्ता, **तथैव**—तैरेव वाक्यैः, **परोऽपि**—श्रोता, कार्यानन्वितमर्थं **वेद चेत्**—जानाति चेत्,

---

[1] सिद्धेऽर्थेऽपि—पा. [2] चेच्छ्रुतिः—पा.

भाष्यम्

**दृक् न किम् ?" इत्याभियुक्तैरुक्तम् । अन्यान्वितस्वार्थे पदानां सामर्थ्यं, न कार्यान्वितस्वार्थे ; तथासत्यर्थवादानामनन्वयप्रसङ्गात् । अन्वयबुद्धेस्स्तुतित्वात् ॥**

विवृतिः

**श्रुतेः**—अकार्यपरादपि [1]वेदान्तवाक्यात्, **परात्मदृक्**—[2]सिद्धब्रह्मबोधः, **न किम् ?**—कुतो नेत्यर्थः । तथा चावयववाक्यानां प्रतिज्ञाहेत्वादीनामकार्यपराणामपि शाब्दानुभवजनकत्वदर्शनात् वेदान्तानां सिद्धबोधिनामपि प्रामाण्यमक्षतमिति भावः ॥

क तर्हि पदानां सामर्थ्यमित्यत आह—**अन्यान्वितेति** । नन्वेवमपि "तत्त्वमसि" (छा. उ. ६-८-७) इत्यादावनुपपत्तिः । अन्यान्वितानुभावकत्वेन क्लृप्तस्य तदादिपदस्यानन्वितब्रह्मानुभावक[3]त्वासम्भवादिति चेत् , न ; अन्वितेत्यस्य स्वसमभिव्याहृतवाक्यतात्पर्यविषयार्थकत्वात् । तथा च यस्य पदस्य स्वसमभिव्याहृतवाक्यतात्पर्यविषयो योऽर्थोऽन्वितोऽनन्वितो वा तत्रैव तस्यानुभावकत्वमित्याशयात् ॥

ननु कार्यान्विते पदानां सामर्थ्याभ्युपगमे को दोष इत्यत आह—**तथा सतीति** । वायुक्षेपिष्ठादिपदानां सिद्धार्थान्वयबोधकत्वाभावेन स्तुतिलक्षणा न स्यात् । सिद्धार्थान्वयबोधस्य स्तुतिलक्षणाहेतुत्वादित्यर्थः । **अन्वयबुद्धेः स्तुतित्वादिति** । स्तुतिलक्षणायां द्वारत्वादित्यर्थः । "वायव्यं श्वेतमालभेत भूतिकामः । वायुर्वै क्षेपिष्ठा देवता । वायुमेव स्वेन भागधेयेनोपधावति । स एवैनं भूतिं गमयति" (तै. सं २-१-१) इति सार्थवादो विधिः । अत्र अर्थवादवाक्यस्यायमर्थः । **वायुः**—शीघ्रतमः, तं यजमानः स्वेन भागधेयेन—श्वेतपशु-

---

[1] वेदवाक्यात्—**पा.** [2] सिद्धब्रह्मात्मबोधः—**पा.** [3] त्वासम्भव इति—**पा.**

भाष्यम्

न हि भवति "वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता" (तै-सं. २-१-१) इति । रागस्यैव प्रवर्तकत्वम्, न नियोगस्य । तथा च श्रुतिः—"अथो खल्वाहुः

विवृतिः

द्रव्येण, **उपधावति**—आश्रयते, तदुद्देशेन द्रव्यस्वत्वं त्यजति इति यावत् । **स**—वायुरेव, **एनं**—यजमानं, **भूतिं गमयति**—गमयिष्यतीति । तथा च क्षिप्रदेवताकत्वप्रयुक्तक्षिप्रपालकत्वरूपेणार्थवादबोध्येन क्षिप्रप्रसादशीलगुरुसेवादौ प्रसिद्धसामानाधिकरण्यसम्बन्धेन लक्षितस्य प्रवृत्तिप्रतिबन्धकद्वेषविषयदुःखाजनकत्वरूपबलवदनिष्टाननुबन्धित्वस्यैव प्राशस्त्यस्य विध्यर्थप्रवर्तनारूपशाब्दभावनायां इतिकर्तव्यतया अन्वयात् । तथा च विध्यपेक्षितप्राशस्त्यरूपलक्ष्यार्थावगतिहेतुतया अर्थवादेभ्योऽन्वयबुद्धेरावश्यकत्वात् ; कार्यान्वितार्थशक्तत्वेऽर्थवादस्य पदार्थानां परस्परमन्वयबोधो न स्यादिति भावः ॥

अर्थवादपदानां अन्वयबोधकत्वाभावे को दोष इत्यत आह—**न हि भवतीति**—विध्यपेक्षितस्तुतिसमर्पकत्वेन विध्यर्थवादवाक्ययोरेकवाक्यता न स्यादिति भावः । ननु कार्यताज्ञानस्य प्रवर्तकत्वाय तदनुरोधेन कार्यान्वितार्थपरत्वं पदानां स्यादित्याशङ्क्याह—**रागस्येति**—इष्टसाधनत्वस्यैव विध्यर्थतया विधिना तदवगतौ फलसाधने कर्मणि रागादेव प्रवृत्त्युपपत्तेर्न कार्यपरत्वं पदानामित्यर्थः ॥

रागस्य प्रवर्तकत्वे श्रुतिमुदाहरति—**तथाचेति** । **अथो**—अत एव, यतः काममन्तरेण न क्रोधो नाधर्मो न शरीरम् । **खल्विति** निश्चये । **आहुः**—कथयन्ति ब्राह्मणाः । किमिति ? **अयं**—प्रत्यक्षः, **पुरुषः**—संसारी विक्षेपवान् विज्ञा-

### भाष्यम्

काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते" (बृह. उ-४-४-५) इति। तथा च स्मृतिरपि—

"अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्।
यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्"॥
(मनु-२-४) इति।

"काम एषः क्रोध एषः" (भ-गी. ३-३७) इति।

### विवृतिः

नात्मा, **काममय एव**—कामप्रधान एव। यद्यपि क्रोधादिमयत्वमुक्तम्। तथाप्येवकारः काममन्तरेण क्रोधादेरसम्भवात्तन्मुख्यत्वप्रदर्शनार्थः। न क्रोधादिमयत्वनिराकरणार्थं इत्यविरोधः। इतिशब्दः प्रकारवाची। यदुक्तं कामस्य विक्षेपेषु प्राधान्यं तदुपपादयति [1]**स यथाकामो भवतीति**। **सः**—संसारी, **यथाकामः**—यद्विषयाभिलाषवान् **भवति तत्क्रतुर्भवति**—'इदं मे भूयात्' इति तद्विषयसम्पादनसङ्कल्पवान् भवति, **तत्कर्म कुरुते**—विहितं प्रतिषिद्धं वा कर्म कुरुते, **यत्कर्म कुरुते** यत्—सुखसाधनं दुःखसाधनं वा, कर्म कुरुते, **तदभिसम्पद्यते**—तत्फलं सुखं दुःखं वा भवतीति श्रुत्यर्थः॥

कामस्य प्रवर्तकत्वे पुराणवचनमुदाहरति — **तथेति**। तत्र पूर्वार्धेन कामव्यतिरेके कार्यव्यतिरेक उक्तः। उत्तरार्धेन तु कार्यमात्रे कामस्यान्वय उक्त इति ध्येयम्। तत्रैव भगवद्वाक्यमाह—**काम इति**। **काम एषः**—सर्वलोकशत्रुः, यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम्। एष

---

[1] स इति-**पा.**

भाष्यम्

**अन्यपराणामपि मन्त्रार्थवादानां प्रामाण्यमङ्गीकर्तव्यम्। तेषामप्रामाण्यकथनेनोरगत्वं गतवान्नहुषः। तत्कथम्?**

**"ऋषयस्तु परिश्रान्ता वाह्यमाना दुरात्मना।**
**देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः॥**
**पप्रच्छुः संशयं ते तु नहुषं पापचेतसम्।**
**य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम्॥**
**एते प्रमाणं भवत उताहो नेति वासव!।**
**नहुषो नेति तानाह सहसा मूढचेतनः॥**

विवृत्तिः

कामः प्रतिहतः केनचित्क्रोधत्वेनैव परिणमते। अतः क्रोधोऽप्येष एवेत्यर्थः॥

मन्त्राणामप्रामाण्यकथनान्नहुषस्योरगत्वप्राप्तिप्रतिपादकभारतवचनवशादन्यपराणामपि मानान्तरसंवादविसंवादयोरभावे प्रमाण्यमेष्टव्यमित्याह—**अन्यपराणामिति**—तदेवाख्यायिकारूपं वचनं आकाङ्क्षापूर्वकमाह—**कथमिति**। गवां प्रोक्षणे—प्रोक्षणोपाकरणसाधारणादिसंस्कारे, ये मन्त्राः "देवाँश्च याभिर्यजते ददाति च" (तै. ब्रा. २–४–६) "गावः सोमस्य प्रथमस्य भक्षः" (तै. ब्रा. २–८–८) इत्यादयः। याभिः—पशुभूताभिर्गोभिः, भक्ष इति भक्षणान्तो याग उच्यते। नहुषस्तु—

"गावश्च ब्राह्मणाश्चैव कुलमेकं द्विधा कृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति॥"

इति शास्त्रप्रामाण्याद्ब्राह्मणवद्गवामवध्यत्वं मन्वानो वेदं प्रमाणीचकार। वेदस्य ब्राह्मणानां चावमानादधोगतिः प्राप्यत इत्याख्या-

भाष्यम्

ऋषय ऊचुः—

अधर्मे सम्प्रवृत्तस्त्वं धर्मं च विजिघृक्षसि ।
प्रमाणमेतदस्माकं [1]पूर्वैः प्रोक्तं महर्षिभिः ॥

अगस्त्य उवाच—

[2]ततो विवदमानः सन् ऋषिभिः सह [3]पार्थिवः ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥
तेनाभूद्धतचेताः सन् निश्रीकश्च [4]महीपतिः ।
ततस्तमहमुद्विग्नमवोचं भयपीडितम् ॥
यस्मात्पूर्वैः कृतं मार्गं महर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा ॥
यच्चापि त्वमृषीन् मूढ ! ब्रह्मकल्पान् दुरासदान् ।
वाहान् कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥
त्वं स्वपापपरिभ्रष्टः क्षीणपुण्यो महीपते ! ।
दशवर्षसहस्राणि सर्परूपधरो महीम् ॥
विचरिष्यसि तीर्णश्च पुनः स्वर्गमवाप्स्यसि ।
दृष्ट्वा युधिष्ठिरं नाम तव वंशसमुद्भवम् ॥ (उद्योग.अ.१७)

इति श्री महाभारते। अतः श्रद्धेयमात्मज्ञानम् ।

विवृतिः

यिकातात्पर्यम् । ब्राह्मणेषु स्नातकेषु गृहमागतेषु मधुपर्को दीयते। तत्र गोरालम्भनं क्रियत इति गवालम्भनव्यपदेशेन मधुपर्क एवापेक्षितः। तत्र ये मन्त्रा उक्ताः ते भवतो न प्रमाणम्। किमिति प्रश्न इत्यर्थ इति केचिद्व्याचख्युः। सिद्धपरवेदान्तजन्यमात्मज्ञानं श्रद्धेयं, वक्ष्यमाणश्रुतिस्मृतिभ्य इत्याह—अत इति ॥

---

[1] पूर्वं—पा. [2] तथा—पा. [3] वासव—पा. [4] शचीपते—पा.

भाष्यम्

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप! ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥"

(भ-गी.—९-१)

इति श्रीभगवद्वचनात् । ऐतरेयके च—"एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं तस्मान्न प्रमाद्येत्तन्नातीयान्नह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः । तदुक्तमृषिणा—

विवृतिः

आत्मज्ञानस्य श्रद्धेयत्वे भगवद्वचनमुदाहरति—**अश्रद्धाना इति । अश्रद्धानाः**—श्रद्धारहिताः, **धर्मस्य अस्य**—आत्मज्ञानस्य स्वरूपे तत्फले च नास्तिकाः पापकारिणः (असुराणामुपनिषत्) देहमात्रात्मदर्शनमेव प्रतिपन्ना असुतृपाः पापाः **पुरुषाः हे परन्तप ! मां**—परमेश्वरं (मत्प्राप्तौ, नैवाशङ्का इति) मत्प्राप्तिमार्गमभेदभक्तिमार्गमात्र**मप्राप्य**ेत्यर्थः । **मृत्युसंसारवर्त्मनि**—मृत्युयुक्तः संसारो मृत्युसंसारः, तस्य वर्त्म—नरकतिर्यगादिप्राप्तिमार्गः तस्मिन् , **निवर्तन्ते**—निश्चयेन वर्तन्त इत्यर्थः । वेदान्तजन्यात्मज्ञानातिक्रमेण स्थावरादिभावप्रतिपादकैतरेयश्रुतिवशात् श्रद्धेयमात्मज्ञानमित्याह—**ऐतरेयके चेति । एष पन्था इत्यादि । एषः**—वक्ष्यमाणः, **पन्थाः**—उपायः, अमृतत्वप्राप्तये यदेतदात्मज्ञानं **एतत् कर्म** । कर्तव्यत्वात् । सर्वैर्यज्ञदानतपोभिः पुण्यकर्मभिः यमनियमैश्चात्मज्ञानमुत्पाद्यमित्यर्थः । तद्धि पन्थाः—मार्गः अमृतत्वगमनाय । "नान्यः पन्था विद्यतेऽयनाय" (श्वेता. ३.८) इति मन्त्रवर्णात् । "तद्धयग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः" इति स्मृतेश्च । **एतद्ब्रह्म** । तत्प्राप्तिफलकत्वात् । **एत-**

भाष्यम्

## प्रजा ह तिस्रो अत्यायमीयुः

विवृतिः

**त्सत्यम्**। परमार्थसदात्मविषयत्वात्। वाचारम्भणमात्रविकारानृतविषयाणि हीतराणि ज्ञानानि। **तस्मात्**—आत्मज्ञानमार्गात्, **न प्रमाद्येत्**-प्रमादः—तदतिक्रमः, तं न कुर्यात्। प्रमाद्यतः किं स्यादित्युच्यते—**तं**—पन्थानं, **नातीयात्**—नाभिगच्छेत्। तदभिगमनं च दोषः। तस्मात्तन्न कुर्यात्। **हि**—यस्मात्, **पूर्वे**—अतिक्रान्ता ब्राह्मणाः, **न** तं मार्ग**मत्यायन्**—नातिगतवन्त इत्यर्थः। अस्मान्मार्गाद्ये भ्रष्टा अत्यायन् **ते पराबभूवुः**—पराभूताः-कर्मज्ञानानुष्ठानं प्रति अयोग्याः संवृत्ता इत्यर्थः। स हि तेषां पराभवः। तस्मात्सर्वेषां पन्थानं ज्ञानकर्मानुष्ठानं अप्रमत्तोऽनुपालयेत्॥

**तत्**-ब्राह्मणोक्तमर्थजातं, **ऋषिणा**-मन्त्रेणाप्युक्तम्। किं पुनस्तदर्थजातम्? य इमं पन्थानमतिक्रान्तास्ते पराभूताः, ये तु कर्मज्ञानानुष्ठानप्रवृत्तास्ते अस्मात्पथोऽनपेताः आत्मज्ञानयोग्या इतीममर्थं प्रदर्शयन्नाह—**प्रजाहेति**। **प्रजाः** प्रजननात्। **ह** इति वृत्तावद्योतको निपातः। **तिस्रः**—त्रिसङ्ख्याकाः, राशिभेदेन। किमित्याह—**अत्यायमिति**। **अत्यायं**—अभिगमनं, **ईयुः**–गतवत्यः। तिस्रः प्रजाः [1]ज्ञानायोग्यतां गता इत्यर्थः। याः पुन**रन्याः** ता **अर्कं**–अग्निं **अभितः**–उभयतः, ज्ञानेन कर्मणा चेत्यर्थः। **निविविश्रे**–निविष्टाः, कर्मज्ञानाभ्यामग्निमाश्रिता इत्यर्थः। किं च **बृहत्**—महान्, **ह भुवनेषु**–भवन्त्यस्मिन् भूतानीति लोका भुवनशब्दवाच्याः, तेषु लोकेषु,

[1] ज्ञानयोग्यतां—**पा.**

## विवृतिः

**अन्तः**—मध्ये, **तस्थौ**—स्थितवान्। महः सविता सर्वलोकप्रकाशकृत् देवः तं च ताश्च प्रजाः अभितो निविविश्रे इत्यनुषङ्गः। **पवमानो**—वायुः, **हरितः**—दिशः, **आविवेश**—प्रविष्टः। यश्च वायुर्दिक्षु प्रविष्टः तं च कश्चिदभितो निविविश्रे। काः पुनस्तास्तिस्रोऽत्यायमीयुरिति मन्त्रोक्तमर्थं ब्राह्मणमन्वाचष्टे—"**या वै ता इमाः** (काश्चित्) **प्रजास्तिस्रो**[1]**ऽत्यायमायन् इति**।" ता वक्ष्याम इति वाक्यशेषः। **वयांसि**—पक्षिणो यान्यप्यन्यानि गतिमद्भूतानि, वेर्धातोर्गत्यर्थत्वात्। [2]कर्मज्ञानायोग्यानि वयश्शब्देनोच्यन्ते। वयांसि तिसृणामेको राशिः। **वङ्गावगधाः**—वङ्गाश्चावगधाश्च वङ्गावगधाः। वनगमनाद्वङ्गाः अवर्णलोपे। **वनगा** इत्येतत्। [3]वनस्पत्यादयो महान्तः स्थावरा इत्यर्थः। **अवगधाः**—क्षुद्रस्थावराः व्रीहियवाद्याः ओषधयः। अवतेर्धातोः पालनार्थस्य गृह्णतेश्च मिश्रीभावकर्मणो रूपं अवगधा इति। अवनेन प्रयोजनेन जङ्गमैः प्राणिभिः अन्नभूताः सन्तः आत्मानं मिश्रयन्तीत्यवगधाः। **च**शब्दः समुच्चयार्थः। स्थावराश्चैको राशिरित्यर्थः। **इरपादाः**—उरःपादाः। इकारस्योकारत्वमापाद्य विसर्जनीयोपजनं कृत्वा उरःपादा इति सर्पादयो गृह्यन्ते। एवमेतास्तिस्रः प्रजाः **अत्यायमीयुः**—कर्मज्ञानमार्गात्परिभ्रष्टा इत्यर्थः। प्रत्युद्धारश्चासामत्यन्तदुर्लभः। तस्मात्पापात्कर्मणो जुगुप्सेत। श्रेयसो मार्गान्न प्रमाद्येदिति वैराग्यहेतोरिदं वचनम्॥

"**न्यन्या अर्कमभितो विविश्रे इति**। ता इमाः प्रजा अर्कमभितो निविष्टाः (ऐ. आर. २-१) कर्मज्ञानपरा इति व्याख्यातम्।

---

[1] ऽत्यायमीयुः—**पा.** [2] कर्मज्ञानयोग्यानि—**पा.** [3] वनस्पपादपाः—**पा.**

भाष्यम्

न्यन्या अर्कमभितो विविश्रे।
बृहद्ध तस्थौ भुवनेष्वन्तः
पवमानो हरित आविवेश ॥

इति। प्रजाह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः" (ऐ. आर. २-१) इति श्रुतम्। वङ्गाः-वनगाः वृक्षाः, अवगधाः-ओषधयश्च, इरपादाः-उरःपादाः सर्पादयः। तथा च ईशावास्ये अविद्वन्निन्दार्थो मन्त्रः—

असुर्या नाम ते लोका अन्धेन तमसावृताः।
तां॑स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ इति ॥
(ईशा-३)

विवृतिः

अर्कमिति। "इममेवाग्निं यं कर्मपरा अर्चयन्ति, बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव-असावेव बृहद्भुवनेष्वन्तरसावादित्यः" (ऐ. आ. २-१) नान्यः तस्थौ महान्, महत्वं हि प्रसिद्धं सवितुः। व्याख्यातमन्यत्। "पवमानो हरित आविवेशेति। वायुरेव पवमानो दिशो हरित आविष्टः" (ऐ. आर. २-१) इति ऋग्विवरण एवोक्तम् ॥

अनात्मज्ञनिन्दया आत्मज्ञानस्य श्रद्धेयत्वे मन्त्रमाह--असुर्या इति। असुर्याः-परमात्मभावमद्वितीयमपेक्ष्य देवादयोऽप्यसुराः तेषां स्वभूता असुर्याः। नामशब्दोऽनर्थको निपातः। ते लोकाः-कर्मफलानि। लोक्यन्ते-दृश्यन्ते-भुज्यन्त इति जन्मानि। अन्धेन--अदर्शनेन अज्ञानेन, तमसा आवृताः-आच्छादिताः, तान्-स्थावरान्तान्, प्रेत्य-त्यक्त्वा,

भाष्यम्

"असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्" (तै. उ. २–६) इति तैत्तिरीये। तथा शकुन्तलोपाख्याने—

"योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा॥"

(भार. आदि. ७–४)

विवृतिः

इमं देहं अभिगच्छन्ति यथाकर्म यथाश्रुतं ते ये के चात्महनः—आत्मानं घ्नन्तीत्यात्महनः। के ते? जनाः—अविद्वांसः, कथं ते आत्मानं नित्यं हिंसन्ति? अविद्यादोषेण। विद्यमानस्याप्यात्मनः तिरस्करणात् विद्यमानस्यात्मनो यत्कार्यं अजरामरत्वादिसंवेदनादिलक्षणं तद्ध तस्यैव तिरोभूतं भवतीति [1] प्राकृता अविद्वांसो जना आत्महन उच्यन्ते। तेन हि आत्महननदोषेण संसरन्तीत्यर्थः॥

अस्मिन्नेवार्थे तैत्तिरीयकवाक्यमुदाहरति—तैत्तिरीये चेति। ब्रह्मणोऽसत्त्वं यो वेद स पुमान् स्वयमेव न स्यात्। अन्नमयादिकोशानामनात्मत्वस्य प्रतिपादितत्वात्। तदतिरिक्तब्रह्मणः स्वयमनङ्गीकृतत्वात्। यद्वा यो ह्यसद्ब्रह्मेति वेद सोऽसन्—असाधुरेव भवति। वर्णाश्रमादिव्यवस्थालक्षणस्य सर्वस्य सन्मार्गस्य ब्रह्मप्रतिपत्त्यर्थतया ब्रह्मापलापेन सर्वसन्मार्गदूषको नास्तिको भवतीत्यर्थः॥

अस्मिन्नेवार्थे भारतवचनमुदाहरति—तथेति। यथा लोके चोरः—परस्वापहर्ता चोरस्यैव सतस्स्वस्य अचोर इत्यन्यथात्वमारोप्य अपलपति चोरत्वम्, एवमयमप्यविद्वान् स्वस्याशनायाद्यतीतब्रह्मभावा-

---

[1] प्रकृत्या–पा.

## भाष्यम्

इत्यलमतिप्रसङ्गेन । सहस्रनामजपस्यानुरूपं मानसस्नानमुच्यते—

> यस्मिन् देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम्।
> व्रजेत्तन्मानसं तीर्थं तत्र स्नात्वाऽमृतो भवेत्॥

## विवृतिः

ज्ञानात् कर्तृत्वभोक्तृत्वादिकमात्मन्यारोप्य 'नाहमशनायाद्यतीतः परमात्मा' इत्यात्मानमपलपतीत्यत आत्मापहारी चोर इत्युच्यते। सर्वस्य पापस्य आत्माज्ञानमूलकत्वात्तेनाविदुषा सर्वं पापं कृतमेवेत्यर्थः। तथा चाविद्वन्निन्दया विद्याप्रशंसा अवगम्यत इति भावः। अध्यात्म[1]परोऽयं श्लोकः आत्मापलापसाम्यात् शकुन्तलयोदाहृतः॥

सहस्रनामजपयोग्यतायै मानसस्नानमाह—**सहस्रनामेति**। तत्र वचनान्युदाहरति—**यस्मिन्नित्यादिना**। **देवाः**—ब्रह्मादयः। **च**शब्देन ऋष्यादयो गृह्यन्ते। **वेदाः**—ऋग्वेदादयः। **च**शब्देन स्मृतीतिहासादयो गृह्यन्ते। देवा वेदा इत्येवमादि **कृत्स्नं यस्मिन्**—परतत्त्वे विलीयते **एकतां**—अभेदं **व्रजेत्** "सर्वे वेदा यत्रैकं भवन्ति।" "स मानसीन आत्मा जनानाम्।" (तै. आ. ३-११) इत्यादिश्रुतेः। **तन्मानसं तीर्थं पवित्रं**, निष्प्रपञ्चतया शुद्धत्वात्। **तत्र**-तस्मिन् सच्चिदानन्दलक्षणे परमात्मनि, **स्नात्वा**—" अहं ब्रह्मास्मि " इत्यनुसंन्धानलक्षणं स्नानं कृत्वा, **अमृतो** भवतीत्यर्थः। अत्र मानसपदेन, मनोगम्य आत्मा गृह्यते। "आत्मा नदी" इत्यादिवाक्यानुसारात्। स एव पुष्करादितीर्थत्वेन रूप्यते॥

---

[1] पक्षेऽयं—पा.

भाष्यम्

**ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।**
**यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥**
**सरस्वती रजोरूपा तमोरूपा कलिन्दजा ।**
**सत्वरूपा च गङ्गा च न यान्ति ब्रह्म निर्गुणम् ॥**
**आत्मा नदी संयमतोयपूर्णा**
**सत्यह्रदा शीलतटा दयोर्मिः ।**
**तत्राभिषेकं कुरु पाण्डुपुत्र !**
**न वारिणा शुद्ध्यति चान्तरात्मा ॥**

**इति महाभारते । "मानसं स्नानं विष्णुचिन्तनम्" इति विष्णुस्मृतौ ॥**

विवृतिः

कथं पुरुषव्यापारं विना आत्मतीर्थं रागद्वेषादिमलनिवर्तकमित्याशङ्कायामाह—**ज्ञानह्रद इति** । ज्ञानं—आत्मतत्त्वनिश्चयः, स एव ह्रदः अक्षोभ्यत्वात् यस्य तत्तथा । ध्यानमेव जलं मलनिवर्तकत्वात् यस्य तत्तथा । तस्मिन्**मानसे तीर्थे यः स्नाति**—अनुसन्धानलक्षणं स्नानं करोति, **स परमां गतिं** यातीत्यर्थः ॥

**आत्मेति । आत्मा**—परमात्मा नदीत्वेन रूप्यते । पापतापापनयनहेतुत्वात् । **संयमतोयपूर्णा**—धारणाध्यानसमाधिरूपं त्रितयमेकवस्तुविषयकं संयमः । "त्रयमेकत्र संयमः" (योगसू. ३-४) इति पतञ्जलिसूत्रात् । स एव तोयं, मलनिवर्तकत्वात्, तेन पूर्णा । सत्यं—अप्रियानृतवर्जितं यथार्थवचनमनिष्टाननुबन्धि, तदेव ह्रदः, स्वनिष्ठप्राणित्राणनसामान्यात् यस्याः सा तथा । शीलं—सद्वृत्तं, तदेव मर्यादानतिक्रमहेतुत्वात् तटं यस्याः सा तथा । दया—दुःखितेषु कृपा, सैवोर्मिः

भाष्यम्

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ (मनु. २-८७)

इति मानवं वचनम् ।

जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ॥ इति ।

"यज्ञानां जपयज्ञोऽस्मि" (भ. गी. १०-२५) इति श्रीगीतासु ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ (विष्णु. ध. १०९-६६) इत्यादि ॥ १० ॥

विवृतिः

सन्ततोदयसाम्यात् यस्याः सा तथोक्ता । तत्र—तस्यामात्मनद्यां, हे **पाण्डुपुत्र ! अभिषेकं**—तदनुसन्धानरूपं **कुरु** । **अन्तरात्मा**—अन्तःकरणं, **वारिणा** बाह्येन, **न शुद्ध्यति** । रागद्वेषाद्यनिवृत्तेरात्यन्तिकविशुद्ध्यजननादित्यर्थः । मानसमिति स्मृत्यर्थः स्पष्टः ॥

एवमङ्गभूतमानसस्नानमुक्त्वा प्रधानभूतस्य जपस्य प्राशस्त्यपराणि वचनान्युदाहरति—**जप्येनैवेति** । संसिद्धिरत्र चित्तशुद्धिः । मैत्र इति हिंसावर्जनात् । **जपस्तु सर्वधर्मेभ्य इति** । इतरेभ्यः श्रौतेभ्यः स्मार्तेभ्यश्च इत्यर्थः । जपयज्ञस्य परमधर्मत्वमेवाह--**अहिंसयेति** । जपयज्ञस्याधिक्ये भगवद्वाक्यमुदाहरति--**यज्ञानामिति** ॥

सहस्रनामजपादौ मानसस्नानमिव मानसस्नानेऽपि किमितिकर्तव्यतान्तरमस्तीत्याशङ्कयाह—**अपवित्र इति** । स्नानाचमनप्राणायामादिरहितोऽ**पवित्रः**, तद्वान् **पवित्रो वा सर्वावस्थां गतोऽपि वा** अशुचिदर्शनासम्भाष्यभाषणक्षुतजृम्भणस्वापाद्यवस्थान्तरगतो वा, पुण्ड-

स्तोत्रम्

## यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।

भाष्यम्

[1] "किमेकं दैवतं" इति प्रस्तुतम् । "यतः सर्वाणि" इति तस्योपलक्षणमुच्यते—यतः-यस्मात्, सर्वाणि भूतानि भवन्ति-

विवृतिः

रीकं--हृदयपुण्डरीकं, अक्ष्णोति—व्याप्नोतीति पुण्डरीकाक्षः तं—निर्विशेषं परमात्मानं, अथवा—

प्रसन्नवदनं चारु पद्मपत्रोपमेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकर्णविभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलित्रिभङ्गिना मग्ननाभिना चोदरेण च ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च सुस्थिताङ्घ्रिकराम्बुजम् ।
चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ (वि.पु. ६-७, ८०-८३)

इति विष्णुपुराणोक्तरीत्या भगवन्मूर्तिं वा यः स्मरेत् सबाह्याभ्यन्तरः—स्थूलसूक्ष्मशरीरद्वयावच्छिन्नः स शुचिर्भवतीत्यर्थः ॥ १० ॥

एवं देवस्याद्वितीयत्वं श्रुत्यादिप्रमाणैः प्रसाध्य वेदान्तानां सिद्धपराणामपि प्रामाण्यं प्रसाध्य सहस्रनामजपानुरूपं स्नानमुक्त्वा प्रकृतस्य देवस्य किं लक्षणमित्याकाङ्क्षायां लक्षणमुत्तरश्लोकेनोच्यत इत्याह—किमेकं दैवतमिति । उपलक्षणमिति । तटस्थलक्षणमित्यर्थः । श्लोकं व्याचष्टे—यत इति । भूतानीति । भवनधर्मकाणि, भवन्ति-उत्पद्यन्ते,

[1] यदेकं दैवतं—पा.

स्तोत्रम्

**यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

भाष्यम्

उद्भवन्ति। आदियुगागमे। यस्मिंश्च प्रलयं-विनाशं, यान्ति पुनः-भूयः, एवेत्यवधारणार्थः। नान्यस्मिन्नित्यर्थः। युगक्षये-महाप्रलये। चकारात् मध्येऽपि यस्मिन् तिष्ठन्ति। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति।" (तै. उ. ३-१) इति श्रुतेः ॥ ११ ॥

विवृतिः

**आदियुगागमे**—आदिसृष्टिकाले। अवधारणार्थ एवकारो यस्मिन्नित्यनेन सम्बध्यते। एवकारान्वयलब्धमर्थमाह—**नान्यस्मिन्निति**। प्रधानादावित्यर्थः। "येन जातानि" (तै. उ. ३–१) इति श्रुतिमाश्रित्याह—**मध्येऽपीति**। स्थितिकालेऽपीत्यर्थः।

उक्तेऽर्थे श्रुतिमाह–**यत इति**। **भूतानि**—उत्पन्नानि। तेन भूतव्यतिरिक्तगुणक्रियादेर्दृग्दृश्यतादात्म्येक्षणादेश्च ब्रह्महेतुकत्वलाभः। एवं श्लोकेऽपि भूतशब्दस्य उत्पन्नपरत्वेन व्याख्यानस्य प्रयोजनं द्रष्टव्यम्। **जातानि**-दृश्यतया प्रादुर्भूतानि दृश्यानि। **जीवन्ति**—सत्तास्फूर्तिमर्यादादिकं प्राप्तानि। **प्रयन्तीति** इणः शत्रन्तस्य रूपम्। लीयमानानीत्यर्थः। तथा च यतो ब्रह्मणो हेतोः कार्यं सर्वमुत्पद्यते, दृश्यानि च सर्वाणि यतः सत्तास्फूर्ती लभन्ते, लीयमानानि च सर्वाणि प्रलयकाले यत् प्रविशन्ति तद्ब्रह्मेत्यर्थः। यत इति येनेति च पञ्चमीतृतीययोर्हेतुसामान्यार्थकत्वेऽपि लीयमानकार्याधारत्वोक्त्या उपादानत्वं लभ्यते। "तदैक्षत बहु स्यां प्रजायेय" (छा. उ. ६-२-३)

स्तोत्रम्

**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।**

भाष्यम्

**तस्य**—एवं लक्षणलक्षितस्य एकस्य दैवतस्य, **लोकप्रधानस्य**—लोकनहेतुभिर्विद्यास्थानैः प्रतिपाद्यमानस्य, **जगन्नाथस्य**—

विवृतिः

इति । "सोऽकामयत" (तै. उ. २-६) "तदात्मानं स्वयमकुरुत" (तै उ. २-७) इति ईक्षणकामनाकृतीनां जगत्कारणनिष्ठतया निर्देशात्तस्य ज्ञानेच्छाकृतिमत्त्वेन कर्तृत्वलाभः। येनेत्याद्येकवचननिर्देशाज्जगत्कारणस्यैकत्वं बोध्यम् । अत्र जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तसाधारण्यादुपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि लयो दर्शितः ॥

अस्तु ब्रह्म जगदुपादानम् । तज्जन्मनि घटजन्मनि कुलालवत् तत्स्थितौ [1]राज्यस्थेम्नि राजवच्चोपादानादन्यदेव निमित्तं भविष्यतीतिशङ्काऽव्यवच्छेदाय तस्यैव जगज्जननजीवननियामकत्वमुक्तम् । तथा चाभिन्ननिमित्तोपादानत्वमेकमेवेदं लक्षणमद्वितीयं ब्रह्म लक्षयतीति बोध्यम् ॥

अत्र "यतो वा" इत्यस्य निर्णयवाक्येन "आनन्दाद्ध्येव" (तै-उ-३-६) इत्यनेन जगत्कारणानुवादेनानन्दत्वविधानादानन्दादिकं स्वरूपलक्षणं बोद्धव्यम् । लक्ष्यभिन्नत्वे सत्यलक्ष्यमात्रादशेषलक्ष्यव्यावर्तकं तटस्थलक्षणम्। लक्ष्याभिन्नत्वे सति व्यावर्तकं स्वरूपलक्षणम् ॥ ११ ॥

**एवं लक्षणेति** । जगज्जन्मादिकारणत्वलक्षणेत्यर्थः । लोक्यते—ज्ञायते धर्मब्रह्मादिरूपोऽर्थः एभिरिति लोकाः चतुर्दश विद्यास्थानानि, प्रधीयते प्रतिपाद्यत इति प्रधानः । लोकानां प्रधानो लोकप्रधानः तस्य चतुर्दशविद्यास्थानप्रतिपाद्यस्येत्यभिप्रेत्य व्याचष्टे—**लोकेति** ॥

[1] राज्यस्थितौ–पा.

स्तोत्रम्

## विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥१२॥

भाष्यम्

जगतां नाथः स्वामी मायाशबलः परमात्मा निर्लेपश्च तस्य, भूपते!—महीपाल! विष्णोः—व्यापनशीलस्य, नामसहस्रं—नाम्नां सहस्रं, पापं भयं चापहन्तीति पापभयापहं, त्वं मे—मम मत्तः शृणु—एकाग्रमना भूत्वा अवधारय ॥

[1]एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम! ।
नाम्नां [2]सहस्रं लोकानामुपकारकरं शृणु ॥

विवृतिः

नन्वेकस्मिन् दैवते कथमनेकनाम्नां प्रवृत्तिः? विश्वादिशब्दानां डित्थादिशब्दवत् संज्ञाशब्दत्वे तेषां संज्ञिस्वरूपप्रवृत्तिनिमित्तकत्वेन तस्य चैकत्वेन प्रवृत्तिनिमित्तभेदाभावात् नाम्नां बहुत्वं न स्यात्। एकेनैव नाम्ना अर्थप्रतीत्युपपत्तावितरवैफल्याच्च। नचैते घटकलशादिशब्द[3]वज्जातिवचनाः पर्यायाः। व्यक्त्यभेदस्य जातिबाधकत्वेन जातिवाचित्वायोगात्। पक्षद्वयेऽपि स्तुत्यनवगमात् स्तोत्रत्वव्याहतेश्च। स्तुतिकरणस्यैव स्तोत्रत्वात्। नचेष्टापत्तिः। "इमं स्तवं भगवतः" (वि. स. १४१) इति वक्ष्यमाणस्तवत्वोक्तिविरोधात्। नाप्येते यौगिकाः, गुणशब्दा वा। नामत्वव्याघातात् निर्धर्मके ब्रह्मणि धर्माभावाच्चेत्याशङ्क्य उत्तरत्वेन विष्णुधर्मवचनं पठति—**एकस्येति**। सत्यं नैते संज्ञाशब्दाः, घटकलशादिशब्दवज्जातिवाचित्वेन पर्याया वा। किन्तु प्रायेण यौगिका गौणाश्च ॥

---

[1] कालस्येव–**पा.** [2] बहुत्वं–**पा.** [3] वज्जातिवाचिनः–**पा.**

भाष्यम्

**निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् ।**
**विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम ! ॥**

विवृतिः

यद्यपि विश्वादिशब्देषु नामत्वमपि विद्यते । तथापि तेषु विद्यमानो रूढ्यंशो न विवक्षितः । तेन स्तुतेरभावात् । न च नामत्वव्याहतिः । योगार्थानामपि संज्ञाशब्दप्रवृत्तिनिमित्तभूतसंज्ञिस्वरूपवदसाधारण्याभिप्रायेण नामत्वव्यपदेशात् । यद्यपि निर्गुणे शब्दप्रवृत्तिनिमित्तानामसम्भवः । तथापि सगुणे सविकारे सर्वात्मत्वात् प्रवृत्तिनिमित्तानि सम्भवन्तीति नामबहुत्वसिद्धिः । नाप्येषां फलाभावः । स्तुतिप्रकर्षसाधनात् । तत्तन्नाम्नां पृथक् पृथक् फलानां [1] विष्णुधर्म एवोत्तरश्लोकेषु वक्ष्यमाणत्वाच्चेति श्लोकतात्पर्यार्थः ।

अक्षरार्थस्तु–मायाशबलस्य सगुणस्य **एकस्यैव ब्रह्मणः**—**समस्तस्य**–सर्वोपादानतया सर्वकार्यतादात्म्यमापन्नस्य, अत एव प्रवृत्तिनिमित्तानां सद्भावात् **नाम्नां सहस्रं** तत्तन्नामकीर्तनेन मोक्षादितत्तत्फलप्राप्तिहेतुत्वेन **लोकानामुपकारकं शृणु हे द्विजसत्तम !** दाल्भ्य ! इति ॥

उक्तमेवार्थं विवृणोति—**निमित्तेति** । सगुणे सविकारे षष्ठ्यादीनां शब्दप्रवृत्तिनिमित्तानां निमित्तशक्तीनां–शब्दप्रवृत्तिनिमित्तभूततत्तत्कार्यनिष्पादनशक्तीनां च सद्भावात् तत्तत्प्रवृत्तिनिमित्तकानां नाम्नां भेदः । तत्तन्नामोदीरणाच्च फलानि भिन्नभिन्नानि भवन्तीत्यर्थः । तथा च विष्णुधर्म एव वक्ष्यते—

"वासुदेवाच्युतानन्तसत्याजपुरुषोत्तमैः ।
परमात्मेश्वराद्यैश्च स्तुतो [2] नामाभिरच्युतः ॥

---

[1] "श्रीदः श्रीशः श्रीनिवासः" (वि. ध. ४१-१८) इत्यादिश्लोकेषु । [2] नामभिरव्ययः–पा.

**भाष्यम्**

**यच्छक्ति नाम यत्तस्य तत्तस्मिन्नेव वस्तुनि ।**

**साधकं पुरुषव्याघ्र ! सौम्यक्रूरेषु वस्तुषु ।। (४१. १०-१२)**

**इति विष्णुधर्मे ॥ १२ ॥**

**यद्यपि परस्य ब्रह्मणः षष्ठीगुणक्रियाजातिरूढीनां शब्दप्रवृत्तिहेतुभूतानां निमित्तशक्तीनां चासम्भवः ।**

विवृतिः

निमित्तभावं भगवान्वि[1]मुक्तेर्यात्यधोक्षजः ।
धर्मगुब्धर्मकृद्धर्मी धर्मात्मा विश्वकृच्छुचिः ॥
शुचिषद्विष्णुरब्जाक्षः पुष्कराक्ष अधोक्षजः ।
शुचिश्रवाः शिपिविष्टो यज्ञेशो यज्ञभावनः ॥
नाम्नामित्येवमादीनां समुच्चारणतो नरः ।
धर्मं महान्तमाप्नोति पापबन्धक्षयं तथा ॥

(वि. ध. ४१-१३-१७)

इत्यादि । **यच्छक्तीति** । **तस्य**–ब्रह्मणो विष्ण्वाख्यस्य, **यन्नाम**–यच्छक्तिनिमित्तकं, मृदुक्रूरेषु वस्तृषु मध्ये तच्छक्तिविशिष्ट **एव** वस्तुनि तन्नाम **साधकं**–प्रतिपादकमित्यर्थः ॥ १२ ॥

एतेषामेव श्लोकानामाशङ्कापूर्वकं तात्पर्यमाह---**यद्यपीत्यादि । परस्येति ।** निर्विशेषस्येत्यर्थः । षष्ठी सम्बन्धः । स चौपगवादिशब्दानां "गोमान् धनवान्" इत्यादिशब्दानां च प्रवृत्तिनिमित्तम् । अपत्यापत्यवद्भावसम्बन्धादेस्तत्प्रवृत्तिनिमित्तत्वात् । गुणः शुक्लादिः । स च शुक्लादिशब्दानां पटादौ प्रवृत्तिनिमित्तम् । क्रिया पाकादिः ।

[1] **मुक्तो यात्य–पा.**

स्तोत्रम्

## यानि नामानि गौणानि

भाष्यम्

**तथापि सगुणे ब्रह्मणि सविकारे च सर्वात्मकत्वात् तेषां शब्दप्रवृत्तिहेतूनां सम्भवात् सर्वे शब्दाः परस्मिन् पुंसि प्रवर्तन्ते । तत्र—यानि नामानि गौणानि–गुणसम्बन्धीनि**

विवृतिः

सा च पाचकादिशब्दानां प्रवृत्तिनिमित्तम् । जातिः घटत्वादिः । सा च घटादिशब्दप्रवृत्तिनिमित्तम् । रूढिः संज्ञिस्वरूपम् । तच्च देवदत्तादिशब्दप्रवृतिनिमित्तम् । निर्विशेषे ब्रह्मण्येतेषामभावात्कथं नाम्नां प्रवृत्तिरित्यर्थः ॥

समाधत्ते—**तथापीति** । **सगुणे**–मायाशबले सर्वज्ञे सर्वशक्तियुक्ते । **सविकारे**–कार्यमात्रोपादानतया सर्वकार्यतादात्म्यमापन्ने । तथा च तादृशे ब्रह्मणि शब्दप्रवृत्तिनिमित्तानां शक्तीनां च सद्भावात् नामवाच्यता नामभेदश्च सम्भवतीत्यर्थः । **गुणयोगात् प्रवृत्तानीति** । गुणाः ज्ञानैश्वर्यादयः । इदमुपलक्षणं कर्मादीनामपि । तद्योगात्प्रवृत्तानीत्यर्थः । अथवा [1] निर्विशेषत्वेऽपि परस्य सत्वादिगुणयोगात्प्रवृत्तानीत्यर्थः ॥

यद्वा गुणशब्दोऽत्र शब्दप्रवृत्तिनिमित्तधर्ममात्रपरः । तद्योगात्प्रवृत्तानीत्यर्थः । ते च धर्माः षष्ठीगुणक्रियाजात्यादयः । तत्र षष्ठीसंज्ञितत्सम्बन्धप्रवृत्तिनिमित्तकानि शौरिवासुदेवादीनि नामानि श्रीमान् लक्ष्मीवानित्यादीनि च । गुणनिमित्तकानि रोहितकृष्णादीनि । भूत-

---

[1] निर्विशेषस्यापि—पा

**स्तोत्रम्**

**विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि**

**भाष्यम्**

**गुणयोगात्प्रवृत्तानि, तेषु च यानि विख्यातानि—प्रसिद्धानि, ऋषिभिः—मन्त्रैः तद्दर्शिभिश्च, परिगीतानि-परितः-समन्ततः**

विवृतिः

कृदादीनि क्रियानिमित्तकानि । अनिमिषवराहादीनि जातिनिमित्तकानि । मुख्यार्थगुणशक्तिसम्बन्धयोरपि गौणलाक्षणिकशब्दप्रवृत्तिनिमित्तधर्मत्वाद्भवति तयोरपि सङ्ग्रहः । तद्योगात् प्रवृत्तानि गौणानि सिंहकुम्भपर्जन्यादीनि [1] लाक्षणिकानि कृत्यादीनि चेति यथायोगं द्रष्टव्यानि ॥

नन्वेवं सहस्रसंख्याया आधिक्यमित्यत आह—**तेषु च यानीति** । विख्यातत्वमेवाह—**ऋषिभिरिति** । **मन्त्रैरिति** । तदुक्तं ऋषिणेत्यादौ ऋषिशब्दस्य मन्त्रे प्रयोगादिति भावः । **तद्दर्शिभिरिति** । मन्त्रदर्शिभिरित्यर्थः । "यो ह वा अविदितछन्दोदैवतार्षेयेण ब्राह्मणेन" (आ. ब्रा. १-१-१) इत्यादौ मन्त्रद्रष्टर्यपि प्रयोगादुभयमप्यत्र गृह्यत इत्यर्थः । एवं विशेषणविशिष्टानां नाम्नां नाधिक्यशङ्कावकाश इति भावः । तथा च मोक्षधर्मे—

ऋग्वेदेऽथ यजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ! ॥

---

[1] कृतिरित्यादीनि च गौणलाक्षणिकानि यथायोगं-**पा.**

स्तोत्रम्

## तानि वक्ष्यामि भूतये* ॥ १३ ॥

भाष्यम्

परमेश्वराख्यानेषु तत्र तत्र गीतानि । महांश्चासावात्मा चेति महात्मा—

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते ॥"

इति वचनात् । अयमत्र महानात्मेति महात्मा तस्य—अचिन्त्यप्रभावस्य, तानि वक्ष्यामि भूतये—पुरुषार्थचतुष्टयसिद्धये पुरुषार्थचतुष्टयार्थिनामिति ॥

विवृतिः

साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥
गौणानि तत्र नामानि कर्मजानि च कानिचित् । इति ॥

महांश्चासावात्मेति । "सन्महत्" (पा. सू. २-१-६१) इत्यादिना कर्मधारयः । "आन्महतः" (पा. सू. ६-३-४६) इत्यात्वम् । तत्रात्मशब्दनिर्वचनं स्मृतिकृतं दर्शयति—यच्चाप्नोतीत्यादिना । द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्च । व्यवहारोऽपि

---

* एतदनन्तरं कोशान्तरेषु, (वाविळ्ळरामस्वामिप्रकाशिते)

ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महानृषिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥

### विवृतिः

त्रिविधः। जागरणं स्वप्नः सुषुप्तिश्चेति। तत्र सुषुप्तावयं जीवाख्य उपाधिलये सति [1]परमानन्दरूपं ब्रह्माप्नोति। तथा च कैवल्योप-

---

[1] परमानन्दं ब्रह्म–पा.

[इदं पाठान्तरं पूर्वपुटगतपाठान्तरशेषभूतम्]

इत्यधिकः पाठो दृश्यते। अनन्तरं च तत्रैव टिप्पण्याम्—

"विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम्।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम्॥
क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतैर्मौक्तिकानां
मालाक्लृप्तासनस्थस्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः।
शुभ्रैरभ्रैरदभ्रैरुपरि विरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः॥
शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

इत्यधिकः पाठो दर्शितः। पारायणार्थं सङ्गृहीतेषु दाक्षिणात्यमुद्रितपुस्तकेषु सर्वोऽप्ययं पाठः सङ्गृहीतोऽस्ति॥

तत्रैव "मुकुन्दः" इत्यनन्तरं—

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेऽयमब्धिः।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि॥

इति "सर्वलोकैकनाथम्" इत्यनन्तरं—

"छायायां पारिजातस्य हेमसिंहासनोपरि।
आसीनमम्बुदश्याममायताक्षमलङ्कृतम्॥
चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम्।
रुक्मिणीसत्यभामाभ्यां सहितं विष्णुमाश्रये"॥

इति चाधिकः पाठो दृश्यते। अस्य भाष्यं विवृतिर्वा नोपलभ्यते।

## विवृतिः

निषदि—" सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति " (कै. उ. १३) इति । तस्मादाप्नोतीत्यात्मेति स्मर्यमाणप्रथमनिर्वचनं बोध्यम् । स्वप्नावस्थायामयं जीवो जागरणस्थपदार्थवासनाः सर्वा आदत्ते । तथा च श्रुतिः " स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति " (बृह. उ. ४-३-९) इति । अस्यार्थः—यदा जीवो वाक्-चक्षुरादिदशविधबाह्यकरणोपरतिरूपस्वप्नं प्राप्नोति तदानीं सर्वावतः—गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य, लोकस्य—इन्द्रियैरुपलभ्यमानस्यास्य जगतः मात्रां—लेशरूपां वासनां, उपादाय—तत्तत्पदार्थेभ्योऽवच्छिद्य, स्वयं विहत्य—ततः जागरणाभिमानिनं स्वयमेव विनाश्य, स्वप्ने जाग्रद्रूपं स्वयमेव निर्माय, जगदाकारपरिणतेन स्वेन भासा—स्वकीयेनान्तःकरणेन, तथा स्वेन ज्योतिषा—स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन् प्रस्वपितीति । तस्माद्वासनाः स्वाकारा आदत्ते इत्यात्मेति द्वितीयं निर्वचनम् । जागरणावस्थायां चक्षुरादीन्द्रियैर्बाह्यान् रूपादिविषयानत्ति-भुङ्क्ते । तथा चाथर्वणिकाः—" स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति " (कै. उ. १२) इति । ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनम् ॥

उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम् । अथ केवलस्य निर्वचनमुच्यते । यत् यस्मात्कारणात्, **अस्य** आत्मनः, **भावः**—स्वभावविशेषः, **सन्ततः**—परिच्छेदरहितः, **तस्मात्** अतति—सातत्येन सर्वत्र गच्छतीत्यात्मेति चतुर्थं निर्वचनं द्रष्टव्यम् । एवं सत्यत्र तत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसत्वेन सन्ततत्वमात्मशब्दप्रवृत्तिनिमित्तम् । यदि वा धातुप्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य

### भाष्यम्

**अत्र नामसहस्रे आदित्यादिशब्दानामर्थान्तरे प्रसिद्धानामादित्याद्यर्थानां तद्विभूतित्वेन तदभेदात् तस्यैव स्तुतिरिति प्रसिद्धार्थग्रहणेऽपि तत्स्तुतित्वम् ।**

**"भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।**
**आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥"**

### विवृतिः

स्वरूपवाचकत्वमुच्यते, [1]तथाप्यध्यस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन सर्वस्वरूपत्वमस्ति । न ह्यारोपितानां सर्पदण्डमालाबलीवर्दमूत्रादीनां अधिष्ठानभूतरज्जुमन्तरेण किञ्चिदन्यद्वास्तवं स्वरूपमस्ति । किं बहुना ? यद्ययमात्मशब्दो यौगिकः, यदि वा रूढः, सर्वथापि सन्ततोऽखण्डैकरसः सर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थ आत्मशब्देनोच्यत इति ॥

अत्र चतुर्थनिर्वचने "अत सातत्यगमने" इत्यस्मात् "सातिभ्यां मनिन्मनिणौ" (उणा. ५९२) इति मनिण्प्रत्यये रूपं बोध्यम् । आप्नोत्याददात्यत्तिप्रकृतिकत्वे पृषोदरादित्वं कल्पनीयम् ॥

नन्वादित्यादिशब्दानां अन्यत्र रूढानां कथं विष्णौ प्रवृत्तिरित्याशङ्क्य [2]तेषां तद्विभूतित्वेन स एवादित्यादिरूपेणापि वर्तत इति स्तुत्यर्थत्वेनाप्युपपत्तिरित्यभिप्रेत्याह—**आदित्यादिशब्दानामिति** । प्रसिद्धार्थानामपि शब्दानां स्तुत्यर्थत्वमुदाहरणेन स्फुटयति—**प्रसिद्धार्थग्रहणेऽपीति** । **भूतात्मा**—शरीरं, **इन्द्रियात्मा**—इन्द्रियाणि, **प्रधानात्मा**—जगत्प्रकृतिर्माया, **आत्मा**—जीवस्त्वम्पदार्थः, **परमात्मा**—

[1] तथाप्याद्यन्तस्य· पा.　[2] तदर्थानां–पा.

भाष्यम्

"ज्योतींषि विष्णुर्भुवनानि विष्णु-
र्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं
यदस्ति यन्नास्ति च विप्रवर्य!" ॥

(वि. पु. २–१२–३८)

इति विष्णुपुराणे । "आदित्यानामहं विष्णुः" (भ.गी. १०-२१) इत्यारभ्य "एकांशेन स्थितो जगत्" (१०–४२) इतिपर्यन्तं गीतासु । "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" (मुण्ड. २–१–१०) इत्यादिश्रुतिभ्यश्च । विष्ण्वादिशब्दानां पुनरुक्तानामपि वृत्तिभेदेनार्थभेदान्न पौनरुक्त्यम् ॥

विवृतिः

तत्पदार्थः । ज्योतींषीति । स्पष्टम् । "आदित्यानामहं" (भ. गी. १०–२१) इत्यारभ्य आध्यायपरिसमाप्तेर्विष्ण्वादिशब्दानामन्यत्र रूढानामपि तदर्थानां तद्विभूतित्वेन स्तुत्यर्थत्वे भगवद्वचनमाह—**आदित्यानामित्यादि** । उक्त एवार्थे मुण्डकवाक्यमुदाहरति—**पुरुष एवेति** ॥

ननु 'विश्वं विष्णुः' 'वृषाही वृषभो विष्णुः' इत्येवमादौ [1] शब्दैक्यात् पौनरुक्त्यमित्याशङ्क्य विष्ण्वादिशब्देषु व्याप्तिविक्रमणादिप्रवृत्तिनिमित्तभेदान्न पौनरुक्त्यमित्याह—**विष्ण्वादिशब्दानामिति** । आदिशब्देन गोविन्दादिशब्दा गृह्यन्ते । **वृत्तिभेदेन**—प्रवृत्तिनिमित्तभेदेन । तथा च भिन्नप्रवृत्तिनिमित्तविशिष्टार्थभेदात्तदर्थशक्तानां शब्दानामपि भेद इत्यर्थः ॥

[1] नामैक्यात्-पा.

### भाष्यम्

**"श्रीपतिः, माधवः" इत्यादीनां वृत्त्येकत्वेऽपि शब्दभेदान्न पौनरुक्त्यम् । अर्थैक्येऽपि पौनरुक्त्यं न दोषाय;**

### विवृतिः

ननु 'श्रीपतिर्माधवः' इत्यादावर्थभेदाभावात्पौनरुक्त्यमित्याशङ्क्य किं प्रवृत्तिनिमित्तभेदाभावात्पौनरुक्त्यम्? उत विशेष्यभेदाभावात्? नाद्यः; श्रीपतित्वादिरूपप्रवृत्तिनिमित्ता[1]भेदेऽपि श्रीपतिमाधवादिनामवानित्येवं शब्दविशिष्टस्यार्थस्य लक्षणया प्रतिपादनात्तादृशविशेषणभेदेनापौनरुक्त्यमित्याह—**श्रीपतिरित्यादिना**। इत्यादीनामित्यादिशब्देन दक्षदक्षिणादयो गृह्यन्ते। **वृत्त्येकत्वेऽपि**—प्रवृत्तिनिमित्तैकत्वेऽपि, **शब्दभेदात्**—[2] श्रीपत्यादिरूपविशेषणीभूतशब्दभेदात्। न द्वितीयः; नाम्नां सहस्रस्य "किमेकं दैवतं" (वि. स. २) इति पृष्टैकदैवतविशेष्यकत्वेन धर्म्यभेदस्यावर्जनीयत्वादित्याशयेनाह—**अर्थैक्येऽपि पौनरुक्त्यं न दोषायेति। अर्थैक्ये**—विशेष्यैक्ये। **एकदेवताविषयत्वात्**—एकदैवतविशेष्यकत्वात्। 'अर्थैक्येऽपि पौनरुक्त्यं न दोषाय' इति साध्यरहिते 'नाम्नां सहस्रस्य "किमेकं देवतम्" (वि. स. २) इति पृष्टैकदेवताविषयत्वात्' इति पाठे तु 'यत्र पुल्लिङ्गशब्दप्रयोगः' इत्यादिवक्ष्यमाणसाध्ये नाम्नां सहस्रस्येत्यादिहेतुयोजना॥

नन्वत्र भिन्नभिन्नलिङ्गानां नाम्नां दर्शनेन तानि भिन्नभिन्नधर्मिप्रतिपादकानीत्येवमपि वक्तुं शक्यत्वेन सर्वस्य नामसहस्रस्य विष्णुरूप एको धर्मी न प्रतिपाद्य इत्याशङ्क्य नाम्नां सहस्रस्य "किमेकं दैवतम्" (वि. स. २) इति पृष्टैकदैवतविषयत्वेन भिन्नलिङ्गकनामसु सत्सु

[1] भेदेन- पा. [2] श्रीपत्यादिविशे- पा.

## भाष्यम्

**नाम्नां सहस्रस्य "किमेकं दैवतम्" इति पृष्टैकदेवताविषयत्वात्। यत्र पुल्लिङ्गशब्दप्रयोगः तत्र विष्णुर्विशेष्यः। यत्र स्त्रीलिङ्गशब्दः तत्र देवता विशेष्यते। यत्र नपुंसकलिङ्गशब्दः तत्र ब्रह्मेति विशेष्यते ॥ १३ ॥**

पूर्वपीठिका समाप्ता

———

## विवृतिः

तत्तदनुगुणभगवन्नामैव विशेष्यतया योज्यमित्याह—**नाम्नां सहस्रस्येति**। ननु कानिचित् पुल्लिङ्गानि, कानिचित् स्त्रीलिङ्गानि, कानिचित् नपुंसकलिङ्गानि; तत्र किं नियामकमित्याशङ्क्य विशेष्यनिम्नानां तत्तदनुगुणविशेष्याध्याहारेण तदपेक्षया लिङ्गव्यवस्थेत्याशयेनाह—**यत्रेत्यादिना** ॥

पूर्वपीठिका समाप्ता

———

## नामभाष्यारम्भः

"यतः सर्वाणि भूतानि" (वि. स. ११) इत्यारभ्य जगदुत्पत्तिस्थितिकारणस्य ब्रह्मण एकदेवतात्वेनाभिहितत्वादादावुभयविधं ब्रह्म विश्वशब्देनोच्यते—विश्वस्य जगतः

## नामभाष्यविवृत्यारम्भः

प्रस्तुतं नामव्याख्यानमुपक्रमते—**यतः सर्वाणीति**। लक्षणोक्त्या [1]निमित्तोपादानाभेदावगत्योपादानस्य कार्याभिन्नतया कार्यकारणोभयरूपताप्रतीतेरादौ तदुभयविधं ब्रह्म विश्वशब्देन प्रतिपाद्यत इत्यर्थः। विशति स्वकारणमिति विश्वम्। "अशूप्रुषि" (उणा. १४१) इत्यादिना कर्तरि क्वन्। तथा च लक्षणवाक्यगतेन "सर्वाणि भूतानि" इत्यनेनैकार्थकतया कृत्स्नकार्यवाचिना विश्वशब्देन तत्कारणं ब्रह्म आदौ प्रतिपाद्यते। कार्यरूपापेक्षया कारणरूपस्याभ्यर्हितत्वादित्याह—**विश्वस्येति**। अस्मिन् पक्षे विश्वशब्दस्य कारणे गौणत्वेन सर्वनामत्वाभावाद्विश्वायेति चतुर्थ्यन्तं बोध्यम्। यद्वा "यतः सर्वाणि" (वि. स. ११) इत्यादिना जगज्जन्मादिकारणं ब्रह्मैव प्रकृतमेकं दैवतमित्यभिधानात् [2]ब्रह्मणो लक्षणोक्त्या निमित्तत्वोपादानत्वोभयवत्त्वावगमात्तदुभयविधमित्यर्थः। अथवा ईश्वरगतमपि कारणत्वं शाखाचन्द्रमिव तटस्थतया निर्विशेषचैतन्यमभ्युपलक्षयतीति सगुणनिर्गुणोभयात्मकमित्यर्थः॥

---

[1] निरुक्तोपादाना-**पा.**　[2] ब्रह्मणश्च-**पा.**

# सहस्रनामारम्भः

## विश्वं

### भाष्यम्

कारणत्वेन हि विश्वं इत्युच्यते ब्रह्म। आदौ तु विश्वमिति कार्यभूतविश्वशब्देन कारणग्रहणं कार्यभूतविरिञ्च्यादिनामभिरप्युपपन्ना स्तुतिर्विष्णोरिति दर्शयितुम्। यद्वा परस्मात् पुरुषान्न भिन्नमिदं विश्वं परमार्थतः; तेन विश्वमित्यभिधीयते ब्रह्म;

### विवृतिः

नन्वन्येषु नामसु सत्सु आदौ कार्यशब्देन कारणप्रतिपादनं किमर्थमित्याशङ्क्य तद्विभूत्यात्म[1]कविरिञ्च्यादिनामभिरपि कार्यवाचकैस्तत्कारणत्वेन हरेः स्तुतिरुपपद्यत इति ज्ञापनार्थमित्याह—**आदाविति। कार्यभूतविरिञ्च्यादिनामभिः**-[2]विरिञ्च्यादिप्रतिपादकहिरण्यगर्भादिनामभिः, कारणात्मकं [3]ब्रह्मैव विश्वरूपविकारभावमापन्नं विश्वशब्देनोच्यते; "ब्रह्मैवेदं विश्वं" (मु. उ. २–२–११) "पुरुष एवेदं [4]सर्वम्" (श्वे. उ. ३–१५) इत्यादिभिस्तादात्म्यावगमादित्यभिप्रेत्य पक्षान्तरमाह—**यद्वेति।** अस्मिन् पक्षे विश्वशब्दस्य कृत्स्नवाचकत्वेन सर्वनामत्वाद्विश्वस्मा इति चतुर्थ्यन्तं बोध्यम्। विशति–[5]स्वकार्यं कारणत्वेनानुगच्छति। कर्तरि कन्। "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै. उ. २–६) इति श्रुत्यनुसारात्। किञ्च विशन्ति–लीयन्ते सर्वाणि

---

[1] ककार्यवाचकविरि–**पा.** [2] विराडादि–पा. [3] ब्रह्म च–**पा.** [4] विश्वं–**पा.**
[5] विश्वकार्य–**पा.**

भाष्यम्

"ब्रह्मैवेदं विश्वम्" (मुण्ड. २-२-११) "पुरुष एवेदं विश्वम्" (मुण्ड. २-१-१०) "विश्वमेवेदम्" (याज्ञि. १३) इत्यादिश्रुतिभ्यः तद्भिन्नं न किञ्चित् परमार्थतः [1]सदस्ति। अथवा विशतीति विश्वं ब्रह्म। "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै. उ. २-६) इति श्रुतेः। किञ्च संहृतौ विशन्ति विश्वानि भूतानि अस्मिन्निति विश्वं ब्रह्म। "यत्प्रयन्त्यभिसंविशन्ति" (तै. उ. ३-१) इति श्रुतेः। तथा हि—सकलं जगत् कार्यभूतं एष विशति, अत्राखिलं विश्वं विशतीत्युभयथापि विश्वं ब्रह्म इति श्रुतेः। "अन्यत्र धर्मादन्यत्राधर्मात्" (कठ. १-२-१४) इत्यारभ्य—

"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्॥

विवृतिः

भूतान्यत्रेति बाहुलकादधिकरणे कन्। "यत्प्रयन्त्यभिसंविशन्ति" (तै. उ. ३–१) इति श्रुतेरित्यर्थद्वयपरत्वेन व्याचष्टे—**अथवेत्यादिना**। उक्तमेवार्थद्वयं विवृणोति—**तथाहीति**। **उभयथापीति**। व्युत्पत्तिद्वयेऽपीत्यर्थः। विश्वशब्दस्य क्लीबत्वात्तदपेक्षितं विशेष्यमाह—**ब्रह्मेति**। **इति श्रुतेरिति**। उदाहृतश्रुतिद्वयादित्यर्थः॥

एवमभिधेयपरत्वेन विश्वशब्दं व्याख्याय अभिधानात्मकोङ्कारपरत्वेनापि व्याख्यातुमादौ तस्य ब्रह्माभेदे सर्वात्मकत्वे विभूतौ च श्रुतिस्मृतीरुदाहरति—**अन्यत्रेत्यादि**। अन्यत्रेति नचिकेतसः प्रश्नवाक्यम्। **सर्वे वेदा** इति मृत्योरुत्तरवाक्यम्। तत्र **ओमित्येतत्**

---

[1] सदस्तीर्थः—पा.

भाष्यम्

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ”
(कठ. १-२-१५-१६)

इति काठके । “एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः” (प्रश्न. उ. ५-२) इत्युपक्रम्य “यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत” (प्रश्न. ५-५) इति प्रश्नोप-

विवृतिः

इत्यनेनोङ्कारस्य प्रतीकस्य ब्रह्माभेदः प्रतिपाद्यते । यद्बुभुत्सितं त्वया तदेतदोमित्योंशब्दवाच्यमोङ्कारप्रतीकं चेत्यर्थः । **एतद्ध्येवाक्षरं**—यत्पूर्वोक्तं ओङ्कारात्मकं, **ब्रह्म**—हिरण्यगर्भाद्यात्मकं, **एतद्ध्येवाक्षरं परं**—निरस्तसमस्तोपाधिकं सच्चिदानन्दैकरसं ब्रह्म ; प्रणवस्य तदुभयप्रतीकत्वात्तदुभयतादात्म्यव्यपदेशः । अत एतद्ध्येवाक्षरं अपरब्रह्मात्मना उपास्यं विज्ञातव्यं, परं ब्रह्म च स्वाधिकारानुरूपेण **ज्ञात्वा यो यदिच्छति** ज्ञातव्यं परं ब्रह्म, प्राप्तव्यं [1]अपरं ब्रह्म वा **तस्य तद्**भवतीत्यर्थः ॥

कठवाक्यान्युदाहृत्य प्रश्नवाक्यान्युदाहरति—**एतद्वा** इति । **हे सत्यकाम !** यदेतत् **परं**—शुद्धं, **अपरं च** ब्रह्मास्ति विराड्हिरण्यगर्भाख्यं, तदुभयं **ओङ्कार** एव । ओंप्रतीकत्वात् । तस्मात्—ब्रह्मत्वार्हत्वात् , विद्वानेतेनैवायतनेन—प्रतीकेन विष्णूपासनायां सालग्रामेणेव, एकतरं परापरब्रह्मणोरेकं अन्वेति—अनुगच्छति । स यद्येकमात्रं - एकमात्रा-

[1] अपरं इत्यारभ्य तद्भवतीत्यर्थः इत्यन्तो ग्रन्थः म. पुस्तके नास्ति ।

## विवृतिः

विशिष्टं प्रणवं ब्रह्माभेदेनाभिध्यायीत—अकारसहितः प्रणवः प्राण इति ध्यायीत। अकारस्य विराड्वाचकत्वेन तत्र तदुपास्तिस्तु युक्ता। भाष्ये परं चापरं चेत्यत्र अपरं प्राणाख्यं प्रथमजमिति व्याख्यानस्योभयपरत्व-सम्भवात् विराट्प्राणयोः कार्यकारणभावेनैक्यात्। स तेनैव—प्रथममात्रा-विशिष्टप्रणवध्यानेन, संवेदितः—अकारविशिष्टब्रह्मध्याता अहं मनुष्यलोकं यास्यामीति ज्ञापितः, जगत्यां—अकाररूपायां भुवि, सम्पद्यते। मनुष्य-लोकं—[1] मनुष्यजन्म। अनेकानि हि जन्मानि सम्भवन्ति जगत्याम्। तत्र तं—साधकं, ऋचः—ऋग्रूपा देवताः। मनुष्यलोकमेवोपनयन्ते। स तत्र—जगत्यां, मनुष्यजन्मनि द्विजाग्र्यः सन् तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानं—विभूतिमनुभवति॥

अथ यदि द्विमात्राविभागज्ञो द्विमात्रेण आकारोकारविशिष्ट-मोङ्कारमभिध्यायन्मनसि—स्वप्नात्मक द्वितीयमात्रारूपे यजुर्मये, सम्पद्यते—उपासनया एकाग्रतया आत्मभावं याति। स मृतः सन् सोमलोकं—अन्तरिक्षलोकं, यजुर्भिः—देवैरुन्नीयते। स सोमलोके विभूतिमनुभूय मनुष्यलोकं प्रति पुनरावर्तते। यः पुनरेतं—ओङ्कारं, त्रिमात्रेण—त्रिमात्रं, तृतीया द्वितीयार्थे। परं—सूर्यान्तर्गतत्वेनोपलक्षितं शुद्धं, उत्कृष्टोपाधित्वात्सूर्यान्तर्गतमित्युक्तम्। पुरुषं—सर्वेषु पुरुषेषु दृश्येषु अधिष्ठानतया शयानं तत्त्वेनोपलक्षितं, अभिध्यायीत स सूर्ये—तृतीय-मात्रारूपे, सम्पन्नः—तृतीयमात्राध्यानस्यैकाग्रतया तदात्मतां गच्छति। यथा पादोदरः—सर्पः, त्वचा विनिर्मुच्यत, एवं ह वै स पाप्मना—सर्पत्वक्स्थानीयेनाशुद्धिरूपेण, विनिर्मुक्तः स सामभिः—तृतीयमात्रा-[2] रूपैर्देवैः, उन्नीयते—ऊर्ध्वं नीयते, ब्रह्मलोकम्—हिरण्यगर्भस्य ब्रह्मणः

---

[1] मनुजन्म—**पा**. [2] रूपैर्देवैरू—**पा**.

भाष्यम्

निषदि । "ओमिति ब्रह्म, ओमितीदꣳ सर्वम्" (तै. आ. ७-७) इति यजुर्वेदारण्यके । "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा । ओङ्कार एवेदं सर्वम्" (छा. २-२३-४) इति छान्दोग्ये । "ओमित्येतदक्षरं" (माण्डू. उ. १) इत्युपक्रम्य—

विवृतिः

लोकं सत्याख्यं, स एतस्माज्जीवघनात्—सर्वजीवलिङ्गाभिमानिहिरण्यगर्भात्, परात् परं-परमात्मानं, पुरि शयं—सर्वशरीरानुप्रविष्टं, पुरुषमीक्षते—पश्यति ध्यायमान इत्यर्थः ॥

तैत्तिरीयवाक्यद्वयमुदाहरति—**ओमितीत्यादि** । यद्ब्रह्म जगज्जन्मादिकारणं स ओमिति शब्द एव, न ततो भिद्यत इत्यर्थः । "तद्यथा शङ्कुना" (छा. २-२३-३) इति श्रुत्या ओङ्कारे शब्दस्वरूपान्तर्भावोक्त्या "तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं" इत्यादिश्रुत्या सर्वमर्थजातं नामभिः सितं सम्बद्धमित्येवमर्थिकया शब्देष्वर्थानामन्तर्भावोक्त्या च तादृशशब्दद्वारा ओङ्कारेऽप्यर्थानामन्तर्भावाच्छब्दार्थात्मकं विकारजातं सर्वमोङ्कार एव, नान्यदिति तैत्तिरीयकद्वितीयश्रुत्यर्थः । छान्दोग्यश्रुतिमुदाहरति—**तद्यथेति** । लोके वटाश्वत्थपर्णानि शङ्कुशब्दाभिधेयेन स्वान्तर्भूतशलाकाविशेषेण यथा व्याप्तानि तद्वदोङ्कारेणापि सर्वा वाक् व्याप्तेत्यर्थः ॥

माण्डूक्य[1]वाक्यान्युदाहरति—**ओमित्येतदिति** । सर्वं—तत्तद्वाच्याभिन्नसर्वं, वागात्मकत्वादोङ्कारः सर्वात्मक इत्यर्थः । मन्दमध्य-

---

[1] वाक्यमुदा-पा.

भाष्यम्

"प्रणवो ह्यपरं ब्रह्म प्रणवश्च [1]परः स्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥
सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥

विवृतिः

माधिकारिणः परापरा[2]त्मना ध्येयतामाह—**प्रणवो हीति** पूर्वार्धेन । उत्तमाधिकारिणस्तु सर्वविशेषशून्यमेकरसं प्रत्यग्भूतं यद्ब्रह्म तद्रूपेण प्रणवः सम्यग्ज्ञानगम्यो भवतीत्याह—**अपूर्व इति** । अपरं ब्रह्म विराड्ढिरण्यगर्भात्मकं प्रणव एव; **परं ब्रह्मापि** प्रणव एव; न विद्यते पूर्वं कारणं इत्य**पूर्वः** । अकार्य इत्यर्थः । नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इति **अनन्तरः** । तथा बाह्यमन्यन्न विद्यत इति **अबाह्यः** । अपरं कार्यमन्यन्न विद्यत इति **अनपरः**—अकारणमित्यर्थः । सबाह्याभ्यन्तरो ह्यजः सैन्धवघनवत्प्रज्ञानघन इत्यर्थः ॥

यदोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तं तत्र हेतुमाह—**सर्वस्येति** । आदिमध्यान्ताः उत्पत्तिस्थितिप्रळयाः सर्वस्यैवोत्पाद्यमानस्याविकृतप्रणवाधीना भवन्ति । यथा मायाहस्त्यादीनामुत्पत्त्यादयोऽविकृतमायाव्याद्यधीनाः । अतोऽपूर्वत्वानन्तरत्वादिविशेषणं युक्तमित्यर्थः ॥

यथोक्तविशेषणं प्रणवं प्रत्यञ्चं प्रतिपद्य कृतकृत्यो भवतीत्याह—**एवं हीति** । एवं—पूर्वोक्तविशेषणसम्पन्नं प्रत्यग्भूतं मायाविस्थानीयं,

---

[1] परं तपः—**पा.** [2] त्मनाभिधेयतामाह—**पा.**

भाष्यम्

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोङ्कारं ज्ञात्वा धीरो न शोचति ॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥

(माण्डू-का-आ-२६–२९) इति "ओं तद्ब्रह्म। ओं तद्वायुः । ओं तदात्मा। ओं तत्सत्यम्" (तै-उ-४–२९) इत्यादिभ्यः श्रुतिभ्यः ॥

विवृतिः

**प्रणवं ज्ञात्वा तदनन्तरं**–तत्क्षणादेव, तदात्मभावं व्यश्नुत इत्यर्थः । ब्रह्मबुद्ध्या प्रणवमभिध्यायतो हृदयाख्यं देशमुपदिशति—**प्रणवमिति** । **सर्वस्य**—प्राणिजातस्य, **हृदये स्थितमीश्वरं प्रणवं विद्यात्** । परमार्थदर्शिनि शोकाद्यनवच्छिन्नवस्तुदर्शनादार्थिकं शोकाभावमनुवदति —**सर्वव्यापिनमिति** । **सर्वव्यापिनं** व्योमवत् **ओङ्कारं**—आत्मानमसंसारिणं, **धीरः**—विवेकी, **ज्ञात्वा**—साक्षात्कृत्य, **न शोचति** । शोकनिमित्तानुपपत्तेः । ओङ्कारं तुरीयभावमापन्नं यः प्रतिपन्नस्तं स्तौति—**अमात्र इति** । पादविभागस्य मात्राविभागस्य चाभावादोङ्कारस्तुरीयः सन् **अमात्रो** भवति । मीयते अनयेति मात्रा-परिच्छित्तिः, सा अनन्ता यस्य सः **अनन्तमात्रः** । न तावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः । सर्वद्वैतोपशमनत्वादेव **शिवः ओङ्कारः** पूर्वापोक्तविशेषणविशिष्टः **विदितो येन स** परमार्थतत्त्वस्य मननात् **मुनिः** । **नेतरो जनः** शास्त्रविदपि, तत्त्वज्ञानाभावादित्यर्थः । "ओं तद्ब्रह्म" (तै. उ. ४-२९) इत्यादीनि वाक्यानि स्पष्टार्थानि ।

भाष्यम्

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥**
**(भ. गी. ८-१३)**

[1]**यदक्षरं वेदविदो वदन्ति**
**विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ (भ. गी. ८-११)**
**रसोऽहमप्सु कौन्तेय ! प्रभास्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु । (भ. गी. ७-८)**
**गिरामस्म्येकमक्षरम् ॥ (भगी. १०-२५)**
**आद्यं त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।**
**एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ॥**

विवृतिः

**ओमित्येकाक्षरमिति ।** ब्रह्मणोऽभिधानभूतमोङ्कारं **व्याहरन्** तदर्थभूतं **मां**–ईश्वरं **अनुस्मरन् यः प्रयाति देहं त्यजन्**–देहत्यागेन प्रयाणं प्राप्नोति । न तु स्वरूपनाशेन । **स याति परमां**–प्रकृष्टां, **गति**मित्यर्थः ॥

अपां यः सारः स रसः, तस्मिन् रसभूते मय्यापः प्रोताः । प्रभारूपे मयि शशिसूर्यौ प्रोतौ । प्रणवभूते मयि सर्वे वेदाः प्रोताः । खे–आकाशे, शब्दः सारभूतः, तस्मिन् मयि खं प्रोतम् । पुरुषस्य भावः पौरुषम् । यतः पुंबुद्धिर्नृषु जायते, तस्मिन् पौरुषे मयि पुरुषाः प्रतिष्ठिता इत्यर्थः । **गिरामिति । गिरां**—वाचां पदलक्षणानां, **एक**-**मक्षरं**–ओङ्कारोऽस्मीत्यर्थः । **आद्यं** ब्रह्मात्मना सर्वस्य जगतः कारण-

[1] अस्य गीताश्लोकस्य विवृतौ विवरणं न दृश्यते ।

भाष्यम्

"ओङ्कारः स्वर्गद्वारम् । तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत । विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म" (आप. ध. सू. १-४-१३-६, ७)

प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ॥

विवृतिः

त्वात्, त्र्यक्षरं—अकारोकारमकारात्मकं, त्रयी —वेदत्रयोक्तं कर्म, यस्मिन्—ओङ्कारे, प्रतिष्ठिता—प्रतिष्ठितमित्यर्थः । यद्वा त्रयी त्रयो वेदाः, फलसाधनतालक्षणां प्रतिष्ठां यस्मिन् सति प्राप्ताः । अन्यथा "स्रवत्यनोङ्कृतं पूर्वम्" इति स्मृत्या निष्फलत्वापत्तेरित्यर्थः । परब्रह्माभिधानत्वात् परं ब्रह्म । प्राणायामः तत्तन्मन्त्रः तेन ध्येयो वा, परं तपः—उपासकस्य शत्रुभूतपापनिवर्तकः ॥

ओङ्कारः स्वर्गद्वारमिति । ओङ्कारः—प्रणवः, सः स्वर्गस्य द्वारमिव, यथा द्वारेण गृहाभ्यन्तरं प्राप्यते तथानेन स्वर्गः । तस्माद्ब्रह्म—वेदं स्वर्गसाधनं अध्येष्यमाण एतदादि—अनाम्नातमप्योङ्कारमादौ कृत्वा प्रतिपद्येत—उपक्रमेत अध्येतुम् । अध्ययने अनुपयुक्ता कथा विकथा । विकथां चान्यां कृत्वा एतदादि प्रतिपद्येत, एवं सति ब्रह्म—वेदः लौकिक्या वाचा व्यावर्तते—तया मिश्रितं न भवतीत्यर्थः ।

प्रणवाद्या इति । वाङ्मयप्रपञ्चस्य कारणत्वादाह—प्रणवे पर्यवस्थिता इति । स्थितिकालेऽपि प्रणव एव कारणभूते परितोऽवस्थिता इत्यर्थः । एवमुक्तस्मृतिभिरुक्तव्युत्पत्तीनामोङ्कारेऽपि भावात्

### भाष्यम्

**इत्यादिस्मृतिभ्यश्च विश्वशब्देनोङ्कारोऽभिधीयते । वाच्यवाचकयोरत्यन्तभेदाभावाद्विश्वमित्योङ्कार एव ब्रह्मेत्यर्थः । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" (छा. उ. ३-१४-१) इति । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्म तज्जत्वात् तल्लत्वात् तदनत्वाच्च । न च सर्वस्यैकात्मत्वे रागादयः सम्भवन्ति । तस्माच्छान्त उपासीत इति ॥**

### विवृतिः

विश्वशब्देन ब्रह्माभिधानोङ्कारोऽप्यभिधीयत इत्याह—**विश्वशब्देनेति** । आदौ विश्वमिति कार्यशब्देन कारणाभिधानं कार्यभूतविरिञ्च्यादिनामभिरप्युपपन्ना स्तुतिरिति दर्शयितुमित्युक्तम् । विश्वस्य ब्रह्मात्मकताबुद्ध्या तद्धिंसारहितेनैव सहस्रनामजपादि कर्तव्यमित्येवमर्थमादौ विश्वनामकथनमिति प्रयोजनं वक्तुं विश्वस्य ब्रह्माभेदबोधकश्रुतिस्मृतीरुदाहरति—**सर्वं खल्वित्यादि** । "स क्रतुं कुर्वीत" (छा. उ. ३-१४-१) इत्युपासनाविधिप्राप्तोपासनानुवादेन तदङ्गशमोपायतया सर्वात्मत्वानुसन्धानपरमिदं वाक्यम् । शमो हि रागद्वेषादिविषयेषु दोषगुणानुसन्धानेनापि सम्पादयितुं शक्यः । तदा सर्वत्र ब्रह्मानुसन्धानं तदुपायभूतं पाक्षिकत्वात् कदाचिन्न भवेत् । अतः प्रकृतोपासनायां शमोपायनियमोऽयमित्याभिप्रेत्याह—**एतदुक्तमिति** ॥

सर्वं विकारजातं ब्रह्मेति साध्यम् । तत्र "तज्जलान्" (छा. उ. ३-१४-१) इत्यनेनोक्तं हेतुमाह—**तज्जत्वादित्यादिना** । जायत इति जम् । लीयत इति लम् । "अन्येष्वपि दृश्यते" (पा. सू. ३-२-१०१) इति डप्रत्ययः । अनितीत्यन् "क्विप्च" (पा. सू. ३-२-७६) इति क्विप्प्रत्ययान्तम् । जलानिति विशेषणानामपि कर्मधारयः । बहुल-

भाष्यम्

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ।
(भ. गी. ६–१२) ॥
निर्गुणः परमात्मा ते देहं व्याप्य व्यवस्थितः ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥
यद्यागमैर्न विन्देयं तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम् ॥
(अरण्य. प. अ. १४७).

विवृतिः

ग्रहणात् । तस्य तस्मिन् वा जलानिति तत्पुष इति बोध्यम् । भाष्ये यस्मादिति यच्छब्दस्य तस्माच्छान्त इत्यत्रत्यतच्छब्देन सम्बन्धः ॥

**श्रूयतामिति ।** सर्वेभ्यो धर्मेभ्यः परमो धर्मः **धर्मसर्वस्व**महिंसारूपं, तदेवाह—**आत्मन इति । आत्मौपम्येनेति ।** स्पष्टम् । **निर्गुण इत्यादि** हनूमन्तं प्रति भीमस्य वचनम् । असौ **परमात्मा ते**-तव हनूमतः, **देहं व्याप्य व्यवस्थितः**-तिष्ठति । तं–तथाभूतमात्मानं आगमजन्यज्ञानविषयभूतं **नावमन्ये न लङ्घये** । यदि सर्वेषु भूतेषु परमात्मास्तीति **न विन्देयं**–न जानीयां, तदा [1]**त्वामिमं गिरिं**–अचलं च लङ्घयेयम् । "**हनूमानिव सागरम्**" इति तु हनूमानित्यजानतो भीमस्योक्तिः । भूतानां प्रतिकूलं नाचरणीयमिति तात्पर्यम् ॥

---

[1] त्वामिमं गिरिं च–**पा.**

भाष्यम्

**बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः।**
**सुशोच्यान्यतिमोहेन व्याप्तानीति मनीषिणाम्॥**
**एते [1]भिन्नदृशा दैत्या विकल्पाः कथिता मया।**
**कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम॥**
**विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत्।**
**द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः॥**

विवृतिः

**बद्धवैराणीति**। [2]यदि आत्मानं प्रति **बद्धवैराणि भूतानि द्वेषं कुर्वन्ति तदा मनीषिणां** तान्यतीव **मोहेन व्याप्तानीति सुशोच्यानि**–अनुकम्प्यानि। न तेषु सर्वथा द्वेषो युक्त इत्यर्थः। एते च द्वेषोपशमनप्रकारा मध्यमाधिकारिणामेवोक्ताः। न तूत्तमाधिकारिणामित्याह—**एत इति। भिन्नदृशा**–भेददृष्ट्या, भिन्नदृशामिति वा पाठः। **तत्र**–भेददृष्टौ, **अभ्युपगमं**–अङ्गीकारं, **कृत्वा एते विकल्पाः**–[3]द्वेषोपशमप्रकाराः प्रेममैत्रीकृपादिरूपाः [4]**मया कथिताः**। उत्तमानां तु परमार्थ**संक्षेपः** [5]**मम**-मत्तः, **श्रूयताम्**। तमेवाह—**विस्तार इति। सर्वमिदं जगत्**–चराचरात्मकं, **सर्वभूतस्य**–[6]सर्वात्मकस्य विष्णोरेव, **विस्तारः**-विभूतिः यस्मात्तस्मात्। **विचक्षणैः**—विद्वद्भिः [7]आत्मभेदो न द्रष्टव्य इत्यर्थः॥

---

[1] भिन्नदृशां–**पा.** [2] यदि बद्धवै–**पा.** [3] भेदोपशमन–**पा.** [4] कथिताः–**पा.**
[5] मत्तः श्रू–**पा.** [6] सर्वात्मकवि–**पा.** [7] आत्माभेदेन द्रष्टव्यमि–**पा.**

भाष्यम्

**समुत्सृज्यासुरं भावं तस्माद्यूयं तथा वयम् ।**
**तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥**

(वि. पु. १-१७-८२-८५)

**सर्वत्र दैत्याः ! समतामुपेत**
**समत्वमाराधनमच्युतस्य ॥**

(वि. पु. १-१७-९०)

**न मन्त्रादिकृतस्तात ! न च नैसर्गिको मम ।**
**स्वभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥**

विवृतिः

**समुत्सृज्येति । आसुरं भावं समुत्सृज्य**—सम्यगुत्सृज्य, **यूयं वयं** [1]**च निर्वृतिं**-मोक्षरूपां **यथा**—येन प्रकारेण **प्राप्स्यामः, तथा यत्नं करिष्याम** इत्यर्थः ॥

**सर्वत्रेति** । " असारसंसारविवर्तनेषु मा यात तोषं प्रसभं ब्रवीमि । " इति पूर्वार्धम् । सर्वोपदेशसारमाह—**असारेति** । असारो यः संसारः तत्र विवर्तनानि–देवमनुष्यतिर्यगादिजन्मानि तेषु, तत्तदुचितैर्भोगैस्तोषं मा यात । किन्तु **सर्वत्र**–सर्वेषु, भूतेषु, **समतां** समदर्शितां, **उपेत**–प्राप्नुत । तदेव **अच्युतस्याराधनमित्यर्थः** । स्वकृत-कृत्यादिवितथीकरणस्य किं कारणमिति हिरण्यकशिपुना पृष्टः प्रह्लाद आह–**न मन्त्रादीति । हे तात ! ममायं प्रभावो न मन्त्रादिकृतो** नापि[2] **नैसर्गिकः**-स्वाभाविकः, ममान्यस्य वा **यस्य यस्य** पुंसेऽच्युतः–विष्णुः, **हृदि** वर्तते तस्य सर्वस्य [3]**एषः** [4]**स्वभावः सामान्यः**–समान

[1] च यथावत्–**नि. पा.** [2] स्वाभाविकः–**पा.** [3] हेतुस्वभावः–**पा.**
[4] प्रभावः–**प.**

भाष्यम्

अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा।
तस्य पापागमस्तात! हेत्वभावान्न विद्यते॥
कर्मणा मनसा वाचा परपीडां करोति यः।
तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम्॥
सोऽहं न पापमिच्छामि न करोमि वदामि वा।
चिन्तयन् सर्वभूतस्थमात्मन्यपि च केशवम्॥
शारीरं मानसं वाग्जं दैवं भूतभवं तथा।
सर्वत्र समचित्तस्य तस्य मे जायते कुतः॥
एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम्॥

(वि. पु. १-१९-४-९)

विवृतिः

इत्यर्थः। अन्येषामिति। अन्येषां यः पापानि–[1]पापफलानि दुःखानि, न चिन्तयति। तस्य पापागमः–दुःखागमो नास्तीत्यर्थः। कर्मणेति। कर्मादिभिः करणैर्यः परपीडां करोति, यतः तत्-परपीडाकरणमेव बीजं, तस्माद्यस्य जन्म तदशुभं–पापं, तस्य–कर्तुः, प्रभूतं–अभ्यधिकं, फलति–दुःखफलात्मना वर्धत इत्यर्थः। सोऽहमिति। परपीडाकरणमभ्यधिकदुःखफलमिति विद्वानित्यर्थः। स्पष्टमन्यत्॥

शारीरमिति। शारीरं—शरीरज्वरादि, मानसं–आधिरूपम्। दैवं–आधिदैविकम्। भूतभवं–आधिभौतिकम्। एवमिति। सर्वेषु भूतेषु सर्वभूतमयं हरिं ज्ञात्वा तद्भक्तिः कर्तव्येत्यर्थः॥

---

[1] विफलानि–पा.

भाष्यम्

साम चोपप्रदानं च भेददण्डौ तथापरौ ।
उपायाः कथिता ह्येते मित्रादीनां च साधने ॥
तानेवाहं न पश्यामि मित्रादींस्तात ! मा क्रुधः ।
साध्याभावे महाबाहो ! साधनैः किं प्रयोजनम् ॥
सर्वभूतात्मके तात ! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

(वि. पु. १-१९-३५-३७)

जडानामविवेकानामशूराणामपि प्रभो ! ।
भाग्यभोग्यानि राज्यानि सन्त्यनीतिमतामपि ॥

विवृतिः

यदधीतं दण्डनीत्यादि तद्वक्तव्यमिति पित्रा पृष्टः प्रह्लाद आह— **साम चेति** । कुपितस्य स्तुत्यादिना सान्त्वनं **साम** । भूमिधनादिप्रदानं **उपप्रदानम्** । ऐकमत्येन स्थितानां भयजननादिना पृथक्करणं **भेदः** । अर्थापहारादिः **दण्डः, इत्येते उपायाः मित्रादीनां साधने कथिताः** । [1] **हे तात ! तानेव मित्रादीन्न पश्यामि । मा क्रुधः**— क्रोधं मा कार्षीः, अतो मित्रादीनां साध्यानामभावात् साधनोपाया निष्फला इत्यर्थः । मित्राद्यभावमेवोपपादयति—**सर्वभूतात्मक इति** । **सर्वभूतात्मके**—प्रत्यगभिन्ने परमात्मनि । भाग्यान्येव राज्यादिश्रेयोहेतवः, न तूद्यमाः । तैर्विनापि दृश्यमानत्वादित्याह—**जडानामिति** । **जडानां**— अनुद्यमानां, **अविवेकानां**—इष्टानिष्टविवेकशून्यानां, [2] **अशूराणां**—दण्डासमर्थानां, **अनीतिमतां**—नीतिरहितानामपि, **भाग्यभोग्यानि**—पुण्यभोग्यानि, **राज्यानि** सन्तीत्यर्थः । यस्मात्पुण्यमेव

---

[1] तानेव—पा. [2] असुराणां—पा. ?

भाष्यम्

**तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ।**
**यतितव्यं समत्वेन निर्वाणमपि चेच्छता ॥**
**देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।**
**रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥**
**एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।**
**द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥**
**एवं ज्ञाते स भगवाननादिः परमेश्वरः ।**
**प्रसीदत्यच्युतो यस्मिन् प्रसन्ने क्लेशसंक्षयः ॥**

(वि. पु. १-१९-४५-४९)

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥**

(भ. गी. ७-१९)

विवृतिः

कारणम्, न नीत्यादिकम्, तस्मात्पुण्यमेव कर्तव्यं श्रेयःप्राप्तय इत्याह—**तस्मादिति** । यदि निर्वाणमिच्छति तदा समत्वदृष्टिः कर्तव्येत्याह—**यतितव्यमिति** ॥

समत्वबुद्धेर्निर्वाणं फलमाह—**देवा** इत्यादिभिस्त्रिभिः श्लोकैः । **भिन्नमिवेति** भेदस्य मिथ्यात्वं दर्शयति । परमार्थतो भेदो नास्तीत्यर्थः । विष्णोः सार्वात्म्यमाह—**एतदिति** । विष्णोः सार्वात्म्य एव भगवद्वचनमुदाहरति **बहूनामिति** । **बहूनां जन्मनां**—ज्ञानार्थसंस्काराश्रयाणां, **अन्ते**—समाप्तौ, **ज्ञानवान्**—प्राप्तपरिपाकज्ञानः, **मां**—वासुदेवं, **प्रपद्यते** । कथम्? **वासुदेवः सर्वमिति** य एवं सर्वात्मानं नारायणं प्रपद्यते **स महात्मा**, न तत्समोऽस्त्यभ्यधिको वा, अतः **सुदुर्लभ** इत्यर्थः ।

भाष्यम्

इत्यादिवचनैश्च हिंसादिरहितेन स्तुतिनमस्कारादि कर्तव्यमिति दर्शयितुं विश्वशब्देन ब्रह्माभिधीयत इति वा ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ! ॥ इति ।

(भ. गी. ११-५५)

न चलति निजवर्णधर्मतो यः
समम‌तिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चि[1]दुच्चैः
स्थितमनसं तमवेहि विष्णुभक्तम् ॥

(वि. पु. ३-७-२०)

विवृतिः

एवमादिवचनैश्च चराचरात्मकं विश्वं विष्णुरेवेति ज्ञात्वा अहिंसकेन स्तुतिनमस्कारादि कार्यमित्येवमर्थमादौ विश्वशब्देन विष्णोरुक्तिरिति प्रयोजनमाह—इत्यादिवचनैरिति । इति वेति वाशब्दो विश्वग्रहणस्य प्रयोजनान्तरप्रदर्शनार्थः ॥

विष्णुभक्तलक्षणप्रतिपादकवचनपर्यालोचनयापि विष्णुस्तुत्यादिकं हिंसारहितेन कर्तव्यमिति वक्तुं तल्लक्षणप्रतिपादकवचनान्युदाहरति—मत्कर्मकृदित्यादि । अत्र सर्वभूतेषु शत्रुभावराहित्यं प्रकृतेऽपेक्षितं लक्षणमुक्तम् । न चलतीति । विष्णोरियमाज्ञेत्येवं क्रियमाणस्वधर्मो विष्णुं प्रीणयन् सत्त्वशुद्धिद्वारा तद्भक्तिहेतुः । अतः स्वधर्मनिष्ठा तद्भक्तिचिह्नम् । शुद्धसत्त्वस्य च रागाद्यभावादात्मनः सुहृत्पक्षे विपक्ष-

---

[1] अत्र श्रीधरीये "उच्चैरसितमनसं" इति पाठं गृहीत्वा 'उच्चैरतिशयेन सितं स्वच्छं रागादिरहितं मनो यस्य तं' इति व्याख्यातम् ।

भाष्यम्

विमलमतिरमत्सरः प्रशान्तः
[1] शुभचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो
वसति सदा हृदि तस्य वासुदेवः ॥
वसति हृदि सनातने च तस्मि-
न्भवति पुमाञ्जगतोऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव सालपोतः ॥

(वि. पु. ३-७-२४, २५)

सकलमिदमहं च वासुदेवः
परमपुमान्परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान्विहाय दूरात् ॥

(वि. पु. ३-७-३२)

विवृतिः

पक्षे च सममतित्वं परस्वहरणहिंसानिवृत्तिश्च भवति । तदपि तस्य चिह्नम् । एवं स्वधर्मनिष्ठा सममतित्वं परस्वहरणहिंसानिवृत्तिश्च भक्तलक्षणमित्यर्थः । विमलमतिरिति तूक्तस्यैव प्रपञ्चः । शुभं चरितं अद्रोहादिरूपं यस्य स तथा । अस्ते निरस्ते मानमाये—गर्व-दम्भौ येन स तथा । प्रसन्नरूपतापि विष्णुभक्तचिह्नमित्याह—**वसतीति** । सर्वत्रेश्वरदृष्टिरेकान्तभक्तिचिह्नमित्याह—**सकलमिति** ॥

---

[1] शुचिचरितो—**पा.**

भाष्यम्

यमनियमविधूतकल्मषाणा-
मनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां
व्रज भट ! दूरतरेण मानवानाम् ॥
(वि. पु. ३-७-२६)

इत्यादिवचनैर्वैष्णवलक्षणस्यैवंप्रकारत्वाच्च हिंसादिरहितेन विष्णोः स्तुतिनमस्कारादि कर्तव्यमिति । "श्रद्धया देयम् । अश्रद्धयादेयम् ।" (तै. उ. १-११) "श्रद्धयाग्निः समिध्यते" (तै. ब्रा. २-८-८) इति श्रुतेः ।

विवृतिः

**यमनियमेति ।** अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः । तैर्विधूतं कल्मषं येषां ते तथोक्ताः । अच्युते सक्तं—धारणाध्यानसमाधियुक्तं मानसं—मनो येषां ते तथोक्ताः । मदः—धनवत्त्वादिप्रयुक्तो हर्षः । मानः—पूज्यत्वाभिमानः । विद्याधनादिना अस्य सदृशो भवामीति बुद्धिः मत्सरः । ते अपगता येभ्यस्ते तथेत्यर्थः । **एवंप्रकारत्वादिति ।** निर्वैरत्वसममतित्वा—हिंसकत्वामत्सरत्वादिलक्षणत्वादित्यर्थः । **हिंसादिरहितेनेति ।** भक्तिलक्षणपर्यालोचनयापि विष्णुस्तुतिनमस्कारादि हिंसारहितेन कर्तव्यमित्यर्थः । श्रद्धयैव स्तुतिनमस्कारादि कर्तव्यमिति श्रद्धाया अङ्गत्वं वक्तुं श्रुतिस्मृतीरुदाहरति—**श्रद्धयेत्यादि ।** यदा धनं विप्राय दीयते तदा श्रद्धालुनैव दातव्यमित्यर्थः । **श्रद्धयेति ।** अग्निः—आहवनीयादिः, अग्निहोत्रादिकर्मार्थं **श्रद्धया समिध्यत** इत्यर्थः ॥

भाष्यम्

अश्रोत्रियं श्राद्धमधीतमव्रत-
मदक्षिणं यज्ञमनृत्विजा हुतम् ।
अश्रद्धया दत्तमसंस्कृतं हवि-
र्भागाष्षडेते तव दैत्यसत्तम ! ॥

पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा ।
क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणाम् ॥

अश्रद्धया च यद्दानं ददतां यजतां तथा ।
तत्सर्वं तव दैत्येन्द्र ! मत्प्रसादाद्भविष्यति ॥

विवृतिः

**अश्रोत्रियमिति ।** अश्रोत्रियभोक्तृकं श्राद्धमित्यर्थः । **अधीतमव्रतं**–नियमरहितमध्ययनं, **अनृत्विजा हुतं**–ऋत्विग्भिन्नकर्तृको होमः, **अश्रद्धया दत्तं**–श्रद्धारहितं दानं, **असंस्कृतं**—संस्काररहितं, **हविः**–पुरोडाशादि, **अश्रोत्रियं श्राद्धमि**त्येवमादयः **षड्भागाः तव** भवन्त्विति विष्णोर्वचनं बलिं प्रति । अन्यदपि पुण्यं तव भवत्वित्याह— **पुण्यं मद्द्वेषिणामिति ।** क्रयविक्रयसक्तानामित्येतत् अग्निहोत्रिणामित्यस्य विशेषणम् । **ददतां [1] यजतामिति ।** अश्रद्धया ददतां यद्दानं यजतां च यद्यजनं तदपीत्यर्थः ॥

---

[1] यज्वनामिति–**पा.**

भाष्यम्

*[ विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति ये ते चण्डालतां गताः ॥
ब्राह्मणो वैष्णवो ज्ञेयो न ह्यस्मादन्यदेवता ।
मातृवत्परिरक्षन्तं जगत्स्रष्टारमीश्वरम् ।
यो हि नार्चयते मूढस्तमाहुर्ब्रह्मघातकम् ॥
वृथा जप्तं वृथा दत्तं वृथा चेष्टं वृथा हुतम् ।
वृथा तप्यं च तप्तं च यो न भक्तो मयि द्विजः ॥
यत्कृतं च हुतं चापि यदिष्टं दत्तमेव वा ।
अवैष्णवकृतं सर्वं राक्षसा एव भुञ्जते ॥
इति महाभारते ।]
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ! न च तत्प्रेत्य नो इह ॥
(भ. गी. १७-२८)

इत्यादिस्मृतिभ्यश्च [1] श्रद्धयैव स्तुतिनमस्कारादि कर्तव्यम् । नाश्रद्धया ॥

विवृतिः

**अश्रद्धया हुतमिति** । होमदानतपांसि अश्रद्धया कृतानीत्यर्थः । **कृतं च यदिति** । स्तुतिनमस्कारादि तत्सर्वं असदित्युच्यते । ऐहिकामुष्मिकफलराहित्यादित्यर्थः । उक्तश्रुतिस्मृतिभिः श्रद्धयैव स्तुतिनमस्कारादि कर्तव्यमित्याह—**श्रद्धयैवेति** ॥

*[ ] एतच्चिह्नान्तर्गतः पाठोऽमुद्रितोऽधिको दृश्यते । अस्य विवृतिर्नोपलभ्यते ।

[1] भक्त्या श्रद्धया च स्तु—**पा.**

भाष्यम्

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
(भ. गी. १७-२३)

इति भगवद्वचनात् स्तुतिनमस्कारादिकं कर्म असात्त्विकं विगुणमपि [1]श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं सम्पादितं भवति। आत्मानं विष्णुं ध्यात्वा स्तुतिनमस्कारादि कर्तव्यम् ।

नाविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् ।
नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात् ॥
इति महाभारते कर्मकाण्डे ।

विवृतिः

विहितानां श्रौतस्मार्तकर्मणां स्तुतिनमस्कारादेश्च श्रद्धाद्यङ्गवैकल्ये किं समाधानमित्याशङ्क्याह—**ओं तत्सदिति**। "ओमिति ब्रह्म" (तै. उ. १-८) "तत्त्वमसि" (छा. उ. ६-१२-७) "सदेव" (छा. उ. ६-६-१) इत्यादौ [2]ओङ्कारादीनां ब्रह्मनामत्वदर्शनात् यज्ञादीनां स्तुतिनमस्कारादेश्च वैगुण्यप्रतीतिकाले यथोक्तनामोच्चारणादवैगुण्यं सिद्ध्यतीत्यर्थः । **असात्त्विकं**—राजसतामसान्यतरात्मकमित्यर्थः । **विगुणं**—अङ्गविकलमित्यर्थः ॥

'विष्णुरहमस्मि' इत्यभेदभावनापूर्वकमर्चनादि कर्तव्यमित्याह—**आत्मानमिति**। अत्र प्रमाणमाह—**नाविष्णुरित्यादि**। द्वौ नञौ प्रकृतमर्थं [3]गमयत इति विष्णुरेवाहमिति भावनावान् कीर्तनादि कुर्यादित्यर्थः । **नाविष्णुर्विष्णुमिति**। "ब्रह्मैव सन् ब्रह्माप्येति"

---

[1] भक्तिश्रद्धा—**पा.** [2] ब्रह्मनामत्व—**पा.** [3] अत्र द्रढयत इति वा स्यात्.

भाष्यम्

सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ! ।
एवमेतानि नामानि देवदेवस्य कीर्तयेत् ॥
यं यं काममभिध्यायेत्तं तमाप्नोत्यसंशयम् ।
सर्वान् कामानवाप्नोति समाराध्य जगद्गुरुम् ॥
तन्मयत्वेन गोविन्दमित्येतद्दाल्भ्य ! नान्यथा ।
तन्मयो वाञ्छितान् कामान् पदमाप्नोति मानवः ॥
इति विष्णुधर्मे । (वि. ध. ४१-४२-४५)

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
इति भगवद्गीतासु । (भ. गी. ६-३१)

अहं हरिः सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।

विवृतिः

(बृह. उ. ४-४-६) इति श्रुत्या अन्यस्य अन्यात्मत्वायोगात् "नाहं विष्णुः" इति भ्रान्तिप्रतिपन्नभेदनिवृत्तिमात्रेण विष्णुं प्राप्नोतीत्युच्यत इत्यर्थः । सर्वाण्येतानीति । वासुदेवाच्युतानन्तेत्यादिशब्दाः पूर्वोक्ता एतच्छब्देन परामृश्यन्ते । तन्मयत्वेन–अभेदेन, जगद्गुरुं गोविन्दं समाराध्येति योजना । अत्र तन्मयशब्देनाभेदचिन्तनमुक्तमिति बोध्यम् । सर्वभूतेति । अत्र एकत्वमास्थितो भजतीत्यनेनाभेदचिन्तनमुक्तम् । अहं हरिरिति । इदं सर्वं–यद्दृश्यं चराचरात्मकं जगत्, तत् हरिरेव । अहमपि हरिरेव । कारणकार्यजातं—कार्यकार-

भाष्यम्

**ईदृङ्मनो यस्य न तस्य भूयो**
**भवोद्भवा द्वन्द्वगदा भवन्ति ॥**
**इति विष्णुपुराणे । (वि. पु. १-२२-८७)**

**गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।**
**कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥**
**इति मनुवचनम् । (मनु. २-२००)**

**" तस्माद्ब्रह्मैवाचार्यरूपेणावतिष्ठते " इति व्यासस्मृतेः ।**

**वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः ।**

विवृतिः

णात्मकः अविद्यादिजडप्रपञ्चोऽपि, ततः—हरेः, अन्यत् न । **ईदृङ्मनः**—एवं निश्चयः, **यस्य तस्य भवोद्भवाः**—भवतीति भवो देहः, तस्माद्भवन्तीति भवोद्भवाः, **द्वन्द्वगदाः**—रागद्वेषादयो हृद्रोगाः, **न भवन्ती**त्यर्थः । अत्र ' अहं हरिः ' इत्यनेनाभेदानुसन्धानमुक्तम् ॥

भगवद्भक्तेन स्वस्य भगवद्धर्मोपदेष्टृगुरुनिन्दादिकं न श्रोतव्यम् । तत्र प्रमाणमाह—**गुरोर्यत्रेति** । अत्र निन्दापरीवादयोः सदसद्दोषविषयकत्वेन भेदो बोद्धव्यः । ब्रह्मण एवाचार्यरूपेणावस्थानाच्च न तन्निन्दादि श्रोतव्यमित्याह—**तस्माद्ब्रह्मैवेति** । यत्र च वासुदेवनिन्दा न तत्र वासुदेवभक्तेन वासः कार्यः । अत्र प्रमाणमाह—**वरमिति**—हुतवहस्य—अग्नेर्ज्वालामयस्य [1] पुञ्जस्य **अन्तर्व्यवस्थितिः**—अन्तरवस्थानं, **वरं**—श्रेष्ठम् । शौरिचिन्ताविमुखेषु—तन्निन्दापरेषु जनेषु यः संवासः स एव वैशसं—हिंसा, तन्न वरमित्यर्थः ॥

---

[1] पञ्जरस्य—**पा.**

भाष्यम्

न शौरिचिन्ताविमुखजनसंवासवैशसम् ।।

इति कात्यायनवचनात्, यत्र देशे वासुदेवनिन्दा तत्र वासो न कर्तव्यः । एतदुक्तं भवति—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।
(श्वे. उ. ६-२३)

इति श्वेताश्वतरोपनिषन्मन्त्रवर्णात् हरौ गुरौ च परा भक्तिः कार्येति ।

विवृतिः

ननु हरिगुरुनिन्दाश्रवणं कुतो वर्जनीयमित्याशङ्क्य तन्निन्दा-[1]श्रवणात्तद्भक्तेरुपहतिः स्यात्, तदुपहतौ चोपदिष्टार्थनिश्चयो न स्यादित्यभिप्रेत्य ज्ञानसाधनत्वेन हरिगुरुभक्ती [2]अवश्यकर्तव्ये इत्याह—**एतदुक्तमिति** । **एतदुक्तं भवती**त्यस्य हरौ गुरौ च परमा भक्तिः कार्येत्यनेनोत्तरवाक्येन सम्बन्धः ॥

तद्भक्त्योः कर्तव्यत्वे प्रमाणमाह—**यस्येति** । [3]**यस्य**—पुरुषस्य, **देवे**—परमेश्वरे, **परा**—निरुपाधिका, **भक्तिः यथा देवे तथा** निरुपाधिका भक्तिरेव **गुरावपि** विद्यते । गुरुदेवतयोरेकत्वबुद्ध्या सेवमानस्य **तस्य**—देवतागुरूपासनविषयनिरुपाधिकभक्तिमतः योग्याधिकारिणः, **एते कथिताः**—अस्यामुपनिषदि भगवता श्वेताश्वतरेणोपादिष्टाः, **हि**—यस्मात्, **अर्थाः प्रकाशन्ते**—यथावत्प्रकाशन्ते, **महात्मनः**—महानुभावस्य, नान्यस्येति यस्मात्तस्माद्विद्यार्थिभिः देवतागुरुविषयनिरुपाधिकभक्तिः कार्येत्यर्थः ॥

---

[1] श्रवणे त—**पा.** [2] अवश्यं क—**पा.** [3] यस्य देवे—**पा.**

भाष्यम्

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥
(वि. पु. ६-८-१९)

ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥
(वि. पु. ६-८-२१)

सकृत् स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ।
पापराशिं दहत्याशु तूलराशिमिवानलः ॥
*[सेयं वदनवल्मीकवासिनी रसनोरगी ।
या न गोविन्द ! गोविन्द ! गोविन्देति प्रभाषते ॥
पापवल्ली मुखे तस्य जिह्वारूपेण तिष्ठति ।
या न वक्ति दिवारात्रौ गुणान् गोविन्दसम्भवान् ॥]

विवृतिः

श्रद्धाभक्त्यो[1]रभावेऽपि भगवन्नामकीर्तनं दुरितानि दूरीकरोतीति नामकीर्तनविषये [2]विशेषं वक्तुं वचनान्युदाहरति–**अवशेनापीति**। अत्र अवशेनापीत्यनेन श्रद्धाद्यनपेक्षा दर्शिता । [3]श्लोकस्तु व्याख्यातः । **ज्ञानत** इति । अज्ञानत इत्यनेन श्रद्धाद्यनपेक्षा उक्ता । "कलिकल्मष-मत्युग्रं" (वि. पु. ६-८-२१) "सकृत्स्मृतोऽपि गोविन्दः" इति श्लोकद्वयं स्मरणस्य कीर्तनान्तर्भावमभिप्रेत्योक्तम् । अत्र श्लोकद्वये

*[] एतच्चिह्नान्तर्गतस्य श्लोकद्वयस्य विवृतिर्न दृश्यते ।

[1] रभावे–**पा.** [2] विशेषं वचनं वक्तुं–**पा.** [3] अस्मिन् ग्रन्थे २५ तमपुटे व्याख्यानं द्रष्टव्यम् ।

भाष्यम्

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥

एकोऽपि कृष्णे सुकृतः प्रणामो
दशाश्वमेधावभृतेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥

*["गोविन्देति हरेर्नाम गेयं गायस्व नित्यशः"। "ध्यायन् कृते यजन्" इत्यादि। "नारायणेति शब्दोऽस्ति" इत्यादि ।

नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः शोकनाशनः । इति ॥
" कमलनयन ! वासुदेव ! विष्णो ! " इत्यादि ।
गोकोटिदानं ग्रहणे जनस्य
प्रयागगङ्गायुतकल्पवासः ।

विवृतिः

सकृदित्यनेन [1]तदावृत्त्यनपेक्षा सूचिता । वस्त्रादिना गात्रबन्धः **परिकरः** ॥

भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः ।
प्रगाढे गात्रिकाबन्धे विवेकारम्भयोरपि ॥ इति विश्वः ॥

[2]यथा ग्रामं जिगमिषुः वस्त्रेण कट्यादिकं बध्नाति तद्वन्मोक्षार्थ-गमनं प्रति हरिनामाक्षरद्वयोच्चारणरूपः परिकरो **बद्ध** इत्यर्थः । अत्रापि सकृच्छब्देन [3]तदावृत्त्यनपेक्षा सूचिता । **एकोऽपीति** । **अयं**

*[]एतच्चिह्नान्तर्गतः पाठोऽमुद्रितोऽधिको दृश्यते । अस्य विवृतिर्नोपलभ्यते ।

[1] तदनपेक्षा–**पा.** [2] यथाग्रं जि–**पा.** [3] तदनपेक्षा–**पा.**

भाष्यम्

यज्ञायुतं मेरुसुवर्णदानं
　गोविन्दकीर्त्या न समं शतांशे ॥
हत्यायुतं पानसहस्रमुग्रं
　गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयान्यसङ्ख्यानि हरेः प्रियेण
　गोविन्दनाम्ना निहतानि सद्यः ॥] इत्यादिवचनैः

विवृतिः

श्लोकः प्रसङ्गादत्र पठितः । भाष्ये स्तुतिनमस्कारादिषु श्रद्धाद्यपेक्षायाः पूर्वमुक्तत्वादिति बोध्यम् । "एकोऽपि कृष्णे सुकृतः" इति पाठे श्रद्धाद्यपेक्षायाः सूचनाद्वैधर्म्योदाहरणं वा । **इत्यादिवचनैरित्यादि**शब्देन—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥

(भाग. ६–२–७. ८)

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनाम[1]स्मरणमशेषाघहरं विदुः ॥
पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाः ॥

(भाग. ६-२-१४, १५)

---

[1] ग्रहणम—पा.

## विवृतिः

अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्तितमघं [1] पुंसां दहेदेधो यथाऽनलः ॥
यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानताप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥

(भाग. ६-२-१८, १९)

तस्मात्सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
महतामपि कौरव्य ! विद्ध्यैकान्तिकनिष्कृतिम् ॥

इति भागवते पराशरः ।

शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
शान्तिः कलेरघौघस्य नामसङ्कीर्तनं हरेः ॥ इत्येवमादयो गृह्यन्ते ॥

अयं हीत्यादिश्लोकानामयमर्थः— कृतनिर्वेशः–कृतो निर्वेशो भोगो येन स तथा । "निर्वेशो भृतिभोगयोः" (नाम. ३-३-२१६) इत्यमरः । कर्मनाशकत्वाविशेषात्प्रायश्चित्तं निर्वेश इत्युपचर्यते । जन्मकोट्यंहसामपि कृतनिर्वेशः–कृतप्रायश्चित्त इत्यर्थः । यद्व्याजहारेति । विवशोऽपि हरेर्नाम व्याजहार–कीर्तितवानिति यस्मादित्यर्थः । एतेनैवेति । अघोनः—अघौघवतः, अस्य-अजामिलस्य, अघनिष्कृतं–प्रायश्चित्तम् । नारायणायेत्यत्र नारायण आयेति छेदः । (यत्) नारायण ! आय-आगच्छेति भगवन्नाम चतुरक्षरं आजगाद–ईषदव्यक्तमुच्चरितवान् इति यत् एतेनैव–एतदुच्चारणेनैव अघनिष्कृतं कृतमित्यन्वयः । "यदा नारायणेत्येतज्जगाद चतुरक्षरम्" इति पाठः सुगमः । यदा जगाद तदैवेति योजना । अत्र चतुरक्षरमित्याधिक्यं दर्शितम् ।

---

[1] पुंसो द–**पा.**

## विवृतिः

तदपबाधनीयस्य हि तन्नामैकाक्षरमात्रेणापि बाध्यता भवति । यथा श्रीरामायणे मारीचः—

रकारादीनि नामानि रामत्रस्तस्य रावण ! ।
रत्नानि च रथाश्चैव [1]सन्त्रासं जनयन्ति मे ॥ इति

(वा. रा. ३-३९-१८)

अक्षरमिति तदर्थानुस्मरणादिनिरपेक्षत्वमुक्तम् ॥

साङ्केत्यमिति । सङ्केत्यं पुत्रादिषु कृतसङ्केतं, पारिहास्यं—परिहासप्रयोजनं, स्तोभं—गीतादिपूरणार्थं, हेलनं—परविडम्बनार्थम् । पतित इति । पतितः उच्चात्, स्खलितो मार्गे, भग्नः—पतनादिना भग्नाङ्गः, सन्दष्टः सर्पादिना, आहतो दण्डादिना, अवशेन—प्रमादेनापि, आह यः कश्चित् पुमानिति वर्णाश्रमादिविशेषानपेक्षा दर्शिता । अज्ञानादिति । अग्निदृष्टान्तः सर्वत्र नाम्नः अक्षय्य[2]पापानवशेषार्थः । यथेति । अगदं—रोगहरमौषधम्, वीर्यतमं—वीर्यवत्तमम्, तद्गुणमजानता यदृच्छयाप्युपयुक्तं—भक्षितं, आत्मगुणं रोगशमनं कुर्यात् तथा मन्त्रोऽपि—भगवन्नामापि, मन्त्रवद्रहस्यत्वात् भगवन्मननहेतुत्वाद्वा मन्त्र[3] इत्युक्तः । आत्मगुणमजानताप्युदाहृतः स्वगुणं-अघक्षयादिकं कुर्यादिति योजना । तस्मादिति । महतामप्यंहसां—पातकानां ऐकान्तिकनिष्कृतिं—प्रायश्चित्तं विद्धीत्यर्थः । शमायालमिति । वह्नेः शमाय जलं पर्याप्तम् । एवं सर्वत्र शमायालमिति पदद्वयं सम्बध्यते । कलेः—कलहस्य, क्षान्तिः-क्षमा, अघौघस्य शमाय हरेः नामसङ्कीर्तनं अलं—पर्याप्तमित्यर्थः ॥

---

[1] त्रासं सञ्जन—पा, वित्रासं जन—पा. [2] पावनविशेषार्थः—पा. [3] इत्युक्तिः—पा.

भाष्यम्

**श्रद्धाभक्तयोरभावेऽपि नामसङ्कीर्तनं समस्तं दुरितं नाशयतीत्युक्तम्। किमुत श्रद्धापूर्वकं सहस्रनामसङ्कीर्तनं नाशयतीति। "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्यवहरति" "यद्धि मनसा ध्यायति तद्वाचा वदति" (तै. सं. ६-१-७) इति श्रुतिभ्यां स्मरणं ध्यानं च नामसङ्कीर्तनान्तर्भूतम्। अत एव सहस्रनामस्मरणादिना सकलपुरुषार्थसिद्धिर्भवतीति मन्तव्यम्॥**

**यस्मिन्न्यस्तमतिर्न याति नरकं, स्वर्गोऽपि यच्चिन्तने।**
**विघ्नो, यत्र निवेशिते च मनसि ब्राह्मोऽपि लोकोऽल्पकः।**

विवृतिः

अवशेनापीत्यादिवचनैः श्रद्धाद्यभावेऽपि सकृदनुष्ठितमपि नामकीर्तनं समस्तदुरितनाशकम्, श्रद्धादिपूर्वकं सहस्रनामसङ्कीर्तनं समस्तदुरितनाशकमिति किमु वक्तव्यमिति कैमुतिकन्यायमाह—**श्रद्धाभक्तयोरभावेऽपीति**। एवं नामकीर्तनमात्रस्य श्रद्धाद्यभावेऽपि सकलाघघस्मरतामुक्त्वा पापनिवृत्तौ स्वतन्त्रकारणयोः स्मरणध्यानयोर्नामकीर्तनानुषङ्गिकत्वेन वाङ्मनसव्यापाराभ्यां पापं विलीयत इति किं चित्रमिति कैमुतिकन्यायमाह—**स्मरणं ध्यानं च नामकीर्तनान्तर्भूतमिति**। कीर्तनानुषङ्गिकत्वे स्मरणध्यानयोरैतरेयतैत्तिरीयकश्रुती उदाहरति—**मनसा वा अग्र इत्यादि**॥

विष्णोः स्तुत्यादिलक्षणस्य धर्मस्येतरधर्मेभ्य आधिक्ये पूर्वं हिंसाद्यनपेक्षत्वं कारणमुक्तम्। इदानीमनेकप्रमाणैककण्ठ्यादप्याधिक्यं वक्तुं प्रमाणान्युदाहरति—**यस्मिन्नित्यादि**। "न्यस्तमतिः" इत्यनेन मतिन्यासो धारणोक्ता। "स्वर्गोऽपि यच्चिन्तने" इत्यनेन ध्यानमुक्तम्।

## भाष्यम्

## मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः

## विवृतिः

"निवेशित च मनसि" इत्यनेन मनोनिवेशः समाधिरुक्तः। "चेतसि यः स्थितः" इत्यनेन भगवतश्चेतसि स्थितिः साक्षात्कार उक्तः। "यस्मिन् न्यस्तमतिर्न यति नरकं" इति स्मृतिमात्रेणारब्धफलमपि पापं क्षीयत इत्युक्तं भवति। अत्र प्रह्लाद उदाहरणम्। यथा—

विष्णुः शस्त्रेषु युष्मासु मयि चासौ [1]व्यवस्थितः।
[2]दैतेयास्तेन सत्येन मा क्रामन्त्वायुधानि [3]मे॥

(वि. पु. १-१७-३३)

इत्यादिना विष्णुं स्मरन् प्रह्लादः। एवं सति यत्र मनोमात्रव्यापारस्यैतावत्फलं नान्तरीयकम्, मुक्तिरेव परं फलम्, तस्मिन्नच्युते कीर्तिते तद्विषयमनोव्यापारोऽपि आनुषङ्गिक इति वाङ्मनसव्यापाराभ्यां पापं विलीयत इति किं चित्रम्? भगवत्स्मरणमनपेक्ष्य केवलं नामसङ्कीर्तनमेवाघक्षयसाधनमाधिकमित्यर्थः॥

श्रीधराचार्यास्तु—[4]हरिकीर्तनमात्रेण सर्वपापक्षयो [5]भवतीत्यत्र कैमुतिकन्यायमाह—**यस्मिन्निति**। न्यस्ता—निक्षिप्ता मतिर्येन, अच्युतैकचित्त इति यावत्। प्रमादकृतैरघैर्नरकं न याति। तस्मिन् पापसंश्ले[6]षाभावात्। यस्य चिन्तने—ध्याने क्रियमाणे स्वर्गप्राप्तिरपि विघ्नप्राया, *यस्मिन्निवेशित आत्मा मनश्च समाधिना येन तस्य ब्रह्मलोकोऽप्यतितुच्छः। यथाकथञ्चिदपि यश्चेतसि स्थितो मुक्तिमेव ददाति। यदैवं

[1] यथास्थितः—**पा.** [2] तथा तेनाद्य स—**पा.** [3] नि वः—**पा.** [4] हरेः कीर्त—**पा.**
[5] भवतीति यदुक्तं तत्कैमुतिकन्यायेनोपपादयति—यस्मिन्निति—**पा.** [6] षासम्भवात्—**पा.**

* एतच्छ्रीधरीयानुरोधेन "यस्मिन्" इत्यादिश्लोके "निवेशितात्ममनसः" इति पाठः स्यात्।

भाष्यम्

किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥
(वि. पु. ६-८-५७)

इति विष्णुपुराणे श्रीपराशरेणोपसंहृतम् ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

इति महाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् ।

"हरिरेकः सदा ध्येयो भवद्भिः सत्वसंस्थितैः ।"
"ओमित्येवं सदा विप्राः! पठत ध्यात केशवम् ॥"

विवृतिः

[1] स्वार्थमेव केवलं मनोमात्रेणाच्युतनिष्ठानामीदृशं फलगौरवं, तदा नामकीर्तनेन [2] परेषामप्यघं क्षपयतां [3] स्वकीयाघनाशे किं चित्रमित्यर्थ इत्याहुः । उपसंहृतमिति । तथा च अयमेव कीर्तनादिरूपो धर्मो विष्णुपुराणतात्पर्यविषय इत्यर्थः ॥

आलोड्येति । *उपक्रमादितात्पर्यलिङ्गानि निश्चित्य विचार्य—तैर्लिङ्गैस्तात्पर्यं निश्चित्य ध्येयो नारायणः सदा इति यत्, इदमेकं सुनिष्पन्नं—ध्यानरूपो धर्मो निश्चित इत्यर्थः । उपसंहृतामिति । तथा च तत्तात्पर्यमित्यर्थः । हरिवंशवचनपर्यालोचनयापि ध्यानादिः सर्वेभ्यो धर्मेभ्योऽधिको धर्म इत्याह—हरिरिति । "नान्यो जगति देवोऽस्ति विष्णोर्नारायणात्परः ॥" इति हरिरेक इत्यस्योत्तरार्धम् । "तत्र वः श्रेयसः प्राप्तिर्भविष्यति न संशयः॥"इति ओमित्येतस्योत्तरार्धम् ।

---

[1] स्वार्थं केवलं—पा. [2] परेषामप्यघं विलयं प्रयाति स्वकीय—पा. [3] स्वकीयाघनाशः किं—पा.

* अत्र "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥" इत्युक्तानि उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्गानि ग्राह्याणि ।

## स्तोत्रम्

# विष्णुः

### भाष्यम्

इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं श्रीमहेश्वरेणापि। एतत्सर्वमभिप्रेत्य "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः" इत्याधिक्यमुक्तम् ॥

"किमेकं दैवतं" इत्यारभ्य "किं जपन्मुच्यते जन्तुः" इति षट्प्रश्नेषु "यतः सर्वाणि" इति प्रश्नोत्तराभ्यां यद्ब्रह्मोक्तं तद्विश्वशब्देनोच्यत इति व्याख्यातं विश्वम्। तत्किमित्याकाङ्क्षायामाह—विष्णुरिति। तथा च ऋग्वेदे—

### विवृतिः

**एतत्सर्वमिति।** अनेकप्रमाणतात्पर्यविषयत्वमित्यर्थः। "सर्वं खल्विदं ब्रह्म" (छा. उ. ३-१४-१) इत्यारभ्य "किमेकं दैवतम्" इत्यादिर्विष्णुनामव्याख्यानारम्भप्राचीनो भाष्यग्रन्थः केषुचित् [1]कोशेषु न दृश्यते। केषुचिद्दृष्टत्वाद्व्याख्यातः ॥

एवं प्रासङ्गिकं परिसमाप्य नामान्तरं निर्वक्तुं पूर्वोक्तमनुवदति—**किमेकं दैवतमिति। व्याख्यातमिति।** कारणरूपेण कार्यरूपेण च तद्ब्रह्म विश्वशब्देन प्रतिपाद्यत इति व्याख्यातमित्यर्थः। ***विश्वमिति।** विश्वशब्देनोक्तं वस्त्वित्यर्थः। **विष्णुरितीति।** तथा च नामसहस्रप्रति-

[1] पुस्तकेषु—**पा.**

* अत्र मपुस्तके तत्किमिति प्रतीकं दृश्यते। केषुचित्पुस्तकेषु भाष्ये व्याख्यातमित्यनन्तरं विश्वमिति पाठो, न दृश्यते। केषुचिच्च दृश्यते। विश्वमिति पाठानुरोधेनैवं प्रतीकग्रहणम्।

भाष्यम्

**" आस्य जानन्तो नाम चिद्विवक्तन ।**

**विवृतिः**

पाद्यं यदेकं दैवतं *जगज्जन्मादिकारणत्वरूपलक्षणलक्षितं विश्वशब्देन कार्यकारणात्मनोक्तं स विष्णुरित्यर्थः ॥

ननु विष्णुनामकीर्तनं सम्यग्ज्ञानावाप्तिसाधनं चेत् संसारबन्धनिवर्तकं स्यात्; तत्रैव किं मानमित्याशङ्क्य तत्र प्रमाणतया ऋङ्मन्त्रभागमुदाहरति—**आस्य जानन्त इति** । "तमुस्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन " इत्यृच उत्तरार्धं भाष्ये पठितम् । सम्पूर्णतया ऋचो व्याख्या कैश्चित्कृता । सा चेत्थम् । तं—प्रसिद्धम्, उ इत्यनर्थको निपातः । [1]पूर्व्यं—जगत्कारणं, हे जनाः! स्तोतारः—स्तुत, व्यत्ययेन लोडर्थे लुट् । सर्वानुदात्तत्वाच्च न [2]तृजन्तम् । तथात्वे "चितः" (पा. सू. ६-१-१६३) इत्यन्तोदात्तत्वं स्यात् । यथाविदः—गुणानामानन्त्येन स्वमतिपरिणामावधि, ऋतस्य गर्भं—वेदान्तप्रतिपाद्यं, 'जनुषा पिपर्तन' इति [3]स्तुतेः फलम् । जन्म पूर्यताम् । जन्मसमाप्तिः फलमिति भावः । स्तुत्यसम्भवे **जानन्तो** यूयं **अस्य**—परमात्मनः **नाम-चित्**—नामापि, **आविवक्तन**—वदत । एवं परानुद्दिश्योक्त्वा श्रुतयः स्वयमूचुः । एते †भवन्तु [4]मा वा ; वयं तु **ते**—तव **महः**—प्रकाशात्मकं, **सुमतिं**—शुद्धज्ञानात्मकं स्वरूपं, हे विष्णो ! **भजामहे**—सेवामह इति । भाष्यकारैरस्य मन्त्रभागस्य विष्णुनामकीर्तनस्य तदीयसम्य-

---

*इदं लक्षणं सच्चिदानन्दात्मकब्रह्मण एवेति "जन्माद्यस्य यतः" (ब्र.सू.) १–१–२) इत्यत्र भाष्ये "यतो वा" (तै. उ. ३–१.) इत्यादिवाक्यं विषयीकृत्य भगवत्पादैः व्यवस्थापितम् । † अत्र वदन्तु इति स्यात्.

[1] पूर्वं—पा. [2] तृजन्तम्, यथाविदः—पा. [3] श्रुतेः-पा. [4] मा वा भवन्तु—पा.

भाष्यम्

**महस्ते विष्णो! सुमतिं भजामहे " ॥**

**(ऋ. सं. १–१५६–३)**

**इत्यादिवाक्यैर्विष्णोर्नामसङ्कीर्तनेन सम्यग्ज्ञानप्राप्तिर्विहिता । वेवेष्टि–व्याप्नोतीति विष्णुः । विषेर्व्याप्त्यर्थाभिधायिनो नुक्प्रत्ययान्तस्य रूपम् । देशकालवस्तुपरिच्छेदशून्य इत्यर्थः ।**

विवृतिः

ज्ञानसाधनत्वे प्रमाणतयोपन्यासात् नाम[1]कीर्तनफलसम्यग्ज्ञान[2]परतयोत्तरार्धं व्याख्यायते––अथैवमपि स्तोतुमसमर्थः **अस्य**–भगवतः **नाम-चित्**–नामान्यपि **विवक्तन**–कीर्तयत । हे **विष्णो!**—व्यापक!, **ते महः**–त्वत्स्वरूपप्रकाशिकां, **सुमतिं**–साक्षात्काररूपां, **भजामहे** । अत्रापि लकारव्यत्ययश्छान्दसः । भजेमहीति–ब्रह्मविद्यामाशासाना नामानि [3]कीर्तयेमेत्यर्थः । आदिशब्देन "प्र तत्ते अद्य शिपिविष्ट नाम " ([4]ऋ. सं. ७-१००-५) "कस्य नूनं कतमस्य " (ऋ. सं. १-२४-१) "किं जप्येनामृतत्वं ब्रूहि " इत्युपक्रम्य "एतानि ह वा अमृतस्य नामधेयानि । एतैर्ह वा अमृतो भवति " (जाबा. उ. ३) इत्यादिमन्त्रार्थवादा गृह्यन्ते ॥

वेवेष्टि–व्याप्नोतीति विष्णुः । "विष्लृव्याप्तौ " इत्यस्माद्धातोः "दाभाभ्यां नुः " (उणा. ३१२) इत्यधिकारे "विषेः किच्च " (उणा. ३१९) इति नुप्रत्ययः किदित्यभिप्रेत्य विष्णुनाम निर्वक्ति—**वेवेष्टीति । विषेरिति** । व्यापकत्वे श्रुतिमाह—

---

[1] कीर्तनं फल–**पा.** [2] नफलतयो–**पा.** [3] कीर्तयतेत्यर्थः–**पा.** [4] (साम. १६२६, तै. सं. २-२-१२-५).

भाष्यम्

*[आस्य जानन्तो नाम चिद्विवक्तन। महस्ते विष्णो सुमतिं भजामहे। (ऋ. सं. १-१५६-३) "किमित्ते विष्णो परिचक्ष्यं-भूत्" (ऋ. सं. ७-१००-६) "इदं विष्णुर्विचक्रमे" (ऋ. सं १-२२-१७) "त्रीणि पदा विचक्रमे" (ऋ. सं. १-२२-१८) "विष्णु-र्गोपाः परमम्" (ऋ. सं. ३-५५-१०) "विष्णोः कर्माणि पश्यत" (ऋ. सं. १-२२-१९) "तद्विष्णोः परमं पदम्"(ऋ. सं १-२२-२०)] "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।" (तै. उ. ४-१३) इत्यादि श्रुतेः। विशतेर्वा नुक्प्रत्यये रूपं विष्णुरिति।

यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।
तस्माद्विष्णुरिति ख्यातो विशेर्धातोः प्रवेशनात्॥"

इति विष्णुपुराणे। (वि. पु. ३-१-४५)

विवृतिः

अन्तर्बहिरिति। "विश प्रवेशने" इत्यस्माद्वा बाहुलकान्नुप्रत्ययः कित्। षकारश्चान्तादेशः पृषोदरादित्वात्। पृषोदरादित्वकल्पनामूलं तु विष्णुपुराणकृतनिर्वचनमेवेति बोध्यम्। [1]नुक्प्रत्ययो वा कल्पनीय इत्यभिप्रेत्य निर्वचनान्तरमाह—विशेरिति। इदं द्वितीयनिर्वचनं विष्णु-पुराणानुसारेण कृतम्। †तथा च विष्णुपुराणे—

" यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।
तस्मादेवोच्यते विष्णुर्विशेर्धातोः प्रवेशनात्॥"

(वि. पु. ३-१-४५) इति।

* [ ] एतच्चिह्नान्तर्गतः पाठोऽधिको दृश्यते। अस्य विवृतौ विवरणं नोपलभ्यते।
† तथेत्यारभ्य "प्रवेशनात्" इत्यन्तो भागः म. पुस्तके न दृश्यते.

[1] क्प्रत्य—पा.

भाष्यम्

**"व्याप्ते मे रोदसी पार्थ! कान्तिश्चाभ्यधिका स्थिता।"**
**क्रमणाच्चाप्यहं पार्थ! विष्णुरित्यभिसंज्ञितः॥"**

**इति महाभारते। (शान्तिपर्व अ. ३५०-४३)**

विवृतिः

अस्यायमर्थः—स्वायम्भुवादिमन्वन्तरेषु पृथक् पृथक् मनुर्मनुपुत्रा देवा इन्द्रः सप्तर्षयः इत्येवं पञ्चकमनुक्रान्तं यत् **तदिदं सर्वं तस्य महात्मनः**—वामनादिरूपेणावतीर्णस्य विष्णोः, **शक्त्या**—तेषां मन्वादीनां लोकरक्षादिनिर्वाहकतया, **विष्टं**—विष्णोः शक्तिः तान् विवेशेति यस्मात् **तस्मात्** सः प्रवेशार्थकविशधातुनिष्पन्नविष्णुशब्देनोच्यत इत्यर्थः॥

विष्णुशब्दस्य प्रथमनिरुक्तौ भारतानुसारित्वदर्शनाय निर्वचनान्तरदर्शनाय च मोक्षधर्मस्थं वचनं पठति—**व्याप्ते मे इति। मे**—मया, **रोदसी**—द्यावापृथिव्यौ, **व्याप्ते** इति। "विष्लृ व्याप्तौ" इति धातोर्नुप्रत्ययः। **कान्तिश्चाभ्यधिका।** अतो वा विष्णुः; वेति दीप्यत इति विग्रहे "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" इति कान्त्यर्थात् वीधातोः ष्णुप्रत्ययो ह्रस्वश्चेत्यस्मिन् पक्षे व्युत्पत्तिर्द्रष्टव्या। **क्रमणाच्चेति।** विशेषेण [1] क्रामतीति **विष्णुः।** विपूर्वात् *क्रमेः ष्णुप्रत्ययो धातुलोपश्च द्रष्टव्यः, पृषोदरादित्वादित्यर्थः॥

---

* अत्र "क्रमु पादविक्षेपे" इति धातुः.

[1] आक्रामतीति-**पा.**

## स्तोत्रम्

# वषट्कारः

### भाष्यम्

**यदुद्देशेनाध्वरे वषट्क्रियते स वषट्कारः। यस्मिन् यज्ञे वा वषट्क्रिया। "यज्ञो वै विष्णुः" (तै. सं. १-७-४) इति श्रुतेः। येन वषट्कारादिमन्त्रात्मना वा देवान् प्रीणयति स**

### विवृतिः

वषट्क्रियते यस्मै। *सम्प्रदाने घञ्। इन्द्राद्युद्देशेऽपि विष्णोः सर्वदेवतात्मकत्वादुद्देश्यत्वमित्याह—**यदुद्देशेनेति**। वषट्क्रियते यत्र। अधिकरणे घञ्। वषट्कारो यज्ञ इति व्युत्पत्त्यन्तरमाह—**यस्मिन्निति**। यच्छब्दानुसारेण तत्पदमत्र द्रष्टव्यम्। तथा च यस्मिन् यज्ञे वषट्क्रिया स यज्ञो वषट्कार इति योजना॥

ननु वषट्कारशब्दस्य यज्ञार्थकत्वेऽपि कथं विष्णुनामत्वमित्याशङ्क्य यज्ञस्य विष्ण्वात्मकत्वे श्रुतिमाह—**यज्ञो वा इति**। वषट्कारमन्त्ररूपेण वर्तमानो विष्णुर्वषट्कार इत्युच्यते। "मन्त्रोऽहमहमेवाज्यं" (भ. गी. ९-१६) इति भगवद्वचनादित्यभिप्रेत्य व्याख्यानान्तरमाह—**वषट्कारेत्यादि**। वषट्कारात्मनावस्थानस्य फलमाह—**देवान् प्रीणयतीति**। देवताप्रीतिहेतुभूतहवि[1]र्दानकरणत्वाद्वषट्कारस्येति भावः॥

---

* "अकर्तरि च कारके संज्ञायाम्" (पा. सू. ३-३-१९) इति सूत्रेण सम्प्रदाने घञ् बोध्यः.

[1] र्धानकणत्वेनेति भावः—**पा.**

स्तोत्रम्

## भूतभव्यभवत्प्रभुः ।

भाष्यम्

**वषट्कारः । देवता वा । "प्रजापतिश्च वषट्कारश्च" (ऐ. ब्रा. १-२-१०) इति श्रुतेः ।**

**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**
**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

**इत्यादिस्मृतेश्च ॥ (वि. स्मृ. श्लो. ३५)**

**भूतभव्यभवत्प्रभुः । भूतं भव्यं भवच्चेति भूतभव्यभवन्ति, तेषां प्रभुः । कालभेदमनादृत्य सन्मात्रप्रतियोगिक-**

विवृतिः

अर्थान्तरमाह—**देवता वेति** । वषट्कारशब्दस्य देवताविशेषपरत्वे बह्वृचब्राह्मणमुदाहरति—**प्रजापतिश्चेति** । बह्वृचब्राह्मणे हि "त्रयस्त्रिंशद्वै देवाः सोमपाः" इत्युपक्रम्य "अष्टौ वसवः" इत्यादिना "प्रजापतिश्च वषट्कारश्च" (ऐ. ब्रा. १-२-१०) इत्यन्तेन वषट्कारस्य देवताविशेषत्वोक्ते[1]स्तदात्मा विष्णुः वषट्कार इत्यर्थः ॥

**भूतमिति** । "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना भूधातोर्भूतार्थे कर्तरि क्तः । **भव्यमिति** । 'भव्यगेय' (पा. सू. ३-४-६८) इत्यादिना कर्तरि यत् निपात्यते । **भवदिति** शत्रन्तः । प्रभवतीति प्रभुः । भूधातोः प्रपूर्वात् "विप्रसम्भ्यः" (पा. सू. ३-२-१८०) इति डुः । भूतं च भव्यं च भवच्च भूतभव्यभवन्ति, तेषां प्रभुः-ईश्वर इति द्वन्द्वगर्भषष्ठीतत्पुरुषमाश्रित्य व्याचष्टे--**भूतमित्यादिना** । भूतभव्यभवदिति त्रयाणां ग्रहणस्य प्रयोजनमाह—**कालेति** । भूतादिकालविशेषमित्यर्थः । **सन्मात्रप्रतियोगिकमिति** । विद्यमानवस्तुमात्र-

---

[1] स्तदात्मको वि- **पा.**

स्तोत्रम्

# भूतकृद्भूतभृत्

भाष्यम्

**मैश्वर्यं तस्येति प्रभुत्वम्। रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति भूतकृत्। तमोगुणमास्थाय स रुद्रात्मना भूतानि कृन्तति कृणोति हिनस्तीति वा भूतकृत्। सत्वगुणमधिष्ठाय भूतानि बिभर्ति–[1]धारयति पोषयतीति वा भूतभृत्।**

विवृतिः

निरूपितमित्यर्थः। तथा च परमेश्वरस्य सर्वकल्पानुयायिसर्ववस्तुनिरूपितं प्रभुत्वम्। अन्येषां त्वनेवंविधमिति भावः॥

भूतानि करोति–ब्रह्मरूपेण सृजतीति विग्रहे कृञः *"कर्तरि क्विप्" इति भूतकृन्नाम व्याचष्टे—**रजोगुणमिति**। कारणीभूतरजउपाधिकः सन्नित्यर्थः। जीवस्यापि कार्यभूतमनोगतसत्वादिगुणावच्छिन्नत्वेन तत्रातिव्याप्तिवारणाय सत्वाद्युपाधीनां विशेषणं कारणीभूतेति। अकार्यभूतेत्यर्थः। भूतानि कृन्तति–छिनत्ति रुद्ररूपेणेति विग्रहे "कृती छेदने" इत्यस्मात् क्विप्। भूतानि कृणोति–हिनस्तीति वा विग्रहे "कृञ् हिंसायाम्" इत्यस्माद्वा "क्विप् च" (पा. सू. ३-२-७६) इति क्विप्, तुगागम इति व्युत्पत्तिद्वयमाश्रित्य संहर्तृपरतयापि भूतकृन्नाम व्याचष्टे –**तमोगुणमिति**। तम उपाधिकः सन्नित्यर्थः। हिनस्तीति कृणोतेरेव व्याख्यानम्। भूतानि बिभर्ति–पालयतीति विग्रहे "डुभृञ् धारणपोषणयोः" इत्यस्मात्कर्तरि क्विपि तुगागम इति भूतभृन्नाम निर्वक्ति—**सत्वगुणमिति**। सत्वोपाधिको विष्णुः सन्नित्यर्थः। बिभर्तीत्यस्यैव विवरणं—**धारयति पोषयति वेति**। धारणं चानन्ताद्यात्मनाधि-

---

[1] पालयति पो-**पा.**

* "क्विप् च" (पा. सू. ३-२-७६) इतिसूत्रसिद्धानुवादोऽयम्.

## स्तोत्रम्

# भावः

### भाष्यम्

**प्रपञ्चरूपेण भवतीति, केवलं भवतीत्येव वा भावः ।**

### विवृतिः

ष्ठानतया वेति बोध्यम् । पोषणं चान्नादिरूपेण स्वरूपानन्दलेशप्रदानेन [1]वा बोध्यम् ॥

कारणीभूतसत्वाद्युपहितचित्ते विष्ण्वादिरूपत्वं मैत्रायणीयशाखारण्यके श्रूयते—अथ यो ह खलु वावास्य [2]तामसांशोऽसौ सब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोंऽशोऽसौ सब्रह्मचररिणो योऽयं ब्रह्मा, अथ यो ह खलु वावास्य सात्विकोंशोऽसौ सब्रह्मचारिणे योऽयं विष्णुः, स वा एष एकस्त्रिधा भूत इति । (मैत्रा. उ. ५-२) तत्र दीपिकाव्याख्या – तामसः–तमःप्रधानोंऽशः तम उपाधिको विशेषः । हे [3]सब्रह्मचारिणः! एवमग्रेऽपि द्रष्टव्यमिति ॥

प्रपञ्चरूपेण भवति—उत्पद्यत इति विग्रहे भूधातोः कर्त्रर्थे पचाद्यचि भवः । ततः प्रज्ञादित्वात्स्वार्थेऽण् । यद्वा भवतेर्हेतुमण्ण्यन्तान्निवृत्तप्रेषणाद्भावयतीति विग्रहे पचाद्यच् । कर्तरि घञ् तु न भवति । "अकर्तरि च कारके" (पा. सू. ३·३-१९) इत्युक्तेरित्याशयेन भाव इति नाम निर्वक्ति—**प्रपञ्चरूपेणेति** । प्रपञ्चरूपेण भवनं च "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (ब्र. सू. १-४·२३) इति *न्यायेन निमित्तोपादानोभयरूपत्वाद्ब्रह्मण इति बोध्यम् । तस्यैव नाम्नोऽर्थान्तरमाह—**केवलमिति** । रूपसाधनं[4] तु पूर्ववद्भवत्येव ।

---

* एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, वाचारम्भणादिदृष्टान्तश्चेत्येताभ्यां ब्रह्मणो जगदुपादानत्वं तन्निमित्तत्वं चाभ्युपेयमिति प्रकृत्यधिकरणन्यायाशयः.

[1] च–**पा.** [2] तमसांशोऽसौ–**पा.** [3] ब्रह्मचारिणः–**पा.** [4] नं पूर्वं–**पा.**

भाष्यम्

**भवनं भावः सत्तात्मको वा ।**

विवृतिः

केवलं चिदानन्दयोः सदभिन्नत्वात् सन्मात्रः सदेकरस इत्यर्थः । यद्वा ननु प्रपञ्चरूपेण भवतीति निर्वचनेनोत्पत्त्यादिभावविकाराः प्राप्ता इत्याशङ्कय निर्वचनान्तरमादाय परिहरति—**केवलं भवतीत्येवेति ।** सद्रूप एव, न भावविकारवानित्यर्थः ॥

ननु "अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" (तै. उ. २-६) इति । "अस्तीत्येवोपलब्धव्यः (कठ. उ. ६-१३) इत्यादिश्रुतेः प्रकृतव्युत्पत्तिवशाच्चास्तित्वं तावदङ्गीकर्तव्यम् । ततश्च द्वितीयो भवविकारः प्राप्त इति चेत्? न ;

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।

वर्जितः शक्यते वक्तुं यस्सदास्तीति केवलम् (वि. पु. १-२-११) इति विष्णुपुराणात् प्रकृते सदा भवनमर्थः । स च न भावविकारः । भावविकारस्तु जन्मानन्तरास्तित्वमेव । कादाचित्कत्वात् । अतो नायं दोषः । प्रपञ्चरूपेणोत्पत्तिस्तु [1]ब्रह्मणो विवर्तत्वाभिप्रायेति भावः । भवनं भावः । "भू सत्तायाम्" इत्येतस्माद्भावे घञ् । भावश्चात्र सत्तेति व्युत्पत्त्यन्तरमाह—**भवनं भावः सत्तात्मको वेति ।** [2]घट-पटाद्युपाधिभेदभिन्नसकलसद्व्यक्त्यनुगतस्वरूप इत्यर्थः । सत्ता च न जातिः । सा च 'घटः सन्' 'पटः सन्' इत्यादिप्रतीत्या घटपटाद्युपाधि-भेदभिन्नेषु सत्स्वनुगतव्यवहाराय कल्प्या । व्यवहारश्च घटपटाद्युपा-

---

[1] ब्रह्मविवर्तत्वाभि—**पा.** [2] घटाघटाद्युपाधि—**पा.**

स्तोत्रम्

## भूतात्मा भूतभावनः ॥ १४ ॥

भाष्यम्

**भूतात्मा। भूतानामात्मा—अन्तर्यामी। "एष त आत्मा अन्तर्याम्यमृतः" (बृ. उ. ५-४-७) इति श्रुतेः। भूतानि भावयति जनयति वर्धयतीति वा भूतभावनः॥ १४॥**

विवृतिः

धिभेदभिन्नेषु सत्स्वनुगतब्रह्मस्वरूप[1]सन्मात्रेण घटपटाद्युपाधिभेदभिन्नेष्वाकाशेषु अनुगतमहाकाशेनेवोपपन्नः। अतो न जातिः। अनुगतव्यवहारायैव तत्कल्पनादिति भावः। सत्वस्य सन्मात्रब्रह्मस्वरूपत्वं वसिष्ठेनाप्युक्तम्—

"विशेषं सम्परित्यज्य सन्मात्रं यदलेपकम्।
एकरूपं महारूपं सत्तायास्तत्पदं विदुः* ॥ इति।

योऽन्तर्यामी स भूतानां—प्राणिनां आत्माविज्ञानमयत्वेन प्रसिद्धः इत्यभिप्रेत्य 'भूतात्मा' इति नाम व्याचष्टे—**भूतानामिति**। भूतात्मेत्यत्र बृहदारण्यकश्रुतिं पठति—**एष त आत्मान्तर्यामीति**। एषः—पूर्वोक्तः प्रत्यक्तमः, **अन्तर्यामी**—अन्तरः सन् पृथिव्यादिदेवतानियमनशीलः, **ते**—तव उद्दालकस्य, **आत्मा**—विज्ञानमयत्वेन प्रसिद्धः अस्मत्प्रत्ययालम्बन इति श्रुत्यर्थः। भावयतीति भवतेर्ण्यन्ताल्ल्युट्। औणादिको युज्वा। भूतशब्दो जनिमन्मात्रवचनः। भूतानां—जनिमतां भावनो भूतभावनः, इति व्याचष्टे—**भूतानीति**। **भावयतीति**। जनयति पालयति वेत्यर्थः। अर्थान्तरमाह—**वर्धयति वेति**। धातूनामनेकार्थत्वात्प्राणात्मना वृध्द्याख्यविकारवन्ति करोतीत्यर्थः॥ १४॥

* पद्यमिदं अन्नपूर्णोपनिषदि (अन्नपू. उ. ४-६५.) ऋभुनिदाघसंवादे दृश्यते।

[1] सन्मात्रेणैव - **पा.**

## स्तोत्रम्

# पूतात्मा परमात्मा च

### भाष्यम्

भूतकृदित्यादिभिः गुणतन्त्रत्वं प्राप्तं प्रतिषिध्यते—पूत आत्मा यस्य स पूतात्मा, "केवलो निर्गुणश्च" (श्वे. उ. ६-११) इति श्रुतेः। गुणोपरागः [1]स्वेच्छया पुरुषस्येति कल्प्यते। परमश्चासावात्मा चेति परमात्मा। कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः॥

### विवृतिः

भूतकृदादिशब्दै रजआदिगुणोपरागेण परमात्मनः सृष्ट्यादिकर्तृत्वोक्त्या गुणतन्त्रत्वेनापूतत्वमाशङ्क्य तत्परिहाराय पूतात्मेति नाम व्याचष्टे—**भूतकृदित्यादिभिरिति**। पूतः—शुद्धः सत्वादिगुणसम्बन्धरहितः आत्मा—स्वरूपं यस्येत्यर्थः। तत्र श्रुतिमाह—**केवल इति**। ननु तर्हि कथं स्रष्टृत्वादीत्यत आह—**गुणोपराग इति**। गुणसम्बन्ध इत्यर्थः। स्वेच्छाधीनगुणसम्बन्धस्य परमेश्वरस्य नास्मदादीनामिव स स्वाभाविक इत्यर्थः। गुणतन्त्रत्वं प्राप्तं परमात्मनाम्नापि वारयितुं परमात्मेति नाम व्याचष्टे—**परमश्चासाविति**। "द्वाविमौ पुरुषौ लोके" (भ. गी. १५-१६) इत्यादिभगवद्वचनमनुसृत्य परमत्वं विवृणोति—**कार्यकारणेति**। ताभ्यामस्पृष्ट इत्यर्थः। तद्वैलक्षण्ये फलितमाह—**नित्येति**। नित्यः—कालत्रयापरिच्छिन्नः, शुद्धः—रागाद्यशुद्धिरहितः, बुद्धः—स्वप्रकाशनिरतिशयानन्दः, मुक्तः—अविद्या-

---

[1] स्वेच्छातः—पा.

## स्तोत्रम्

# मुक्तानां परमा गतिः ।

## भाष्यम्

**मुक्तानां परमा–प्रकृष्टा, गतिः–गन्तव्या देवता, पुनरावृत्त्यसम्भवात्तद्गतस्येति मुक्तानां परमा गतिः ।**

**"मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते"।** (भ. गी. ८-१६) **इति भगवद्वचनम् ॥**

## विवृतिः

रूपबन्धशून्यः, स्वो भावः—सत्ता यस्य सः स्वभावः, अनन्याधीनसत्ताकः । नित्यश्चासौ शुद्धश्चासावित्यादिविशेषणानां कर्मधारय इत्यर्थः ॥

गम्यत इति गतिः । गमेः कर्मणि "स्त्रियां क्तिन्" (पा. सू. ३-३-९४) इति क्तिन् । **गन्तव्या देवता** । "सा काष्ठा सा परा गतिः" (कठ. उ. १-३-११) इति श्रुतिमाश्रित्य तत्प्राप्तानां पुनरावृत्त्यभावात्तां परमत्वेन विशिनष्टि–**परमेति** । किमविशेषेण सर्वेषां परमं प्राप्यं तत् ? नेत्याह—**मुक्तानामिति** । अविद्यारागद्वेषभयमोहैर्मुक्तानामित्यर्थः । अनात्मसु आत्मबुद्धिः अविद्या । ततस्तत्प्रजनादौ रागः । तत्परिभवादौ द्वेषः । तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमविद्यादिभिर्मुक्तानां परमा गन्तव्या देवता । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवति" (कठ. उ. २-३-१४)" इत्यादिश्रुतेरित्यभिप्रेत्य व्याचष्टे **मुक्तानामिति** । अत्र परमायै गतय इति चतुर्थ्यन्तम् ; न परमगतय इति । विधौ विभक्तिभेदेन देवतानिर्देशे [1]निगमेषु तथैव कथनस्य "अग्निं पावकमावह" इत्यादौ सिद्धान्तितत्वादिति ॥

---

[1] निगदेषु-**पा.**

स्तोत्रम्

## अव्ययः पुरुषः

भाष्यम्

नास्य व्ययः-विनाशो विकारो विद्यत इति अव्ययः। "अजरोऽमरोऽव्ययः।" (बृ. उ. ६-४-१५) इति श्रुतेः। पुरं-शरीरं तस्मिन् शेते इति पुरुषः।

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्।
व्याप्य शेते [1]महात्मा यस्तस्मात्पुरुष उच्यते॥"

(शान्तिप. २१२-५२)

इति महाभारते। यद्वा अस्तेर्व्यत्यस्ताक्षर[2]योगिनः आसीत् पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुषः।

विवृतिः

विपूर्वस्येणः "एरच्" (पा. सू. ३-३-५६) इत्यच्। विनाशो विकारमात्रं वा तदर्थः। नास्ति व्ययो यस्येति "नञोऽस्त्यर्थानां वाच्यो-त्तरपदलोपः" (वा-१३६१) इति नञ्बहुव्रीहावुत्तरपदलोपः। "नलोपो नञः (पा. सू. ६-३-७३) इति नलोपश्चेति व्याचष्टे—**नास्येति**। अविकारित्वे श्रुतिमाह—**अजरोऽमर इति**॥

श्रौतं निर्वचनमनुसृत्य पुरुषनाम निर्वक्ति—**अस्तेरित्यादि**। **व्यत्यस्तेति**। हिनस्तेर्व्यत्यस्ताक्षरयोगिनस्सिंहेति रूपवत् 'अस भुवि' इत्यस्माद्धातोः सकारोत्तरं अकारयोगिनः स इति रूपमापन्नादित्यर्थः। व्यत्यस्ताक्षरयोगिनोऽस्तेर्व्युत्पादित इति सम्बन्धः। श्रुत्यनुसारेण विग्रहमाह—**आसीत् पुरा पूर्वमेवेति**। पूर्शब्दस्य पुराशब्दस्य

---

[1] महानात्मा-**पा.** [2] योगात्-**पा.**

### भाष्यम्

**"पूर्वमेवाहमिहासमिति पुरुषस्य पुरुषत्वम्" (तै. आ. १-१३) ॥ इति श्रुतेः ॥**

**अथ वा पुरुषु-उत्कर्षशालिषु सीदतीति, पुरूणि-फलानि सनोति-ददातीति वा, पुरूणि भुवनानि संहारसमये स्यति-अन्तं करोतीति वा, पूरणात्सदनाद्वा पुरुषः ।**

### विवृतिः

वा पुरुभावः । वर्णव्यत्ययः षत्वं चेति पृषोदरादित्वाद्बोध्यमिति भावः । उक्तनिरुक्तौ श्रुतिमाह--**पूर्वमेवेति** ॥

पुरुषु-उत्कर्षशालिषु सत्त्वेषु सीदतीति वा, पुरूणि-बहूनि कर्मफलानि सनोति-ददातीति वा, पुरूणि भुवनानि स्यति—संहरतीति वा विग्रहे 'षद्लृ विशरणादौ' 'षणु दाने' 'षोऽन्तकर्मणि' आद्याभ्यां "अन्येष्वपि" (पा. सू. ३-२-१०१) इति डः टिलोपः । स्यतेस्तु "आतोऽनुपसर्गे (पा. सू. ३-२-३) इति कः । "आदेशप्रत्यययोः" (पा. सू. ८-३-५९) इति सर्वत्र षत्वमित्यभिप्रेत्य पुरुषशब्दस्य व्युत्पत्त्यन्तराण्याह—**अथवेति** । "नृषद्वरसत्" (कठ. उ. २-२-२) "एष उ एव वामनीः" (छा. उ. ४-१५-३) "विरमति विरामयति" इत्यादिश्रुतयोऽर्थत्रये द्रष्टव्याः ॥

भारतमनुसृत्य निर्वक्ति—**पूरणादिति** । "पृ पालनपूरणयोः" इति धातोः पूर्यतेऽनेन सर्वं जगदिति विग्रहे "पृभिदि" (उणा. २३) इत्यादिना-[1]करणे कुः, पुरुः । सीदति—गच्छति द्युलोकान्तरिक्षपृथिवीषु सूर्यवाय्वग्न्यात्मनेति सदेः पूर्ववत् डप्रत्ययषत्वे । पुरुश्चासौ सश्चेति व्युत्पत्तेः पुरुष इति

---

[1] कर्मणि-**पा**.

स्तोत्रम्

## साक्षी क्षेत्रज्ञः

भाष्यम्

**पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः ।**
**(उद्योगप. ६९-११) ।**

**इति *पञ्चमवेदे ॥**

**साक्षात्–अव्यवधानेन, स्वरूपबोधेन ईक्षते–पश्यति सर्वमिति साक्षी । "साक्षाद्द्रष्टरि संज्ञायाम्" (पा. सू. ५–२–९१) इति पाणिनिवचनादिनिप्रत्ययः। क्षेत्रं–शरीरं जानातीति क्षेत्रज्ञः। "आतोऽनुपसर्गे कः" (पा. सू. ३-२-२) इति कप्रत्ययः ।**

विवृतिः

रूपमित्यर्थः । उक्तनिरुक्तौ भारतमुदाहरति–**पूरणादिति ।** "हंसः शुचिषद्वसुरन्तरिक्षसत्" (कठ. उ. २-२-२) इत्यादिश्रुतिरत्र द्रष्टव्या॥

साक्षिनाम निर्वक्ति—**साक्षादिति । अव्यवधनेनेति ।** वृत्तिव्यवधानमन्तरेण स्वाध्यस्तं सर्वं स्वरूपचैतन्येन पश्यतीत्यर्थः। साक्षिशब्दव्युत्पादकं पाणिनिसूत्रं पठति—**साक्षादिति ।** साक्षाच्छब्दादिनिप्रत्ययः स्याद्द्रष्टर्यर्थ इति सूत्रार्थः । [1]तेन इनिप्रत्यये अव्ययानां भमात्रे टिलोपे च साक्षीति रूपम्। अत्र श्रुतिः—**साक्षी चेतेति ।** क्षेत्रज्ञनाम निर्वक्ति—**क्षेत्रमिति ।** क्षेत्रं जानातीति विग्रहे "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यये "आतो लोप इटि च" (पा. सू. ६-४-६४) इति [2]आलोपे च रूपम् । कप्रत्ययविधायकं सूत्रं पठति—**आत इति ।** अनुपसर्गादादन्ताद्धातोः कप्रत्ययः

* महाभारत इत्यर्थः. [1] तत्र–**पा.** ? [2] टिलोपे–**पा.**

### स्तोत्रम्

## अक्षर एव च ॥ १५ ॥

### भाष्यम्

"क्षेत्रज्ञं चापि मां विद्धि (भ. गी. १३–५) इति भगवद्वचनात्।

[1] "क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम्।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" ॥
(ब्र. पु. ३१–६७)

इति ब्रह्मपुराणे। स एव न क्षरतीति अक्षरः परमात्मा। अश्नोतेर्वा सरप्रत्ययान्तस्य रूपमक्षर इति। एवकारात् क्षेत्रज्ञा-

### विवृतिः

स्यादिति सूत्रार्थः। विष्णोः क्षेत्रज्ञरूपत्वे भगवद्वचनमाह—**क्षेत्रज्ञं चापीति** ॥

क्षरति–विनश्यतीति क्षरः। पचाद्यच्। न क्षरः–अक्षर इत्यक्षर-नाम व्याचष्टे—**स एवेति**। क्षेत्रज्ञ एवेत्यर्थः। स्वभावतो न क्षरतीति क्वचित्पाठः। तत्र स्वभावतः–स्वरूपान्न क्षरति–न विपर्येतीत्यक्षर इत्यर्थः। अस्यैव नाम्नो व्युत्पत्त्यन्तरमाह–**अश्नोतेर्वेति**। अश्नोति–व्याप्नोति सर्व-मित्यश्नोतेः सरप्रत्यये "व्रश्च" (पा.सू. ८-२-३६) इति षत्वे "षढोः" (पा.सू. ८-२-४१) इति कत्वे चाक्षरशब्दः। तथा च शब्दभाष्यम्– "अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम्" (भा.वा.प्र.आ) इति। स च "ओं ब्रह्मण्युच्यतेऽक्षरं" इति कोशाद्ब्रह्मवाचीत्यर्थः। **एवकारादिति** ज्ञापकहेतौ पञ्चमी। यः क्षेत्रज्ञः सोऽक्षर एव; न ततोऽतिरिच्यत इत्येवकारेण ज्ञापकेन क्षेत्रज्ञस्येश्वराभेदः पारमार्थिकः "तत्त्व-

स्तोत्रम्

# योगः

भाष्यम्

क्षरयोरभेदः परमार्थतः। "तत्त्वमसि" (छा. उ. ६–७) इति श्रुतेः। चकाराद्व्यावहारिको भेदश्च। प्रसिद्धेः प्रमाणत्वात्॥ १५॥

"ज्ञानेन्द्रियाणि सर्वाणि निगृह्य मनसा सह।
एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः॥
तद्वाप्यतया योग इति योगविदो विदुः"। इति।

योगं विदन्ति–विचारयन्ति, जानन्ति, लभन्त इति वा योग-

विवृतिः

मसि" (छा. उ. ६-७) इत्यादिश्रुतिप्रसिद्धो ज्ञाप्यत इत्यर्थः। चकारादिति पूर्ववत्पञ्चमी ज्ञापकहेतौ। धवः खदिरश्चेतिवदत्र समुच्चयार्थेन चकारेण "नाहमीश्वरः" इत्यादिलौकिकमानसिद्धो भेदो ज्ञाप्यत इत्यर्थः॥

ननु भेदाभेदयोरेकत्र विरोध इत्याशङ्क्य समानसत्ताकयोरेव विरोधो न विषमसत्ताकयोरिति भेदं विशिनष्टि—व्यावहारिक इति। ननु भेदोऽपि परमार्थ एव कुतो न स्यादत आह—प्रसिद्धेरिति। "नाहमीश्वरः" इत्यादिप्रसिद्धेरतत्त्वावेदकमानत्वादित्यर्थः॥ १५॥

"युज समाधौ" इत्यस्मात् "युजिर् योगे" इत्यस्माद्वा "भावे" (पा. सू. ३-३-१८) इति घञि योगशब्दस्य रूपमभिप्रेत्य योगशब्दार्थकथनपूर्वकं तत्प्राप्ये ब्रह्मणि लाक्षणिकोऽयं शब्द इत्याह—ज्ञानेन्द्रियाणीत्यादिना। योगं पूर्वोक्तलक्षणं विदन्ति—लभन्त इति

स्तोत्रम्

## योगविदां नेता प्रधानपुरुषेश्वरः ।

भाष्यम्

विदः। तेषां—ज्ञानिनां नेता योगक्षेमवहनादिनेति योगविदां नेता। "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" (भ. गी. ९-२२) इति भगवद्वचनात्। प्रधानं-प्रकृतिर्माया, पुरुषः-जीवः, तयोरीश्वरः प्रधानपुरुषेश्वरः॥

विवृतिः

योगविदः। "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विप्। नयतेः "ण्वुल्तृचौ" (पा. सू. ३-१-१३३) इति कर्तरि तृचि नेतृशब्दः। तद्योगे "कर्तृकर्मणोः कृति" (पा. सू. २-३-६५) इति योगविच्छब्दात् कर्मणि षष्ठीत्याह—**योगविदामिति**। नेतृत्वमुपपादयति—**योगेति**। "अनन्याश्चिन्तयन्तो माम्" (भ. गी. ९-२२) इत्यादिस्मृतेरिति भावः॥

वियत्प्रमुखं [1]सर्वं कार्यमस्मिन् प्रधीयत इति प्रधानं—माया। अधिकरणे ल्युट्। [2]प्रधत्ते सर्वमात्मनीति वा। "अन्येभ्योऽपि" (पा. सू. ३-३-१३०) इति कर्तरि युच्। पुरति—परलोकं प्रति प्राणादिभ्योऽग्रे गच्छति। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" (बृह. उ. ४-४-२) इति श्रुतेरिति पुरुषः। "पुर अग्रगमने" पुरः कुषन्। ईशितुं शीलमस्य "स्थेशभास" (पा. सू. ३-२-१७५) इति वरच्। प्रधानं च पुरुषश्च तयोरीश्वर इति व्युत्पत्तिमाश्रित्य प्रधानादिशब्दार्थकथनपूर्वकं प्रधानपुरुषेश्वरनाम व्याचष्टे—**प्रधानमित्यादिना**। प्रधानस्य

---

[1] कार्यं—**पा**. [2] धत्ते—**पा**.

स्तोत्रम्

## नारसिंहवपुः श्रीमान्

भाष्यम्

**नरस्य सिंहस्य च आवयवा यस्मिन् लक्ष्यन्ते तद्वपुर्यस्य सः नारसिंहवपुः। यस्य वक्षसि नित्यं वसति श्रीः स श्रीमान्।**

विवृतिः

सत्तास्फुरणप्रदत्वेनाधिष्ठानत्वात्। घटाकाशस्थानीयानां प्रतिबिम्बस्थानीयानां वा पुरुषाणां निरुपाधिकचिन्मात्रस्वरूपेण [1] नियोक्तृत्वात्तावीष्ट इति प्रधानपुरुषेश्वरः। "प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे. उ. ६-१६) इति श्रुतेरित्यर्थः॥

नरश्च सिंहश्च नरसिंहौ। तयोरवयवाः। "अवयवे च प्राण्यौषधिवृक्षेभ्यः (पा. सू. ४-३-१३५) इत्यण्। नारसिंहाः-नरसिंहयोरवयवाः अस्मिन् सन्तीति अणन्तान्नारसिंहशब्दान्मत्वर्थीयः अर्श आद्यच्। तथा च नारसिंहः—नरसिंहावयववदवयवः—वपुर्यस्य स तथा। "यस्मात्सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च, तस्मान्नृसिंह आसीत् परमेश्वरः" (नृ. पू. उ. २-४) इति श्रुतेरित्यभिप्रेत्य नारसिंहवपुरिति नाम व्यचष्टे—**नरस्येत्यादिना**। अत्र नरस्यावयवाः सिंहस्यावयवाश्च यस्मिन्नित्यनेन नरसिंहशब्दाद्द्वन्द्वादवयवार्थाणन्तान्मत्वर्थीयाजन्तं नारसिंहपदमिति दर्शितम्। **तद्वत्**—नरसिंहावयववदित्यर्थः॥

श्रीः—लक्ष्मीः नित्यमस्मिन्नस्तीति नित्ययोगे मतुपि श्रीमानिति नाम व्याचष्टे—**यस्येति**। प्रशस्ताः केशा यस्य स इति विग्रहे

---

[1] निर्वोढृत्वा—**पा.**

## स्तोत्रम्

# केशवः

### भाष्यम्

अभिरूपाः केशा यस्य सः केशवः। "केशाद्वोऽन्यतरस्याम्" (पा. सू. ५-२-१०९) इति वप्रत्ययः प्रशंसायाम्। यद्वा कश्च अश्च ईशश्च त्रिमूर्तयः केशाः, ते यद्वशे वर्तन्ते स केशवः। केशिवधाद्वा केशवः।

यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन!।
तस्मात् केशवनाम्ना त्वं लोके ख्यातिं गमिष्यसि ॥
(वि. पु. ५-१६-२३)

### विवृतिः

"केशाद्वोऽन्यतरस्याम्" (पा. सू. ५-२-१०९) इति सूत्रेण प्रशंसायां मत्वर्थीयो वप्रत्यय इति केशवनाम निर्वक्ति—**अभिरूपा** इति। कश्च अश्च ईशश्च केशाः—ब्रह्मविष्णुरुद्राः, ते अस्य वश्यतया सन्तीति—**केशवः**। पूर्ववत् केशशब्दान्मत्वर्थीयो वप्रत्ययः ॥

यद्वा केशान्-ब्रह्मविष्णुरुद्रान्, वष्टि-इच्छति सर्गादिकार्यायेति "वश कान्तौ" इत्यस्मात् "अन्येष्वपि दृश्यते" (पा. सू. ३-२-१०१) इति डप्रत्ययः। यद्वा केशान्-ब्रह्मविष्णुरुद्रान्, वाति-गच्छति नियामकत्वेनेति केशवः। "वा गतिगन्धनयोः" इति धातोः "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यय इति प्रकारत्रयमभिप्रेत्यार्थान्तरमाह—**कश्चेति**। केशिनं—तन्नामानं दैत्यं वाति-हिनस्तीति विग्रहे वातेर्हिंसार्थात् "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यये केशव इति पुराणोक्तव्युत्पत्त्यनुसारेणापि व्युत्पादयति—**केशिवधाद्वेति**। केशिशब्दे इनो लोपः।

भाष्यम्

**इति विष्णुपुराणे श्रीकृष्णं प्रति नारदवचनम्। पृषोदरादित्वाच्छब्दसाधुत्वकल्पना ॥**

विवृतिः

पृषोदरादित्वादित्यभिप्रायेणाह--**पृषोदरादित्वादिति** ।

"यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन! ।
तस्मात्केशवनाम्ना त्वं लोके ख्यातिं गमिष्यसि" ॥

इति पुराणवचनं पृषोदरादित्वकल्पकं बोध्यम् ॥

*पुरुषाणामुत्तमः पुरुषोत्तमः । उत्तमत्वं च क्लेशकर्मविपाकाशयैरपरामृष्टत्वात्। तथा च योगसूत्रम्—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" (योगसू. १-२४) इति। न च, षष्ठीसमासोऽत्र न सम्भवति; "न निर्धारणे" (पा. सू. २-२-१०) इति तन्निषेधादिति वाच्यम् । "द्विवचनविभज्योपपदे" (पा.सू. ५-३-५७) इति सूत्रे 'यतो निर्धार्यते, यश्चैकदेशो निर्धार्यते, येन हेतुना निर्धार्यते, एतत्रितयसन्निधाने निर्धारणं भवति । न [1]तदभावेऽपि । नागानामुत्तमो नागोत्तम [2] इत्यादौ सम्बन्धसामान्ये षष्ठी । तस्याश्च समासो भवति' इति कैयटेनोक्तत्वात् । तद्वदिहापि सम्बन्धसामान्यषष्ठ्या समासोपपत्तेः ॥

ननु कथमिह त्रितयसन्निधानाभावः? प्रकरणादुपस्थितस्य विष्णोरेव विशेष्यतया "मनुष्याणां क्षत्रियः शूरः" इतिवत् "पुरुषाणां विष्णुरुत्तमः" इति त्रितयसन्निधानेन निर्धारणसम्भवे सम्बन्धसामान्यषष्ठ्ययोगात् । न च सम्भवत्यपि निर्धारणे सम्बन्धसामान्यविवक्षया प्रकृतषष्ठीनिर्वाह इति वाच्यम् । तथा सति "मनुष्याणां क्षत्रियः शूरः" इत्यादावपि सम्बन्धसामान्यविवक्षायाः सम्भवेन "नागोत्तमः" इत्यादौ सम्बन्धसामान्यषष्ठी, "मनुष्याणां क्षत्रियः" इत्यादौ निर्धारणषष्ठीति कैयटोक्तवि-

* १६१ पुटस्थ 'पुरुषोत्तम' नामनिर्वचनभाष्यावतारिकारंभः.

[1] तदभावेऽपि नागा–**पा.** [2] इत्यादौ। तत्र हि सम्बन्ध–**पा.**

## विवृतिः

षयव्यवस्थाभङ्गप्रसङ्गेन त्रितयसान्निधाने सति निर्धारणप्रतीत्यवश्यम्भावेन निर्धारणषष्ठ्या एवावश्यवक्तव्यत्वात्। नापि प्रकरणाद्वा साक्षाद्वा विष्णुरिति विशेष्योपस्थितावपि विष्णुत्वस्य जातित्वाभावेन जात्यादिभिः पृथक्करणस्यैव निर्धारणत्वेन तदभावात्सम्बन्धसामान्यषष्ठीसम्भव इति वाच्यम्। जातिगुणक्रियाभिः पृथक्करणं निर्धारणमिति वृत्तिकारीयव्याख्यानस्य त्रयी शब्दानां प्रवृत्तिरिति पक्षाभिप्रायकतया विष्णुत्वादेरपि जातिकोटौ निवेशात्। चतुष्टयीपक्षेऽप्युपलक्षणतया विष्णुत्वादेरपि सङ्ग्रहात्। इतरथा "अमीषां छात्राणां कतमो देवदत्तः" "पठतां देवदत्तः पटुः" "आदित्यानामहं विष्णुः" (भ. गी. १०–२१) इत्यादिषु निर्धारणषष्ठ्या अगतेः। तस्मात् कथमत्र समास इति चेत्? उच्यते—इदं तावदत्र विचारणीयम्। "मनुष्याणां क्षत्रियः शूरः" इत्यादौ कथं शाब्दबोध इति चेत्तत्र मनुष्याणां मध्ये यः क्षत्रियः स शूर इति भवितव्यम्। अत एव हरदत्तेन "न निर्धारणे" (पा. सू. २-२-१०) इति सूत्रेऽभिहितम्—"*क्षत्रियशब्देनात्र समासप्रसङ्गः तदपेक्षा हि षष्ठी, न शूरतमापेक्षा, गुणत्वाच्च तेन न समासः" इति। प्रौढमनोरमायामपि "नृणां द्विजः" इति प्रतीकमादाय 'द्विजशब्देनात्र समासप्रसङ्गः। तदपेक्षा हि षष्ठी, न श्रेष्ठापेक्षा' इत्येतावद्धरदत्तेनोक्तमनूद्य 'न श्रेष्ठापेक्षा' इत्यत्र उपपत्तिरपि दर्शिता—'श्रेष्ठत्वं च द्विजेतरमनुष्येभ्यः; तांश्च सामान्यशब्देनोपस्थितान् विहायानुपस्थितकल्पनाया अन्याय्यत्वात्' इति॥

अस्यार्थः—द्विजनिष्ठं [1]हि श्रेष्ठत्वं द्विजेतरमनुष्यनिरूपितम्। यद्यपि द्विजेतरे मनुष्या मनुष्यत्वेनोपस्थाप्यन्ते, तथाप्यन्वयितावच्छेदक-

---

*अयमर्थानुवादः।

[1] श्रेष्ठत्वं—पा.

## विवृतिः

रूपेणोपस्थितिर्मनुष्यशब्देन न भवतीत्यध्याहारेणैव तदुपस्थितिः सम्पादनीयेति मनुष्याणामिति पदं द्विजपदेनैव समर्थमिति श्रेष्ठपदेनासामर्थ्यादेव समासाप्रसक्तेः, द्विजपदेन [1]प्रसक्तः सः प्रतिषिध्यत इति। तस्मादेवं भवितव्यमिति । नैतदस्ति—

मनुष्याणां मध्ये क्षत्रिय इति कोऽर्थः? मनुष्यरूपसमुदायान्तर्गतः क्षत्रिय इति तावन्न सम्भवति। पृथक्करणलक्षणनिर्धारणस्य इदानीमभावात्। किञ्चैवं सति समुदायसमुदायिभावलक्षणे सम्बन्धे "वनस्य वृक्षः" इतिवत् षष्ठ्याः समुदायिनं प्रति समुदायस्याधारतया 'वने वृक्षः' 'सहस्रे शतं' इतिवत्सप्तम्या अपि सिद्धतया "यतश्च निर्धारणम्" (पा. सू. २–३–४१) इति सूत्रानर्थक्यप्रसङ्गात् ॥

नापि मनुष्याणां क्षत्रियः, मनुष्येभ्यः पृथग्भूतः क्षत्रिय इति; क्षत्रियाणामपि मनुष्यत्वेन ततः पार्थक्यासिद्धेः। क्षत्रियत्वस्य मनुष्यत्वात्पार्थक्यमस्तीति चेत् तस्य सिद्धतयाबोधनीयत्वात्। एवं तर्हि भवितुमर्हति—यः क्षत्रियः स मनुष्याणां शूर इति। अत एव 'न निर्धारणे' (पा. सू. २-२-१०) इति सूत्रे प्रागुदाहृतवाक्यादुत्तरत एव "गवां कृष्णा सम्पन्नक्षीरतमा" इति द्वितीयोदाहारणव्याख्यावसरे हरदत्तेनोक्तम्—"*नैवमभिसम्बन्धो गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमेति। एवं सति कृष्णाशब्दस्य गुणवचनत्वात् "पूरणगुण" (पा. सू. २-२-११) इत्येव समासनिषेधसिद्धेः। किन्तु या 'कृष्णा सा गवां सस्पन्नक्षीरतमा' इति ॥

न च कृष्णातिरिक्तगव्यपेक्षसम्पन्नक्षीरतमत्वस्य विवक्षिततया अन्वयितावच्छेदककृष्णेतरगवीत्वप्रकारकबोधजननासमर्थत्वात् सामा-

---

* अयमर्थानुवादः।

[1] प्रसक्तस्य प्रतिषि–पा.

## विवृतिः

न्यशब्दस्य गोपदस्य [1] तत्रान्वेतुमर्हतीति प्रागुक्ताधुनिकसमर्थनाविरोध इति वाच्यम् ।

चन्द्रे कलङ्कः सुजने दरिद्रता
विकासलक्ष्मीः कमलेषु चञ्चला ।
मुखेऽप्रसादः [2] सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम् ॥

इत्यादाविवान्वयितावच्छेदकरूपेणोपस्थितस्याप्यन्वयदर्शनादिति ॥

इदमपि न युक्तम् । [3]अधुनापि क्षत्रियः स्वातिरिक्तमनुष्यापेक्षया शूर इति फलितम् । [4]एवं सति निर्धारणकथैव लुप्ता । ननु कथं लुप्ता ? निर्धारणं हि पृथक्करणम् । तच्च तदतिशायिगुणशालित्व-रूपतद्वैलक्षण्यलक्षणं मनुष्यापेक्षया क्षत्रियाणामव्याहतमिति कृत्वेति चेत्—न हीदृशं पृथक्करणं वैयाकरणा मन्यन्ते । निर्धार्यधर्मितावच्छेदकं यज्जात्यादि तत्कृतमेव पृथक्करणं निर्धारणमिति तेषामभिमानात् । अत एव काशिकायां वृत्तौ "जातिगुणक्रियाभिः पृथक्करणं निर्धारणं, तत्र षष्ठी न समस्यते । यथा "मनुष्याणां [5]क्षत्रियः शूरतमः" इत्याद्युदाहृतम् । [6]तर्हि एवं भवतु । "मनुष्याणां क्षत्रियः शूरतमः" इति, मनुष्याणां मध्ये क्षत्रिय एव शूरः, न सर्वे मनुष्या इति । एवं हि पृथक्करणं समभिव्याहृतैकधर्मान्वयरूपं निर्धारणशब्दवाच्यमपि समर्थितं भवति ॥

न चात्र जातिगुणक्रियाभिः पृथक्करणं निर्धारणमिति वैयाकरणाभिमतपृथक्करणमिदं नेति वाच्यम् । अस्मिन् पृथक्करणे जातिगुण-

---

[1] तत्रानेतुमर्ह–पा. [2] सदनेषु–पा. [3] अधुना हि–पा. [4] एवं हि–पा. [5] ग:–पा. [6] एवं तर्हि–पा.

## विवृतिः

क्रियाणामप्यनुप्रवेशात्। तथा हि—"क्षत्रिया एव शूराः, न सर्वे मनुष्याः" इत्यत्र प्रागुक्तैकधर्मानन्वयस्यावच्छेदकभेदधर्मपर्यवसन्नतया निर्धार्यधर्मितावच्छेदकीभूतानां जात्यादीनां शूरत्वं न मनुष्येषु कार्त्स्न्येन। किन्तु क्षत्रियरूपतदेकदेशेनेति समभिव्याहृतधर्मान्वयसङ्कोचकतयानुप्रवेशः स्पष्ट इति। तथा च तदव्यापकत्वे सति तद्व्याप्यव्यापकत्वं षष्ठ्यर्थः। मनुष्यत्वाव्यापकं तद्व्याप्यक्षत्रियत्वव्यापकं च यच्छूरत्वं तद्वान् क्षत्रिय इत्यर्थः। अस्मिन् शाब्दबोधे षष्ठ्याः स्वार्थघटकतया क्षत्रियेण स्वप्रतिसम्बन्धिसमर्पकतया शूरेण च साकाङ्क्षतयोभयसापेक्षस्य षष्ठ्यन्तस्य केनापि साकं सामर्थ्याभावात् सिद्ध एव समासाभावो "न निर्धारणे" (पा. सू. २-२-१०) इति सूत्रेणानूद्यते। यत्र तु नैवंरूपः षष्ठ्यर्थः। किन्तु निरूपकत्वमात्रपरः। नागानामुत्तमो नागोत्तम इत्यादौ एकमात्रसापेक्षतयोत्तमपदेन साकं सामर्थ्याद्प्रति[1]बद्धः समासः। इदमेवाभिमतं त्रितयसन्निधाने समासनिषेधवादिनः कैयटस्याप्यस्मदुक्तनिर्धारणस्य त्रितयसन्निधानसापेक्षतया तत्र चासामर्थ्येन समासाभावस्य सिद्धत्वादिति॥

अत एव "नागोत्तमः" इत्यादौ निरूपकत्वमात्रस्य [2] षष्ठ्यर्थत्वे षष्ठीनिर्वाहाय तृतीयापेक्षा नास्तीति तादृशस्थले समासोऽप्रतिषिद्ध इत्यप्युक्तम्। अत एव भगवत्पादैरपि सहस्रनामभाष्ये पुरुषोत्तमनामव्याख्यानावसरेऽनेनैवाभिप्रायेण व्याख्यातमित्येवं केचित् पुरुषोत्तम इत्यादौ समासमाक्षिप्य समादधुः। अनेनैवाभिप्रायेण पुरुषाणामुत्तमः

[1] बन्धः—पा. [2] षष्ठ्यर्थत्वेन—पा.

## स्तोत्रम्

# पुरुषोत्तमः ॥ १६ ॥

### भाष्यम्

**पुरुषाणामुत्तमः पुरुषोत्तमः । अत्र "न निर्धारणे" (पा. सू. २-२-१०) इति षष्ठीसमासप्रतिषेधो न भवति । जात्याद्यनपेक्षया समर्थत्वात् । यत्र पुनः जातिगुणक्रियापेक्षया [1]पृथक्रिया तत्रासमर्थत्वान्निषेधः प्रवर्तते । यथा—मनुष्याणां**

### विवृतिः

इति षष्ठीसमासमाश्रित्य व्याचष्टे—**पुरुषाणामिति । अत्रेति ।** पुरुषाणामुत्तम इत्यत्र निरूपकत्वं षष्ठ्यर्थः । न तु तदव्यापकत्वे सति तद्व्याप्यव्यापकत्वरूपं निर्धारणं षष्ठ्यर्थः । तथा चोत्तममात्रसापेक्षतया सामर्थ्यसत्त्वात् "नागोत्तमः" इतिवत्समासो भवत्येवेत्यर्थः । तत्र हेतुमाह—**जात्यादीति ।** आदिशब्देन गुणादीनां ग्रहणम् । तर्हि "न निर्धारणे" (पा. सू. २-२-१०) इति षष्ठीसमासप्रतिषेधस्य को विषय इत्याशङ्क्य यत्र पूर्वोक्तनिर्धारणार्था षष्ठी तत्रोभयसापेक्षतया सामर्थ्याभावात्समर्थसूत्रलभ्यार्थानुवादी निषेधो भवतीति तद्विषयं दर्शयति—**यत्र पुनरिति । तत्रासमर्थत्वादिति ॥**

अयं भावः—मनुष्याणां मध्ये क्षत्रिय एव शूरो न सर्वो मनुष्य इति "मनुष्याणां क्षत्रियः शूरः" इत्यादिनिषेधोदाहरणेषु शाब्दबोधात् षष्ठ्यास्तदव्यापकत्वे सति तद्व्याप्यव्यापकत्वरूपं निर्धारणमर्थः । मनुष्यत्वाव्यापकं तद्व्याप्यक्षत्रियत्वव्यापकं च यच्छूरत्वं तद्वान् क्षत्रिय इत्यर्थः । अस्मिन् शाब्दबोधे [2]षष्ठ्याः स्वार्थघटकतया क्षत्रियेण

[1] पृथक्क्रियते—**पा.** [2] षष्ठ्यां—**पा.**

भाष्यम्

**क्षत्रियः शूरतमः, गवां [1]कृष्णा गौः सम्पन्नक्षीरतमा, अध्वगानां [2]धावन् शीघ्रतम इति । अथवा पञ्चमीसमासः । तथा च भगवद्वचनम् ।**

**" यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ "**

**(भ. गी. १५-१८) इति ॥ १६ ॥**

**असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।**

विवृतिः

स्वप्रतिसम्बन्धिसमर्पकतया शूरेण च साकं साकाङ्क्षतयोभयसापेक्षस्य षष्ठ्यन्तस्य केनापि साकं सामर्थ्याभावात् सिद्ध एव समासाभावोऽनूद्यत इति । अत्र समर्थत्वान्निषेधो न भवति । असमर्थत्वान्निषेधो भवतीति [3]भाष्योक्त्या समर्थसूत्रसिद्ध एवार्थो " न निर्धारणे " (पा. सू. २-२-१०) इति सूत्रेणानूद्यत इति सूच्यते ॥

एवं " गवां कृष्णा " इत्युदाहरणान्तरेऽप्युक्तनिर्धारणार्थकतया षष्ठ्यन्तस्योभयसापेक्षत्वेन सामर्थ्याभावात्समासाभावो बोध्यः । पुरुषाभ्यां क्षराक्षराभ्यामुत्तम इति " पञ्चमी विभक्ते " (पा. सू. २-३-४२) इति विहितपञ्चम्यन्तस्योत्तमपदेन पञ्चमीति योगविभागात्समास इति पक्षान्तरमाह—**अथवेति ।** पञ्चमीसमासस्य भगवद्वचनानुसारितामाह—**यस्मादित्यादिना ॥ १६ ॥**

सर्वशब्दव्युत्पादनपरं भारतवचनं पठति—**असतश्चेति ।** **असतः**—कारणात्मकस्य, **सतः**—कार्यात्मकस्य, **सर्वस्य**—प्रपञ्चस्य, **प्रभवाप्ययात्**—उत्पत्तिप्रलयस्थानत्वात् । तथा च सर्वोपादानतया

---

[1] कृष्णा सम्पन्न—**पा.** [2] धावन्तः शीघ्रतमाः—**पा.** [3] भाष्योक्तः—**पा.**

## स्तोत्रम्

# सर्वः शर्वः

### भाष्यम्

**सर्वस्य सर्वदा ज्ञानात्सर्वमेनं प्रचक्षते ॥**

**(उद्योगप. ६९-११)**

**इति भगवद्व्यासवचनात् सर्वः । शृणाति--संहारसमये संहरति संहारयति वा सकलाः प्रजाः इति शर्वः । निस्त्रैगुण्यतया शुद्धत्वात्**

### विवृतिः

सर्वात्मकत्वात् सर्व इत्युच्यते । अस्मिन् पक्षे सर्वस्मा इति चतुर्थ्यन्तम् । ब्रह्मपरत्वेऽपि सर्वार्थकत्वानपायात् । यद्वा सर्वति-जानातीति **सर्वः** । "सर्व गतौ" पचाद्यच् । गत्यर्थानां धातूनां ज्ञानार्थत्वात्सङ्कोचकप्रमाणाभावेन सर्वं सर्वदा सर्वति—जानातीति सर्वः-सर्वज्ञः । सर्वशब्दः तज्ज्ञलक्षको वेत्यभिप्रेत्योत्तरार्धेनार्थान्तरमाह—**सर्वस्य सर्वदेति** । अस्मिन् पक्षे यौगिकतया गौणतया वा सर्वनाम-संज्ञाया अभावात् सर्वायेति रूपम् ॥

शृणाति हिनस्ति सर्वाः प्रजाः संहा[1]रसमय इति **शर्वः** । "शॄ हिंसायाम्" इत्यस्मात् "कॄ गॄ शॄ धृभ्यो वः" (उणा. १५३) इति वप्रत्यय इति शर्वनाम निर्वक्ति—**शृणातीति** । गुणत्रयकार्यपुण्यपाप-व्यामिश्रकर्मतत्फलसमाहारलक्षणः संसारस्त्रैगुण्यम् । तदभावेन शुद्धः शिवः शङ्कररूप इत्याह—**निस्त्रैगुण्यतयेति** । त्रयो गुणा एव त्रैगुण्यम् ।

---

[1] रकाल इ—**पा.**

### स्तोत्रम्

# शिवः स्थाणुः

### भाष्यम्

**शिवः। "स ब्रह्म स शिवः" (तै. आ. याज्ञिक्यु. १०-१३) इत्यभेदोपदेशात् शिवादिनामभिः हरिरेव स्तूयते। स्थिरत्वात् स्थाणुः॥**

### विवृतिः

"वर्तमानसामीप्ये वर्तमानवद्वा" (पा. सू. ३-३-१३१) इति निर्देशात् ज्ञापकात् चत्वारो वर्णा एव चातुर्वर्ण्यमितिवत् स्वार्थे ष्यञ्। स्वार्थिका अपि प्रत्ययाः क्वचित् प्रकृतिलिङ्गवचनान्यतिक्रामन्तीति चातुर्वर्ण्यं चातुर्वैद्यमित्यादिवत्प्रकृतिविरुद्धालिङ्गवचनोपपत्तिः। तस्मान्निर्गतो निस्त्रैगुण्यः। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा. १३३९) इति समासः। तस्य भावः तत्ता तयेत्यर्थः॥

विभूतिवाचकेन शिवशब्देन मूलकारणमेव स्तूयत इत्यत्र श्रुतिमाह—**स ब्रह्मेति**। यद्वा निस्त्रैगुण्येत्यादिना शिवशब्देन निर्विशेषमेव ब्रह्म प्रतिपाद्यत इति व्याख्याय स्तुत्यर्थं गुणमूर्तिपरत्वेनापि व्याचष्टे—**स इति**। तिष्ठत्येकरूपेणेति विग्रहे "[1] स्थो णुः" (उणा. ३१७) इति सूत्रेण स्थाधातोः कर्तरि [2] णुप्रत्यये **स्थाणुः**–सदैकरूपः। "सदैकरूपरूपाय विष्णवे सर्वजिष्णवे" (वि. पु. १-२-१) इति विष्णुपुराणादित्याह—**स्थिरत्वादिति**॥

---

[1] स्थाणुरिति स्तोत्रेण—**पा.** ?  [2] णुप्रत्ययः। सदैकरूपः स्थाणुः—**पा.**

## स्तोत्रम्

# भूतादिर्निधिरव्ययः ।

## भाष्यम्

भूताना[1]मादिकारणत्वात् भूतादिः । [2]प्रलयकाले अस्मिन् सर्वं निधीयत इति निधिः । "कर्मण्यधिकरणे च" (पा. सू. ३-३-९३) इति किप्रत्ययः । स एव निधिर्विशेष्यते—अव्ययः–अनश्वरो निधिरित्यर्थः ॥

## विवृतिः

भूतानां–भवनधर्मकाणामुत्पत्तिमतां सर्वेषामादिः–कारणं–कर्त्रुपादानोभयात्मकमित्याह—**भूतानामिति** । निधायते प्रलये सर्वमत्रेति निपूर्वाद्धातेः "उपसर्गे घोः किः" (पा. सू. ३-३-९२) इत्यधिकरणे किप्रत्यये आतो लोपे च निधिशब्दः ; स एव निधिर्विशेष्यते—**अव्यय इति** । इदं च सविशेषणमेकं नाम । निधये अव्ययायेति चतुर्थ्यन्तम् । न त्वव्ययाय निधय इति । आर्षत्वेन "अग्नये पवमानाय (तै. सं. २-२-४) इत्यादाविव यथापाठमेव नामत्वौचित्यादित्यभिप्रेत्याह—**प्रलयकाल इति** । निधिरित्यत्र किप्रत्ययविधायकं सूत्रं पठति—[3]**कर्मणीति** । "कर्मण्यधिकरणे च" (पा. सू. ३-३-९३) इतीदं सूत्रं "उपसर्गे घोः किः" (पा. सू. ३-३-९२) इत्यस्योपलक्षणम् । अन्यथा कर्मण्युपपदे अधिकरणेऽर्थे घोः किरिति "कर्मण्यधिकरणे च" (पा. सू. ३-३-९३) इत्यस्य सूत्रस्य वृत्तिकारैर्व्याख्यातत्वात्प्रकृते [4]कर्मण उपपदस्याभावेन प्रकृतोदाहरणासाङ्गत्यप्रसङ्गात् । कर्मण्यधिकरणे चार्थे किप्रत्ययो भवतीति व्याख्याने

---

[1] मादिः कार–**पा.** [2] प्रलये–**पा.** [3] कर्मण्यधिकरणे चेति–**पा.** [4] कर्मण्युपपदस्य–**पा.**

स्तोत्रम्

# सम्भवः

भाष्यम्

**स्वेच्छया समीचीनं भवनमस्येति सम्भवः ।**
**" धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।"**
**इति भगवद्वचनात् । (भ. गी. ४-८)**
**[1] " अथ दुष्टविनाशाय साधूनां रक्षणाय च ।**
**स्वेच्छया सम्भवाम्येवं गर्भदुःखविवर्जितः ॥ "**

विवृतिः

सूत्रवैयर्थ्यात् । " भावे " (पा. सू. ३-३-१८) " अकर्तरि च कारके " (पा. सू. ३-३-१९) इत्यधिकारात् । यद्वा बाहुलकात् कर्मोपपदाभावेऽपि तेन क्विप्रत्यय इति कथञ्चिद्भाष्यं समाधेयम् ॥

भवतेः " ऋदोरप् " (पा. सू. ३-३-५७) इति [2] भावे अप् प्रत्यये भवः । समीचीनो भवः—जन्म [3] अस्येति **सम्भवः** । सम्यक्त्वं च भवनस्य धर्मसंस्थापनार्थत्वेनेत्याशयेन सम्भवनाम व्याचष्टे—**समीचीनमिति** । ननु भगवतो जन्मवत्त्वे अस्मदादिभिरविशेषाद्नीश्वरत्वप्रसङ्ग इत्याशङ्क्य, अस्मदादीनां पुण्यापुण्यात्मककर्मकृतं जन्म ; ईश्वरस्य तु स्वेच्छयैव शरीरग्रहणमित्याह—**स्वेच्छयेति** ॥

ननु भगवतो देहग्रहणं निष्प्रयोजनत्वादनुपपन्नमित्याशङ्क्य लोकानुग्रहार्थत्वान्नैवमित्यभिप्रेत्य भगवद्वचनमाह—**धर्मेति** । भोक्तॄणां जीवानां कर्मफलानि भावयति—उत्पादयतीति भवतेर्ण्यन्ताल्लयुडिति

---

[1] तथा—**पा.** [2] भावे वा अप् प्रत्यये—**पा.** [3] अस्येति । सम्यक्त्वं च—**पा.**

## स्तोत्रम्

# भावनो भर्ता प्रभवः

### भाष्यम्

**इति च। सर्वेषां भोक्तॄणां फलानि भावयतीति—भावनः। सर्वफलदातृत्वं "फलमत उपपत्तेः" (ब्र. सू. ३-२-३८) इत्यत्रोपपादितम्। प्रपञ्चस्याधिष्ठानत्वेन [1]भरणात् भर्ता ॥**

**प्रकर्षेण महाभूतानि अस्माज्जायन्त इति प्रभवः। प्रकृष्टो**

### विवृतिः

निर्वक्ति—**भोक्तॄणामिति**। ईश्वरस्य कर्मफलदातृत्वे * उत्तरमीमांसातार्तीयन्यायमाह—**सर्वफलदातृत्वमिति**। प्राणिनामिष्टानिष्टव्यामिश्रलक्षणं कर्मफलम्। **अतः**—ईश्वरात् भवितुमर्हति। कुतः? उपपत्तेः। स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् विचित्रान् विदधत् देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलं सम्पादयतीत्युपपद्यते। [2]कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभाविफलं भवतीत्यनुपपन्नमित्यर्थः ॥

बिभर्ति—स्वाध्यस्तं सर्वमधिष्ठानतया धारयति, सत्तास्फूर्तिप्रदानेन पोषयति वेति बिभर्तेर्धारणपोषणार्थात् तृच्प्रत्यय इति भर्तृनाम व्याचष्टे—**प्रपञ्चस्येति**। **भरणादिति**। धारणात् पोषणाद्वेत्यर्थः ॥

प्रकर्षेण भवन्ति—जायन्ते महाभूतान्यस्मादिति भूधातोरपादाने "ऋदोरप्" (पा. सू. ३-३-५७) इत्यप्प्रत्ययः। [3]यद्वा प्रकृष्टो भवः—जन्म यस्य [4]रामकृष्णाद्यवतारात्मकस्येति **प्रभवः**, इत्यभिप्रेत्य द्विधा प्रभवनाम व्याचष्टे—**प्रकर्षेणेत्यादिना** ॥

---

* एतन्न्यायार्थः प्राणिनामित्यादिना विवृतावेव विवृतः।

[1] धारणात्—**पा.** [2] कर्मणस्त्वन्बक्षवि ?—**पा.** [3] प्रकृष्टो-**पा.** [4] रामकृष्णाद्यात्मकस्य—**पा.**

स्तोत्रम्

## प्रभुरीश्वरः ॥ १७॥

## स्वयम्भूः

भाष्यम्

**भवः—जन्म अस्येति वा। सर्वासु क्रियासु सामर्थ्यातिशयवान्[1] प्रभुः। निरुपाधिकमैश्वर्यमस्येति ईश्वरः। "एष सर्वेश्वरः" (बृ. उ. ६-४-२२) इति श्रुतेः॥ १७॥**

**स्वयमेव भवतीति स्वयम्भूः। "स एव स्वयमुद्बभौ" (मनु. १-७) इति मानवं वचनम्। सर्वेषामुपरि भवति, स्वयं**

विवृतिः

प्रभवति—शक्नोति सृष्ट्यादिषु सर्वकर्मस्विति **प्रभुः**। "विप्रसंभ्यो ड्वसंज्ञायाम्" (पा. सू. ३-२-१८०) इति डुप्रत्ययः। "महान् प्रभुर्वै पुरुषः" (श्वे. उ. ३-१२) इति श्रुतिसिद्धं प्रभुनाम निर्वक्ति—**सर्वास्विति**। ईशनशीलः **ईश्वरः**। "स्थेशभास" (पा. सू. ३-२-१७५) इत्यादिना ताच्छील्ये वरच्। निरुपाधिकेशनवत्त्वमेवेशनशीलत्वम्। हिरण्यगर्भादीनां तु कर्मोपासनाप्रयुक्तं तदित्यभिप्रेत्याह—**निरुपाधिकमिति**। तत्र श्रुतिमाह—**एष इति**॥ १७॥

स्वयमेव भवति—उत्पद्यते, नापर उत्पादयति, सर्वकर्तृत्वात् परमेश्वरस्येति व्याचष्टे—**स्वयमेवेति**। अत्र मनुवचनमाह—[2]**स एवेति**। भातिरत्र भवत्यर्थे। स एष परमात्मा स्वयं—उत्पादकान्तरं विनैव, उद्बभौ—उद्भूत इत्यर्थः। "परिभूः स्वयम्भूः" (ईश. उ. ८) इतीशवाक्यम्। तत्र परिभूशब्दे परिशब्दः उपर्यर्थकः लुप्ताद्यक्षर उपरिशब्दो वा।

---

[1] शयात्—पा. [2] स एष इति—पा.

## भाष्यम्

**भवतीति वा स्वयम्भूः। येषामुपरि भवति यश्चोपरि भवति तदुभयात्मना स्वयमेव भवतीति वा। "परिभूः स्वयम्भूः" (ईश. उ. ८) इति मन्त्रवर्णात्। अथ वा स्वयम्भूः परमेश्वरः स्वयमेव स्वतन्त्रो भवति। न परतन्त्रः। "पराञ्चि खानि व्यतृणत् स्वयम्भूः" (कठ. उ. २-१-१) इति मन्त्रवर्णात्॥**

## विवृतिः

"सर्वेषामुपर्युपरि भवतीति परिभूः" (ईश–शा. भा. ८) इति तद्भाष्यात्। "येषामुपरि भवति यश्चोपरि भवति[1] तदुभयात्मना स्वयमेव भवति" (ईश. शा. भा. ८) इति प्राचीनपरिभूस्स्वयम्भूः शब्दमपेक्ष्य ईशावास्यश्रुत्यनुसारेणापि स्वयम्भूरिति नाम व्याचष्टे—**येषामिति**। प्रपञ्चान्तर्गतानां "पादोऽस्य सर्वा भूतानि" (छा. उ. ३-१२-६) इत्युक्तानां प्राणिनामित्यर्थः। **यश्चेति**। "त्रिपादस्यामृतं दिवि" (छा. उ. ३-१२-६) इति श्रुत्युक्तपरमात्मेत्यर्थः। **स्वयमेवेति**। तदुभयात्मकः स्वयमेवेत्यर्थः। तत्र श्रुतिमाह—**परिभूरिति**। स्वयमेव भवति स्वतन्त्रो भवतीति "स्वयम्भूः" (कठ उ. २-१-१) इति कठश्रुत्यनुसारेणापि व्याचष्टे—**अथवेति**। **अत्र स्वयमेवेति**। स्वातन्त्र्येऽर्थे। स्वयमेव भवति–स्वतन्त्रो भवतीत्यर्थः। अस्मिन्नर्थे श्रुतिमाह—**पराञ्चीति**। **खानि**–इन्द्रियाणि, [2]**पराञ्चि**--परागर्थविषयाणि कृत्वा **व्यतृणत्**–हिंसितवान्। **स्वयम्भूः**–स्वतन्त्रः परमेश्वर इत्यर्थः॥

---

[1] सर्वः स्वयमेव–**पा.**　　[2] परागर्थ-**पा.**

स्तोत्रम्

## शम्भुरादित्यः

भाष्यम्

**शं-सुखं भक्तानां भावयतीति शम्भुः। आदित्यमण्डलान्तस्थो हिरण्मयः पुरुषः आदित्यः। द्वादशादित्येषु विष्णुर्वा। "आदित्यानामहं विष्णुः" (भ. गी. १०-२१) इत्युक्तेः।**

विवृतिः

**शम्भुः**। शं-सुखं भावयतीत्यर्थे अन्तर्भावितण्यर्थाद्भवते*र्मितद्र्वादित्वाड्डुरिति शम्भुरित्याह-**शमिति**। भावयतीत्येतन्न विग्रहान्तर्गतम्। किन्तु भवतेरन्तर्भावितण्यर्थतात्पर्यकम्। अणिजन्तात्केवलाद्भवतेर्डुप्रत्ययविधानादिति। "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" (छा. उ. १-६-६) इति श्रुत्यनुसारेणादित्यनाम व्याचष्टे-**आदित्येति**। अदितेरपत्यं, "दित्यदित्यादित्य" (पा. सू. ४-१-८५) इति ण्यप्रत्ययः। विधान्तरेणादि[1]त्यनाम व्याचष्टे-**द्वादशेति**। तत्र गीतावचनं पठति-**आदित्यानामिति**॥

तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च॥
विवस्वान् सविता चैव मित्रो वरुण एव च।
[2]अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः॥
(वि. पु. १-१५-१३०, १३१)

[3]इत्युक्तादित्यानां मध्ये विष्णुनामादित्योऽहमस्मीत्यर्थः॥

---

* अत्र "मितद्र्वादिभ्य उपसङ्ख्यानम्" (वा. २१४२) इति वार्तिकं द्रष्टव्यम्।

[1] त्यशब्दं-**पा.** [2] अंशो भ-**पा.** [3] इत्युक्तानामादि-**पा.**

## स्तोत्रम्

# पुष्कराक्षः

### भाष्यम्

**अदितेरखण्डिताया मह्या अयं पतिरिति वा। "इयं वा अदितिः" (तै. सं. ५-१-७) "महीं देवीं विष्णुपत्नीम्" (तै. ब्रा. ३-१-२) इति श्रुतेः। यथा आदित्य एक एवानेकेषु जलभाजनेषु अनेकवत्प्रतिभासते, एवमनेकेषु शरीरेषु एक एवात्मा अनेकवत्प्रतिभासत इत्यादित्यसाधर्म्याद्वा आदित्यः॥**

**पुष्करेणोपमिते अक्षिणी यस्येति पुष्कराक्षः।**

### विवृतिः

दीयते--खण्ड्यत इति दितिः। "दो अवखण्डने" अस्मात् कर्मणि क्तिन्। न दितिः अदितिः। अखण्डिता पृथिवीत्यर्थः। तस्या अयमित्यर्थे "दित्यदित्यादित्य" (पा. सू. ४-१-८७) इति ण्यः। 'तस्येदम्' (पा.सू. ४-३-१२०) इति सम्बन्धसामान्यस्य स्वस्वामिभाव-रूपविशेषपर्यवसानात् अदितेः अखण्डिताया भूमेरयं स्वामीत्यादि[1]त्यपद-स्यार्थान्तरमाह—**अदितेरिति**। अदितिशब्दस्य भूम्यर्थकत्वे विष्णो-स्तत्पतित्वे च क्रमेण श्रुतिद्वयमाह—**इयमित्यादि**। इयं—पृथिवीत्यर्थः आदित्य इवादित्य इति विष्णावादित्यनाम गौणतयापि व्याचष्टे—**आदित्येति**। "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इति श्रुतिमाश्रित्य साधर्म्यमुपपादयति—**आदित्य एक एवेत्यादिना**॥

पुष्करे इवाक्षिणी यस्येति "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (पा. सू. ५-४-११३) इति षचि पुष्कराक्षनाम व्याचष्टे—**पुष्क-रेणेति**। महच्छब्दः पूज्यवचनः। महान्—पूजितः स्वनो

---

[1] त्यशब्दस्या-पा.

## स्तोत्रम्

# महास्वनः ।

### भाष्यम्

**महान् पूजितः स्वनो नादो वा श्रुतिलक्षणो यस्य सः महास्वनः। "सन्महत्" (पा. सू. २-१-६१) इत्यादिना समासे कृते "आन्महतः समानाधिकरणजातीययोः" (पा. सू. ६-३-४६) इत्यादिना आत्वम् । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" (बृ. उ. २-४-१०) इत्यादिश्रुतेः ।**

### विवृतिः

मेघवद्गम्भीरो ध्वनिरस्य स्वीकृतलीलाविग्रहस्य, महान् —पूजितः स्वनो वेदलक्षणोऽस्येति वा बहुव्रीहौ समासे कृते "आन्महतः (पा. सू. ६-३-४६) इत्यात्वम् ॥

न च तत्र "सन्महत" (पा. सू. २-१-६१) इति प्रतिपदोक्तसमास एव ग्राह्य इति वाच्यम् । महाबाह्वाद्यनुरोधेन समानाधिकरणपदसामर्थ्याच्च लक्षणप्रतिपदोक्तपरिभाषायास्तत्रानङ्गीकारात् । प्रतिपदोक्तसमासग्रहणे तस्य समानाधिकरणग्रहणवैयर्थ्यप्रसङ्गात् । तद्ग्रहणसामर्थ्यादन्यत्राप्यात्वमिति व्याख्यातृभिः स्वीकारादित्यभिप्रेत्य महास्वननाम व्याचष्टे—**महानिति । सन्महदित्यादिना समासे कृत इति ।** सन्महदित्यादिनेत्यतद्गुणसंविज्ञानबहुव्रीहिः । "अनेकमन्यपदार्थे" (पा. सू २-२-२४) इति समासे कृत इत्यर्थः । न तु "सन्महत्परम" (पा. सू. २-१-६१) इत्यादिना कर्मधारये कृत इति । महास्वन इति बहुव्रीहिसमासस्वीकारात् । प्रथमव्याख्याने महांश्चासावोङ्कारलक्षणस्वनश्च, "ओमिति ब्रह्म" (तै. उ. १-८) इति श्रुतेरित्येवं कर्मधारयं स्वीकृत्य वा "सन्महत्" (पा. सू. २-१-६१) इत्यादिभाष्यं योज्यम्। वेदलक्षणस्वनवत्त्वे श्रुतिं पठति—**अस्येति** ॥

## स्तोत्रम्

**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥**

## भाष्यम्

**आदिः–जन्म, निधनं-विनाशः, तद्द्वयं यस्य न विद्यते सः अनादिनिधनः। अनन्तादिरूपेण विश्वं बिभर्तीति धाता। कर्मणां तत्फलानां च कर्ता विधाता। अनन्तादीनामपि धारकत्वाद्विशेषेण दधातीति वा। धातुरुत्तमः इति नामैकं सविशेषणं**

## विवृतिः

आदिश्च निधनं च आदिनिधने–जन्मविनाशौ न विद्येते अस्येति **अनादिनिधनः**। "अनाद्यनन्तं" (कठ. उ. १-३-१५) इति श्रुतेरिति व्याचष्टे—**आदिरित्यादिना**। अनन्तादिरूपेण विश्वं दधाति–धारयतीति दधातेस्तृजिति धातृनाम निर्वक्ति—**अनन्तादीति**। कर्माणि–दर्शपूर्णमासादीनि, तत्फलानि–स्वर्गादीनि, च विदधाति-सृजतीति विपूर्वाद्दधातेस्तृजिति विधातृनाम निर्वक्ति–**कर्मणामिति**। विशेषेण—धारकान्तरानपेक्षतया, दधाति—धारकानप्यनन्तादीन् बिभर्तीत्यर्थान्तरमाह—**अनन्तादीनामिति**। अनन्तादिधारणे धारकान्तरनिरपेक्षत्वं वीत्युपसर्गार्थो विशेष इति बोध्यम् ॥

दधातीति **धातुः**। "सितनिगमि (उणा. ६९) इत्यादिना तुन्। अतिशयेनोत्कृष्टः। उत्कृष्टार्थवृत्तेरुच्छब्दात्तमप्। द्रव्यप्रकर्षार्थत्वात् नाम्प्रत्ययः। पृथिव्यादीनि महाभूतानि जगतो धारणात् धातुशब्देनोच्यन्ते। परमेश्वरस्तु तेषामपि धारणात् धातुरुत्तम इति। इदं च समानाधिकरणविशेषणविशिष्टमेकं नामेत्यभिप्रेत्य धातुरुत्तम इति नाम व्याचष्टे—**धातुरिति**। धातृशब्दो विरिञ्चिवचनो

भाष्यम्

**सामानाधिकरण्येन । धातुर्विरिञ्चादुत्कृष्ट इति वा वैयधिकरण्येन । नामद्वयं वा । सर्वधातुभ्यः पृथिव्यादिभ्यः उत्कृष्टश्चिद्धातुरित्यर्थः । कार्यकारणप्रपञ्चधारणाच्चिदेव धातुः । उत्तमः । सर्वेषामुद्गतानां अतिशयेनोद्गतत्वादुत्तमः ॥ ९८ ॥**

विवृतिः

ऋकारन्तः, तस्य पञ्चम्यन्तस्य रूपं **धातुरिति** । [1] तस्मादुत्कृष्ट इति वैयाधिकरण्येन सविशेषणमेकं नामेति प्रकारान्तरेण व्याचष्टे—**धातुरिति** ॥

दधाति कार्यकारणरूपप्रपञ्चमिति धातुः । पूर्ववत्तन्निति नामद्वयपरतामप्याश्रित्य आद्यं नाम व्याचष्टे—**कार्येति** । उदिति पाप्मभ्य [2] उद्गता देवा उच्यन्ते । "न ह वै देवान् पापं गच्छति" (बृ. उ. १–५–२०) इति श्रुतेः । उद्गतानां देवानां अतिशयेन पाप्मभ्य [3] उद्गतः । अतिशायने तमप् । "स एष सर्वेभ्यः पाप्मभ्य उदितः" (छा. उ. ९-६-७) इति श्रुतेरित्यभिप्रेत्य द्वितीयमुत्तमनाम व्याचष्टे—**उत्तम इति** । यद्वा उद्गतानां हिरण्यगर्भादीनां अयमतिशयेनोर्ध्वं गतः–उत्तम इति व्याचष्टे—**उत्तम इति** । अच्युत इति नाम व्याख्याय 'आद्यं शतकं विवृतम्' इति वक्ष्यमाणभाष्यादेकनामत्वपक्षो भाष्यकृतामभिप्रेत इति बोध्यम् ॥ १८ ॥

प्रपूर्वान्माधातोः "अचो यत्" (पा. सू. ३-१-९७) इति यत्प्रत्यये "ईद्यति" (पा. सू. ६–४–६५) इतीत्वे प्रमेयमिति रूपम् । नञ्समासे चाप्रमेयमिति निष्पत्तिमभिप्रेत्य "*एतदप्रमयं ध्रुवम्"

---

[1] तस्मादतिशयेनोत्कृ–**पा.** [2] ऊर्ध्वंगतानां–**पा.** [3] उद्भूत–**पा.**

* अप्रमेयमित्यर्थः ।

भाष्यम्

**शब्दादिरहितत्वान्न प्रत्यक्षगम्यः । नाप्यनुमानगम्यः । [1]तद्व्याप्तलिङ्गाभावात् । नाप्युपमानसिद्धः । निर्भागत्वेन**

विवृतिः

(बृ. उ. ४–४–२०) इति श्रुतिमाश्रित्याप्रमेयनाम व्याचष्टे—**शब्दादीति** । प्रमातुं योग्यं प्रमेयम् । तद्भिन्नमप्रमेयम् । प्रमाचानधिगताबाधितार्थानुभवरूपा । सा च प्रत्यक्षानुमित्युपमितिशाब्दार्थापत्त्यनुपलब्धिभेदेन षोढा । तत्र प्रत्यक्षप्रमाविषयत्वं न ब्रह्मण इत्याह—**शब्दादीति** । ब्रह्मणो न बहिरिन्द्रियप्रत्यक्षत्वम् । रूपादिरहितत्वेन तदयोग्यत्वात् । नापि मानसप्रत्यक्षविषयता । आत्मनः स्वप्रकाशत्वेन जन्यज्ञानानपेक्षणात् । सुखादीनां स्वप्रकाशसाक्षिमात्रभास्यत्वाच्च मनसो [2]ज्ञानाकरणत्वादित्यर्थः ॥

नाप्यनुमितिविषयत्वमित्याह—**नापीति** । तत्र हेतुमाह—**तद्व्याप्तेति** । न च कार्यत्वलिङ्गकानुमितिः सम्भवतीति वाच्यम् । किं "यत् कार्यं तत् ब्रह्मजन्यं" इत्यनुमानं ब्रह्मसाधकं ? किं वा "यत् कार्यं तत् सकारणकम् इति ? नाद्यः । ब्रह्मण इन्द्रियाग्राह्यत्वात् । "इदं कार्यं ब्रह्मजन्यं" इति व्याप्तिग्रहायोगात् । न द्वितीयः कारणसिद्धावपि तस्य ब्रह्मरूपत्वाज्ज्ञानादित्यर्थः ॥

नचोपमितिविषयत्वमित्याह—**नापीति** । तत्र हेतुमाह—**निर्विभागत्वेनेति** । निरवयवत्वान्निर्गुणत्वान्निष्क्रियत्वाच्च "स गौरनेन गवयेन सदृशः" इतिवत्सादृश्याभावेन सादृश्यज्ञानरूपोपमितिप्रमाविषयत्वायोग इत्यर्थः ।

---

[1] तद्व्याप्ति–**पा.** [2] ज्ञानकर-**पा.**

भाष्यम्

**साद्दश्याभावात् । नाप्यर्थापत्तिग्राह्यः । तद्विनानुपपद्यमानस्यासम्भवात् । नाप्यभावगोचरः । भावरूपत्वात् । अभावसाक्षित्वाच्च । नापि शास्त्रप्रमाणवेद्यः । प्रमाणजन्यातिशयाभावात् । यद्येवं**

विवृतिः

अर्थापत्तिविषयत्वमपि नेत्याह—**नापीति**। कार्यस्य कारणं विना अनुपपत्तावपि ब्रह्म विना कस्यचिदर्थस्यानुपपन्नत्वाभावादित्यर्थः। नाप्यनुपलब्धिप्रमागोचर इत्याह—**नापीति**। तत्र हेतुमाह—**भावरूपत्वादिति**। अनुपलब्धिप्रमाया अभावगोचरत्वान्न भावरूपात्मविषयकत्वमित्यर्थः। तत्रैव हेत्वन्तरमाह—**अभावेति**। बुद्धिवृत्तिरूपोपलब्ध्यभावग्राहकस्य साक्षिणः तद्ग्राह्यत्वायोगादित्यर्थः॥

नाप्युपनिषज्जन्यप्रमाविषयत्वमित्याह—**नापीति**। तत्र हेतुमाह—**प्रमाणेति**। परागर्थेषु घटपटादिषु प्रमाणजन्यस्फुरणरूपातिशयवत्त्वं दृष्टम्। ब्रह्मणस्तु प्रतीचः "तमेव भान्तमनुभाति" (कठ. उ. २-२-१५) इत्यादिश्रुत्या सर्वभासकस्य स्वप्रकाशस्य स्वतः स्फुरणरूपतया तदर्थमन्यानपेक्षणादित्यर्थः॥

ननु *शास्त्रयोनित्वाधिकरणे ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तम्। शास्त्रप्रमेयत्वस्याप्यभावे तद्व्याकुप्येतेति शङ्कते—**यद्येवमिति**। स्वप्रकाशचैतन्यरूप एवात्मा। अतस्तस्य भानार्थं नान्यापेक्षा। किन्तु कल्पिताज्ञानतत्कार्यनिवृत्त्यर्थं कल्पितवृत्तिविशेषापेक्षा। कल्पितस्यैव कल्पितवृत्तिविरोधित्वात्। †यक्षानुरूपो बलिरिति न्यायात्। तथा च सर्वकल्पितनिवर्तकवृत्तिविशेषोत्पत्त्यर्थं शास्त्रारम्भः। तस्य च

* शास्त्रयोनित्वाधिकरणे (ब्र. सू. १-१-३) द्वितीयवर्णकेऽयं विषयो वर्णितः।

† यादृशो यक्षः तादृशो बलिरिति न्यायार्थः.

भाष्यम्

**शास्त्रयोनित्वं कथम्? उच्यते—प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वेऽपि अध्यस्तातद्रूपनिवर्तकत्वेन**

विवृतिः

वृत्तिविशेषस्य तत्त्वमस्यादिवाक्यमात्राधीनत्वान्न शास्त्रयोनित्वाधिकरण-विरोध इत्यभिप्रेत्य समाधत्ते—**उच्यत इत्यादिना। प्रमाणाविषयत्वेऽपीति।** शास्त्रजन्यवृत्तिप्रतिफलितचैतन्याविषयत्वेऽपीत्यर्थः। प्रमाणाविषयत्वेऽपीत्येतदनन्तरं शास्त्रजन्यवृत्तिविषयतयेत्यध्याहारः। तस्य च शास्त्रप्रमाणकत्वमित्यनेनान्वयः। ततश्च "यतो वाचः" (तै. उ. २-९) इति श्रुत्या शब्दशक्तिविषयताया मनोवृत्त्यवच्छिन्नचैतन्य-भास्यत्वरूपफलविषयताया एव च प्रतिषेधात्। मनोवृत्त्यवच्छिन्न-चैतन्यरूपफलाविषयत्वेऽपि "तं त्वौपनिषदं" (बृ. उ. ३-९-२६) इति श्रुत्या लक्षणया वृत्त्या उपनिषत्प्रतिपाद्यतायाः "दृश्यते त्वग्र्यया बुद्ध्या" (कठ. उ. १-३-१२) इति विशुद्धमनोवृत्तिवेद्यतायाश्च श्रुत्यैवानुमतत्वाल्लक्षणया तत्त्वमस्यादिशास्त्रजन्याहंब्रह्मास्मीतिवृत्तिविषय-त्वेन शास्त्रप्रमाणकत्वमविरुद्धमित्यर्थः॥

फलाभावात् कथं शास्त्रप्रमाणकत्वमत आह—**अध्यस्तेति।** ब्रह्मण्यारोपिताज्ञानतत्कार्यनिवृत्त्या शास्त्रप्रमाणकत्वं युज्यत इत्यर्थः। प्रमाणाविषयत्वे हेतुगर्भं विशेषणं **प्रकाशस्वरूपस्येति।** प्रकाश-स्वरूपत्वे हेतुमाह—**प्रमाणादीति।** आदिशब्देन प्रमात्रादिग्रहः॥

अयं भावः—यदा हि चक्षुरादीन्द्रियाणां रूपवद्द्रव्यादिविषय-सन्निकर्षः तदा तत्तद्विषया[1]कारवृत्तिरूपान्तःकरणपरिणामश्चक्षुरादिद्वारा निर्गत्य विषयं व्याप्नुवन्तो विषयावच्छिन्नं चैतन्यं तद्गतावारकाज्ञान-

[1] कारान्तःकरण—**पा.**

## विवृतिः

विध्वंसनेनाभिव्यञ्जयन्ति। तेन चाभिव्यक्तचैतन्येन विषयः प्रकाशते। तदोक्तवृत्त्याश्रयः प्रमाता व्यवहरति 'घटं पश्यामि, घटं स्पृशामि, शब्दं शृणोमि, रसं रसयामि, गन्धं जिघ्रामि' इत्यादि। एवं व्याप्त्यादिज्ञानेनानुमित्यादिवृत्त्युदये "अनुमिनोमि" इत्यादिव्यवहारो बोध्यः। तद्व्यवहारश्च प्रमाणप्रमातृप्रमेयत्रितयगोचरः स्वसमानविषयकज्ञानमपेक्षते। व्यवहारमात्रस्य व्यवहर्तव्यज्ञानसाध्यत्वात्, तस्य च ज्ञानस्य ज्ञानान्तरविषयत्वेऽनवस्थानात्, स्वविषयत्वे विषयविषयिणोर्भेदनियमभङ्गप्रसङ्गात्, संविदविषयत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वे वक्तव्ये तस्य कादाचित्कत्वे तदधीनप्रकाशत्वे चात्मनः कदाचिदभानप्रसङ्गात्, अवस्थात्रयेऽप्यसन्दिग्धाविपर्यस्तात्मप्रकाशस्य सार्वजनीनत्वात्, सुषुप्तावपि प्रबुद्धस्य "अस्वाप्सं" इति परामर्शान्यथानुपपत्त्या तत्प्रकाशस्याभ्युपेयत्वात्, इन्द्रियार्थसन्निकर्षादिसामग्रीशून्यतया तदानीं जन्यज्ञानस्यासम्भवात्, तस्यापि स्वप्रकाशत्वे सिद्धे नित्यात्मप्रकाशेनैव जानामि, इच्छामि, द्वेष्मीत्यादिसर्वव्यवहारोपपत्तौ अनन्तजन्यज्ञानस्वप्रकाशत्वकल्पनस्य गौरवपराहतत्वादात्मैव सर्वान्तःकरणतद्वृत्तिभासकतया साक्षीत्युच्यते। अत एव श्रुतिः "यो वेदेदं जिघ्राणीति स आत्मा" (छा. उ. ८-१२-४) इति॥

न च "वेद" इत्याख्यातेन विदिधात्वर्थस्य घ्रेयघ्रातृघ्राणनत्रितयगोचरवेदनरूपानुव्यवसायस्याश्रयत्वेनैवात्मा बोध्यत इति वाच्यम्। परमते घ्रातुरेवात्मत्वेन यो जिघ्रति स आत्मेति सुवचत्वे उक्तत्रितयवेदनाश्रयत्वपर्यन्तधावनस्य श्रुतौ प्रयोजनाभावात्। एवं च वेदेति "सविता प्रकाशते" इतिवदाख्यातस्याविवक्षितार्थत्वाल्लक्षणया

## स्तोत्रम्

# अप्रमेयः

### भाष्यम्

**शास्त्रप्रमाणकत्वमिति अप्रमेयः । साक्षिरूपत्वात् ॥**

**हृषीकाणि--इन्द्रियाणि, तेषामीशः क्षेत्रज्ञरूपभाक् । यद्वा इन्द्रियाणि यस्य वशे वर्तन्ते स परमात्मा हृषीकेशः । यस्य वा सूर्यरूपस्य चन्द्ररूपस्य जगत्प्रीतिकरा हृष्टाः केशा रश्मयः सः**

### विवृतिः

वा विषयित्वार्थकत्वात् घ्राणनादित्रितय[1] विषयकवेदनरूप एवात्मेति श्रुतेरर्थ इत्युपपादितमर्थमुपसंहरति [2]**अप्रमेय इति ।**

हृष्यन्त्येभिः "[3]हृष तुष्टौ" "अनिहृषिभ्यां किच्च" (उणा. ३५७) इति करणे ईकन् । हृषीकाणि ईष्टे ईशः । "इगुपध" (पा. सू, ३-१-१३५) इत्यादिना कः । तेषामृषीकाणामीशः—स्वामी जीवः, तद्रूपत्वाद्विष्णुः हृषीकेश इति तन्नाम व्याचष्ट—**हृषीकाणीति ।** हृषीकाणां—इन्द्रियाणां, ईशः—नियन्ता प्रेरकः परमात्मा हृषीकेश इति विधान्तरेण व्याचष्टे—**यस्य वश इति ।** भारतोक्तनिर्वचनमनुसृत्यापि निर्वक्ति—**यस्य वेति ।** हृष्यत्येभिः जगदिति विग्रहे "हृष तुष्टौ" इति धातोः "सर्वधातुभ्य इन्" (उणा. ५५७) "इगुपधात् कित्" (उणा. ५५९) इतीन् प्रत्ययः कित् । [4]हृषयः हर्षकराः केशा रश्मयो यस्य सूर्यचन्द्ररूपस्य स परमेश्वरो हृषीकेश

---

[1] विषयकावे-**पा.** [2] अतोऽप्रमेय-**पा.** [3] हृषु अलीके-**पा.** [4] हृष्यो हर्ष-**पा.**

स्तोत्रम्

## हृषीकेशः

भाष्यम्

**हृषीकेशः। "सूर्यरश्मिर्हरिकेशः पुरस्तात्" (तै. स. ४–६–३) इति श्रुतेः। पृषोदरादित्वात्साधुत्वम्। [1]तथोक्तं मोक्षधर्मे—**

**सूर्याचन्द्रमसोः [2]शश्वदंशुभिः केशसंज्ञितैः।**
**बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक्।**
**बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत्॥**
**अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन!।**
**हृषीकेशोऽहमीशानो वरदो लोकभावनः॥ इति॥**

**(शान्तिपर्व ३५२–१, २)**

विवृतिः

इत्यर्थः। ननु हृषीति दीर्घत्वं कथमीत्याशङ्कयाह **पृषोदरादित्वादिति।** भारतवचनं पठति — **तथाचोक्तमिति। सूर्याचन्द्रमसौ**—अग्नीषोमौ, तयोः **अंशुभिः**—दीप्तिभिः, **केशसंज्ञितैः जगद्बोधयन् स्वापयंश्च पृथगुत्ति[3]ष्ठते।** सूर्यकृतात् **बोधनात्** चन्द्रकृतात् **स्वापनाच्च जगतो हर्षणं भवेत्। अग्नीषोमकृतैः**—प्रतिदिनं चन्द्रसूर्यकृतैः **कर्मभिः**—जगतो हर्षणैः **हृषीकेशोऽहम् हृषयः**—हर्षकराः केशा यस्य स हृषीकेश इत्यर्थः॥

नाभौ पद्मं यस्येति बहुव्रीहौ "अच्प्रत्यन्वव" (पा. सू. ५–४–७५) इत्यत्राजिति योगविभागादच्। *"गड्वादेः परा

---

* "सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्" (वा. १४२१) इति वार्तिकस्यायं सङ्ग्रहः॥

[1] तदुक्तं-**पा.** [2] शश्वत्केशैर्मे अंशुसंज्ञितैः–**पा.** [3] ष्ठतः–**पा.**

स्तोत्रम्

## पद्मनाभोऽमरप्रभुः ।

भाष्यम्

**सर्वजगत्कारणं पद्मं नाभौ यस्य सः पद्मनाभः ।** "अजस्य नाभावध्येकमर्पितम्" (तै. सं. ४-६-२) इति श्रुतेः। **अमराणां प्रभुः अमरप्रभुः ।** विश्वं कर्म-क्रिया यस्य सः [1]**विश्वकर्मा ।** क्रियत इति जगत् कर्म, विश्वं कर्म यस्येति वा,

विवृतिः

सप्तमी" (वा. १४२१) इत्यत्र आदिग्रहणस्य प्रकारार्थत्वेन व्याख्यानात्सप्तम्याः परनिपात इति रूपसिद्धिमभिप्रेत्य पद्मनाभनाम व्याचष्टे-**सर्वजगत्कारणमिति** । नाभिकमलस्य सर्वजगत्कारणत्वे श्रुतिमाह-**अजस्येति** । "यस्य नाभिसमुद्भूतपङ्कजवदखिलं जगत्" इति विष्णुपुराणे । न म्रियन्ते इत्यमराः । "मृङ् प्राणत्यागे" पचाद्यच् । नञ्समासः । प्रभवतीति प्रभुः । "विप्रसम्भ्यो डु. (पा. सू. ३-२-१८०) इति डुप्रत्यय इत्यभिप्रेत्य व्याचष्टे--**अमराणामिति ।** क्रिया कर्म, क्रियते वा कर्मेति कर्मशब्दो भावसाधनः कर्मसाधनो वा "सर्वधातुभ्यो मनिन्" (उणा. ५९४) इति भावे कर्मणि वा मनिन्नन्तः । अत्रादौ भावार्थमादाय विश्वकर्मनाम व्याचष्टे--**विश्वमिति ।** क्रियावतां सर्वेषां तत्राध्यासात्सर्वाः क्रिया यस्येत्यर्थः । कर्मसाधनमादाय व्याचष्टे—**क्रियत इति ।** तथा च कार्यं कर्मशब्दार्थः । विश्वं-सर्वं कार्यमस्य "स हि सर्वस्य कर्ता" (बृह. उ. ४-४-१३) इति श्रुतेरित्यर्थः । विश्वकर्मशब्दः समुदायशक्त्या देवशिल्पिनि रूढः । "विश्वकर्मार्कसुरशिल्पिनोः" (नाम. ३-३-१०९) इत्यमरकोशात् । विश्व-

[1] विश्वकर्मा । त्वष्टृसा-**पा.**

## स्तोत्रम्

# विश्वकर्मा मनुः

### भाष्यम्

**विचित्रनिर्माणशक्तिमत्त्वाद्वा, विश्वकर्मणा—त्वष्ट्रा सादृश्याद्वा। मननात् मनुः। "नान्योऽतोऽस्ति मन्ता" (बृह. उ. ५–७–२३) इति श्रुतेः। मन्त्रो वा प्रजापतिर्वा मनुः।**

### विवृतिः

कर्मवद्विचित्रकार्यनिर्माणरूपगुणयोगाद्गौणमिति व्याख्यानान्तरमाह—**विचित्रेति।** अनेन मुख्यार्थगुणयोगो दर्शितः। विश्वकर्मशब्दोऽर्कवचनः। उदाहृतामरकोशात्। एवं चार्कवज्जगदवभासकत्वगुणयोगादेकस्योपाधिभेदेन भिन्नवद्भासमानत्वगुणयोगाद्वा गौणं नामेति विधान्तरेण व्याचष्टे—**त्वष्ट्रा सादृश्याद्वेति।** आदित्यसादृश्याद्वेत्यर्थः। "त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि" इत्यभिधानकोशात्। "मनु अवबोधने" "मन ज्ञाने" इत्यतो वा "शृस्वृस्निहि" (उणा. १०) इत्युणादिसूत्रेण कर्तरि उप्रत्यय इति मनुनाम निर्वक्ति—**मननादिति।** मननाख्यव्यापारकर्तृत्वान्मनुरित्यर्थः। तत्र श्रुतिमाह—**नान्य इति।** **अतः**—अन्तर्यामिणः सकाशाद्वस्तुतो **मन्ता** नेत्यर्थः। विधान्तरेण व्याचष्टे—**मन्त्रो वेति।** प्रणवादिमन्त्रात्मकत्वान्मन्त्रवाचिमनुनाम्नोऽच्युत इत्यर्थः। मनुशब्दः प्रजापतिवचन इति तत्परत्वेनापि व्याचष्टे—**प्रजापतिर्वेति।** प्रजापतेस्तद्विभूतित्वेन स्तुतिरुपपद्यत इत्यर्थः॥

स्तोत्रम्

**त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ११ ॥**

भाष्यम्

**संहारसमये सर्वभूततनूकर[1]णात् त्वष्टा। त्वक्षतेस्तनूकरणार्थात्तृच्प्रत्ययः। अतिशयेन स्थूलः स्थविष्ठः। पुराणः स्थविरः। "त्वेषं ह्यस्य स्थविरस्य नाम" (ऋ. सं. ७-१००-३) इति**

विवृतिः

त्वष्टृनाम निर्वक्ति—**त्वक्षतेरिति**। "नप्तृ-नेष्टृ-त्वष्टृ" (पा. सू. ६-४-११) इत्यादिना निपातनात्साधुः। प्रलयकाले सर्वं त्वक्षति—तनूकरोतीत्यर्थः। अतिशयेन स्थूल इति विग्रहे "अतिशायने तमबिष्ठनौ" (पा. सू. ५-३-५५) इतीष्ठन्प्रत्यये "स्थूलदूर" (पा. सू. ६-४-१५६) इत्यादिना यणादि परं लुप्यते, पूर्वस्य गुणो भवतीत्यभिप्रेत्य स्थविष्ठनाम व्याचष्टे—**अतिशयेनेति**। विराडात्मक इत्यर्थः। "अजिरशिशिर" (उणा. ५३) इत्यादिना निपातनात्साधुरिति स्थविरनाम व्याचष्टे—**पुराण इति**। स्थविरत्वे श्रुतिं पठति—**त्वेषं हीति**। **अस्य स्थविरस्य**—विष्णोः, **नाम**—विष्णुरित्येवं नाम, **त्वेषं हि**—यस्माद्दीप्तं तस्मात्कारणात्, **तवसः**—[2]तवस्विनोऽपि—वृद्धादपि, **तवीयान्**—[3]तवस्वितरः, विष्णुः **प्रास्तु**—अस्माकं प्रभवतु—स्वामी भवत्वित्यर्थः। "प्रवयाः स्थविरो वृद्धः" (नाम. २-६-४२) इत्यभिधानकोशात् वृद्धरूपः स्थविर इति विधा-

---

[1] णत्वात्—**पा.**   [2] तपस्विनोऽपि—**पा.**   [3] तपस्वितरः—**पा.**

स्तोत्रम्

## अग्राह्यः शाश्वतः कृष्णः

भाष्यम्

**बह्वृचाः। वयोवचनो वा। स्थिरत्वात् ध्रुवः। स्थविरो ध्रुव इत्येकं नाम सविशेषणम् ॥ १९ ॥**

**कर्मेन्द्रियैः न गृह्यत इति अग्राह्यः। "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" (तै. उ. २–४) इति श्रुतेः। शश्वत् सर्वेषु कालेषु भवतीति–शाश्वतः। "शाश्वतं शिवमच्युतम्" (तै. आ. याज्ञिक्यु. १०-१३) इति श्रुतेः। [1] सदानन्दात्मकः कृष्णः।**

विवृतिः

न्तरेण व्याचष्टे—**वयोवचनो वेति।** "त्वं जीर्णो दण्डेन वञ्चसि" (श्वेता. उ. ४-३) इति श्रुतेः। [2] सर्वात्मकत्वात् स्थविररूपेणावस्थानादित्यर्थः। स्थविरत्वेनानित्यत्वमाशङ्क्य ध्रुवत्वेन विशिनष्टि–**स्थिरत्वादिति।** स्थविरो ध्रुव इति सविशेषणमेकं नामेत्याह—**स्थविर इति ॥ १९ ॥**

अप्रमेय इति पूर्वं ज्ञानेन्द्रियाग्राह्यत्वमुक्तम्। अधुना अग्राह्य इति नाम्ना कर्मेन्द्रियाग्राह्यत्वमुच्यत इत्यभिप्रेत्य व्याचष्टे—**कर्मेन्द्रियैरिति।** शश्वत्-सदा भवः। "तत्र भवः" (पा. सू. ४-३-५३) इत्यण्। अनित्योऽव्ययानां टिलोपः, * बहिषष्टिलोपवचनाज्ज्ञापकादिति रूपमाभिप्रेत्याह—**सर्वेष्विति।** तत्र श्रुतिं पठति—**शाश्वतमिति।** कृषिः सत्तावचनः। णकारो निर्वृतिवचनः। तथा च सदानन्दरूपः परमात्मा कृष्ण इत्यभिप्रेत्याह—**सदानन्देति।**

---

* "बहिषष्टिलोपो यञ्च" (वा. २५५६) इति वार्तिकं बहिषष्टिलोपवचनज्ञापकम्।

[1] सच्चिदानन्दात्मकः–**पा.** [2] सर्वकारणत्वात्–**पा.**

स्तोत्रम्

## लोहिताक्षः प्रतर्दनः ।

भाष्यम्

**कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।**
**विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥**
**(उद्योगपर्व ६९-५)**

**इति व्यासवचनात्, कृष्णवर्णात्मकत्वाद्वा ।**
**"कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन!"।**
**(शान्तिप. ३५२-१४)**

**इति महाभारते । लोहिते अक्षिणी यस्येति लोहिताक्षः । "स मा वृषभो लोहिताक्षः ।" (तै. आ. ४-४२) इति श्रुतेः । प्रलये भूतानि प्रतर्दयति-हिनस्तीति [1] प्रतर्दनः ॥**

विवृतिः

उक्तनिरुक्तिपरं भारतवचनं पठति—**कृषिरित्यादि** । भूवाचकः—सत्तावाचकः । निर्वृतिवाचकः—सुखवाचकः । **तद्भावयोगादिति** । सत्तासुखस्वरूपयोगादित्यर्थः । कृष्णो वर्णोऽस्यास्तीति **कृष्णः** । "गुणवचनेभ्यो मतुपो लुक्" (वार्ति. ३१८५) इति मतुपो लुगित्यभिप्रेत्य तन्नामव्याख्यानपरं भारतवचनं पठति—**कृष्ण इति** । लोहिताक्षनाम्नो भाष्यं स्पष्टार्थम् । एतन्नाम्नः श्रुतिप्रसिद्धिमाह—**समेति** । "सूर्यो विपश्चिन्मनसा पुनातु" (तै. आ. ४-४२) इत्युत्तरपादेनास्य सम्बन्धो द्रष्टव्यः । प्रकर्षेण तर्दति—हिनस्ति संहृतिकाले भूतानीति "तर्द हिंसायां" इत्यतो "बहुलमन्यत्रापि" (उणा. २३६) इति युजित्यभिप्रेत्य व्याचष्टे—**प्रलय इति** ।

---

[1] प्रतर्दनः "तर्द हिंसायाम्" इत्यस्माद्धातोः—**पा.**

स्तोत्रम्

## प्रभूतस्त्रिककुब्धाम

भाष्यम्

**ज्ञानैश्वर्यादिगुणैः सम्पन्नः प्रभूतः। ऊर्ध्वाधोमध्यभेदेन [1]तिसृणां ककुभामपि धामेति त्रिककुब्धामेत्येकं [2]नाम।**

विवृतिः

प्रभूतनाम व्याचष्ट—**ज्ञानैश्वर्यादीति**। आदिशब्देन बलवीर्य-तेजआदीनि गृह्यन्ते। तैः सम्पन्नः—समृद्धः इत्यर्थः। तिसृणां ककुभां दिशां समाहार इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे च" (पा. सू. २-१-५१) इति समाहारे द्विगौ "द्विगुरेकवचनम्" (पा. सू. २-४-१) इत्येकवद्भावे "स नपुंसकम्" (पा. सू. २-४-१७) इति नपुंसकत्वे च त्रिककुप्। तस्य धाम—अधिष्ठानं प्रकाशो वेति इदं वचः समासात्मकमेकं नामेति व्याचष्टे—**ऊर्ध्वाधोमध्यभेदेनेत्यादिना**। त्रिसृणां ककुभामिति भाष्यं न विग्रहप्रदर्शकम्। किन्तु फलितार्थकथनमिति बोध्यम्॥

न चात्र तिस्रश्च ताः ककुभश्चेति कर्मधारयः शङ्क्यः। "दिक्सङ्ख्ये संज्ञायाम्" (पा. सू. २-१-५०) इति "तद्धितार्थोत्तरपदसमाहारे च" (पा. सू. २-१-५१) इत्यनयोर्नियमार्थत्वात्। न च त्रिलोकनाथ इत्यादाविव त्र्यवयवा ककुप् त्रिककुबिति मध्यमपदलोपिसमासः। त्रिलोकनाथ इत्यादौ स्त्रियां ङीबादिप्रसङ्गात् समाहारेद्विगवसम्भवे मध्यमपदलोपिसमासस्याश्रितत्वात्। प्रकृते सत्यपि समाहाराद्विगौ न किञ्चिदनिष्टमिति समाहारद्विगुरेवेति बोध्यम्॥

---

[1] त्रयाणां लोकानां तिसृणां—**पा.** [2] पदम्—**पा.**

## स्तोत्रम्
# पवित्रं

### भाष्यम्

**येन पुनाति, यो वा पुनाति ऋषिर्देवता वा तत् पवित्रम्। "पुवः संज्ञायाम्" (३-२-१८५) "कर्तरि चर्षिदेवतयोः" (३-२-१८६) इति पाणिनिस्मरणादित्रप्रत्ययः। *पविः-वज्रं, तस्मात् त्रायत इति वा पवित्रम्* ॥**

### विवृतिः

पवित्रनाम व्याचष्टे — **येनेति**। येन पुनाति स ऋषिः मन्त्रश्चेत्, यो वा पुनाति सा देवता चेत्, तत्पवित्रमिति योजना। एतन्नामव्युत्पादकं पाणिनीयसूत्रं पठति—**पुव इत्यादि**। सूत्रयोरयमर्थः—"अर्तिलूधू" (पा. सू ३-२-१८४) [1] इत्यादेरित्र इत्यनुवर्तते। पूञ्धातोरित्रप्रत्ययः स्यात् संज्ञायां विषये। **पवित्रं**—आज्योत्पवनकरणमनामिकावेष्टनं च। पुव इत्रः स्यात् ऋषौ करणे, देवतायां कर्तरि। ऋषिर्वेदमन्त्रः। तदुक्तमृषिणेत्यादौ मन्त्रे प्रयोगात्। पूयतेऽनेनेति पवित्रं मन्त्रः। देवतायां तु "अग्निः पवित्रम्। स मा पुनातु" इत्युदाहरणमिति। प्रथमसूत्रं तु पदानुवृत्त्यर्थमुक्तमिति। प्रकृते च पवनकरणं येन पुनातीति, पवनकर्ता यः पुनातीत्युभयमपि मन्त्रदेवतात्मकं विष्णुरेव। पवनकरणीभूतमन्त्रस्य तदात्मकत्वात्। पवनकर्तापि सैव विष्णुदेवता कीर्तिता स्मृता ध्याता भक्तान् पुनातीति **पवित्रम्**। अत एव येन पुनाति यः पुनातीत्यर्थद्वयमपि भाष्ये दर्शितमिति बोध्यम् ॥

---

* इदं वाक्यं केषुचित्पुस्तकेषु दृश्यते। विवृतौ अस्य विवरणं नोपलभ्यते।

[1] इत्यादिना—**पा.**

स्तोत्रम्

## मङ्गलं परम् ॥२० ॥

भाष्यम्

**अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।**
**स्मृतिमात्रेण यत् पुंसां ब्रह्म तन्मङ्गलं विदुः ॥**

**इति विष्णुपुराणवचनात् । कल्याणरूपत्वाद्वा मङ्गलम् । परं—सर्वभूतेभ्य उत्कृष्टं ब्रह्म । "मङ्गलं परम्" इत्येकमिदं नाम सविशेषणम् ॥ २० ॥**

विवृतिः

यत् खलु क्रियमाणमेव मनःप्रह्लादनं समीहितसाधनं तन्मङ्गलमित्युच्यते । ब्रह्मतत्त्वं तु ज्ञानेनानुमीयमानमशुभनिराकरणशुभसन्ततिजननरूपश्रेयस्साधनं भवतीति मङ्गलमिति विष्णुपुराणमाश्रित्य मङ्गलनाम व्याचष्टे—**अशुभानीत्यादिना** । सुखं तत्साधनं तज्ज्ञापकं च मङ्गलमिति "मङ्गलानां च मङ्गलं" (वि. स. १०) इत्यत्र भाष्ये व्याख्यातत्वात् सुखरूपं मङ्गलमिति अर्थान्तरमाह—**कल्याणरूपत्वाद्वेति** । ज्ञानैश्वर्यादिभिर्गुणैः सर्वभूतेभ्य उत्कृष्टत्वात् परमिति व्याचष्टे—**सर्वेति** । नपुंसकलिङ्गापेक्षितं विशेष्यं दर्शयति **ब्रह्मेति** ॥ २० ॥

इष्टे ईशानः । "ईश ऐश्वर्ये" अस्माल्लटः शानच् । * "वर्तमाने लट्" (पा. सू. ३-२-१२३) इत्यतो लड्ग्रहणानुवृत्तिसम्भवादधिकं लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् 'सन् ब्राह्मणः' इति व्याख्यानात् नेशानशब्दस्यासाधुता ।

---

* "लटः शतृशानचावप्रथमासमानाधिकरणे" (पा. सू. ३-२-१२४) इत्यत्रेत्यादिः ।

स्तोत्रम्

## ईशानः प्राणदः

भाष्यम्

सर्वभूतनियन्तृत्वात् ईशानः। प्राणान् ददाति—चेष्टयतीति प्राणदः। "को ह्येवान्यात् कः प्राण्यात्" (तै. उ. २-७) इति

विवृतिः

"ताच्छील्यवयोवचन" (पा.सू. ३-२-१२९) इत्यादिना शानच्-प्रत्ययो वेति [1]निष्पत्तिमभिप्रेत्याह—**सर्वभूतेति**। [2]ईशानत्वमत्र नियन्तृत्वम्। तच्च जीवानां तत्तत्कर्मणि प्रवर्तकत्वरूपमित्यत ईशान इत्यर्थः॥

**प्राणान् ददातीति**। ददातेः "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यये "आतो लोप इटि च" (पा. सू. ६-४-६४) इत्यालोपे च रूपं प्राणद इति। प्राणद[3]त्वं च तच्चेष्टयितृत्वमेवेत्य-भिप्रेत्य प्राणदनाम निर्वक्ति—**प्राणान् ददाति चेष्टयतीति**। रथाद्य-चेतनप्रवृत्तेश्चेतनप्रयोज्यत्वदर्शनात्कार्यकरणप्रवृत्तेरपि चेतनप्रयोज्यत्व-मिति भावः। तत्र श्रुतिं पठति—**को** [4]**हीति**। "यदेष आकाश आनन्दो न स्यात्" (तै. उ. २-७) इति वाक्यशेषः। यत्-यदि, एष आकाशः—आसमन्तात्काशत इत्याकाशः—चिदात्मा; गौणं वा आकाशपदम्। आकाशवदसङ्गत्वविभुत्वादिधर्म[5]योगादाकाशः चिद्धातुः आनन्दः—सुखरूप आत्मा, न स्यात् तदा **को हि**—पुरुषः, **अन्यात्**—चेष्टां कुर्यात्, **प्राण्यात्**—प्राणनव्यापारं कुर्यादित्यर्थः॥

---

[1] निमित्तम—**पा.** [2] ईशनमत्र—**पा.** [3] त्वं तच्चे—**पा.** [4] हीति। यत् यदि—**पा.** [5] योगेनाकाशः—**पा.**

## स्तोत्रम्

# प्राणः

## भाष्यम्

**श्रुतेः । यद्वा प्राणान् कालात्मना द्यति–खण्डयतीति वा, प्राणान् [1]दायति–शोधयतीति वा, प्राणान् दाति–लुनातीति वा प्राणदः। प्राणितीति प्राणः–क्षेत्रज्ञः परमात्मा वा। "प्राणस्य प्राणम्"**

## विवृतिः

प्राणान् द्यति–खण्डयति–गतायुषां प्राणिनां प्राणान् शरीराद्वियोजयति कालरूपेणेति। "दो अवखण्डने" इत्यतः पूर्ववत्कप्रत्यये आत्वे च प्राणद इति रूपमिति व्युत्पत्त्यन्तरमाह–**यद्वेति**। प्राणान्–चक्षुरादीन्, [2]दायति–शोधयति दर्शनश्रवणादिनेति "दैप् शोधने" इत्यतः पूर्ववदात्वे कप्रत्यये च रूपमिति विधान्तरेण निर्वक्ति–**प्राणान् दायतीति**। [3]प्राणान्–चक्षुरादीन्, दाति–लुनाति संहृतिकाल इति "दाप् लवने" इत्यस्मात्कप्रत्ययादि पूर्ववदिति व्युत्पत्त्यन्तरमाह––**प्राणान् दातीति**॥

प्राणिति–प्राणनव्यापारं करोति, प्रपूर्वादनितेः पचाद्यचि प्राण इति रूपम्। तथा च क्षेत्रज्ञात्मकः परमात्मा प्राण इत्युच्यत इत्यभिप्रेत्य प्राण इति नाम व्याचष्टे–**प्राणितीति**। प्राण इत्यत्र प्रत्ययेन हेतुकर्तृसाधारणं कर्तृत्वमुच्यते। प्राणयतीति हेतुमण्यन्तात्पचाद्यज्वा। तेन प्राणनव्यापारं प्रति प्रयोजकः परमात्मा प्राण इत्युच्यते। तथा च श्रुतिः "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" (कठ. उ. २-२-३) इति परमात्मपरतयापि प्राणनाम व्युत्पादयति—**परमात्मा वेति**। तत्र श्रुतिमुदाहरति—**प्राणस्येति**। प्राणस्य-पञ्चवृत्त्यात्मकस्य प्राणं-

---

[1] दापयति–**पा.** [2] दापयति–**पा.** [3] प्राणान् दाति–**पा.**

## स्तोत्रम्

# ज्येष्ठः श्रेष्ठः

### भाष्यम्

(केन. १-२) इति श्रुतेः। मुख्यप्राणो वा। वृद्धतमो ज्येष्ठः। "ज्य च" (पा. सू. ५-३-६१) इत्यधिकारे "वृद्धस्य च" (पा. सू. ५-३-६०) इति वृद्धशब्दस्य ज्यादेशविधानात्। प्रशस्यतमः श्रेष्ठः "प्रशस्यस्य श्रः" (पा. सू. ५-३-६०) इति

### विवृतिः

प्रेरकं तत्सत्तास्फूर्तिप्रदं ब्रह्मेत्यर्थः। [1]प्राणस्य विकाररूपेणावस्थितस्य ब्रह्म प्राण इत्यभिप्रेत्य अर्थान्तरमाह—**मुख्यः प्राणो वेति**॥

ज्येष्ठो वृद्धतमः। वृद्धतमत्वं च हिरण्यगर्भरूपेण वयसा अधिकतमत्वं ज्ञानैश्वर्यादिभिर्वाधिकतमत्वमिति ज्येष्ठनाम व्याचष्टे—**वृद्धतम इति**। ज्येष्ठशब्दस्य कथं वृद्धतमत्वमर्थ इत्याशङ्क्य वृद्धशब्दस्य ज्यशब्दविधानादिति तत्सूत्रं पठति—**ज्य चेत्यादिना**। अतिशयेन वृद्ध इति विग्रहे "अतिशायने तमबिष्ठनौ" (पा. सू. ५-३-५५) इति वृद्धशब्दादिष्ठनि कृते "ज्य च" (पा. सू. ५-३-६१) इति पूर्वसूत्रान् ज्येत्यनुवृत्तौ "वृद्धस्य च" (पा. सू. ५-३-६२) वृद्धशब्दस्य ज्यादेशः स्यादिष्ठनि परत इति ज्यादेश ज्येष्ठ इति रूपमित्यर्थः। ब्रह्मादिभिरतिशयेन प्रशंसनीयः श्रेष्ठ इति श्रेष्ठनाम व्याचष्टे—**प्रशस्यतम इति**। श्रेष्ठशब्दं व्युत्पादयितुं सूत्रं पठति—**प्रशस्यस्येति**। *पूर्ववत् "अजादी गुणवचनादेव" (पा. सू. ५-३-५८)

---

* ज्येष्ठनाम्नीवेत्यर्थः।

[1] प्राणाख्यविकार-**पा.**

## भाष्यम्

**आदेशविधानात्। "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" (बृह.उ. ८-१-१) इति श्रुतेः मुख्यप्राणो वा। "श्रेष्ठश्च" (ब्र. सू. २-४-८) इत्यधिकरणसिद्धत्वात्। "आनीदवातं" (ऋ. सं. ८-७-१७) इति**

## विवृतिः

इतीष्ठनि कृते "प्रशस्यस्य श्रः" (पा. सू. ५-३-६०) प्रशस्यशब्दस्य श्रादेशो भवति इष्ठनि परत इति श्रादेशे "प्रकृत्यैकाच्" (पा. सू. ६-४-१६३) इति प्रकृतिभावे गुणे च श्रेष्ठ इति रूपमित्यर्थः ॥

ज्येष्ठः श्रेष्ठ इति च नामद्वयं प्राणरूपविकारात्मना सर्वप्राणिशरीरधारके परमेश्वरे वर्तत इति मुख्यप्राणरूपमर्थान्तरं दर्शयितुं तयोर्नाम्नोर्मुख्यप्राणपरत्वे श्रुतिं पठति—**प्राणो वावेति। मुख्यप्राणो वेति।** उक्तनामद्वयार्थ इत्यर्थः ॥

"श्रेष्ठश्च" (ब्र. सू. २-४-८) इयधिकरणसिद्धं च प्राणनामद्वयमित्याह—**श्रेष्ठश्चेति।** मुख्यः प्राणो जायते न वेति सन्देहे "आनीदवातं" (तै. ब्रा. २-८-९) इति श्रुतौ महाप्रलये सृष्टेः पूर्वं "आनीत्" इति प्राणव्यापारप्रतिपादनान्न जायत इति प्राप्ते—"श्रेष्ठश्च" (ब्र. सू. २-४-८) प्राण [1]उत्पद्यते। आनीदिति न प्राणव्यापारं वक्ति। **अवातमिति** तन्निषेधात्। किं तर्हि? ब्रह्मसत्त्वं ब्रूते; "सदेव" (छां.उ. ६-२-१) इत्यादिश्रुतिभिः श्रुत्यन्तरैश्च समानार्थकत्वात्, "एतस्माज्जायते" (मुण्ड. उ. २-१-३, कैवल्य. उ. १५) इति [2]स्फुटं प्राणोत्पत्तिप्रतिपादनाच्च। अतो जायते प्राणः। श्रेष्ठ इति मुख्यं प्राणमभिदधाति। "प्राणो वाव" (छा. उ. ५-१-१)

---

[1] उत्पन्नः—**पा.** [2] स्पष्टं—**पा.**

## स्तोत्रम्

# प्रजापतिः ।

### भाष्यम्

**सर्वकारणत्वाद्वा ज्येष्ठः । सर्वातिशयत्वाद्वा श्रेष्ठः । ईश्वरत्वेन सर्वासां प्रजानां पतिः प्रजापतिः ॥**

### विवृतिः

इत्यादिश्रुतेः ज्येष्ठः प्राणः । शुक्रनिषेककालमारभ्य तस्य वृत्तिलाभात् । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणो गुणाधिक्यात् । "न वै शक्ष्यामस्त्वदृते जीवितुम्" (बृह. उ. ६-१-१३) इति श्रुतेः । तथा च मुख्यप्राणस्येतरप्राणापेक्षया ज्येष्ठत्वं श्रेष्ठत्वं च द्रष्टव्यम् ॥

सर्वकार्यापेक्षया नियतपूर्ववर्तित्वरूपं ज्येष्ठत्वमभिप्रेत्य [1] सर्वकार्यकारणत्वाज्ज्येष्ठ इति ज्ञानैश्वर्यादिभिर्गुणैः सर्वेभ्य उत्कृष्टत्वात् श्रेष्ठ इति च "ब्रह्माग्रे ज्येष्ठं दिवमाततान (तै.ब्रा २ ४-७) "श्रेष्ठ ँ सर्वधातमं" (तै.आ. १-११-८)[2]इत्यादौ प्रसिद्धं नामद्वयं साक्षात्परमेश्वरपरतया प्रकारान्तरेण व्याचष्ट —**सर्वकारणत्वाद्वा ज्येष्ठः सर्वातिशयनाद्वा श्रेष्ठ इति** । केषुचित्पुस्तकेषु "सर्वकारणत्वाद्वा ज्येष्ठः" इत्येतदनन्तरं "सर्वातिशयनाद्वा श्रेष्ठः" इति न दृश्यते । तत्र श्रेष्ठशब्दस्य व्याख्यानद्वयमेवेति बोध्यम् । प्रजापतिनाम व्याचष्टे—**ईश्वरत्वेनेति** । प्रजानां–ब्रह्मादिस्तम्बपर्यन्तानां स्वामित्वेनेत्यर्थः ॥

---

[1] सर्वकार्यकारित्वा–**पा.**  [2] इत्यादि–**पा.**

स्तोत्रम्

## हिरण्यगर्भो भूगर्भो माधवः

भाष्यम्

**हिरण्मयाण्डान्तर्वर्तित्वात् हिरण्यगर्भो [1]ब्रह्मा—विरिञ्चिः तदात्मा। "हिरण्यगर्भः समवर्तताग्रे" (तै. सं. ४-१-८) इति [2]श्रुतेः। भूः गर्भे यस्य सः भूगर्भः। मायाः—श्रियः धवः—पतिः माधवः, [3]मधुविद्यावबोध्यत्वाद्वा।**

विवृतिः

हिरण्यं—[4] हिरण्मयमण्डं, तस्य गर्भ इव तदन्तर्वर्तित्वात्। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।" (मनु-१-६) इति मनूक्तेः। हिरण्यगर्भः—विरिञ्चिः, तदात्मना परमेश्वरो हिरण्यगर्भ इति व्याचष्टे—**हिरण्मयेति**। तत्र श्रुतिमाह—**हिरण्यगर्भ इति**। भूः—सर्वभूताश्रयभूता गर्भ इव अन्तर्वर्तिनी अस्य, भूः—सत्ता गर्भे अस्येति वा भूगर्भ इति नाम व्याचष्टे—**भूगर्भ इति**।

मा—लक्ष्मीः, तस्या धवः—पतिः, माधव इति व्याचष्टे—**माया इति**। मधुशब्देन "असौ वा आदित्यो देवमधु" (छा. उ. ३-१-१) इति छान्दोग्योक्ता मधुविद्या गृह्यते। तया गृह्यत इत्यर्थे शैषिकेऽणि "तद्धितेष्वचामादेः" (पा. सू. ७-२-१७) इत्यादिवृद्धौ ओर्गुणे अवादेशे च माधव इति रूपमित्यभिप्रेत्यार्थान्तरमाह—**मधुविद्येति**।

---

[1] विरिञ्च्यात्मना वा—**पा.** [2] मन्त्रवर्णात्—**पा.** [3] मधुविद्यावबोध्यत्वाद्धवत्वाद्वा श्रियोऽनिशम्—**पा.** [4] हिरण्मयं मण्डलं तस्य—**पा.**

## स्तोत्रम्

# मधुसूदनः ॥२१॥

### भाष्यम्

" मौनाद्ध्यानाच्च योगाच्च विद्धि भारत! माधवम् "
(उद्योगप. ६९-४)

इति व्यासवचनाद्वा माधवः। मधुनामानमसुरं सूदितवानिति मधुसूधनः।

"[1] विष्णुकर्णोद्भवं चापि मधुनाममहासुरम्।
ब्रह्मणोपचितिं कुर्वन् जघान पुरुषोत्तमः॥
तस्य [2]तात! वधादेव देवदानवमानवाः।
मधुसूधन इत्याहुर्ऋषयश्च जनार्दनम्॥"

इति महाभारते॥

### विवृतिः

भारतवचनमनुसृत्यापि निर्वक्ति—**मौनाध्यानाच्च योगाच्चेति।** मा—धीवृत्तिः, तां स्वस्योपाधिभूतां मौनादिभिर्धवति—दूरीकरोतीति माधवः। मौनं—मुनेः कर्म—मननं—शास्त्रतो युक्तितश्च तत्त्वालोचनम्। ध्यानं—निश्चिते तत्त्वे चेतसः प्रणिधानम्। योगः—तस्यैव चेतसो निरोध इति भारतवचनार्थः। मधुनामानमसुरं सूदयति स्मेति "षूद क्षरणे" इत्यतो ण्यान्तान्न*न्द्यादित्वाल्लयुरित्यभिप्रेत्य मधुसूदन-नाम निर्वक्ति **मधुनामानमिति॥**

---

* अत्र "नन्दिग्रहिपच्यादिभ्यो ल्युणिन्यचः" (पा. सू. ३-१-१३४) इति ल्युप्रत्ययविधायकं पाणिनिसूत्रं द्रष्टव्यम्।

[1] कर्णमिश्रोद्भवं-**पा.** [2] तावद्वधा-**पा.**

स्तोत्रम्

# ईश्वरो विक्रमी धन्वी मेधावी

भाष्यम्

**सर्वशक्ति[1]मत्त्वात् ईश्वरः। विक्रमः–शौर्यम्, तद्योगात् विक्रमी। धनुरस्यास्तीति धन्वी। व्रीह्यादित्वादिनिः। "रामः शस्त्रभृतामहम्" (भ. गी. १०-३१) इति भगवद्वचनम्। मेधा–बहुग्रन्थधारणसामर्थ्यम्, सा यस्यास्ति स मेधावी। "अस्माया मेधास्रजो विनिः" (पा. सू. ५-२-१२१) इति**

विवृतिः

"प्रभवः प्रभुरीश्वरः" (वि. स. १७) इत्यत्र निरुपाधिकमैश्वर्यं यस्य स ईश्वर इति व्याख्यातम्। अधुना अपौनरुक्त्याय *"[2]सैनमीश्वरा" (तै. सं. २-१-१) इत्यादौ शक्तेऽपि प्रयोगदर्शनादीश्वरशब्दस्य सर्वकार्यशक्तत्वमर्थ इत्यभिप्रेत्य व्याचष्टे—**सर्वशक्तिमत्त्वादिति**। विक्रमिनाम व्याचष्टे— **विक्रमः शौर्यमिति**। धन्वा–धनुः प्रशस्तमस्यास्तीति विग्रहे धन्वन्शब्दात् व्रीह्यादित्वादिनिप्रत्यये "नस्तद्धिते" (पा. सू. ६-४-१४४) इति टिलोपे च धन्वीति रूपमित्यभिप्रेत्याह—**धनुरस्यास्तीति**। इदं चार्थनिर्देशमात्रं धनुरिति। न त्विनिप्रत्ययं प्रति प्रकृतिनिर्देशः। धनुश्शब्दादिनिप्रत्यये धन्वीति रूपायोगादिति। तथा च रामपार्थादिरूपी धन्वीत्यर्थः। तत्र भगवद्वचनं पठति—**राम इति**॥

मेधाशब्दार्थकथनपूर्वकं मेधाविनाम व्युत्पादयति—**मेधेति**। विनिप्रत्ययविधायकं सूत्रं पठति—**अस्मायेति**। असन्तान्मायाशब्दा-

---

* अस्य वाक्यस्य "सा–उग्रा देवता, एनं–यजमानं, प्रदहः–प्रदग्धुं, ईश्वरा–समर्था" इति सायणभाष्यम्।

[1] मत्तया–**पा.** [2] यश्चैनमी–**पा.**

## स्तोत्रम्

# विक्रमः क्रमः ।

### भाष्यम्

**विनिप्रत्ययः । विचक्रमे जगद्विश्वं तेन विक्रमः । विना गरुडेन पक्षिणा क्रमाद्वा । क्रमणात् क्रमहेतुत्वाद्वा क्रमः । "क्रान्ते विष्णुम्" (मनु. १२-१२१) इति मनुवचनात् ॥**

### विवृतिः

न्मेधाशब्दात् स्रक्छब्दाच्च विनिः स्यादिति सूत्रार्थः । सर्वं जगद्विक्रमते स्म । विपूर्वात् क्रमेः पचाद्यचि रूपमिति व्याचष्टे—**विचक्रम इति** । "इदं विष्णुर्विचक्रमे" (तै. सं. १-३-१३) इति श्रुतेः । वामनरूपी विचक्रम इत्यर्थः ॥

क्रामति गच्छतीति—**क्रमः** । क्रमेः पचाद्यच् । विः—पक्षी । विना—पक्षिणा—गरुडेन क्रामन् विक्रमः । "कर्तृकरणे कृता बहुलम्" (पा. सू. २-१-३२) इति समास इत्याश्रित्य प्रकारान्तरेण व्युत्पादयति—**विनेति** । विना—पक्षिणा, क्रामति—गच्छतीति क्रमः । पूर्ववत्पचाद्यच् । तथा च [1]चरप्राणिरूपी क्रम इत्याह—**क्रमणादिति** । विधान्तरेण व्याचष्टे—[2]**क्रमहेतुत्वादिति** । क्रमयतीति **क्रमः** । क्रमं—प्राणिनां पादन्यासं अधिष्ठानदेवतारूपेण प्रयुङ्क्ते इत्यर्थे णिजन्तात्पचाद्यच् । क्रामन्त्यनेनेति वा **क्रमः** । व्युत्पत्तिद्वयेऽपि क्रमणहेतुभूतविष्ण्वाख्यपादाधिष्ठानदेवतात्वात्क्रमणहेतुः **क्रम** इत्यर्थः । तत्र पादेन्द्रियाधिष्ठानतया क्रमणहेतुत्वे मनुवचनमाह—**क्रान्त इति** ।

---

[1] वरप्रा—**पा.**　　[2] क्रमहेतुतयेति—**पा.**

## स्तोत्रम्

# अनुत्तमो दुराधर्षः

### भाष्यम्

**अविद्यमान उत्तमो यस्मात् सः अनुत्तमः। "यस्मात् परं नापरमस्ति किञ्चित्" (तै. आ. याज्ञिक्यु. १०-१२) इति श्रुतेः। "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" (भ. गी. ११-४३) इति स्मृतेश्च। दैत्यादिभिः धर्षयितुं न शक्यत इति दुराधर्षः।**

### विवृतिः

**क्रान्ते**—पादे, **विष्णुं**—तदधिष्ठानदेवतां, निवेशयेत्—लीनां भावयेदिति तदर्थः।

"मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं [1] बले [2] हरम्।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम्॥"

इति मनुवचनं बोध्यम्। (मनु. १२-१२३)

अविद्यमान उत्तमोऽस्मात्। "नञोऽस्त्यर्थानां वा [3] वा चोत्तरपदलोपः" (वा. १३६१) इति उत्तरपदलोप इत्याश्रित्य अनुत्तमनाम व्याचष्टे—**अविद्यमान इति**। विग्रहवाक्ये यस्येति पाठे सम्बन्धसामान्ये षष्ठी। विष्णोः सकाशादुत्तमाभावे श्रुतिमाह—**यस्मादिति**। दैत्यादिभिर्दुःखेन आ—ईषदपि धर्षयितुमशक्यो **दुराधर्षः**। "धृष प्रसहने" आङ्पूर्वादस्मात् "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (पा. सू. ३-३-१२६) इति कर्मणि खल्। "तयोरेव" इति नियमात्(पा. सू. ३-४.७०) इति रूपनिष्पत्तिमभिप्रेत्य दुराधर्षनाम व्युत्पादयति—**दैत्यादिभिरिति**। **प्रधर्षयितुमिति**। अभिभवितुमित्यर्थः॥

---

[1] जवे—**पा.** [2] हरिम्—**पा.** [3] बहुव्रीहिर्वाच्यो—**पा.**

## स्तोत्रम्

# कृतज्ञः

### भाष्यम्

**प्राणिनां पुण्यापुण्यात्मकं कर्म कृतं जानातीति कृतज्ञः। पत्रपुष्पाद्यल्पमपि प्रयच्छतां मोक्षं ददातीति वा। पुरुषप्रयत्नः**

### विवृतिः

धृषेः प्रसहनार्थकत्वात् " षह मर्षणे अभिभवे च " इति सहतेरर्थनिर्देशात् दैत्यादिभिरनभिभवनीयो दुराधर्ष इत्यर्थः। यद्वा दुःखेन धर्षणीयः। धृषेः प्रागल्भ्यार्थकस्य लक्षणया तत्पूर्वकाभिभववृत्तेः कर्मणि "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (पा. सू. ३-३-१२६) इति खल्प्रत्ययः। व्याख्यानद्वयेऽपि निरूढलक्षणया धर्षयितुमशक्य इत्यर्थः। सर्वथा अलभ्यो दुर्लभ इत्यादिप्रयोगदर्शनादिति बोध्यम् ॥

कृतं-कर्म ; नपुंसके भावे कर्मणि वा क्तः। कर्म च पुण्यपापरूपम्। तज्जानाति फलदानायेति **कृतज्ञ** इत्याह—**कृतज्ञ इति।** कृतं-भक्तैरनुष्ठितं पत्रपुष्पाद्यर्पणं जानातीति **कृतज्ञ** इत्यर्थान्तरमाह—**पत्रेति। अल्पमिति।** अल्पत्वादेव सुखानुष्ठेयमित्यर्थः। तत्र कृतज्ञतायाः फलमाह—**मोक्षं ददातीति।** तथा च "पत्रं पुष्पं फलं तोयं" (भ. गी ९-२६) " मद्याजी मां नमस्कुरु। मामेवैष्यसि " (भ. गी. ९-३४) इत्यादिभगवद्वचनादिति भावः ॥

करणं कृतिः। स्त्रियां भावे क्तिन्। कृतिश्च पुरुषप्रयत्नः क्रियासामान्यं वा। तथा च तदुपादानत्वात्तद्भावमापन्नं ब्रह्म कृतिशब्देन शक्त्या प्रतिपाद्यत इत्यभिप्रेत्य कृतिनाम व्याचष्टे—**पुरुषप्रयत्नेति।**

स्तोत्रम्

## कृतिरात्मवान् ॥ २२ ॥

## सुरेशः शरणं

भाष्यम्

**कृतिः क्रिया वा। सर्वात्मत्वात्तदाधार[1]तया वा लक्ष्यते कृत्येति वा कृतिः। स्वमहिमप्रतिष्ठितत्वात् आत्मवान्। "स भवगः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि" (छा. उ. ७-२४-१) इति श्रुतेः ॥**

**सुराणां-देवानामीशः सुरेशः। सूपपदो वा राधातुः। शोभनदातॄणां वा ईशः सुरेशः। आर्तानां [2]आर्तिहरणात् शरणम्।**

विवृतिः

कृतिशब्दाभिधेयत्वे हेतुमाह--**सर्वात्मत्वादिति**। अर्थान्तरमाह— **तदाधारतयेति**। [3]तथा च कृत्याधारताविशिष्टः कृत्या-कृतिशब्देन लक्ष्यते-अजहल्लक्षणया प्रतिपाद्यते। तथा च कार्यमात्रविषयककृत्याश्रयः ईश्वरः कृतिनामको भवतीत्यर्थः। आत्मा-स्वस्वरूपमेवाधारत्वेनास्यास्तीति **आत्मवान्**। [4]"तदस्यास्त्यस्मिन्निति मतुप्" (पा. सू. ५-२-९४) एवं च स्वस्य स्वनिष्ठत्वोक्त्या तस्यानाधारत्वं लभ्यत इत्यात्मवान्नाम व्याचष्टे--**स्वमहिमेति**। स्वस्वरूपेत्यर्थः ॥

सुरेशनाम व्याचष्टे---**सुराणामिति**। ईशः-स्वामी *"शरणं गृहरक्षित्रोर्वधरक्षणयोरपि" इत्यभिधानकोशाद्रक्षितृवचनः शरणशब्द इत्यभिप्रेत्य व्याचष्टे—**आर्तानामिति**। आर्तानां—विभीषणगजेन्द्र-

---

* "शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च"। (३-३-५३) इत्यमरसिंहकृतौ नामलिङ्गानुशासने नानार्थवर्गे.

[1] रत्वेन—**पा.** [2] आर्तिहरणत्वात्—**पा.** [3] तदाधारतया कृत्या—**पा.**
[4] तदस्यास्तीति—**पा.**

स्तोत्रम्

## शर्म विश्वरेताः प्रजाभवः ।

भाष्यम्

**परमानन्दरूपत्वात् शर्म । विश्वस्य कारणत्वात् विश्वरेताः । सर्वाः प्रजा यत्सकाशादुद्भवन्ति स प्रजाभवः ॥**

विवृतिः

द्रौपद्यादीनां संसारिणां वा स्वाश्रितानां जननमरणरूपसंसारार्तिहरत्वात् —**शरणम्** । "सर्वस्य [1]शरणं सुहृत्" (श्वेता. उ. ३ १७) इति श्रुतेरित्यर्थः। "स्यादानन्दथुरानन्दशर्मशातसुखानि च" (नामलि. १४-२५) इत्यभिधानात्सुखवचनः शर्मशब्दः ; तद्रूपं ब्रह्म शर्मेति व्याचष्टे—**परमेति** । सार्वभौमादिहिरण्यगर्भान्तानन्दानामुत्तरोत्तरोत्कर्षवतामुत्कर्षपरमावधित्वा - त्परमानन्दत्वं ब्रह्मानन्दस्येत्यर्थः ॥

विश्वं—सर्वं कार्यत्वेनाभिमतं, रेतः—कार्यं, यस्य स **विश्वरेताः** । "अथातो रेतसः सृष्टिः" (ऐ. आ. उ. २-१-३) इत्यादौ रेतश्शब्दस्य कार्यपरत्वेन व्याख्यानादित्यभिप्रेत्य व्याचष्टे—**विश्वस्येति** । भवन्ति—उत्पद्यन्ते अस्मादिति भवः । ऋदोरप् (पा. सू. ३-३-५७) इत्यपादाने अप्प्रत्ययः । [2]प्रजानां—ब्रह्मादीनां भवः **प्रजाभवः**—प्रजानामुत्पादयिता । यद्वा भवन्तीति भवाः । पचाद्यच् । प्रजाः भवाः यस्मादिति पञ्चम्यर्थे बहुव्रीहिरित्यभिप्रेत्य व्याचष्टे—**सर्वा इति** ॥

---

[1] शरणं बृहत्-**पा.** [2] प्रजादीनां-**पा.**

### स्तोत्रम्

## अहः संवत्सरो व्यालः प्रत्ययः

### भाष्यम्

प्रकाशरूपत्वात् अहः। कालात्मना स्थितो विष्णुः संवत्सर इत्युक्तः। व्यालवत्—दुराधर्ष[1]गजवद्ग्रहीतुमशक्यत्वात् व्यालः। प्रतीतिः प्रज्ञा प्रत्ययः। "प्रज्ञानं ब्रह्म" (ऐ. उ. ३-३)

### विवृतिः

अहरिव **अहः** प्रकाशमानत्वसादृश्यात् गौणोऽयमहश्शब्दो ब्रह्मणीत्यभिप्रेत्य गुणं दर्शयन्नाह—**प्रकाशरूपत्वादिति**। "संवत्सरो वै प्रजापतिः" (प्रश्न. १-९) इति श्रुत्या प्रजापतेः संवत्सरात्मकत्वावगमात्तद्रूपी भगवान् संवत्सर इति व्याचष्टे—**कालात्मनेति**। यद्वा "ब्रह्मा दक्षादयः कालः" (वि. पु. १-२२-३१) इति विष्णुपुराणवचनात् कालस्य विष्णुशक्तित्वावगमात्संवत्सरात्मकत्वमित्यर्थः॥

"व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोः" इत्यभिधानात् प्रकृते व्यालशब्दो दुष्टगजवचनः। व्याल इव व्यालः दैत्यादिभि[2]र्धर्षयितुमशक्यो विष्णुरिति गौणं व्यालनामेति व्याचष्टे—**दुराधर्षगजवदिति**। "इण् गतौ" इति धातोः प्रतिपूर्वाद्भावे "एरच्" (पा.सू. ३-३-५६) इत्यच्प्रत्ययः। "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" (नाम. ३-३-१४७) इत्यभिधानात्प्रकृते ज्ञानवचनः प्रत्ययशब्द इति व्याचष्टे—**प्रतीतिरिति**। प्रतीतिः प्रत्यय इति व्युत्पत्ति[3]प्रदर्शनम्। व्युत्पत्तिलब्धार्थमाह—**प्रज्ञेति**। ब्रह्मणः प्रज्ञारूपत्वे श्रुतिमाह—**प्रज्ञानमिति**। सर्वाणि दर्शनानि अक्षीण्यस्येति व्याचष्टे—

---

[1] भुजङ्गव—**पा.** [2] धर्तुमशक्यो—**पा.** [3] दर्शनम्—**पा.**

### स्तोत्रम्

# सर्वदर्शनः ॥ २३ ॥

# अजः

### भाष्यम्

इति श्रुतेः। सर्वाणि दर्शनात्मकानि अक्षीणि यस्य सः सर्वदर्शनः। सर्वात्मकत्वात्। "विश्वतश्चक्षुः" (तै. आ. याज्ञिक्यु. १०-१) विश्वाक्षम्" (तै. आ. याज्ञिक्यु. १०-१३) इति श्रुतेः॥

न जायत इति अजः। "न जातो न जनिष्यते" (ऋ. सं १-८१-५) इति श्रुतेः॥

"न हि जातो न [1]जायेऽहं न जनिष्ये कदाचन।
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः"॥

इति महाभारते॥ (शान्तिप. ३४३)

### विवृतिः

**सर्वाणीति**। तत्र हेतुमाह—**सर्वात्मकत्वादिति**। सर्वप्राणिरूपस्य ब्रह्माण्डदेहस्य विराडाख्यस्य पुरुषस्य सर्वप्राणिनां यानि दर्शनानि—चक्षूंषि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सर्वदर्शनत्वमित्यर्थः। तत्र श्रुतिद्वयमुदाहरति—**विश्वतश्चक्षुरित्यादि**। विश्वानि–सर्वाणि चक्षूंष्यस्य, विश्वानि–सर्वाण्यक्षीण्यस्येति च श्रुतिगतयोः पदयोरर्थः॥

न जायत इति **अजः**। जनेर्नञ्पूर्वात् "अन्येष्वपि दृश्यते" (पा. सू. ३-२-१०) इति डः, इति व्याचष्टे—**न जायत इति**। तत्र ऋचमुदाहरति–**न जात इति**। सर्वेषां ईश्वरः–स्वामी **सर्वेश्वरः**,

---

[1] जायेयं–**पा.**

स्तोत्रम्

# सर्वेश्वरः सिद्धः सिद्धिः

भाष्यम्

**सर्वेषामीश्वराणामीश्वरः सर्वेश्वरः। "एष सर्वेश्वरः" (बृ. उ. ६-४-२) इति श्रुतेः। नित्यनिष्पन्नरूपत्वात् सिद्धः। सर्ववस्तुषु संविद्रूपत्वात्, निरतिशयरूपत्वाद्वा सिद्धिः। स्वर्गादीनां विनाशित्वादफलत्वम्।**

विवृतिः

जगदीश्वराणां हिरण्यगर्भादीनामपीश्वरत्वादित्याह-**सर्वेषामिति**। "*[1]षिधू संराद्धौ" गत्यर्थाकर्मक (पा. सू. ३-४-७२) इति कर्तरि क्त इति सिद्ध-नाम व्याचष्टे—**नित्येति**। सर्वदा लब्धसत्ताकत्वादित्यर्थः। उत्पत्त्या लब्धसत्ताकं हि घटादि सिद्धमित्युच्यते, परमात्मा तु सर्वदा लब्धसत्ताकः, सङ्कोचकप्रमाणाभावादिति नित्यसिद्धः सिद्ध इत्युच्यत इत्यर्थः॥

"षिध गत्याम्" इत्यस्मात् "षिधू संराद्धौ" इत्यस्माद्वा स्त्रियां भावे क्तिन्। तत्र सेधतेर्गत्यर्थत्वेन ज्ञानार्थत्वादिति व्याचष्टे—**सर्वेति**। स्वस्मिन् तादात्म्येनाध्यस्तस्य सर्वस्य स्फूर्तिरूपत्वादित्यर्थः "षिधू संराद्धौ" इति धातुमाश्रित्यार्थान्तरमाह—**निरतिशयेति**। [1]निरतिशयफलं मोक्षः; स च परमानन्दस्वरूपः। ब्रह्मणस्तद्रूपत्वादित्यर्थः। ननु स्वर्गादौ फले सति मोक्षस्यैव कथं निरतिशयत्वमित्यत आह—**स्वर्गादीनामिति**। "यत्कृतकं तदनित्यम्" इति न्यायानुगृहीतया "तद्यथेह" (छा. उ. ८-१-६) इत्यादिश्रुत्या स्वर्गादीनामनित्यत्वान्न निरतिशयफलत्वमित्यर्थः॥

---

* अत्र "उदित्पाठः प्रामादिकः" इति सिद्धान्तकौमुदीदर्शनादूदित्पाठः साधुः।

[1] षिधु संराद्धौ—पा. [2] निरतिशयं फ—पा.

स्तोत्रम्

## सर्वादिरच्युतः ।

भाष्यम्

**सर्वभूतानामादिकारणत्वात् सर्वादिः । स्वरूपसामर्थ्यात् न च्युतो न च्यवते न च्यविष्यत इति–अच्युतः । "शाश्वतꣳशिवमच्युतम्" (तै.आ. १०-१३) इति श्रुतेः । तथा च भगवद्वचनम्– "यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा" (शान्तिप. ३४३) इति ॥ आद्यं शतकं विवृतम् ॥**

इति प्रथमशतकभाष्यम्

विवृतिः

सर्वशब्देन कृत्स्नं कार्यमुच्यते । आदिशब्देन पूर्वकालवर्तित्वम् । तथा च सर्वस्य कार्यस्य आदिः कारणं ब्रह्म सर्वादिरित्युच्यत इति व्याचष्टे–**सर्वभूतेति**। "च्युङ् गतौ" अतः "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः, च्युतः ; न च्युतः **अच्युतः**, इति व्याचष्टे –**स्वरूपसामर्थ्यादिति** । स्वरूपं च तत् सामर्थ्यं च स्वरूपसामर्थ्यम् । [1]स्वरूपे सामर्थ्यमपृथग्भूतम् । स्वरूपं च सामर्थ्यं चेति द्वन्द्वैकवद्भावो वा । तस्मात्स्वरूपभूतात्सामर्थ्यात्सच्चिदानन्दलक्षणस्वरूपजगत्सृष्ट्यादिविषयकसामर्थ्याभ्यां वा अग्निरिव दहनप्रकाशनसामर्थ्याभ्यां न कदाचिदपि च्युतः [2] भगवानच्युत इत्यर्थः । न च्यवते न [3]च्यविष्यते यः सोऽच्युत इत्यनेन क्तप्रत्ययार्थो भूतकालो न विवक्षित इति द्योतितम्। तत्र श्रुतिमुदाहरति **शाश्वतमिति**। उक्तनिरुक्तेर्भगवद्वचनानुसारितां चाह—**तथेति** । न च्युतपूर्व इति भूतपूर्वादिवत्समासः परनिपातश्च पूर्वशब्दस्य बोध्यः । **तेन कर्मणेति** । च्युत्यभावरूपप्रवृत्तिनिमित्तेन अच्युतनामाहमित्यर्थः ॥

इति प्रथमशतकभा[4]ष्यविवृतिः

[1] अपृथग्भूतं सामर्थ्यम्–**पा**. [2] भगवानित्युच्यत इ–**पा** [3] चोष्यते–**पा.**
[4] ष्य व्याख्यातम्–**पा.**

## स्तोत्रम्

# वृषाकपिः

## अथ द्वितीयशतकभाष्यम्

**वर्षणात् सर्वकामानां धर्मो वृषः। कात्-तोयात् भूमिमपादिति कपिर्वराहः। वृषरूपत्वात् कपिरूपत्वाच्च वृषाकपिः ॥**

## अथ द्वितीयशतकभाष्यविवृतिः

वर्षति फलमिति वृषः। "वृषु सेचने" अतः इगुपदलक्षणः कः। "सुकृते वृषभे वृषः" (नाम. ३-३-२२१) इत्याभिधानकोशात्। धर्मो वृषः। "पा रक्षणे" इत्यस्मात् "अच इः" (उणा. ५८७) इति इप्रत्यये बाहुलकात्कित्वे "आतो लोप इटि च" (पा. सू. ६-४-६४) इत्यालोपे च कपिरिति रूपम्। कात्—उदकात् पिः—पाता कपिरिति "भीत्रार्थानां" (पा. सू. १-४-२५) इत्यपादानसंज्ञायां "पञ्चमी" (पा. सू. २-१-३७) इति योगविभागात् पञ्चमीसमासः। वृषश्चासौ कपिश्च वृषाकपिः। "अन्येषामपि दृश्यते" (पा.सू. ६-३-१३७) इति पूर्वपदान्तस्य दीर्घ इति वृषाकपिनाम निर्वक्ति-**वर्षणादित्यादि**। प्रलये भूमिमुदक[1]मग्ना[2]मुद्धृत्य यथापूर्वं स्थापयित्वा रक्षितवानिति वराहरूपी भगवान् कपिः। स एव धर्मरूपत्वात् वृषोऽपीति वृषाकपिरित्यर्थः ॥

अवान्तरप्रलये [3]महाजलान्तर्निमग्नां भूमिमुद्धृत्य रक्षितवान् वराहमूर्तिरित्यत्र विष्णुपुराणम्—

तोयान्तस्थां महीं ज्ञात्वा जगत्येकार्णवे प्रभुः।
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥

---

[1] लग्नामु-**पा.** [2] मुद्धृत्य रक्षि-**पा.** [3] महाजलौघनिम-**पा.**

स्तोत्रम्

## अमेयात्मा सर्वयोगविनिःसृत ॥ २४ ॥

भाष्यम्

**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।**
**तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः ॥**
**(शान्तिपर्व ३५२-२४)**

**इति महाभारते । इयानिति मातुं-परिच्छेत्तुं न शक्यते आत्मा अस्येति अमेयात्मा । सर्वसम्बन्धविनिर्गतः सर्वयोगविनिःसृतः । "असङ्गो ह्ययं पुरुषः" (बृ. उ. ६-३-१५) इति श्रुतेः । नानाशास्त्रोक्ताद्यो[1]गादवगतत्वाद्वा ॥**

विवृतिः

अकरोत् [2]स तनूमन्यां कल्पादिषु यथा पुरा ।
मत्स्यकूर्मादिकं तद्वद्वाराहं रूपमास्थितः ॥ इति (वि.पु. १-४-७, ८)

उक्तनिरुक्तेः भारतानु[3]सारितां दर्शयितुं मोक्षधर्मस्थं वचनं पठति—**कपिर्वराहः श्रेष्ठश्चेति** । मातुं—परिच्छेत्तुं योग्यो मेयः । न मेयोऽमेयः—अपरिच्छेद्यः आत्मा—स्वरूपमस्येति अमेयात्मनाम व्याचष्टे—**इयानिति** । योगशब्देन सम्बन्ध उच्यते । सर्वे च ते योगाः सम्बन्धाः, तेभ्यो विनिस्सृतः—विनिर्गतः सर्वसम्बन्धरहित इत्यभिप्रेत्य व्याचष्टे—**सर्वेति** । तत्र श्रुतिमाह—**असङ्ग इति** । वास्तवसम्बन्धसामान्यरहित इत्यर्थः ॥

अर्थान्तरमाह—**नानेति** । न्यायवैशेषिकादिनानाशास्त्रोक्ता ये योगाः—युक्तयः—तर्काः, तैः वेदान्तप्रमाणाविरोधिभिः वेदान्तप्रमाणानुग्रहद्वारा विनिस्सृतः—अवगत इत्यर्थः । तथाचोक्तं शारीरकभाष्ये—"सत्सु च वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रह-

[1] दपगत—**पा.** [2] स्त्वतनू—**पा.** [3] सारीतां च द—**पा.**

स्तोत्रम्

# वृषाकपिः

## अथ द्वितीयशतकभाष्यम्

**वर्षणात् सर्वकामानां धर्मो वृषः। कात्-तोयात् भूमिमपादिति कपिर्वराहः। वृषरूपत्वात् कपिरूपत्वाच्च वृषाकपिः॥**

## अथ द्वितीयशतकभाष्यविवृतिः

वर्षति फलमिति वृषः। "वृषु सेचने" अतः इगुपदलक्षणः कः। "सुकृते वृषभे वृषः" (नाम. ३-३-२२१) इत्यभिधानकोशात्। धर्मो वृषः। "पा रक्षणे" इत्यस्मात् "अच इः" (उणा. ५८७) इति इप्रत्यये बाहुलकात्कित्वे "आतो लोप इटि च" (पा. सू. ६-४-६४) इत्यालोपे च कपिरिति रूपम्। कात्–उदकात् पिः–पाता कपिरिति "भीत्रार्थानां" (पा. सू. ९-४-२५) इत्यपादानसंज्ञायां "पञ्चमी" (पा. सू. २-१-३७) इति योगविभागात् पञ्चमीसमासः। वृषश्चासौ कपिश्च वृषाकपिः। "अन्येषामपि दृश्यते" (पा.सू. ६-३-१३७) इति पूर्वपदान्तस्य दीर्घ इति वृषाकपिनाम निर्वक्ति–**वर्षणादित्यादि**। प्रलये भूमिमुदक[1]मग्ना[2]मुद्धृत्य यथापूर्वं स्थापयित्वा रक्षितवानिति वराहरूपी भगवान् कपिः। स एव धर्मरूपत्वात् वृषोऽपीति वृषाकपिरित्यर्थः॥

अवान्तरप्रलये [3]महाजलान्तर्निमग्नां भूमिमुद्धृत्य रक्षितवान् वराहमूर्तिरित्यत्र विष्णुपुराणम्—

तोयान्तस्थां महीं ज्ञात्वा जगत्येकार्णवे प्रभुः।
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः॥

---

[1] लग्नामु–**पा.** [2] मुद्धृत्य रक्षि–**पा.** [3] महाजलौघनिम–**पा.**

स्तोत्रम्

# अमेयात्मा सर्वयोगविनिःसृत ॥ २४ ॥

भाष्यम्

**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।**
**तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः ॥**
**(शान्तिपर्व ३५२-२४)**

**इति महाभारते । इयानिति मातुं-परिच्छेत्तुं न शक्यते आत्मा अस्येति अमेयात्मा । सर्वसम्बन्धविनिर्गतः सर्वयोगविनिःसृतः । "असङ्गो ह्ययं पुरुषः" (बृ. उ. ६-३-१५) इति श्रुतेः । नानाशास्त्रोक्ताद्यो[1]गादवगतत्वाद्वा ॥**

विवृतिः

अकरोत् [2]स तनूमन्यां कल्पादिषु यथा पुरा ।
मत्स्यकूर्मादिकं तद्वद्वाराहं रूपमास्थितः ॥ इति (वि.पु. १-४-७, ८) उक्तनिरुक्तेः भारतानु[3]सारितां दर्शयितुं मोक्षधर्मस्थं वचनं पठति--**कपिर्वराहः श्रेष्ठश्चेति** । मातुं-परिच्छेत्तुं योग्यो मेयः । न मेयोऽमेयः-अपरिच्छेद्यः आत्मा-स्वरूपमस्येति अमेयात्मनाम व्याचष्टे --**इयानिति** । योगशब्देन सम्बन्ध उच्यते । सर्वे च ते योगाः सम्बन्धाः, तेभ्यो विनिस्सृतः—विनिर्गतः सर्वसम्बन्धरहित इत्यभिप्रेत्य व्याचष्टे—**सर्वेति** । तत्र श्रुतिमाह—**असङ्ग इति** । वास्तवसम्बन्धसामान्यरहित इत्यर्थः ॥

अर्थान्तरमाह—**नानेति** । न्यायवैशेषिकादिनानाशास्त्रोक्ता ये योगाः-युक्तयः-तर्काः, तैः वेदान्तप्रमाणाविरोधिभिः वेदान्तप्रमाणानुग्रहद्वारा विनिस्सृतः—अवगत इत्यर्थः । तथाचोक्तं शारीरकभाष्ये —"सत्सु च वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रह-

---

[1] दपगत-**पा.** [2] त्स्वतनू-**पा.** [3] सारीतां च द-**पा.**

## स्तोत्रम्

# वसुः

### भाष्यम्

वसन्ति सर्वभूतानि अत्र, तेषु अयमपि वसतीति वा वसुः। "वसूनां पावकश्चास्मि" (भ.गी. १०-२३) इत्युक्तो वा

### विवृतिः

दार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि भवन्न निवार्यते" (शा. भा. १-१-२) इति। अपगत इति पाठे नानाशास्त्रोक्तायोगाद्वेदान्ताननुमतादपगतोऽनवगत इत्यर्थः॥

योगिहृदयसूर्यमण्डलादावभिव्यज्यमानतया तत्र वसतीति **वसुः**। वसेः "श्रृस्वृस्निहित्रपि" (उणा.१९) इत्यादिना कर्तरि उप्रत्यय इत्यभिप्रेत्य निर्वक्ति—**वसतीति**। अर्थान्तरमाह—**वसूनामिति**।

"*ध्रुवो घर्मश्च सोमश्च आपदेवोऽनिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥

---

* अत्र विष्णुपुराणे–"आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः"॥—(वि.पु.१-१५-११०)

भारते— "धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥—(अनु. २५५-१७)

"धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥—(आदि. ६७-१८)

श्रीभागवते— "द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः।
इति श्लोकानुपूर्वी दृश्यते।—(६-६-११)

हरिवंशे— "आपः धरः ध्रुवः सोमः अनिलः अनलः प्रत्यूषः प्रभासः" इत्यष्टौ वसवो निरूपिताः।

## स्तोत्रम्

# वसुमनाः

## भाष्यम्

**वसुः। वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते। प्रशस्तं मनो यस्य सः वसुमनाः। रागद्वेषादिभिः क्लेशैर्मदादिभिरुपक्लेशैश्च यतो न कलुषितं चित्तं ततस्तन्मनः प्रशस्तम्। अवितथरूपत्वा-**

## विवृतिः

इत्युक्तानां वसूनां मध्ये अनलशब्देनोक्तो यस्तद्रूपत्वाद्वा वसुरित्यर्थः। वसुमनोनाम व्याचष्टे—**प्रशस्तमिति**। ननु धनवाचिना वसुशब्देन मनश्शब्दस्य सामानाधिकरण्याभावात्कथं बहुव्रीहिरित्याशङ्क्य धनवाचिशब्देन प्राशस्त्यलक्षणया सामानाधिकरण्यमित्यभिप्रेत्याह—**वसुशब्देनेति**। मनसः प्राशस्त्यं वसुशब्देन लक्षितमुपपादयति—**रागेति**॥

ननु "अप्राणो ह्यमनाः" (मुण्ड. २-१-२) इति श्रुत्या मनसः प्रतिषेधात्कथं ब्रह्मणो वसुमनस्त्वमिति चेन्न; तस्याः श्रुतेः शुद्धब्रह्मविषयकत्वात्। "सत्यात्मप्राणारामं मन आनन्दम्" (तै. उ. १-६-४) इत्यादिश्रुतिभिः सविशेषब्रह्मणो दिव्यमनस्सम्बन्धस्य प्रतीयमानत्वात्। तदुक्तं भाष्ये "सर्वत्र प्रसिद्धोपदेशात्" (ब्र. सू. १-२-१) इत्यत्र—"'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड. २-१-२) इति श्रुतिः शुद्धब्रह्मविषया। इयं तु 'मनोमयः प्राणशरीरः' (छा. उ. ३-१४-१) इति सगुणब्रह्मविषयेति विशेषः" (शा. भा. १-२-१) इति। "सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति" इत्यभिधानात्तथ्यवचनः सत्यशब्द इत्यभिप्रेत्य व्याचष्टे—**अवितथेति**। अबाध्यरूपत्वादित्यर्थः। तत्र श्रुतिमाह—

## स्तोत्रम्

# सत्यः

### भाष्यम्

त्परमात्मा सत्यः। "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. २-१) इति श्रुतेः। मूर्तामूर्तात्मकत्वाद्वा। "सच्च त्यच्चाभवत्" (तै. उ. २-६) इति श्रुतेः। सदिति प्राणः, तीत्यन्नम्, यमिति दिवा-

### विवृतिः

**सत्यमिति।** अर्थान्तरमाह—**मूर्तेति।** बृहदारण्यके मूर्तामूर्तब्राह्मणे "तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च" (बृह. उ. २-३-२) इति वाय्वाकाशव्यतिरिक्तस्य पृथिव्यादिभूतत्रयस्य मूर्तत्वमभिधाय "एतत्सत्" (बृह. उ. २-३-२) इति सच्छब्दवाच्यत्वं तस्योक्तम्। "अथामूर्तं वायुश्चान्तरिक्षं च" (बृह. उ. २-३-३) इत्यभिधाय "एतत्त्यम्" (बृह. उ. २-३-३) इति त्यच्छब्दस्तत्र प्रयुक्तः। अतश्चाक्षुषत्वपरोक्षत्वाभ्यां यद्विभक्तं जगदस्ति तत्सर्वमत्र शब्दद्वयेनोपलक्ष्यते। तथा च प्रत्यक्षपरोक्ष-सर्वजगदाकारेण परिणतं ब्रह्म सत्यशब्देनोच्यते। तस्य तदुभयघटितत्वा-दित्यर्थः। अस्मिन् पक्षे सत्य इति रूपं छान्दसं बोध्यम्। सत्त्यदात्मकत्वे श्रुतिं पठति—**सच्चेति।** अस्य "तदनुप्रविश्य" (तै. उ. २-६) इति पूर्ववाक्यम्। तत्सृष्टं देहजातं भोक्तृरूपेणानुप्रविश्य अनन्तरं [1] सदादि-भोग्यवस्त्वाकारेण ब्रह्म परिणतमभूदिति श्रुत्यर्थः। ऐतरेयश्रुतिमनुसृत्य निर्वचनान्तरमाह—**सदितीति।** सच्छब्दः प्राणवाची। तकारोऽन्न-वाची। यमित्यादित्यवचनः। एतत्त्रितयात्मकत्वाद्विष्णुः सत्य इत्यर्थः।

---

[1] सदा दिव्यभोग्य—**पा.**

स्तोत्रम्

## समात्मा-

भाष्यम्

**करः, तेन प्राणान्नादित्यरूपत्वाद्वा सत्यः। "सदिति प्राणास्तीत्यन्नं यमित्यसावादित्यः" (ऐ. उ. १-५-३) इति श्रुतेः। सत्सु साधुत्वाद्वा सत्यः ॥**

**समः आत्मा–मनो यस्य रागद्वेषादिभिरदूषितः सः समात्मा। सर्वभूतेषु समः–एक आत्मा वा, "सम आत्मेति विद्यात्" (कौषी. ३-९) इति श्रुतेः *(सर्वैरप्यर्थजातैः परिच्छिन्नो**

विवृतिः

तत्र श्रुतिं पठति—**सदिति**। प्राणास्तीत्यन्नमित्यत्र श्रुतौ इकारो न विवक्षितः। तकारोऽन्नमित्यर्थः। सत्सु साधुः **सत्यः**। "तत्र साधुः" (पा. सू. ४-४-९८) इति यत्प्रत्ययः। तथा च श्रुतिस्मृत्युदितधर्मानुवर्तिषु साधुः–विनीत इत्यभिप्रेत्य अर्थान्तरमाह—**सत्स्विति**। सत्सु–भक्तेषु कृतापराधेष्वपि क्षमाशीलो वा सत्य इत्यर्थः ॥

समः–रागद्वेषादिरहितः आत्मा–मनोऽस्येति व्याचष्टे—**सम इति**। [1]समः–एकः–अद्वितीयः सर्वभूतेषु, स चासावात्मा चिद्रूपश्चेति समात्मेति व्याख्यानान्तरमाह—**सर्वभूतेष्विति**। तत्र श्रुतिं पठति—**सम इति**। यः प्रत्यगात्मा सर्वेषां भूतानां स समः–एक

---

* अयं धनुरङ्कितः पाठः स्तोत्रे "सम्मितः" इत्यकारप्रश्लेषरहितपाठपक्षे द्रष्टव्यः.

[1] समः स एक–**पा.**

स्तोत्रम्

[1]ऽसम्मितः समः ।

भाष्यम्

मितः सम्मितः) सर्वैरपरिच्छिन्नोऽमित इति असम्मितः । सर्वकालेषु सर्वविकाररहितत्वात् समः । मया—लक्ष्म्या सह वर्तत इति वा समः ॥

पूजितः स्तुतः संस्मृतो वा सर्वफलं ददाति, न वृथा

विवृतिः

इति श्रुत्यर्थः । किञ्चिद्वस्तु हस्तवितस्त्यादिना मीयते । किञ्चिच्च दण्डादिना । किञ्चिच्च तुलया । किञ्चिच्च प्रस्थद्रोणादिना । आत्मा तु न केनापि सम्मितः––परिच्छिन्न इत्यसम्मित इत्यभिप्रेत्य व्याचष्टे––सर्वैरिति ॥

यद्वा ब्रह्मणः सर्वप्रपञ्चोपादानतया तत्तदवच्छिन्नत्वेऽपि तत्तत्कार्यस्य तत्तत्कृतपरिच्छेदस्य च मिथ्यात्वाद्वस्तुतो न तैः परिच्छिन्न इत्यसम्मित इत्यर्थः । " सर्वैरप्यर्थजातैः परिच्छिन्नो मितः सम्मितः " इत्यकारप्रश्लेषरहितपाठान्तरमपि दृश्यते । तत्र घटादिना आकाश इव तैस्तैः पदार्थैः कल्पितैः अपरमार्थतः परिच्छिन्नः सम्मित इत्यर्थः । समत्वमेकरूपत्वम् । तच्च * सकलभावविकारराहित्यमिति समनाम व्याचष्टे—सर्वकालेष्विति ॥

पूजितः स्तुतः संस्मृतो वा [2]अभीष्टं फलं ददातीति, मोघो न भवतीत्यमोघनाम व्याचष्टे—पूजित इति । अविद्यमानो मोघः

*जनिप्रभृतयो भावविकाराः षट् । ते च निरुक्तोक्ताः ( निरु. १-२) अत्रानुसन्धेयाः ॥

[1] सम्मितः–पा. [2] अभीप्सितं–पा.

स्तोत्रम्

# अमोघः पुण्डरीकाक्षः

भाष्यम्

करोतीति अमोघः। अवितथसङ्कल्पाद्वा "सत्यकामः सत्यसङ्कल्पः" (छा. उ. ८·१-५) इति श्रुतेः। हृदयाख्यं पुण्डरीकमश्नुते—व्याप्नोति तत्रोपलक्षित इति पुण्डरीकाक्षः। "यत्पुण्डरीकं पुरमध्यसꣳस्थम्" (तै. आ. याज्ञिक्यु. १०-१०) इति श्रुतेः। पुण्डरीकाकारे उभे अक्षिणी अस्येति वा। धर्मलक्षणं

विवृतिः

सङ्कल्पोऽस्येत्यमोघः। सत्यभामा सत्येतिवदर्थान्तरपरतया अमोघनाम व्याचष्टे—**अवितथेति**। सत्येत्यर्थः। तत्र श्रुतिमाह—**सत्येति**। पुण्डरीकं--हृदयपुण्डरीकं, अक्ष्णोति—व्याप्नोति, इति विग्रहे "अक्षू व्याप्तौ" इत्यतः "कर्मण्यण्" (पा. सू. ३·२·१) इति रूपमित्यभिप्रेत्य व्याचष्टे—**हृदयाख्यमिति**। "पुण्डरीकमश्नुते" इति भाष्ये अश्नोतिग्रहणं न प्रकृतिप्रदर्शनार्थम्। किन्त्वर्थकथनमात्रपरमिति बोध्यम्। हृदयपुण्डरीकव्याप्तिश्च तत्स्थान्तःकरणस्य स्वच्छत्वात्तत्र स्पष्टमुपलभ्यमानत्वमित्याशयेनाह—**तत्रेति**। तत्र श्रुतिं पठति—**यदिति** अर्थान्तरमाह—**अक्षिणी इति**॥

वृषो धर्मः, तल्लक्षणं कर्म यस्य शेषिणः शेषभूतम्; विविदिषार्थत्वात्। "तमेतम्" (बृह. उ. ४-४-११) इत्यादिश्रुतेः। स वृषकर्मेति व्याचष्टे—**धर्मलक्षणमिति**। यद्वा धर्मरूपमेव कर्म येनानुष्ठीयमानं भवति स वृषकर्मेत्यर्थः। वृषशब्दः तादर्थ्ये। आकृतिः-

स्तोत्रम्

## वृषकर्मा वृषाकृतिः॥ २५ ॥

## रुद्रः

भाष्यम्

कर्म अस्येति वृषकर्मा। धर्मार्थमाकृतिः-शरीरं यस्य सः वृषाकृतिः। "धर्मसंस्थापनार्थाय सम्भवामि युगे युगे"(भ. गी. ४-८) इति भगवद्वचनात् ॥ २५ ॥

संहारकाले प्रजाः संहरन् रोदयतीति रुद्रः। रुदं राति-ददातीति वा, रुर्दुःखं दुःखकारणं वा द्रावयतीति वा रुद्रः। रोदनाद्द्रावणाद्वापि रुद्र इत्युच्यते ॥

विवृतिः

आकारः शरीरम्। वृषार्था-धर्मार्था आकृतिः-शरीरमस्येति व्याचष्टे—**धर्मार्थेति**। भगवतः शरीरग्रहणस्य धर्मार्थत्वे गीतावचनं पठति—**धर्मेति** ॥ २५ ॥

रोदयति संहारकाले सर्वाः प्रजा इति "रुदिर् अश्रुविमोचने" अस्मात् ण्यन्तात् "रोदेर्णिलुक् च" (उणा. १७९) इति रक्प्रत्ययो णेर्लुक् चेति रूपसाधनमभिप्रेत्य रुद्रनाम निर्वक्ति—**संहारेति**। रोदनं रुत्। सम्पदादित्वाद्भावे क्विप्। रुदं राति—ददातीति विग्रहे "रा दाने" इत्यतः "आतोऽनुपसर्गे कः" (पा.सू. ३-२-३) इति कप्रत्यय इत्यर्थान्तरमाह—**रुदमिति**। "रुर्दुःखं दुःखहेतुं वा विद्रावयति [1] स प्रभुः इत्यादिरुद्रनामनिर्वचनपरः पुराणश्लोकः क्वचित्पठ्यते। तस्यायमर्थः। रुदन्त्यनेन रुत्। सम्पदादित्वात्करणे क्विप्। दुःखं तद्धेतुश्च रुदित्युच्यते। "द्रु गतौ" अन्तर्भावितण्यर्थोऽयम्। तथा च रुदं-दुःखं तत्साधनं वा द्रवति द्रावयतीति द्रुधातोः "अन्येभ्योऽपि दृश्यन्ते" (उणा. ५४४) इति डप्रत्यये रुद्र इति रुद्रशब्दनिष्पत्तिमभिप्रेत्य

---

[1] नः-पा.

**स्तोत्रम्**

## बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।

**भाष्यम्**

**"रुर्दुःखं दुःखहेतुं वा विद्रावयति स प्रभुः ।**
**रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्"**

**इति लिङ्गपुराणवचनात् । बहूनि शिरांसि यस्येति बहुशिराः । "सहस्रशीर्षा पुरुषः" (तै. आ. ३-१२) इति मन्त्रवर्णात् । बिभर्ति लोकानिति बभ्रुः । विश्वस्य कारणत्वात् विश्वयोनिः । शुचीनि श्रवांसि--नामानि श्रवणीयान्यस्येति शुचिश्रवाः ॥**

**विवृतिः**

पुराणवचनं पठति—**रुर्दुःखमिति** । "रुद्रो रौतीति सतो रोरूयमाणः द्रवतीति वा, रोदयतेर्वा, यदरुदत् तद्रुद्रस्य रुद्रत्वमिति *काठकम् । यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति † हरिद्रविकम्" (निरुक्त. १०-७-५) इति नैरुक्तप्रक्रियया वा रुद्रशब्दनिष्पत्तिः ॥

बहूनि शिरांस्यस्य ब्रह्माण्डशरीरस्य विराडाख्यस्य पुरुषस्येति व्याचष्टे—**बहूनीति** । तत्र श्रुतिं पठति –**सहस्रेति** । बिभर्ति लोकानिति "डुभृञ् धारणपोषणयोः" अस्माद्धातोः "कुर्भ्रश्च" (उणा. २२) इति कुप्रत्ययो द्वित्वं चेति रूपमभिप्रेत्य बभ्रुनाम निर्वक्ति–**बिभर्तीति** । विश्वस्य योनिः–कारणं निमित्तोपादानात्मकमिति विश्वयोनिनाम व्याचष्टे—**विश्वकारणत्वेनेति** । [1] श्रूयन्त इति श्रवांसि "श्रु श्रवणे" अस्मात् "सर्वधातुभ्योऽसुन्" (उणा. ६३८) इति बाहुलकात्कर्मण्यसुन्प्रत्ययः । श्रवांसि–श्रवणीयानि नामानि शुचीनि–पावनान्यस्येति व्याचष्टे— **शुचीनीति** ॥

---

* कठानां प्रवचनमित्यर्थः । † हरिद्रवो नाम मैत्रायणीयानां शाखाभेदः, तत्प्रवचनमित्यर्थः ।

[1] शुचीनि पावनानि श्रू–**पा.**

### स्तोत्रम्

## अमृतः शाश्वतस्थाणुर्वरारोहः

### भाष्यम्

**न विद्यते मृतं–मरणं अस्येति अमृतः। "अजरोऽमरः" (कौषी. ३–८) इति श्रुतेः। शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणुः। वरमारोहणं यस्मिन्निति वरारोहः।**

### विवृतिः

मृतं–मरणं। "नपुंसके भावे क्तः"। (पा. सू. ३-३-११४) अविद्यमानं मृतं—मरणमस्येति व्याचष्टे—**न विद्यत इति** शश्वत्–सर्वदा भवः। "तत्र भवः" (पा. सू. ४-३-५३) इति अण्। **शाश्वतः। स्थाणुः**—स्थिरः। शाश्वतश्चासौ स्थाणुश्चेति समासात्मकमेकं नामेति व्याचष्टे—**शाश्वतश्चेति**। अत्र नामान्तर्गतेन शाश्वतपदे-*नाद्यन्तविक्रिये व्यावर्त्येते। स्थाणुपदेन † मध्यस्था विकारा व्यावर्त्यन्त इति "अग्राह्यः शाश्वतः" (वि. स. २०) इत्यत्रत्येन शाश्वतशब्देनापौनरुक्त्यम्। समासात्मकस्य नाम्नस्ततो भिन्नत्वादिति च बोध्यम्॥

वर आरोहः–अङ्कः शेषाङ्कः शयनस्थानत्वेनास्यास्तीति व्याचष्टे–**वर इति**। भाष्ये यस्मिन्निति सप्तमी "क्ङिति च" (पा. सू. १-१-६) इतिवन्निमित्तार्था। आरोहणं आरोहः। रुहेराङ्पूर्वाद्भावे घञ्। क्रममुक्त्या पुनरावृत्त्यभावात्। वरः–श्रेष्ठः आरोहः—अर्चिरादिमार्गेण ब्रह्मलोकारोहणं यस्मिन् दहराद्युपास्तिविषये सत्यसङ्कल्पत्वादिगुणविशिष्टे सगुणे ब्रह्मणि निमित्ते भवति स **वरारोहः**। "न धातुलोपः" (पा. सू. १-१-४) इत्यादाविव निमित्तार्थे बहुव्रीहिरित्यभिप्रेत्यार्थान्तर-

---

* जन्मविनाशौ इत्यर्थः। † अस्तित्वविपरिणामवृद्ध्यपेक्षया इत्यर्थः।

स्तोत्रम्

## महातपाः ॥२६ ॥

भाष्यम्

वरः आरोहः--अङ्कोऽस्येति वा । आरूढानां पुनरावृत्त्यसम्भवात् । "न च पुनरावर्तते" (छा. उ. ८-१५-१) इति श्रुतेः । "यं प्राप्य न निवर्तन्ते" (भ. गी. ८-२१) इति स्मृतेश्च । महत्–सृज्यविषयं तपः–ज्ञानमस्येति महातपाः । "यस्य ज्ञानमयं तपः" (मुण्ड. १-१-९) इति श्रुतेः । ऐश्वर्यं प्रतापो वा तपो महदस्येति वा महातपाः ॥ २६ ॥

विवृतिः

परत्वेन व्याचष्टे—**वर इति**। आरोहणस्य श्रेष्ठत्वं विशदयति—**आरूढानामिति**। स्वर्गादिकमारूढानां पुनरवरोहोऽस्ति । ब्रह्मधाम आरूढानां तु न कदाचिदप्यवरोह इत्यर्थः । अत्र भगवद्वचनमाह—**यं प्राप्येति** ॥

"तप आलोचने" अस्माद्भावे "सर्वधातुभ्योऽसुन्" (उणा.६३८) इति असुन् प्रत्ययः । महत्–वियदादिसृज्यविषयत्वेनोत्कृष्टं तपः–आलोचनात्मकं "तदैक्षत" (छा. उ. ६-२-३) इत्यादिश्रुत्युक्तं ज्ञानमस्येति महातपा इत्याह—**महदिति**। तपो ज्ञानरूपमित्यत्र श्रुतिमाह—**यस्येति**। "तप ऐश्वर्ये" "तप सन्तापे" आभ्यां पूर्ववदसुन् । महत्–मर्यादाराहित्यादुत्कृष्टं तपः–ऐश्वर्यं-ईश्वरभावोऽस्य, उद्धतदैत्यदानवादिसुरविपक्षग्लानिकरत्वेन महत्–अधिकं तपः–प्रतापः दण्डजं तेजः, "स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्" (नाम. २-८-२०) इत्यमरः । सोऽस्येति वा महातपा इत्यर्थद्वयमभिप्रेत्याह—**ऐश्वर्यमिति** । इदं व्याख्यानद्वयं केषुचित् कोशेषु न दृश्यते ॥२६॥

## स्तोत्रम्

# सर्वगः

### भाष्यम्

**सर्वत्र गच्छतीति सर्वगः। कारणत्वेन व्याप्तत्वात् सर्वत्र। सर्वं वेत्ति विन्दत इति वा सर्ववित्। भातीति भानुः। "तमेव**

### विवृतिः

सर्वं गच्छति; "अन्तात्यन्ताध्व" (पा. सू. ३-२-४८) इत्यादिना डप्रत्ययः। **सर्वगः।** सर्वगतत्वं च सर्वकार्योपादानतया सर्वानुगति[1]रित्यभिप्रायेण सर्वगनाम निर्वक्ति—**सर्वत्रेति।** भाष्ये कर्मणोऽधिकरणत्वविवक्षया त्रलन्तं प्रयुक्तम्। सर्वं वेत्ति विन्दत इति वा "विद ज्ञाने" "विदॢ लाभे" आभ्यां "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विप्। सर्वज्ञः सर्वलब्धा च सर्वविदित्याह— **सर्वं वेत्तीत्यादि। विन्दत इति।** सर्वमित्यनुषङ्गः। सत्यसङ्कल्पत्वाद्यत्सङ्कल्पयति तत्सर्वं विन्दति—लभत इत्यर्थः। भातीति **भानुः।** "भा दीप्तौ" "दाभाभ्यां नुः" (उणा. ३१९) इति नुप्रत्यय इत्याह—**भातीति भानुरिति।** स्वप्रकाशस्वरूप इत्यर्थः। सर्वविच्चासौ भानुश्चेति सर्वविद्भानुरिति केषुचित्पुस्तकेषु दृश्यते। तत्र [2]स्वरूपबोधेन स्वाध्यस्त[3]सर्वबोद्धृत्वलाभार्थं भानुग्रहणमिति बोध्यम्। तत्र श्रुतिमाह—**तमेवेति॥**

विषुशब्दो नानार्थको निपातः। विषु—नानादिक्षु अञ्चतीति "ऋत्विक्" (पा. सू. ३-२-५९) इत्यादिना क्विनि "उगितश्च" (पा. सू. ४-१-६) इति ङीप्। विषूची—नानादिक्षु पलायमाना, सेना दैत्यादिसम्बन्धिनी विरोधसम्बन्धेन यस्य स **विष्वक्सेनः।** गकारपरत्वात्

---

[1] रिति निर्वक्ति—**पा.** [2] स्वरूपभेदेन—**पा.** [3] सर्वभोक्तृत्वला—**पा.**

स्तोत्रम्

## सर्वविद्भानुर्विष्वक्सेनः

भाष्यम्

भान्तमनुभाति सर्वम्" (मुण्ड. २-२-१०) इति श्रुतेः। "यदादित्यगतं तेजः" (भ. गी. १५-१२) इत्यादिस्मृतेश्च। सर्वविच्चासौ भानुश्चेति सर्वविद्भानुः। विष्वगञ्चति—पलायते दैत्यसेना यस्य रणोद्योगमात्रेणेति विष्वक्सेनः। जनान्—

विवृतिः

"एति संज्ञायामगात्" (पा. सू. ८-३-९९) (ग. १२८) इति षत्वम्। पुंवद्भावः। विष्वगित्यव्ययार्थवृत्तिर्वा विषुशब्दः। निपातानामनेकार्थत्वात्। विष्वगिति चाव्ययं सर्वत इत्यर्थे। "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" (नाम. ३-४-१४) इत्यव्ययेष्वमरकोशात्। तथा च विषु–विष्वक् सर्वतोऽञ्चतीति विग्रहे रूपसाधनं पूर्ववत्। विषूची–सर्वतः पलायमाना दैत्यसेना विरोधसम्बन्धेनास्येति **विष्वक्सेनः**। नानार्थत्वे तु विषु–नानादिक्षु [1]अञ्चतीति व्याख्यानादार्थिकी विष्वगर्थता विषुशब्दस्येत्यभिप्रेत्य विषुशब्दं विष्वक्च्छब्देन विवृण्वन् व्याचष्टे—**विष्वगिति**। इदं [2]च भाष्यमर्थकथनार्थम्। न विग्रहप्रदर्शनार्थम्। विग्रहस्तु पूर्वोक्तरीत्या द्रष्टव्यः। अन्यथा अञ्चतीति तिङन्तेन विग्रहायोगाद्विष्वगित्यस्य नामानन्तर्गतत्वाच्चेति बोध्यम्॥

जनशब्दो दुर्जनपरः। जनान्–दुर्जनान्, अर्दयति–हिनस्तीति "अर्द हिंसायाम्" इत्यतश्चुरादिण्यन्तात् नन्द्यादित्वाल्ल्युरिति व्युत्पादयति—**जनानिति**। जनान्–दुर्जनान् अर्दयति–नरकादीन्

---

[1] सञ्चरतीति–**पा.** [2] तु–**पा.**

स्तोत्रम्

# जनार्दनः ।

# वेदः

भाष्यम्

**दुर्जनान्, अर्दयति–हिनस्ति नरकादीन् गमयतीति वा जनार्दनः। जनैः पुरुषार्थं अभ्युदयनिश्श्रेयसलक्षणं याच्यत इति जनार्दनः॥**

**[1]वेदरूपत्वात् वेदः । वेदयतीति वा वेदः ।**

**"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥"**

**इति भगवद्वचनात् । (भ. गी. १०-११)**

विवृतिः

गमयतीति "अर्द गतौ याचने च" इत्यतो भ्वादेः हेतुमण्ण्यन्तात्पूर्ववल्ल्युरिति गत्यर्थं गृहीत्वा अर्थान्तरमाह—**नरकादीनिति** । जनैः–साधुभिः, अर्द्यते- याच्यते अभ्युदयनिश्श्रेयसलक्षणं फलमिति अर्दतेर्याच्ञार्थात् "कृत्यल्युटो बहुलम्" (पा. सू. ३-३-११३) इति कर्मणि ल्युडित्यर्थान्तरमाह—**जनैरिति** ॥

वेदयति- बोधयति आत्मानमिति **वेदः** । "विद ज्ञाने" इत्यतो ण्यन्तात्पचाद्यचि रूपमित्यभिप्रेत्य वेदनाम निर्वक्ति–**वेदयतीति** । परमेश्वरस्यात्मस्वरूपबोधकत्वे गीतां पठति—**तेषामिति** । "मच्चित्ता मद्गतप्राणाः" (भ. गी. १०-९) इत्युक्तप्रकारेण भजतां कथं नु नाम श्रेयः स्यादित्य**नुकम्पार्थं**–दयाहेतोः, **अहमज्ञानजं तमः**–अविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमः, **नाशयामि** । आत्म-

[1] वेदयतीति वेदः–पा.

## स्तोत्रम्

# वेदाविदऽव्यङ्गः

### भाष्यम्

"सर्वे वेदाः सर्वविद्याः सशास्त्राः
सर्वे यज्ञाः सर्व इज्याश्च कृष्णः।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन्! सर्वयज्ञाः समाप्ताः॥"

इति महाभारते। यथावत् वेदं—वेदार्थं वेत्तीति वेदवित्। "वेदान्तकृद्वेदविदेव चाहम्" (भ. गी. १५-१५) इति भगवद्वचनात्। अव्यङ्गः—ज्ञानादिभिः परिपूर्णोऽविकल उच्यते।

### विवृतिः

**भावस्थः**—आत्मनो भावः—अन्तःकरणाशयः, तस्मिन्नेव स्थितः सन्, **ज्ञानदीपेन**—विवेकप्रत्ययरूपेण [1] ध्यानजनितसम्यग्दर्शन**भास्वते**त्यर्थः। वेदशब्दो वेदार्थपरः। वेदं—वेदार्थं वेत्तीति "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विबिति वेदविन्नाम निर्वक्ति—**यथावदिति**। यथाशब्दः पदार्थानतिवृत्तौ। वतिः स्वार्थे। अनादिमीमांसान्यायनिर्णीतमर्थमनतिक्रम्य वेदार्थं वेत्तीत्यर्थः। तत्र भगवद्वचनमाह—**वेदान्तकृदिति**। वेदविदिति नाम स्मृत्यन्तरसिद्धं चेत्याह—**सर्व इति**। अत्र वेदवित् यः स कृष्ण इति वेदविदिति दर्शनादिति बोध्यम्॥

विगतमङ्गमस्येति व्यङ्गो विकलः; न व्यङ्गः अव्यङ्गः—ज्ञानैश्वर्यादिभिः परिपूर्ण इत्यव्यङ्गनाम व्याचष्टे—**अव्यङ्ग इति**। "अञ्जू व्यक्तौ" अस्माद्विपूर्वाद्भावे घञ्। न विद्यते व्यङ्गो—व्यक्तिः चक्षु-

[1] ज्ञान—**पा.**

भाष्यम्

**व्यङ्गः–व्यक्तिर्न विद्यते यस्येति वा अव्यङ्गः। "अव्यक्तोऽयम्" (भ. गी. २-१५) इति भगवद्वचनात्। वेदा अङ्गभूताः**

विवृतिः

रादिविषयत्वमस्येत्यर्थान्तरपरतया व्याचष्टे—**व्यङ्ग इति**। तत्र गीतावचनं पठति—**अव्यक्तोऽयमिति**। अव्यक्तः–चक्षुराद्यविषयः। अचिन्त्यः–मनसोऽविषय इत्यर्थः। यद्वा अङ्गानि सर्वज्ञत्वादीनि। "सर्वज्ञता तृप्तिरनादिबोधः"* (वायुपु. १२-३३) इत्यादिस्मृतेः। तद्रहितो व्यङ्गः। न व्यङ्गोऽव्यङ्गः–अविकलः–सर्वज्ञत्वादिभिः परिपूर्णः शिवरूप इत्यर्थः॥

वेदाङ्गनाम व्याचष्टे—**वेदा अङ्गभूता इति**। चतुस्सङ्ख्यत्वाद्यज्ञाङ्गत्वाच्च साम्याद्यज्ञमयस्य वराहमूर्तेर्नारायणस्य वेदाः पादत्वेन रूप्यन्ते इतिहासपुराणेषु। अतो वेदानां पादरूपाङ्गतया रूपणात् वेदाङ्गत्वम्। तथा चोक्तं हरिवंशे—"वेदपादो यूपदंष्ट्रः" इतीत्यर्थः। यद्वा अङ्गशब्देन वपुरुच्यते। तथा च वेदा अङ्ग–वपुरस्य **वेदाङ्गः**। "ऋचो यजूंषि सामानि तथैवाथर्वणानि [1]च" (वि. पु. १-२२-८३) इत्युपक्रम्य "शब्दमूर्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः" (वि.पु. १-२२-८५) इति विष्णुपुराणोक्तेरित्यर्थः। वेदान् [2]विन्ते–विचारयति। "विद विचारणे" [3]इत्यस्मात् क्विपमाश्रित्य "वेदो वेदवित्" (वि.स. २६)

---

*"स्वतन्त्रता नित्यमलुप्तशक्तिः। अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥" इति अवशिष्टश्लोकभागः।

[1] वै–**पा.** [2] विन्दते–**पा.** [3] इत्यतः–**पा.**

स्तोत्रम्

## वेदाङ्गो वेदवित्कविः ॥ २७ ॥

भाष्यम्

**यस्य सः वेदाङ्गः । वेदान् विन्ते–विचारयतीति वेदवित् । कविः–क्रान्तदर्शी–सर्वदृक् । "नान्योऽतोऽस्ति द्रष्टा" (बृ. उ. ५-७-१३) इत्यादिश्रुतेः । "कविर्मनीषी" (ईश. ८) इत्यादिमन्त्रवर्णात् ॥ २७ ॥**

विवृतिः

इत्यनेनापौनरुक्त्याय विचारार्थं गृहीत्वा व्याचष्टे—**वेदानिति** । पूर्वसर्गे यादृशा वेदाः स्थिताः [1] उत्तरसर्गेऽपि तादृशानेव स्रष्टुं विचारयति—"धाता यथापूर्वमकल्पयत्" (तै. आ. १०-१-१४) इति श्रुतेरित्यर्थः । यद्वा शिक्षाप्रातिशाख्यादिलक्षणमुखेन स्वरवर्णाद्यविप्लुतये वेदानां स्वरूपं व्यासाद्याचार्यरूपेण विचारयतीत्यर्थः । अथ वा *पूर्वोत्तरमीमांसाभ्यां काण्डद्वयात्मकं वेदमर्थतो विचारयतीत्यर्थः ।

"मेधावी कविः क्रान्तदर्शनो भवति । कवतेर्वा" इति यास्कवचनमनुसृत्य कविनाम व्याचष्टे—**क्रान्तेति** । क्रान्तं–अस्मदादीन्द्रियविषयतामतिक्रान्तं वस्तु सर्वविषयव्यापि यथा स्यात्तथा वा द्रष्टुं शीलमस्येत्यर्थः । "अक्षरवर्णसाम्यात् निर्ब्रूयात्" (निरुक्त. १-१) इति निरुक्तात् कविशब्दैकदेशकशब्देन क्रान्तशब्दो लक्ष्यते । अतिक्रान्तं–अस्मदादिचक्षुर्विषयतामतिक्रान्तं वस्तु वेत्ति–पश्यतीति व्युत्पत्तिर्द्रष्टव्या । निष्कृष्टार्थमाह—**सर्वेति** । तत्र श्रुतिमाह—**नान्य इति** । सर्वद्रष्टृरूपेणायमेव सर्वं पश्यतीत्यर्थः ॥ २७ ॥

---

* "व्यासाद्याचार्यरूपेण" इत्यस्य अत्राप्यनुषङ्गः । जैमिनिकृतधर्मसूत्रैः कर्मकाण्डं, व्यासकृतब्रह्मसूत्रैः ज्ञानकाडं च (उपनिषद्भागं) अर्थतो विचारयतीति भावः ॥

[1] उत्तरसर्गे ता–**पा.**

## स्तोत्रम्

# लोकाध्यक्षः सुराध्यक्षः

## भाष्यम्

**लोकानध्यक्षयतीति लोकाध्यक्षः । सर्वेषां लोकानां प्राधान्येनोपद्रष्टा । लोकपालादिसुराणामध्यक्षः सुराध्यक्षः* । धर्माधर्मौ**

## विवृतिः

अध्यक्षयति—प्रत्यक्षयतीत्यध्यक्षः । "प्रत्यक्षेऽधिकृतेऽध्यक्षः" (नाम. ३-३-२२५) इत्यमरकोशात्प्रत्यक्षवाचिनोऽध्यक्षशब्दात् "तत्करोति तदाचष्टे" (गण. २०४) इति णिचि णिजन्तात्पचाद्यचि अध्यक्ष इति रूपम् । लोकानामध्यक्ष इति षष्ठीतत्पुरुषः । लोका अध्यक्षा यस्येति वा लोकानध्यक्षयतीति † कर्मण्यणि उपपदसमासो वेत्यभिप्रेत्य लोकाध्यक्षनाम निर्वक्ति **लोकानिति**। सर्वेषां लोकानां द्रष्टेत्यर्थः । अक्षेषु—व्यवहारेषु आयव्ययचिन्तासु योगक्षेमप्रापणरूपव्यवहारेषु वा अधिकृतोऽध्यक्षः । सुराणामध्यक्षः सुराध्यक्ष इत्यप्रेत्याह[1]—**लोकपालादीति** । यद्वा सुराणां—स्वाधिकारानुरूपस्वपदस्थानां, शत्रुभयनिवारणाद्यपेक्षिताशेषवृत्तिविधानाय अध्यक्षः—प्रत्यक्ष इत्यर्थः । धर्मपदं लक्षणया धर्माधर्मप्रतिपादकम् । तथा च धर्माधर्मौ फलदानायाध्यक्षावस्येति, तौ अध्यक्षयतीति वा **धर्माध्यक्ष** इति व्याचष्टे—**धर्ममधर्मौविति** ।

---

* "सुराध्यक्षः" इत्यनन्तरं क्वचित्पुस्तके "स्वाधिकारानुरूपस्वपदस्थानां शत्रुवधनिवारणाद्यपेक्षिताशेषवृत्तिविधानाय प्रत्यक्षत्वेनोपलभ्यत इति सुराध्यक्षः" इत्यधिकः पाठो दृश्यते। विवृतौ तु 'यद्वा' इत्यादिना अयं पाठः प्रकारान्तरत्वेन सङ्गृहीतो दृश्यते ॥

† "कर्मण्यण्" (पा. सू. ३-२-१) इति सूत्रेण कर्मण्युपपदे धातोरणि कृते कुम्भकारवदुपपदसमासो वेत्यर्थः ।

[1] त्य व्याचष्टे–**पा.**

स्तोत्रम्

## धर्माध्यक्षः [1]कृताकृतः।

## चतुरात्मा

भाष्यम्

साक्षादीक्षते तदनुरूपं फलं दातुं, तस्मात्—धर्माध्यक्षः। कृतश्च कार्यरूपेण, अकृतश्च कारणरूपेणेति--कृताकृतः ॥

सर्गादिषु पृथग्विभूतयश्चतस्रः आत्मानः [2]यस्य सः-चतुरात्मा ।

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज!।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥

विवृतिः

धर्माधर्मप्रत्यक्षकरणस्य फलमाह—**तदनुरूपमिति**। कृतः—कार्यात्मकः। अकृतः—कारणात्मकः। कृतश्चासावकृतश्च "क्तेन नञ्विशिष्टेनानञ्" (पा. सू. २-१-६०) इति समास इति कृताकृतनाम व्याख्याति—**कृतइति** ॥

चत्वार आत्मानः—विभूतयः अस्य सन्ति सर्गस्थितिलयेषु कार्येष्विति चतुरात्मन्नाम व्याचष्टे—**सर्गादिष्विति**। सर्गस्थितिसंहारेषु मध्ये एकैकस्य चतस्रो भगवद्विभूतयः कारणमिति चतुरात्मेत्यर्थः। अस्मिन्नर्थे विष्णुपुराणमुदाहरति—**ब्रह्मेत्यादिना**। ब्रह्मा—चतुर्मुखः। दक्षादयः—ब्रह्मसुताः। कालः—तत्तत्कालः। (अखिलजन्तवः) समस्त-

[1] कृताकृतिः—**पा.**    [2] यस्येति चतु—**पा.**

भाष्यम्

**रुद्रः *कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।**
**चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥**
**इति वैष्णवपुराणे । (वि. पु. १-२२-३१-३३)**

विवृतिः

प्राणिन इति सृष्टिविषये नारायणस्य चतस्रो विभूतयः ; प्राणिनामपि मातापितृरूपेण सृष्टिहेतुत्वं बोध्यम् । विष्णुर्मन्वादयः कालः सर्वभूतानीति पालनाय चतस्रो विभूतयः ; रुद्रः कालः अन्तकाद्याः समस्तजन्तवश्च प्रलयाय विभूतयः । आदिशब्देन अग्न्यादयो ग्राह्याः । ब्रह्मादिभगवद्विभूतीनां आदिकाल एव स्रष्टृत्वम् । कालाख्यविभूतेस्तु सर्वदा सृष्टिनिमित्तत्वमिति बोध्यम् । तथा च विष्णुपुराणम्—

ब्रह्मा सृजत्यादिकाले मरीचि[1]प्रमुखास्ततः ।
उत्पादयन्त्यपत्यानि जन्तवश्च प्रतिक्षणम् ॥
जगदादौ तथा मध्ये सृष्टिराप्रलयाद्द्विज ! ।
धात्रा मरीचिमिश्रैश्च क्रियन्ते जन्तुभिस्तथा ॥
न कालेन विना ब्रह्मा सृष्टिनिष्पादको द्विज !
न प्रजापतयः सर्वे न चैवाखिलजन्तवः ॥

(वि. पु. १-२२-३४, ३६)

इति । तत्र "उत्पादयन्त्यपत्यानि" इत्यत्र अपत्यपदं कार्यमात्रोपलक्षणं द्रष्टव्यम् ॥

सृष्ट्यादिकार्यार्थं चत्वारो व्यूहाः—विभागाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञा मूर्तयो यस्येति चतुर्व्यूहनाम श्लोकेन व्याचष्टे—

---

* "कालान्तकाद्याश्च" इति मुद्रितकोशपाठः ।

[1] प्रमुखांस्तथा—**पा**, प्रमुखास्तदा—**पा**,

### स्तोत्रम्

## चतुर्व्यूहश्चतुर्दंष्ट्रः

### भाष्यम्

"व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः ।
सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः ॥"

इति व्यासवचनात्–चतुर्व्यूहः। दंष्ट्राश्चतस्रो यस्येति–चतुर्दंष्ट्रः—नृसिंहाविग्रहः। यद्वा सादृश्याद्वा शृङ्गं दंष्ट्रेत्युच्यते। "चत्वारि

### विवृतिः

व्यूह्येति। प्रविभज्येत्यर्थः। तथा च मार्कण्डेयपुराणे मूलकारणं वासुदेवाख्यं व्यूहमुक्त्वोक्तम्—

"द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ।
तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ।
तृतीया कर्म कुरुते प्रजापालनतत्परा ।
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥
चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ।
रजस्तस्या गुणस्सर्गं सा करोति सदैव हि ॥

इत्यादि ॥ (मा. पु. ४-४८, ५०)

चतस्रो दंष्ट्राः- शृङ्गाणि यस्य यज्ञमूर्तेरित्यर्थान्तरमाह—सादृश्याद्वेति। चतुश्शृङ्गत्वे मन्त्रमुदाहरति—चत्वारीति। "चत्वारि शृङ्गा" (ऋ. सं.४-५८-३) (तै.आ. १०-१०-२) इति मन्त्रनिरुक्तौ "महो देवो इत्येष (हि) महान् देवो यज्ञः" (निरुक्तं. १३-७) इति यज्ञपरत्वेन व्याख्यानात् चतुश्शृङ्गो यज्ञमूर्तिः चतुर्दंष्ट्र इत्युच्यत इत्यर्थः।

स्तोत्रम्

# चतुर्भुजः ॥ २८ ॥

# भ्राजिष्णुः

भाष्यम्

शृङ्गा" (ऋ. सं. ४-५-३) इति श्रुतेः। चत्वारो भुजा अस्येति–चतुर्भुजः ॥ २८ ॥

प्रकाशैकरसत्वात्—भ्राजिष्णुः। [1] भोज्यरूपतया प्रकृति-

विवृतिः

चत्वारो भुजाः लोकपरिपालनार्था अस्येति चतुर्भुजनाम व्याचष्टे—**चत्वार इति** ॥ २८ ॥

भ्राजनशीलो **भ्राजिष्णुः**। "भ्राजृ दीप्तौ" इत्यस्मात् "अ केस्तच्छील" (पा. सू. ३-२-१३४) इत्यधिकारे "अलंकृञ् निराकृञ्" (पा. सू. ३-२-१३६) इत्यादिना इष्णुच्प्रत्ययः। यद्यपि तस्मिन् सूत्रे भ्राजिर्नोक्तः, तथाप्यनुक्तसमुच्चयार्थेन चकारेण भ्राजिष्णुरिति शब्दस्य वृत्तिकारैः साधनादिति भ्राजिष्णुनाम व्याचष्टे—**प्रकाशैकरसत्वादिति**। "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" (बृ. उ. ४-५-१३) इति श्रुतेः ब्रह्मणः प्रकाशैकरसत्वम्। तच्च इष्णुच्प्रत्ययस्य ताच्छील्ये विधानाल्लभ्यते। अत्र स्वप्रकाशचिद्रूपः परमात्मा भ्राजिष्णुरित्यर्थः। भुज्यत इति **भोजनम्**। "भुज परिपालनाभ्यवहारयोः" इत्यस्मात् "कृत्यल्युटो बहुलम्" (पा. सू. ३-३-११३) इति कर्मणि ल्युडित्यभिप्रेत्य भोजननाम व्याचष्टे—**भोज्येति**। भोज्यरूपतया प्रकृतिर्भोजनमुच्यत इति सम्बन्धः। साङ्ख्याभिमतां

[1] भोग्यरूपतया–**पा.**

स्तोत्रम्

## भोजनं भोक्ता सहिष्णुर्जगदादिजः ।

भाष्यम्

**माया—भोजनं इत्युच्यते। पुरुषरूपेण तां प्रकृतिं भुङ्क्त इति—भोक्ता। हिरण्याक्षादीन् सहते—अभिभवतीति-सहिष्णुः। हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्वयमिति—जगदादिजः॥**

विवृतिः

प्रकृतिं वारयति—**मायेति**। भोज्यरूपत्वं च मायायास्तद्रूपेण [1] परिणामाद्विष्णोश्च तदधिष्ठानत्वाद्बोध्यम्॥

भुङ्क्त इति **भोक्ता**। भुजेस्तृच्प्रत्ययः। भोक्तृत्वं च जीवरूपेणेति व्याचष्टे—**भुङ्क्त इति**। "हिरण्यगर्भपुरुषप्रधान[2]व्यक्तरूपिणे" इति भोज्ये भोक्तृरूपत्वे स्मृतिः। **सहते—अभिभवतीति**। "षह मर्षणे अभिभवे च" इति अभिभवार्थात् "अलं कृञ्" (पा. सू. ३-२-१३६) इत्यादिना ताच्छील्ये इष्णुजित्यभिप्रेत्य व्याचष्टे—**हिरण्याक्षादीनिति**। जगदादौ जायत इति "सप्तम्यां जनेर्डः" (पा.सू. ३-२-९७) इति डप्रत्यय इति व्याचष्टे—**हिरण्यगर्भरूपेणेति**॥

"तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।

तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः"। (मनु. १-९)

इति मनूक्तेः हिरण्यगर्भस्य जगदादिजत्वं बोध्यम्॥

"अंहोदुःखव्यसनेष्वघम्" (ना.म. ३-३-२७) इत्यभिधानादंहोदुःखव्यसनान्यघशब्दार्थः। तत्र न विद्यते अघं—पापं अस्येति

---

[1] परिणामाद्बोध्यम्—**पा.**   [2] व्यक्तिरू—**पा.**

## स्तोत्रम्

# अनघो विजयः

### भाष्यम्

**अघं न विद्यते अस्येति–अनघः। "अपहतपाप्मा" (छा.उ. ८-१-५) इति श्रुतेः। विजयते ज्ञानवैराग्यैश्वर्यादिभिर्गुणैः विश्वमिति–विजयः। यतो[1]ऽतिशेते सर्वभूतानि स्वभावतः,**

### विवृतिः

**अनघः** इति व्याचष्टे—**अघं नेति**। अंहोराहित्ये श्रुतिमाह—**अपहतेति**। विजयते–विश्वमभिभवति ज्ञानादिभिर्गुणैरिति "जि अभिभवे" इत्यस्माद्विपूर्वात् *प्रचाद्यजिति विजयनाम निर्वक्ति–**विजयत इति**। "जि जये" इत्यस्मात्ताच्छील्ये तृन्निति व्याचष्टे—**यत इति**। अत्र जयः–उत्कर्षः। स चातिशय इत्याशयेनाह—**अतिशेत इति**। सर्वभूतातिशायित्वं च ब्रह्मणो नागन्तुकम्। किन्तु स्वाभाविकमित्याह—**स्वभावत इति**। एतच्च ताच्छीलिकतृना लब्धार्थकथनम्॥

विश्वं–पृथिव्यादिरूपं, योनिः–स्थानं अस्यान्तर्यामिण इति **विश्वयोनिः**। "यः सर्वेषु भूतेषु तिष्ठन्" (बृह. उ. ३-७-१५) "यः पृथिव्यां तिष्ठन्" (बृह. उ. ३-७-३) इत्यादिश्रुतिभ्यः। योनिशब्दश्चात्र स्थानवाची। "योनिश्च हि गीयते" (ब्र.सू. १-४-२७) इति सूत्रे "क्वचित् स्थानवचनो योनिशब्दो दृष्टः"। "योनिष्ट इन्द्र निषदे अकारि" (ऋ. सं. १-१०४-१) इति शारीरकभाष्यो-

---

* अत्र "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (पा. सू. ३-१-१३४) इति सूत्रेण पचादिभ्यः अच्प्रत्यय इत्यर्थः।

[1] जयति स–पा.

स्तोत्रम्

## जेता विश्वयोनिः पुनर्वसुः ॥ २९ ॥
## उपेन्द्रः

भाष्यम्

अतः—जेता। विश्वं योनिरस्येति, विश्वश्चासौ योनिश्चेति वा—विश्वयोनिः। पुनः पुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति—पुनर्वसुः ॥

इन्द्रमुपगतोऽनुजत्वेनेति—उपेन्द्रः। यद्वा उपरि इन्द्रः उपेन्द्रः।

ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः।
उपेन्द्र इति कृष्ण! त्वां गास्यन्ति भुवि देवताः ॥

(हरि. ७६·४७) ?

विवृतिः

क्तेरिति विश्वयोनिनाम व्याचष्टे—**विश्वमिति**। प्रकारान्तरेण व्याचष्टे—**विश्वश्चेति**। विश्वश्चासौ योनिश्चेति विग्रहप्रदर्शनेन विश्वयोनिशब्दयोः कार्यकारणपरतया कार्यकारणोभयरूपत्वं विष्णोर्दर्शितम्। एवञ्चार्थभेदात् "विश्वयोनिः शुचिश्रवाः" (वि. स. २६) इत्यत्रत्येन व्याख्यानद्वयेऽप्यपौनरुक्त्यं दर्शितम्। पुनः शब्दः पौनःपुन्ये वर्तते। एकस्य पुनःशब्दस्य लोपो वा। एवञ्च पुनः पुनर्वसत्याब्रह्मबोधात् क्षेत्रेषु क्षेत्रज्ञरूपेणेत्यभिप्रायेण पुनर्वसुनाम व्याचष्टे—**पुनःपुनरिति** ॥

वासवस्योपरि वर्तमान इन्द्रः—**उपेन्द्रः**। उपरिशब्दे पृषोदरादित्वात् रीत्यवयवलोपः। उपशब्दो वा उपर्यर्थक इति हरिवंशवचनकृतव्याख्यामभिप्रेत्योपेन्द्रनामव्याख्यानपरं हरिवंशवचनमुदाहरति—**ममोपरीति**। मद्विसृष्टधाराधरासारात् स्वसन्ततिसन्त्राणसन्तुष्टाभिर्गोलो-

स्तोत्रम्

## वामनः प्रांशुः

भाष्यम्

**इति हरिवंशे। बलिं वामनरूपेण याचितवानिति—वामनः सम्भजनीय इति वा। "मध्ये वामनमासीनं विश्वेदेवा उपासते" (कठ. उ. २-२-३) इति मन्त्रवर्णात्। स एव जगत्त्रयं क्रममाणः प्रांशुरभूदिति—प्रांशुः।**

विवृतिः

कस्थाभिर्गोलोकेन्द्रत्वे श्रीकृष्णमभिषिञ्चेति मामुक्तवतीभिः गोभिः मदुपरिस्थितगोलोकस्येन्द्रत्वे स्थापितो यथा त्वमीश्वरस्तथा उपेन्द्र इति दिवि देवता गास्यन्तीति श्रीकृष्णं प्रति इन्द्रवचनस्यार्थः ॥

वामयति—त्याजयति मदं बलिमिति वमेरुद्गिरणार्थाण्णिजन्ताल्ल्युट्। औणादिको युज्वा। "मितां ह्रस्वः" (पा. सू. ६-४-९२) इत्यत्र "वा चित्तविरागे" (पा. सू. ६-४-९१) इत्यतो वेत्यनुवर्तत इति वृत्तिकृद्वचनान्न ह्रस्व इत्यभिप्रेत्य हरेराविर्भावविशेषे वामननाम योगरूढमिति व्याचष्टे—**बलिमिति**। वननीयः—सम्भजनीयः सर्वैर्देवैरिति "**वन सम्भक्तौ**" इति धातोरौणादिकप्रत्ययकल्पनया साधनीयो वामनशब्द इत्यभिप्रेत्य यौगिकं नामेति व्याचष्टे—**सम्भजनीय इति**। अत्र श्रुतिं पठति—**मध्य इति**। **मध्ये**—हृदयपुण्डरीकाकाशमध्ये, **आसीनं**—बुद्धावभिव्यक्तविज्ञानप्रकाशं, **वामनं**—वननीयं—सम्भजनीयं **सर्वैः विश्वेदेवाः**—चक्षुरादयः प्राणा रूपादिविज्ञानबलिमुपहरन्तो विश इव राजानमुपासत इति श्रुत्यर्थः ॥

बलिं वसुधां याचित्वा स एव त्रिलोकीक्रमणाय प्रांशुः—उच्चोऽभवदिति प्रांशुनाम व्याचष्टे—**स एवेति**। अत्र हरिवंशवाक्यानि पठति—

स्तोत्रम्

## अमोघः शुचिरूर्जितः ।

भाष्यम्

तोये तु पतिते हस्ते वामनोऽभूदवामनः ।
सर्वदेवमयं रूपं दर्शयामास वै [1] प्रभुः ॥
"भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी ।"
इत्यादिविश्वरूपं दर्शयित्वा—
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ।
नभः प्रक्रममाणस्य जानुमूले व्यवस्थितौ ॥
(हरि. २६२-२६३)?

इति प्रांशुत्वं दर्शितं हरिवंशे । न मोघं चेष्टितं यस्य सः-अमोघः । स्मरतां स्तुवतामर्चयतां च पावनत्वात्-शुचिः । "अस्पर्शश्च महाञ्छुचिः" इति मन्त्रवर्णात् । बलप्रकर्षशालित्वात्-ऊर्जितः ।

विवृतिः

**तोये तु पतित इत्यादि ।** न मोघं चेष्टितं नवनीतापहरणपरदारपरामर्शनादिरूपमपि शृण्वतां पापनाशकत्वात् यज्ञाद्यनुष्ठानरूपं वा चेष्टितं न मोघमस्य, लोकसङ्ग्रहार्थत्वादित्यभिप्रेत्य अमोघनाम व्याचष्टे—**न मोघमिति ।** अनेन "अमोघः पुण्डरीकाक्षः" (वि. स. २५) इत्यत्रत्येनापौनरुक्त्यं दर्शितम् । शुचिः — अग्निः, तद्वत्पावनत्वगुणयोगाच्छुचिर्विष्णुः ; यद्वा स्वनामकीर्तनादिना शुचीन्—शुद्धान् करोति शुचयति । शुचिशब्दात् "तत्करोति" (ग. वा. २०४) इति ण्यन्तात् "[2]अच इः" (उ. ५७८) इति इप्रत्यय इत्यभिप्रेत्य शुचिनाम व्याचष्टे—**पावनत्वादिति ।** शुचिनाम श्रुतिसिद्धमित्याह—**अस्पर्शश्चेति ।** बलार्थादूर्जशब्दात्तारकादित्वादितच्प्रत्यये ऊर्जितशब्दः । ऊर्जधातोर्बलार्थात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तप्रत्ययो वा । तथा च बलप्रकर्षशाली ऊर्जित इति व्याचष्टे—**बलेति ॥**

---

[1] विभुः—पा. [2] लट इः इति—पा.

### स्तोत्रम्

## अतीन्द्रः सङ्ग्रहः सर्गः

### भाष्यम्

**अतीत्येन्द्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरिति–अतीन्द्रः। सर्वेषां संहृतौ प्रतिसंहारात्–सङ्ग्रहः। सृज्यरू[1]पत्वात् सर्गहेतुत्वाद्वा–सर्गः। एकरूपेण–जन्मादिरहिततया धृत आत्मा**

### विवृतिः

इन्द्रमतीतो ज्ञानैश्वर्यादिभिरिति–**अतीन्द्रः**। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा. १३३६) इति समास इत्यभिप्रेत्याह— **अतीत्येति**। आदिशब्देन वैराग्यादयो गृह्यन्ते। **स्वभावसिद्धैरिति**। कर्मोपासनाभ्यामजन्यैरित्यर्थः। सङ्गृह्णाति–प्रलये [2]सर्वं जगत् स्वात्मन्युपसंहरतीति ग्रहेः सम्पूर्वात् *पचाद्यजित्याह—**सर्वेषामिति**। सृज्यत इति **सर्गः**; सृज्यतेऽनेनेति वा **सर्गः**; "सृज विसर्गे" इत्यस्मात्कर्मणि करणे वा घञिति सर्गनाम द्विधा व्याचष्टे–**सृज्येति**। सृज्योपादानतया तदभेदात् सृज्यमपि स एवेत्यर्थः। **सर्गहेतुत्वाद्वेति**। †ब्रह्मा दक्षादयः कालः सर्वभूतानि च सर्गहेतवः। तद्रूपत्वादित्यर्थः। "धृञ् अवस्थाने" इत्यस्मात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः। धृतः–एकरूपेणावस्थितः आत्मा–स्वरूपमस्येति धृतात्मेत्याह–**एकरूपेणेति**। अस्यैव व्याख्यानं–**जन्मादीति**। आदिपदाद्वृद्धिपरिणामादयो गृह्यन्ते। ‡षड्भावविकाररहित इत्यर्थः॥

---

* "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (पा. सू. ३-१-१३४) इति सूत्रेण पचादिभ्योऽजित्यर्थः। † "ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतस्सृष्टिहेतवः" (वि. पु. १-२२-३२) इति विष्णुपुराणमत्रानुसन्धेयम्। ‡ जन्म, अस्तिता, विपरिणामः, वृद्धिः, अपक्षयः, विनाशः, इति षड्भावविकाराः।

[1] पतया–पा. [2] सर्वान् जन्तून्–पा.

स्तोत्रम्

## धृतात्मा नियमो यमः ॥३०॥

## वेद्यः

भाष्यम्

येन सः–धृतात्मा। स्वेषु स्वेष्वधिकारेषु प्रजा नियमयतीति–नियमः। अन्तर्यमयतीति–यमः॥ ३०॥

निश्श्रेयसार्थिभिः वेदनार्हत्वात्–वेद्यः। सर्वविद्यानां

विवृतिः

नियमयति–व्यवस्थापयति स्वेषु स्वेष्वधिकारेषु विरिञ्चयादीः प्रजा इति नियमशब्दात् "तत्करोति" (ग. सू. २०४) इति ण्यन्तात् पचाद्यजिति नियमनाम व्याचष्टे—**स्वेष्विति**। सर्वाणि भूतानि अन्तस्थः सन् स्वेषु स्वेषु व्यापारेषु [1] यमयति–प्रेरयतीति यमेः पचाद्यचि **यमः**–अन्तर्यामी। "यः सर्वाणि भूतान्यन्तरो यमयति" (बृह. उ. ३-७-१५) इति श्रुतेः॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति॥

भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ (भ.गी. १८-६१)

इति स्मृतेश्चेत्यभिप्रेत्याह—**अन्तरिति**॥ ३०॥

वेदितुं योग्यो **वेद्यः**। विदेः ज्ञानार्थात्कर्मणि ण्यत्। स च "अर्हे कृत्यतृचश्च" (पा. सू. ३-३-१६९) इत्यर्हार्थ इत्याह—**निश्श्रेयसेति**। विद्याः "अङ्गानि वेदाश्चत्वारः" इत्यादिनोक्ताः। तासां वेदितेति विग्रहे "तदधीते तद्वेद" (पा. सू. ४-२-५९) इत्यणि वैद्य इति व्याचष्टे—**सर्वविद्यानामिति**। योगः–स्वस्वरूपाविर्भावः,

---

[1] यच्छति–**पा.**

स्तोत्रम्

**वैद्यः सदायोगी वीरहा माधवो मधुः ।**

भाष्यम्

**वेदितृत्वात्–वैद्यः । सदा आविर्भूतस्वरूपत्वात्–सदायोगी । धर्मत्राणाय[1] असुरवीरान् हन्तीति–वीरहा । मायाः–विद्यायाः पतिः माधवः ।**

**मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।**
**तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥**

**(हरि. २७१-४८)**

**इति हरिवंशे । यथा मधु परां प्रीतिमुत्पादयति अयमपि तथेति–मधुः ॥**

विवृतिः

सदा सोऽस्यास्तीति " अत इनिठनौ " (पा. सू. ५-२-११५) इति इनिप्रत्यय इत्याह—**सदेति** । अन्येषां चित्तवृत्तिनिरोधरूपयोगवशात्स्वरूपाविर्भावः ; परमेश्वरस्य तु स्वरूपानावरणात् स्वरूपयाथात्म्याविर्भावः सर्वदा भवतीत्यर्थः ॥

वीर्यवन्तो वीराः–असुरा धर्मसेतुभेत्तारः । तान् धर्मसेतुत्राणाय हन्तीति वीरहेत्याह—**धर्मेति** । मा–ब्रह्मविद्या, तस्या धवः–पतिः, इत्याह—**माया इति** । अस्मिन्नर्थे हरिवंशवचनं पठति—**मा विद्येति** । मधुशब्दः क्षौद्रवचनः । मधुवन्मधुः, आनन्दरूप तया प्रेमास्पदत्वाद्गौणं नामेत्याह — **यथेति** । मधुरित्यार्षं पुंस्त्वम् । लाक्षणिकेषु पूर्ववल्लिङ्गनियमाभावाद्वा । गङ्गायां घोष इत्यादौ क्वचित्त-

---

[1] यासुरान् वीरान् ह–**पा.**

## स्तोत्रम्

# अतीन्द्रियो महामायः

### भाष्यम्

**शब्दादिरहितत्वादिन्द्रियाणामविषय इति—अतीन्द्रियः। "अशब्दमस्पर्शं" (कठ. १-३-१५) इति श्रुतेः। मायाविनामपि मायाकारित्वात्—महामायः। "मम माया दुरत्यया" (भ. गी. ७-१४) इति भगवद्वचनात्। जगदुत्पत्तिस्थिति-**

### विवृतिः

त्सद्भावेऽपि गुणवचनानां मत्वर्थलक्षणायां सर्वेषां पुंयोगलक्षणायां च तदभावात्। अथ वा मधुवदात्मानमाचरतीति विग्रहे "सर्वप्राति-पदिकेभ्यः क्विब्वा वक्तव्यः" (वा. १७२२) (आचारे) इति क्विबन्ता-द्धातोः बाहुलकात्क्विनि पुंस्त्वं बोध्यम्। अन्यत्रापि पुल्लिङ्गप्रयोग इत्थ-मेव साधनीयः॥

इद्रियाण्यतिक्रान्तोऽतीन्द्रियः। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा. १३३६) इति समास इत्याह—**इन्द्रियाणामिति**। इन्द्रियाविष[1]यत्वे हेतुमाह—**शब्दादीति**। रूपादिरहितत्वादित्यर्थः। तत्र श्रुतिमाह—**अशब्दमिति**। महती—प्रकृष्टा माया अस्येति **महा-मायः**। महामायत्वं च मायाविनामपि मयशम्बरप्रभृतीनां विविध-प्रपञ्चविभ्रम[2]कारिमायाप्रयोक्तृत्वादित्याह—**मायाविनामपीति**। भग-वन्मायाया महाप्रभावत्वे भगवद्वचनमाह—**ममेति**॥

महान्—प्रकृष्टः, उत्साहः—उद्योगोऽस्य—**महोत्साहः**। उत्साहस्य महत्त्वं च जगत्सृष्ट्यादिविषयकत्वादित्याह—**जगदिति**। बहूनां बलिनां

---

[1] यत्वहेतु—**पा.** [2] कारकमाया—**पा.**

स्तोत्रम्

## महोत्साहो महाबलः ॥ ३१ ॥
## महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।

भाष्यम्

लयार्थमुद्युक्तत्वात्–महोत्साहः । बलिनामपि बलवत्त्वात्–महाबलः ॥ ३१ ॥

बुद्धिमतामपि बुद्धिमत्त्वात् महाबुद्धिः । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्येति महावीर्यः । महती शक्तिः–सामर्थ्यमस्येति महाशक्तिः । महती द्युतिर्बाह्याभ्यन्तरा चास्येति महाद्युतिः । "स्वयं ज्योतिः" (बृह.उ. ४-३-९,१४) इति श्रुतेः । "ज्योतिषां ज्योतिः" (मु.उ. २-२-९) इत्यादेश्च ॥

विवृतिः

मध्ये महत्–प्रकृष्टं बलमस्य महाबल इत्याह—बलिनामिति । बलिनामिति निर्धारणे षष्ठी । बलिनां मध्ये प्रकृष्टबलवत्त्वादित्यर्थः । यद्वा प्रतियोगित्वेनापेक्षणीयतासम्बन्धे षष्ठी । बलवतोऽपेक्ष्य प्रकृष्टबलवत्त्वादित्यर्थः । तद्बलस्य प्रकर्षश्चान्यदीयबलाभिभावकत्वादिति बोध्यम् ॥ ३१ ॥

महती बुद्धिः–अर्थपरिच्छित्तिरस्य महाबुद्धिः । महाबुद्धित्वं च बुद्धिमतां मध्ये प्रकृष्टबुद्धित्वात् । तद्बुद्धेश्च प्रकर्षो निरपेक्षत्वात्सर्वविषयत्वाच्चेत्याह-बुद्धिमतामिति । महत्–जगदुत्पत्तिकारणत्वेन प्रकृष्टं अविद्यालक्षणं वीर्यमस्येति महावीर्य इत्याह-महदिति । महती–अघटमानघटनापटुतया अचिन्त्या, कार्यमात्रनिरूपिता शक्तिः—सामर्थ्यमस्येति व्याचष्टे-महतीति । "अचिन्त्यशक्तिः" (कै. उ. २१) इति श्रुतेः । महती–बाह्याभ्यन्तरव्यापिनी, द्युतिः–चैतन्यलक्षणमस्येति व्याचष्टे–महतीति । बाह्याभ्यन्तरा चेति । बहिरन्तश्च व्याप्य वर्तमानेत्यर्थः । तत्र श्रुतिद्वयमुदाहरति—स्वयमित्यादि ॥

## स्तोत्रम्

# अनिर्देश्यवपुः श्रीमानमेयात्मा

## भाष्यम्

**" इदं तत् " इति निर्देष्टुं यन्न शक्यते परस्मै स्वसंवेद्यत्वात् तत् अनिर्देश्यं वपुरस्येति–अनिर्देश्यवपुः। ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य सः–श्रीमान्। सर्वैः प्राणिभिरमेयः आत्मा–बुद्धिर्यस्य सः–अमेयात्मा। महान्तमद्रिं–गिरिं**

## विवृतिः

निर्देष्टुं–इक्षुक्षीरादिमाधुर्यावान्तरभेदवत्परस्मै निश्शेषेण शब्देन बोधयितुमशक्यं उपासकैकसंवेद्यं लोकातिशायिसौन्दर्यशालि वपुः –शरीरं अस्येत्यनिर्देश्यवपुरिति व्याचष्टे—**इदं तदिति**। निर्देशस्यायमभिनयः। श्रीः–ऐश्वर्यं अस्यास्ति। " तदस्यास्त्यस्मिन्निति मतुप्। (अतिशायने) (पा. सू. ५-२-९४) ततश्चैश्वर्यस्य समग्रत्वलाभः॥

" ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः "। (वि. पु. ६-५-७४) इत्यादिवचनात्समग्रैश्वर्यस्य पारमेश्वरत्वावगमादिति व्याचष्टे—**ऐश्वर्येति**। अनेन " नारसिंहवपुः श्रीमान् " (वि. स. १६) इत्यनेनापौनरुक्त्यं दर्शितम्। अमेयः सर्वप्राणिभिः 'इदमिदानीं जानाति' इति निश्चेतुमशक्यः आत्मा–बुद्धिरस्येति व्याचष्टे—**सर्वैरिति**। अनेन " वृषाकपिरमेयात्मा " (वि. स. २४) इत्यनेनापौनरुक्त्यं दर्शितम्॥

महांश्चासावद्रिश्च महाद्रिः तं महाद्रिं–मन्दरं अमृतमथने, गोवर्धनं च गोरक्षणे धृतवानिति व्याचष्टे—**महान्तमिति**। महाद्रि-

स्तोत्रम्

# महाद्रिधृत् ॥ ३२ ॥

# महेष्वासः

भाष्यम्

**मन्दरं गोवर्धनं [1]चामृतमथने गोरक्षणे च धृतवानिति–महाद्रिधृत् ॥ ३२ ॥**

**महानिष्वासः–इषुक्षेपो यस्य सः–महेष्वासः । एकार्ण-**

विवृतिः

धृगिति कवर्गान्तपाठे *महाद्रये धृष्णोति–धर्तुं प्रगल्भत इति "ञिधृषा प्रागल्भ्ये" इत्यतः क्विपि "क्विन्प्रत्ययस्य कुः" (पा. सू. ८-२-६२) इति कुत्वमित्यर्थः । धृतवानिति भाष्यं तु फलितार्थकथनपरं व्याख्येयम् । अत्र विष्णुपुराणम्—

"क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः ।
मन्दराद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ।" (वि. पु. १-९-८८)

इति ।

इति कृत्वा मतिं कृष्णो गोवर्धनमहीधरम् ।
उत्पाट्यैककरेणैव धारयामास लीलया ॥ (वि. पु. ५ १ १६)

इति च ।

असनं आसः । "असु क्षेपणे" इत्यतो भावे घञ् । इषोरासः इष्वासः इषुक्षेपः, **स महान् न वितथः** यस्य स **महेष्वासः** इति व्याचष्टे—**महानिति** । मह्याः–भूमेरवान्तरप्रलये एकार्णवाप्लुताया वराहरूपेण भर्ता–धारयिता **महीभर्ता** इति व्याचष्टे—**एकेति** ।

* अत्र "फलाय याती" त्यत्रेव "क्रियार्थोपपदस्य च कर्मणि स्थानिनः (पा. सू. २-३-१४) इत्यनेन सूत्रेण चतुर्थी ।

[1] वामृ–**पा.**

स्तोत्रम्

## महीभर्ता श्रीनिवासः सतां गतिः ।
## अनिरुद्धः सुरानन्दः

भाष्यम्

वाप्लुतां देवीं महीं बभारेति–महीभर्ता । यस्य वक्षस्यनपायिनी श्रीर्वसति सः–श्रीनिवासः । सतां–वैदिकानां साधूनां पुरुषार्थ-[1]साधनहेतुः–सतां गतिः ॥

न केनापि प्रादुर्भावेषु [2]निरुद्ध इति–अनिरुद्धः । सुरा-नानन्दयतीति–सुरानन्दः ।

विवृतिः

निश्चयेन–अपायं विना श्रीः वसत्यत्रेति **श्रीनिवासः** इति व्याचष्टे —**यस्येति** । **अनपायिनीति** । नीत्युपसर्गलब्धार्थकथनमेतत् । गम्यते–प्राप्यते पुरुषार्थसाधनमनेनेति गतिः । करणे क्तिन् । सतां –वैदिकानां गतिः–पुरुषार्थसाधनप्रापकः **सतां गतिः** इति व्याचष्टे— **पुरुषार्थेति** । पुरुषार्थानां–धर्मार्थकाममोक्षाणां यत्साधनं तत्प्राप्तिहेतु-रित्यर्थः ॥

रामकृष्णाद्यवतारेषु केनापि शत्रुणा न निरुद्धः–न संवीत इति **अनिरुद्धः** इति व्याचष्टे—**प्रादुरिति** । रामकृष्णाद्यवतारेष्वित्यर्थः । सुरानानन्दयत्यमृतप्रदानेनेति कर्मण्यणिति व्याचष्टे **सुरानिति** । गां— भूमिमविन्ददिति "विद्लृ लाभे" इत्यस्मात् "गवादिषु विन्देः संज्ञा-याम्" (वा. १९६९) इति शप्रत्ययो नुम् चेति रूपमाभिप्रेत्य गोविन्द-

---

[1] साधनप्राप्तिहेतुः–पा. [2] निरुद्धयत इति–पा.

## स्तोत्रम्

# गोविन्दः

### भाष्यम्

"नष्टां वै धरणीं पूर्वमविन्दं [1]वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥
(शान्ति. ३५२-५)

इति मोक्षधर्मवचनात् गोविन्दः ।

"अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥

इति । (हरि. ७६-४५) ?

### विवृतिः

नामव्याख्यानपरं मोक्षधर्मवचनं पठति—**नष्टामिति** । **गुहागतां**—रसातलगतां, **धरणीं**—भूमिं, **पूर्वमविन्दं**—वराहरूपेण लब्धवानस्मि । **तेन**—कर्मणा निमित्तभूतेन, **देवैः गोविन्द इति**—गोविन्दनाम्ना **अहं अभिष्टुत** इत्यर्थः । अनेन गामविन्ददिति **गोविन्द** इति निरुक्तिर्दर्शिता । गवां—गोलोकस्थानां इन्द्रो गोविन्द इति गोशब्दस्य वुगागमः, इन्द्रशब्दे रेफलोपश्च, पृषोदरादित्वादित्यभिप्रत्यैतन्निरुक्तिपरं हरिवंशवचनमुदाहरति—**अहमिति** । अहं देवानामिन्द्रः, त्वं गवामिन्द्रः ; गोलोकेन्द्रत्वे गोभिरभिषेचनात् ।अतो गोविन्द इति त्वां स्तोष्यन्तीति श्रीकृष्णं प्रति इन्द्रवचनस्यार्थः । गां—वेदरूपां मधुकैटभासुरहृतां हयग्रीवरूपेणाविन्दत्—लब्धवानिति पूर्ववत् शप्रत्ययादीत्यभिप्रेत्य निर्वचनान्तरपरं

---

[1] यद्गुहागताम्—**पा.**

स्तोत्रम्

## गोविदां पतिः ॥ ३३ ॥

भाष्यम्

"गौरेषा [1]भूस्तथा वाणी तां च विन्दयते भवान् ।
गोविन्दस्तु ततो देव! मुनिभिः कथ्यते भवान् ॥"
(हरि. २७९-४९)।

इति च हरिवंशे । गां *(गौः वाणी तां) विन्दन्तीति गोविदः तेषां पतिर्विशेषेणेति-गोविदां पतिः ॥ ३३ ॥

विवृतिः

हरिवंशवचनं पठति-**गौरिति** । **वाणी**-वेदरूपा या सैषा गौरित्युच्यते । तां च वेदरूपां वाणीं **भवान् विन्दयते** - विन्दते—लब्धवान् यतः **ततः**-तेन हेतुना, **गोविन्द** इति नाम्ना **मुनिभिः कथ्यते भवानिति** श्लोकार्थः । वेदयते भवानिति पाठः साधुः । एवञ्च गोविन्दनाम्नो व्याख्यानत्रयं दर्शितम् । गां-वाणीं वेदरूपां विन्दन्तीति वा "विद्लृ-लाभे" "विद ज्ञाने" इत्यस्माद्वा "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विप् । गोविदः-वेदविद्यासम्पन्नाः तेषां पतिः—पालक इति **गोविदां पतिः** इति व्याचष्टे—**गामिति** ॥

मरीचिशब्देन गभस्तिवाचिना तद्गतभास्वररूपलक्षणा दीप्तिः प्रागल्भ्यं वा लक्ष्यते । उदाहरिष्यमाणभगवद्वचने तेजश्शब्दस्य गीताभाष्यादौ प्रागल्भ्यपरत्वेन व्याख्यानात् । तथा च तेजस्विनां-दीप्तिमतां यत्तेजः-दीप्तिः तद्रूपत्वात् तेजस्विनां—प्रागल्भ्यवतां यस्मा-

---

[1] तु तथा-पा. * अयं धनुरङ्कितपाठः केषुचित् पुस्तकेषु दृश्यते ।

स्तोत्रम्

# मरीचिर्दमनः

भाष्यम्

तेजस्विनामपि [1]तेजस्त्वात्–मरीचिः । "तेजस्तेजस्विनामहम्"—(भ. गी. १०–३६) इति भगवद्वचनात् । स्वाधिकारात् [2]प्रमाद्यतीः प्रजा दमयितुं शीलं यस्य वैवस्वतादिरूपेणेति—दमनः । अहं स इति तादात्म्यभावितः संसारभयं

विवृतिः

गल्भ्यं तद्रूपत्वाद्वा मरीचिरित्यभिप्रेत्य व्याचष्टे—**तेजस्विनामिति** । तत्र भगवद्वचनमुदाहरति—**तेज इति** । तेजस्विनां–प्रागल्भ्यवतां यत् प्रागल्भ्यं तदहमस्मीति गीताभाष्यो[3]क्तार्थः । दमयत्यदान्तानिति, "दम उपशमे" इत्यस्माण्ण्यन्ताल्ल्युः, औणादिको युज्वेति व्याचष्टे–**स्वाधिकारादिति** । श्रुतिस्मृतिभ्यां यो यत्राधिकृतः तस्य तदनाचरणं तद्विरुद्धाचरणं च प्रमादः, तं कुर्वन्तीः प्रजाः राजवैवस्वतादिरूपेण दमयितुं शीलं— स्वभावो यस्य स **दमन इत्यर्थः** । सोऽहमस्मीत्यैक्येन भावितः सन् संसारबन्धं हन्ति–नाशयतीति हन्तेर्हिंसार्थात् "वृतॄवदिहनि" (उणा. ३४२) इति सप्रत्यये **हंसः** परमात्मा ; हन्ति – गच्छति सर्वशरीरेषु बिम्बरूपेण प्रतिबिम्बरूपेण वेति गत्यर्थाद्धन्तेः पूर्ववत्सप्रत्यय इति हन्तेरर्थद्वयं क्रमेणादाय निर्वक्ति—**अहं स इति** । *भवेद्वर्णागमाद्धंसः" इति हन्तेरचि सगागम इति

---

[1] तेजस्वित्वात्–**पा.** [2] प्रमाद्यन्तीः–**पा.** [3] क्तोऽर्थः–**पा.**

*१०६४ "पृषोदरादीनि यथोपदिष्टम्" (पा. सू. ६-३-१०९) अस्मिन् सूत्रे सिद्धान्तकौमुद्यां संगृहीतोऽयं पद्यभागः ।

## स्तोत्रम्

# हंसः सुपर्णः

### भाष्यम्

**हन्तीति–हंसः। पृषोदरादित्वाच्छब्दसाधुत्वम्। हन्ति–गच्छति [1]सर्वशरीरेष्विति वा; "हꣳसः शुचिषत्" (कठ. २-२-२) इति मन्त्रवर्णात्। शोभनपर्णत्वात्–सुपर्णः। "द्वा सुपर्णा"**

### विवृतिः

पक्षमाश्रित्याह—**पृषोदरेति**। यद्वा अहं स इत्यस्य वाक्यस्य महावाक्यस्थानीयस्य पृषोदरादित्वाद्धंस इति रूपम्। प्रत्यगभिन्नः परमात्मा हंसनामार्थः। प्रत्यग्ब्रह्मैक्यभावनायाः फलोक्तिर्भाष्ये संसारबन्धं हन्तीति, न तु हंसनामविग्रहप्रदर्शनपरमित्यभिप्रेत्याह—**पृषोदरेति**। हंसनाम श्रुतिप्रसिद्धमित्याह—**हंस इति**। शोभनं पर्णं–पतनं गमनं हार्दाकाशे यस्य सः। [2]तथा श्वेताश्वतरदीपिकायां पर्णशब्दस्य पतनपरत्वेन व्याख्यानात्। शोभने पर्णे–पक्षावस्य **सुपर्णः** पक्षी। कल्पतरुव्याख्यातरीत्या "द्वा सुपर्णा" (श्वेता. ४-६ मुण्ड. ३-१-१) इति मन्त्रे परमेश्वरस्य पक्षित्वेन रूपणात्। [3]मोदप्रमोदरूपतया शोभने पर्णे–[4]पक्षावस्य पक्षित्वेन कल्पितानन्दमयस्य, तद्रूपत्वाद्वा सुपर्ण इति व्याचष्टे—**शोभनेति**। शोभनपत्रत्वादिति पाठे शोभने पत्रे पक्षावस्येत्यर्थः। अन्यत् पूर्ववत्। द्वितीयव्याख्याने "द्वा सुपर्णा" ति मन्त्रे शरीरस्य वृक्षत्वेन रूपणात् तद्गतस्येश्वरस्य सुपर्णत्वेन रूपणं युज्यत इति बोध्यम्। अत्र श्रुतिं पठति—**द्वेति**। **द्वा–द्वौ, सुपर्णा**

---

[1] सर्वपुरेषु शरीरेष्विति–**पा.** [2] श्वेता. ४–६. तममन्त्रदीपिकायाम्. [3] मोक्ष–**पा.** [4] पक्षौ यस्य–**पा.**

स्तोत्रम्

## भुजगोत्तमः ।

## हिरण्यनाभः

भाष्यम्

(मुण्ड. ३-३-१) (श्वे. ४-६) इति मन्त्रवर्णात् । * "सुपर्णः पततामस्मि" इतीश्वरवचनात् । भुजेन गच्छतामुत्तमो भुजगोत्तमः ।

हिरण्यमिव कल्याणी नाभिरस्येति [1] हिरण्यनाभः ।

विवृतिः

—सुपर्णौ, सुपर्णसाम्यात्; सयुजा—सयुजौ सर्वदा सह युक्तावित्यर्थः । यद्वा द्वा—द्वौ घटाकाशमहाकाशस्थानीयौ जीवपरमात्मानौ, सुपर्णा—सुपर्णौ शोभनपतनौ शोभनगमनौ, सयुजा—सयुजौ बिम्बप्रतिबिम्बभावेन सदा संयुक्तौ, सखाया-नित्योपकार्योपकारकत्वेन वर्तेत इति सखायौ, समानख्यानौ वा, स्वप्रकाशत्वादिति श्रुत्यर्थः । भुजगानामुत्तमो भुजगोत्तमः अनन्तवासुक्यादिरूपेणेति व्याचष्टे—भुजेनेति "भुजो कौटिल्ये" इत्यस्मात् "घञर्थे कविधानम्" (वा. २२०४) इति कः । भुजेन— कौटिल्येन गच्छतामित्यर्थः ॥

हिरण्यमिव कल्याणी–शोभना नाभिरस्य हिरण्यनाभः । "अच् प्रत्यन्वव" (पा. सू. ५-४ ७५) इत्यत्र अजिति योगविभागादच्प्रत्यय इति व्याचष्टे—हिरण्यमिवेति । हितरमणीयनाभित्वाद्वेति क्वाचित्कः पाठः । तस्मिन् पक्षे हिशब्दाद्धितेति लभ्यते ।

---

* इदं वाक्यं केषुचित्पुस्तकेषु दृश्यते । विवृतावस्य विवरणं नोपलभ्यते ॥

[1] रमणीयनाभित्वाद्धिरण्मयत्वाद्वा हिरण्यनाभः-पा.

## स्तोत्रम्

# सुतपाः पद्मनाभः

### भाष्यम्

**बदरिकाश्रमे नरनारायणरूपेण शोभनं तपश्चरतीति–सुतपाः। 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति [1]स्मृतेः। पद्ममिव**

### विवृतिः

रण्यशब्दाद्रमणीयमिति, "अक्षरवर्ण*साम्यात् निर्ब्रूयात्" (निरु. २-१) इति निरुक्तात्। तथा च ध्यातॄणां हितो रमणीयो रतिकरश्च §नाभिरस्येत्यर्थो द्रष्टव्यः। सु–शोभनं, तपः–मनसश्चेन्द्रियाणामैकाग्र्यरूपं, अस्य नरनारायणरूपस्येति सुतपा इति व्याचष्टे—**बदरिकेति।** सुतपा इत्यत्र तपश्शब्दार्थं वक्तुं स्मृतिं पठति—**मनसश्चेति॥**

पद्मशब्दः पद्मोदरपरः। पद्ममिव नाभिरस्येति पूर्ववदच्प्रत्यय इति व्याचष्टे—**पद्ममिवेति।** पद्मोदरवद्गाम्भीर्यं वृत्तत्वं आरक्तत्वं च इवशब्दार्थः।

"नाभिर्मुख्यनृपे चक्रे मध्यक्षत्रिययोः पुमान्।
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे॥

इत्यभिधानात् चक्रमध्यवाचिनाभिशब्देन मध्यं लभ्यते। पद्मशब्देन च हृदयपद्मम्। तथा च पद्मस्य–हृदयपद्मस्य, नाभिः–मध्यं, तत्स्थः **पद्मनाभः।** मञ्चाः क्रोशन्तीत्यादिवत् तत्स्थत्वात् तच्छब्दत्वम्।

---

* "सामान्यात्" इति मुद्रितपाठः। § अत्र "हितः" इत्यादिविशेषणपर्यालोचनया "द्वयोः प्राणिप्रतीके स्यात्" इत्यभिधानानुसारेण नाभिशब्दः पुल्लिङ्गो ज्ञेयः॥

[1] स्मरणात्–पा.

स्तोत्रम्

## प्रजापतिः ॥ ३४ ॥

## अमृत्युः

भाष्यम्

**सुवर्तुला नाभिरस्येति, पद्मस्य–हृदयपद्मस्य नाभौ मध्ये [1]प्रकाशमानत्वाद्वा–पद्मनाभः । पृषोदरादित्वात्साधुत्वम् । प्रजानां पतिः पिता–प्रजापतिः ॥ ३४ ॥**

**मृत्युः–विनाशः तद्धेतुर्वा अस्य न विद्यत इति–अमृत्युः ।**

विवृतिः

तत्स्थत्वं च स्वमहिमप्रतिष्ठितस्य तत्र प्रकाशमानत्वमेवेत्यभिप्रेत्य प्रकारान्तरेण व्याचष्टे—**पद्मस्येति** । **पृषोदरादीति** । "अच्प्रत्यन्वव" (पा. सू. ५-४-७५) इत्यत्र अजिति योगविभागस्य बहुव्रीहिविषयत्वान्नाभिशब्दे इकारस्याकारात्मको विकारः, पृषोदरादित्वादिति भावः ॥

प्रजानां–हिरण्यगर्भादीनां प्रद्युम्नादीनां वा पतिः—पालक इति प्रजापतिनाम व्याचष्टे—**प्रजानामिति** ॥ ३४ ॥

मृत्युः–विनाशस्तद्धेतुरन्तको वास्य न विद्यत इत्यमृत्युरिति व्याचष्टे—**मृत्युरिति** । सर्वं–अतीतानागतादि पश्यति स्वरूपबोधेनेति **सर्वदृक्** । दृशेः प्रेक्षणार्थात् "क्विप् च" (पा. सू. ३-२-७५) इति क्विप् । "क्विन् प्रत्ययस्य कुः" (पा. सू. ८-२-६२) इत्यत्र

---

[1] प्रकाशनाद्वा-**पा.**

स्तोत्रम्

## सर्वदृक् सिंहः

भाष्यम्

**सर्वं प्राणिनां कृताकृतं पश्यति स्वाभाविकेन बोधेनेति–सर्वदृक्। हिनस्ति स्मरणमात्रेण समस्तपापानीति–सिंहः। पृषोदरादित्वात्साधुत्वम्। द्वितीयशतकं विवृतम्॥**

इति द्वितीयशतकभाष्यम्.

———

विवृतिः

बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वमिति सर्वदृङ्नाम निर्वक्ति—**सर्वमिति।** हिनस्ति दैत्यमृगानिति "हिसि हिंसायाम्" पचाद्यच्। पृषोदरादित्वाद्वर्णविपर्ययः। इदित्वान्नुम् चेत्यभिप्रेत्य सिंहनाम निर्वक्ति—**हिनस्तीति॥**

इति द्वितीयशतकभाष्यं [1] विवृतम्

———

[1] व्याख्यातम्–पा.

स्तोत्रम्

## सन्धाता सन्धिमान् स्थिरः ।

## अजः

### अथ तृतीयशतकभाष्यम्

**कर्मफलैः पुरुषान् सन्धत्त इति–सन्धाता । फलभोक्ता च स एवेति–सन्धिमान् । सदैकरूपत्वात्–स्थिरः ॥**

**अजति–गच्छति क्षिपतीति वा–अजः । मर्षितुं–सोढुं**

### अथ तृतीयशतकभाष्यविवृतिः

सन्धत्ते–संयोजयति कर्मफलैः पुरुषानिति **सन्धाता ।** "यमेभ्यो लोकेभ्य उन्निनीषते" "यमधो निनीषते" (कोषी. उ. ३-८) इति श्रुतेः; "फलमत उपपत्तेः" (ब्र. सू. ३-२-३८) इति *न्यायाच्चेत्यभिप्रेत्याह—**कर्मेति**। सन्धानं–सन्धिः कर्मफलसम्बन्धः, तद्वान् **सन्धिमान्**—कर्मफलभोक्ता जीवरूपेणेत्यभिप्रेत्य व्याचष्टे—**फलभोक्ता चेति**। स्थिरनाम व्याचष्टे—**सदेति**। †जनिप्रभृतिसर्व-भावविकाररहित इत्यर्थः ॥

अजति–गच्छति भक्तहृदयं, अजति–क्षिपति शरानसुरान् प्रतीति वा **अजः** । "अज गतिक्षेपणयोः" अस्मात्पचाद्यच् । ‡"बहुलं तणि" (वा. १५९४) इति वीभावो न भवतीति कर्मे-णार्थद्वयं गृहीत्वा व्याचष्टे—**अजतीति** । एवं च "अजः सर्वेश्वरः"

---

* न्यायोऽयं १६७ तमपुटे भाष्ये समुद्धृतस्तद्विवृतौ विवृतश्च। † जनिप्रभृतयो भावविकाराः षट् । ते च "जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, नश्यति" इत्यादिव्यवहारसिद्धा निरुक्ते (निरु. १–२) पठिताः । "अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्ति" (निरु. १–३) इति निरुक्तोक्त्या इतरेषां भावविकाराणामेतेष्वेवान्तर्भावो वेदितव्यः । ‡ तणिति वैय्याकरणानां संज्ञाच्छन्दसोः पारिभाषिकी संज्ञा.

स्तोत्रम्

## दुर्मर्षणः शास्ता

भाष्यम्

**दानवादिभिर्न शक्यत इति–दुर्मर्षणः । श्रुतिस्मृत्यादिभिः सर्वेषामनुशिष्टिं करोतीति–शास्ता । विशेषेण श्रुतः सत्यज्ञानादि-**

विवृतिः

(वि. स. २४) इत्यत्रत्येन [1]जन्माभावबोधकेनाजशब्देनापौनरुक्त्यं दर्शितम् । दुरुपपदान्मृषेस्तितिक्षार्थात् " भाषायां शासि युधि दृशि धृषि-मृषिभ्यो युज्वाच्यः " (वा. २२४३) इति खलर्थे कर्मणि युच्प्रत्यय इति रूपमभिप्रेत्य दुर्मर्षणनाम निर्वक्ति—**दानवादिभिरिति** । क्षुद्रमृगैरिव सिंहो रणे दानवादिभिः मर्षितुं––सोढुं न शक्यते । महाप्रतापशालित्वादित्यर्थः ॥

" शासु अनुशिष्टौ " अस्मात् तृच्प्रत्ययः । यद्यपि शासिः सेट्कः, तथापि बहुतरप्रयोगानुरोधात् " अनित्यमागमशासनम् " इति न्यायात् " प्रसितस्कभित " (पा. सू. ७–२–३४) इत्यादिना छन्दसि निपातनाद्वा *इडभाव इत्यभिप्रेत्य शास्तृनाम निर्वक्ति—**श्रुतीति** । **सर्वेषां**–तत्र तत्र कर्मण्यधिकृतानां, श्रुतिस्मृतीतिहासपुराणैरनुशिष्टिं—कर्तव्याकर्तव्ययोः विविच्य ज्ञापनं कुर्वन् शास्तेत्यर्थः ॥

विशेषेण श्रुतो विश्रुतः, स चासावात्मा चेति समासमभिप्रेत्य व्याचष्टे–**विशेषेणेति** । अनाद्यविद्यावशात् " मनुष्योऽहं " " ब्राह्मणोऽहं " " कर्ताहं " " भोक्ताहं " इत्यनृताद्यात्मना प्रतीयमानोऽपि अनृतजदुःखात्मकेभ्यो देहादिभ्यो **विशेषेण**–वैलक्षण्येन

* अत्र " तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ " (उणा. २५०) इत्यत्र आदिपदेन शासिधातोरपि ग्रहणाच्च इडभावो बोध्यः ।

[1] अजशब्देन–पा.

स्तोत्रम्

## विश्रुतात्मा सुरारिहा ॥ ३५ ॥

## गुरुः

भाष्यम्

लक्षणः आत्मा अतः–विश्रुतात्मा । सुरारीणां निहन्तृत्वात् —सुरारिहा ॥ ३५ ॥

समस्तविद्यानामुपदेष्टृत्वात्, सर्वेषां जनकत्वाद्वा–गुरुः ।

विवृतिः

वेदान्तवाक्यैः सत्यज्ञानादिलक्षणः सन् श्रुतः–श्रवणादिना अवगतः आत्मा । अतः विशेषेण श्रुतत्वात् विश्रुतात्मेत्यर्थः । येनेति पाठे **विशेषेण श्रुत आत्मा** येन सः इति बहुव्रीहिः । "ज्ञानी त्वात्मैव मे मतम्" (भ. गी. ७-१८) इति भगवद्वचनाद्ब्रह्मविदो विष्णुरूपत्वं बोध्यम् । यद्वा **विशेषेण**—जीवेभ्यो वैलक्षण्येन सर्वज्ञत्वसर्वनियन्तृत्वादिरूपेण वेदान्तैः **श्रुतः** सत्यादिलक्षणः परमात्मा विश्रुतात्मेत्यर्थः । सुरारयः—दैत्याः, तान् हन्तीति सुरारिहेति व्याचष्टे—**सुरारीणामिति** ॥

गृणाति–उपदिशति धर्मब्रह्मस्वरूपमिति गिरत्यज्ञानमिति वा **गुरुः** । "गॄ शब्दे" इत्यस्मात् "गॄ निगरणे" इत्यस्माद्वा "कृग्रो रुच्च" (उणा. २४) [1]इत्युकारादेशकुप्रत्ययौ । समस्तविद्यानामुपदेष्टेत्यभिप्रेत्य व्याचष्टे—**समस्तेति** । "स्यान्निषेकादिकृद्गुरुः" (नाम. २-७-७) इत्यभिधानात् जनकोऽपि गुरुः । सर्वस्य जनकत्वात्परमेश्वरो गुरुरित्यर्थान्तरपरत्वेन व्याचष्टे—**सर्वेषामिति** । प्रकृष्टो

---

[1] इत्युप्रत्ययः–**पा.**

## स्तोत्रम्

# गुरुतमो धाम सत्यः

## भाष्यम्

**विरिञ्चयादीनामपि ब्रह्मविद्यासम्प्रदायकत्वात्—गुरुतमः । "यो ब्रह्माणं" (श्वे. ६-१८) इति मन्त्रवर्णात् । धाम ज्योतिः । "नारायणपरो ज्योतिः" (याज्ञिक्यु. १३) इति मन्त्रवर्णात् । सर्वकामानामास्पदत्वाद्वा–धाम । "परमं ब्रह्म धाम" (मुण्ड. ३·२·१) इति श्रुतेः । सत्यवचनधर्मरूपत्वात्–सत्यः । "तस्मात् सत्यं परमं वदन्ति" (याज्ञिक्यु. ७९) इति श्रुतेः । सत्यस्य**

## विवृतिः

गुरुः **गुरुतमः ।** प्रकृष्टत्वं च सर्वगुरोर्हिरण्यगर्भस्यापि विद्याप्रदायकत्वादित्याह—**विरिञ्चयादीनामिति** । तत्र श्रुतिं पठति—**यो ब्रह्माणमिति** ॥

धामशब्दो ज्योतिर्वाचीत्यभिप्रेत्य [1]स्वयंज्योतिष्ट्वाज्ज्योतिषो धामेत्याह—**धामेति** । अत्र श्रुतिमाह—**नारायणेति** । आश्रयवाची धामशब्द इत्यभिप्रेत्य "अस्मिन् कामाः समाहिताः" (छान्दो. ८·१·५) इति श्रुत्या सर्वेषां कामानामाश्रयत्वात् धामेत्यर्थान्तरमाह—**सर्वेति** । अत्र मुण्डकश्रुतिमाह—**परममिति** । सत्यवदनाख्यधर्मरूपत्वात्सत्य इत्याह—**सत्येति** । तत्र श्रुतिमाह—**तस्मादिति** । प्रकारान्तरेण व्याचष्टे—**सत्यस्येति** । **सत्यस्य**—प्राणोपलक्षितस्य समष्टिव्यष्टिरूपस्य कार्यकारणरूपस्य भूतपञ्चकस्य रज्जुसर्पवत्कल्पितस्य अबाध्यमधिष्ठानं रज्जुकल्पमित्यतः **सत्य** इत्यर्थः । अत्र श्रुतिमाह–

---

[1] स्वयंज्योतिषो–**पा.**

स्तोत्रम्

# सत्यपराक्रमः ।

# निमिषः

भाष्यम्

**सत्यमिति वा । "प्राणा वै सत्यं, तेषामेष सत्यम्" (बृह. २-१-२०) इति श्रुतेः । सत्यः—अवितथः पराक्रमो यस्य सः—सत्यपराक्रमः ॥**

**निमीलिते यतो नेत्रे योगनिद्रारतस्य अतः—निमिषः ।**

विवृतिः

**प्राणा इति । प्राणाः**—प्राणोपलक्षितं विश्वं भूतपञ्चकात्मकं, **वै**—प्रसिद्धं, ***सत्यं ; तेषां**—प्राणानां, **एषः**—चिदेकरस आत्मा, **सत्यं**—†बाधशून्यम् । वास्तवरूपमित्यर्थः । दैत्यादिविषये भगवता कृतः पराक्रमो वितथो न भवति । किन्तु सफल एवेति सत्यपराक्रम इति व्याचष्टे—**अवितथ इति ।**

निमिषति—निमीलति नेत्रे योगनिद्रायामिति **निमिषः ।** "इगुपध" (पा सू. ३-१-१३५) इत्यादिना कप्रत्यय‡ इति व्याचष्टे—**निमीलित इति ।** अत्र विष्णुपुराणम्——

आत्ममायामयीं दिव्यां योगनिद्रां समाश्रितः ।
आत्मानं वासुदेवाख्यं चिन्तयन्मधुसूदनः ॥

इति अप्रबुद्धो निमिषः । न निमिषः अनिमिषः नित्यप्रबुद्धस्वरूपः

---

* व्यवहारकालबाधशून्यमित्यर्थः । † त्रिकालबाधशून्यमित्यर्थः । त्रिकालबाधशून्यत्वमेव स्फोरयति वास्तवेत्यादिना । ‡ कित्वान्न गुणः ।

स्तोत्रम्

## अनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥

भाष्यम्

**नित्यप्रबुद्धस्वरूपत्वात्–अनिमिषः। मत्स्यरूपतया वा आत्मरूपतया वा–अनिमिषः। भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं बिभर्तीति–स्रग्वी। वाचः–विद्यायाः पतिः–वाचस्पतिः। सर्वार्थविषया धीः–बुद्धिरस्येति–उदारधीः। वाचस्पतिरुदारधीरित्येकं नाम॥**

विवृतिः

इति व्याचष्टे–**नित्येति**। "सुरमत्स्यावनिमिषौ" इत्यभिधानान्मत्स्यवचनोऽप्यनिमिषशब्दोऽस्ति। तथा च मत्स्यरूपी भगवाननिमिष इत्यर्थान्तरमाह–**मत्स्येति**। मत्स्यरूपेणावतीर्णतयेत्यर्थः। वैजयन्त्याख्यमाला स्रक्। सा नित्यमस्यास्तीति स्रग्वी। "अस्मायामेधास्रजो विनिः" (पा. सू. ५-२-१२१) इति नित्ययोगे विनिप्रत्यय इत्यभिप्रेत्य स्रग्विनाम व्याचष्टे–**वैजयन्त्याख्यामिति**। तथा च विष्णुपुराणम्—

पञ्चस्वरूपा या माला वैजयन्ती गदाभृतः।
सा [1] भूतहेतुसङ्घाता भूतमाला च वै द्विज!। इति॥
(वि. पु. १-२२-७२)

**वाचः**—वचसः समस्तविद्यारूपस्य, **पतिः**–पालकः। "षष्ठ्याः पतिपुत्र" (पा. सू. ८-३-५३) इत्यादिना सत्वविधानाज्ज्ञापकात् षष्ठीसमासे सति षष्ठ्या अलुगिति वाचस्पतिरिति रूपम्। **उदारा**–महती अतीतानागत[2]स्वरूपविषया **धीरस्येत्युदारधीः**। [3] इदं च सविशेषणमेकं नाम वाचस्पतिरुदारधीरित्यभिप्रेत्य व्याचष्टे–**वाचस्पतिरिति**॥

---

[1] भूतहेतुः स–**पा.** [2] सर्वविषया–**पा.** [3] इदं वचसो विशेषणमेकं–**पा.**

स्तोत्रम्

## अग्रणीर्ग्रामणीः श्रीमान्न्यायः

भाष्यम्

**अग्रं–प्रकृष्टं पदं नयति मुमुक्षूनिति–अग्रणीः। भूतग्रामस्य नेतृत्वात्–ग्रामणीः। श्रीः–कान्तिः सर्वातिशायिता अस्येति–श्रीमान्। प्रमाणानुग्राहको भेदकारकस्तर्कः–न्यायः। जगद्यन्त्र-**

विवृतिः

अग्रं–प्रकृष्टं निरस्तसकलदुःखानुषङ्गपरमानन्दस्वरूपं, पदं स्थानं नयतीति "णीञ् प्रापणे" इत्यस्मात् "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विबिति व्याचष्टे—**अग्रमिति**। नयतेर्द्विकर्मकत्वादाह—**मुमुक्षूनिति**॥

"सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः"।

इति मोक्षधर्मे। **ग्रामं**–भूतग्रामं, **नयति**–प्रवर्तयतीति, नयतेः पूर्ववदेव क्विबिति व्याचष्टे–**भूतग्रामस्येति**। **नेतृत्वादिति**। नियामकत्वादित्यर्थः। श्रीः–कान्तिरतिशायिनी अस्येत्यतिशायने मतुबिति व्याचष्टे—**कान्तिरिति**। अनेन व्याख्यानेन "अनिर्देश्यवपुः श्रीमान्" (वि. स. १९) इत्यत्रत्येनापौनरुक्त्यं दर्शितम्। न्यायः–तर्कः। तदनुगृहीतप्रमाणगम्यत्वाद्भगवानपि न्यायशब्देन लक्षितलक्षणया प्रतिपाद्यत इति व्याचष्टे—**प्रमाणेति**। **भेदकारक इति**। प्रमाणाभासाद्विवेचक इत्यर्थः। नेतृनाम व्याचष्टे—**जगदिति**। यन्त्रमिव यन्त्रं, जगदेव यन्त्रं जगद्यन्त्रम्, अस्वातन्त्र्यात्प्रवृत्तिनिवृत्त्योः; तस्य ब्रह्मादिपिपीलिकान्तस्य जगतो निर्वाहकः। इहलोकपरलोकयात्रानिर्वाहकः।

### स्तोत्रम्

## नेता समीरणः ।
## सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात्॥३७॥

### भाष्यम्

**निर्वाहकः–नेता। श्वसनरूपेण भूतानि चेष्टयतीति–समीरणः। सहस्राणि मूर्धानः अस्येति–सहस्रमूर्धा। विश्वस्यात्मा विश्वात्मा। सहस्राण्यक्षीणि यस्य सः–सहस्राक्षः। सहस्राणि पादा अस्येति–सहस्रपात्। "सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्" (तै. आ. ३-१२) इति श्रुतेः ॥३७॥**

### विवृतिः

"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा"॥ (भारत-वन.३०-२८)

इति स्मरणादित्यर्थः। प्राणवायुरूपेण सर्वेषां चेष्टयितृत्वात्समीरणः। "चेष्टां करोति श्वसनस्वरूपी" इति विष्णुपुराणादिति समरिणनाम व्याचष्टे—**श्वसनरूपेणेति**। वायुरूपेणेत्यर्थः। श्वसनरूपत्वस्य फलमाह—**भूतानीति**। सहस्राणि मूर्धानोऽस्य विराड्रूपस्येति व्याचष्टे—**सहस्राणीति**। विश्वस्य–स्थावरजङ्गमात्मकस्य प्राणिजातस्य आत्मा–प्रत्यग्रूपः। विश्वस्य–वियदादिप्रपञ्चस्य कल्पनाधिष्ठानत्वेन आत्मा स्वरूपं वा विश्वात्मेत्याह—**विश्वस्येति** सहस्राण्यक्षीण्यस्य विराडात्मनः, "बहुव्रीहौ सक्थ्यक्ष्णोः (पा. सू. ५-४-११३) इति षच्; सहस्राक्षः। सहस्राणि पादा अस्य। "पादस्य लोपः" (पा. सूः ५-४-१३८) ऽत्यधिकारे "संख्यासुपूर्वस्य" (पा. सू. ५-४-१४०)" इति पादशब्देऽन्तलोपे सहस्रपादित्यभिप्रेत्य नामद्वयं व्याचष्टे—**सहस्राण्यक्षीणीत्यादि**। सहस्रमूर्धत्वादौ श्रुतिमाह—**सहस्रशीर्षेति**।

स्तोत्रम्

धरणीधरः ॥ ३८ ॥

सुप्रसादः प्रसन्नात्मा

भाष्यम्

**अनादाता अनिलयो वा—अनिलः । शेषरूपेण वराहरूपेण च धरणीं धत्त इति–धरणीधरः ॥**

**शोभनः प्रसादो यस्य । अपकारवतामपि शिशुपालादीनां**

विवृतिः

दुपसंहारात्परमेश्वरोऽनिल इति वा अनिलः । वायुर्यथा पवित्रापवित्रसकलवस्तुसम्बन्धोऽपि तत्प्रयुक्तं पुण्यं पापं च नादत्ते । तद्वत्परमात्मापि पुण्यपापयोरनादानादनिल इति वा गौणतया योज्यः। अनादाता अनिलयो वानिल इति पाठे निपूर्वात् "ला आदाने" इत्यस्मात्कप्रत्यये निल इति रूपम् । निलो न भवतीत्यनिलः । प्राणिनां कर्मानुसारेण विषमां सृष्टिं कुर्वन् रागद्वेषदोषानादाता अनिल इत्याह–**अनादातेति** । निलीयते–नश्यति इति निपूर्वाल्लीयतेर्डः निलः, स नेत्यनिलः, लयरहित इत्यर्थान्तरमाह––**अनिलयो वेति** । धरतीति धरः। धरण्या धरो धरणीधरः शेषवराहादिरूप इत्याह––**शेषेति** ॥ ३८ ॥

सु—शोभनः प्रसादः—अनुग्रहोऽस्य, अपकारिणामपि शिशुपालादीनां मोक्षप्रदानात्सुप्रसाद इत्याह—**शोभन इति** । प्रसादस्य शोभनत्वमुपपादयति—**अपकारेति** । प्रसन्नः–रजस्तमोभ्यामकलुषितः–अनभिभूत आत्मा–अन्तःकरणमस्येति **प्रसन्नात्मा,** प्रसन्नः–दयार्द्रः आत्मा–स्वभावोऽस्येति वा **प्रसन्नात्मा,** अवाप्तसर्वकामत्वात्कामालाभप्रयुक्तक्षोभाभावात्प्रसन्नः–अक्षुब्धः आत्मा–मनोऽस्येति वा **प्रसन्नात्मेति**

स्तोत्रम्

## विश्वधृग्विश्वभुग्विभुः ।

भाष्यम्

**मोक्षप्रदातृत्वादिति–सुप्रसादः। रजस्तमोभ्यामकलुषित आत्मा–अन्तःकरणमस्येति–प्रसन्नात्मा। [1]यद्वा प्रसन्नस्वभावः। कारुणिक इत्यर्थः। अवाप्तसर्वकामत्वाद्वा। विश्वं धृष्णोतीति–विश्वधृक्। "ञि धृषा प्रागल्भ्ये"। विश्वं भुङ्क्ते भुनक्ति–पालयतीति वा–विश्वभुक्। हिरण्यगर्भादिरूपेण विविधं भवतीति–विभुः। "नित्यं विभुम्" (मु. १-१-६) इति मन्त्रवर्णात्॥**

विवृतिः

त्रिधा व्याचष्टे—**रजस्तमोभ्यामित्यादिना**। अवाप्तसर्वकामत्वाद्वेत्यनन्तरं **प्रसन्नात्मे**त्यनुषङ्गः। विश्वं धृष्णोति–ज्ञानैश्वर्यादिभिरभिभवतीति "ञी धृषा प्रागल्भ्ये" इत्यतः क्विप्। "क्विन्प्रत्ययस्य कुः" (पा. सू. ८-२-६२) इत्यत्र बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम्। **विश्वधृक्।** ज्ञानैश्वर्यादिभिर्ब्रह्मादेर्जगतोऽभिभवितेत्याह—**विश्वमिति।** धृष्णोति–अभिभवितुं समर्थो भवतीत्यर्थः। प्रागल्भ्यं पराभिभवनसामर्थ्यमिति गीताभाष्यटीकायां व्याख्यातत्वात्। विश्वं–कृत्स्नं जग**द्भुङ्क्ते**–संहरति प्रलयकाल इति भुनक्ति–पालयति स्थितिकाल इति वा भुजेः पालनाभ्यवहारकर्मणः क्विबिति विश्वभुङ्नाम द्विधा निर्वक्ति–**भुङ्क्त इति।** अत्तीत्यर्थः। पालयतीति स्थितिकाले। विविधं भवतीति विपूर्वाद्भवतेः "विप्रसम्भ्यो ड्वसंज्ञायाम्" (पा. सू. ३-२-१८०) इति डुप्रत्ययः। विभुर्विश्वरूपः। मत्स्यकूर्मादिविविधरूपो वेत्याह—**विविधमिति।** विविधभवनमेव दर्शयति—**हिरण्यगर्भादिरूपेणेति।** हिरण्यगर्भपुरुषप्रधानव्यक्तरूपेणेत्यर्थः। विभुनाम श्रुतिसिद्धमित्याह—**नित्यमिति।** "आदरानादरयोः

---

[1] यद्वा कारुण्यस्वरूपत्वात् प्रसन्नात्मा। प्रसन्न–**पा**

स्तोत्रम्

## सत्कर्ता

भाष्यम्

**सत्करोति–पूजयतीति–सत्कर्ता। पूजितैरपि पूजितः–**

विवृतिः

सदसती" (पा. सू. १-४-६३) इति सूत्रेण सच्छब्दस्य गतिसंज्ञाविधानात्तस्य तृजन्तेन कर्तृशब्देन "कुगतिप्रादयः" (पा. सू. २-२-१८) इति समासः॥

सत्कर्ता–पूजनकर्ता पूज्यानां ब्राह्मणादीनामित्याह—**सत्करोतीति।** सत्करोति–पूजयति लोकसङ्ग्रहार्थं ब्राह्मणादीनित्यर्थः। सादिति पूर्ववद्गतिसंज्ञायां सच्छब्दस्य कृतशब्देन समास इति व्याचष्टे–**पूजितैरपीति।** लोकपूजितानां ब्रह्मादीनामपि पूजित इत्यर्थः। यद्यपि पूजित इत्यस्य "मतिबुद्धिपूजार्थेभ्यश्च" (पा.सू. ३-२-१८८) इति वर्तमानार्थविहितक्तप्रत्ययान्तत्वेऽपि पूजितैरित्यत्र "क्तस्य च वर्तमाने" (पा. सू. २-३-६७) इति षष्ठ्या भाव्यम्। तथापि पूजित इत्येतत् भूतार्थक्तप्रत्ययान्तमिह ग्राह्यम्। नच क्तस्य मत्याद्यर्थेभ्यो विशिष्य वर्तमानार्थे विधानात् *तक्रकौण्डिन्यन्यायेन भूतार्थत्वबाधः स्यादिति वाच्यम्। "क्तेन" (पा. सू. ४-२-१) इत्यधिकारे "दृष्टं साम" (पा. सू. ४-२-७) "उपज्ञाते" (पा. सू. ४-३-११५) इति सौत्रनिर्देशेन भाष्यादिषु "कलिना दृष्टं साम कालेयं" "पाणिनिनोपज्ञातं पाणिनीयम्" इति तदुदाहरणदर्शनेन च मत्याद्यर्थेभ्यो ज्ञापकस्य सामान्यापेक्षतया भूतार्थेऽपि क्तप्रत्ययानुमत्यवगमात्तद्योगे तृतीयापीति बोध्यम्॥

---

*"ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय" इति तक्रकौण्डिन्यन्यायः।

### स्तोत्रम्

## [1]सत्कृतः साधुर्जह्नुः

### भाष्यम्

**सत्कृतः। न्या[2]यवर्ती-साधुः। साधयतीति वा। साध्यभेदानुपादानात् साध्यमात्रसाधको वा। जनान् संहार[3]समये अप-**

### विवृतिः

साधुनाम व्याचष्टे—**न्यायेति।** न्याये-उचिते लोकवेदसम्मते वर्तितुं शीलमस्येति न्यायवर्ती। न्याय्यवृत्ततयेतिपाठे न्याय्यं-उचितं लोकवेदसम्मतं वृत्तं-चरित्रमस्येति न्याय्यवृत्तः। न्याय्यप्रवृत्ततयेति पाठे उचिते कर्मणि प्रवृत्तः न्याय्यप्रवृत्तः। तस्य भावस्तत्ता तयेत्यर्थः। साध्नोति कार्यमिति विग्रहे "साध संसिद्धौ" इत्यतः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" (उणा. १) इत्यौणादिक उण्प्रत्यय इति योगार्थमादायापि व्याचष्टे—**साधयतीति** वेति। साधुरित्यनुषङ्गः। उक्तमेव विवृणोति--**साध्यभेदेति।** "सिद्धिसाधनः" (वि. स. ४०) इत्यादौ सिद्ध्यादेरिव साध्यविशेषस्यानिर्देशादर्थाक्षेपात्साध्यावगमे सङ्कोचकप्रमाणाभावाद्यद्यत्साध्यत्वेनेष्टं तस्य सर्वस्य साधक इत्यर्थः॥

जनान् ह्नुते-अपनयति संहारसमय इति जनशब्दे उपपदे "ह्नुङ् अपनयने" इत्यस्मात्क्विपि पृषोदरादित्वाज्जनशब्दे नशब्दस्य लोपः। आगमशास्त्रस्यानित्यत्वान्न तुक्, इति रूपमभिप्रेत्य "अक्षरवर्णसाम्यान्निर्ब्रूयात्" "न संस्कारमाद्रियेत" (निरु. २-१) इति नैरुक्तोक्त्यनुसारेण वा जह्नुनाम निर्वक्ति—**जनानिति।** अविदुषो

---

[1] सत्कृतिः-**पा.** [2] य्यवृत्ततया-**पा,** य्यप्रवृत्ततया-**पा,** यप्रवृत्तितया-**पा.**
[3] काले-**पा.**

### भाष्यम्

**ह्नुते–अपनयतीति–जह्नुः। [1]जहात्यविदुषः, भक्तान् नयति [2]परं पदमिति वा। नरः–आत्मा। ततो जातान्याकाशादीनि**

### विवृतिः

जहातीति जहत्; मुक्तान् परं पदं नयतीति नुः। नयतेर्डुप्रत्ययः। जहच्चासौ नुश्च जह्नुः। पृषोदरादित्वात् हकारोत्तरभागस्य लोप इति रूपमभिप्रेत्य पूर्वोक्तनैरुक्तोक्तिमनुसृत्य जह्नुनाम विधान्तरेण निर्वक्ति—**जहातीत्यादिना**। अविदुषां परमपदप्रापणेनानुग्राहकत्वाभाव एव त्याग इति भावः। यद्वा जहात्यविदुष इति विग्रहे "ओहाक् त्यागे" इत्यतो "दाभाभ्यां नुः" (उणा. ३१२) इत्यधिकारे "जहातेर्द्वे अन्तलोपश्च" (उणा. ३२३) इत्युणादिसूत्रेण नुप्रत्ययः धातोर्द्वित्वमन्तलोपश्चेत्यभिप्रेत्य विधान्तरेण निर्वक्ति—**जहातीति**। अविदुषां परमपदप्रापणेनानुग्रहाभावरूपं त्यागमेव विदुषां तत्प्रापणेनानुग्रहप्रदर्शनद्वारा विवृणोति—**भक्तान् नयतीति**। अत्र भक्तशब्देन ब्रह्मविद उच्यन्ते। यतो भक्तान्नयति परं पदमतो जहात्यविदुष इति जह्नुरिति योजना। नरः—परमात्मा तस्येमानि कार्याण्याकाशादीनि नाराणि। "तस्येदम्" (पा. सू. ४-३ १२०) इत्यण्। तान्ययनमस्य, "पूर्वपदात्संज्ञायामगः" (पा. सू. ८-४-३) इति णत्वमित्यभिप्रेत्य नारायणनाम व्याचष्टे—**नर इत्यादिना**। नर आत्मेत्यादिना नारायणेत्यन्तेन समासान्तर्गतं नारपदं व्याख्याय स्वमहिमप्रतिष्ठितस्य परमेश्वरस्य स्वकार्यवियदाद्ययनत्वानुपपत्त्या कार्येषू-पादनकारणतया व्याप्तिमात्रमयनपदेन विवक्षितमिति दर्शयितुं तेषु

---

[1] जहात्यविदुषोऽभक्तान् अपनयति परमिति वा—**पा.**? [2] परमिति- **पा.**

स्तोत्रम्

## नारायणः

भाष्यम्

**नाराणि—कार्याणि, तानि कार्याणि अयते—कारणात्मना व्याप्नोति। अतश्च तान्ययनमस्येति-नारायणः। "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (याज्ञिक्यु. १३) इति मन्त्रवर्णात्।**

**"नराज्जातानि तत्त्वानि नाराणीति [1]ततो विदुः।**
**तान्येव चायनं तस्य तेन नारायणः स्मृतः॥**
**इति महाभारते॥ (उद्योग.)**

**[2]नराणां—जीवानामयनत्वात्प्रलय इति वा, "यत्प्रयन्त्यभिसंविशन्ति" (तै. उ. ३-१) इति श्रुतेः।**

विवृतिः

कार्येषूपादानकारणात्मना व्याप्तिमाह—**तानि कार्याण्ययत इति**। **अतश्चेति**। उपादानकारणतया तत्तत्कार्येष्वनुस्यूतत्वात्तान्यस्यायनमित्यर्थः। सर्वकार्यव्याप्तौ श्रुतिमाह—**यच्च किञ्चिदिति**। उक्तनिर्वचनं भारतमूलकमिति भारतवचनं पठति—**नरादिति**॥

यन्ति-प्रलयं गच्छन्त्यत्रेति इणोऽधिकरणे ल्युट्, **अयनः**; नराणामयनो नारायणः। पूर्ववण्णत्वमित्यभिप्रेत्य निर्वचनान्तरमाह—**अयनत्वादिति**। लयस्थानत्वादित्यर्थः। सर्वभूतलयाधिकरणत्वे श्रुतिमाह—**यदिति**। नारायणनामनिर्वचनान्तरपरं मनुवचनं पठति—

[1] विदुर्बुधाः—**पा.**	[2] नाराणामयनत्वात्—**पा.**

भाष्यम्

"नाराणामयनं यस्मा[1]त्तस्मान्नारायणः स्मृतः" ।

इति ब्रह्मवैव[2]र्तात् ।

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥
ता यदस्यायनं पूर्वं तस्मान्नारायणः स्मृतः"

इति मनुवचनाद्वा नारायणः । (मनु. १-१०)

विवृतिः

आप इति । अस्यार्थः तद्व्याख्यातृभिरुक्तो लिख्यते—" पूर्वं हिरण्यगर्भसृष्टिरुक्ता । सम्प्रति तस्यैव जगत्कारणस्य परमेश्वरस्य हिरण्यगर्भान्तर्यामित्वं प्रदर्शयन् नारायणाभिधानमाह-आप इति । अपञ्चीकृतपञ्चभूतानि । नर इति । "नॄ नये" इति स्मरणादात्मन एव नामान्तरमिति । तत एवापः । "आत्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ।" (तै. उ. २-१-१ यो. चू. ७२) इति श्रुतेः । अत एव नरसूनवस्ता आपः । यत्—यस्मादस्य परमेश्वरस्य हिरण्यगर्भजननकाले अयनं—अयनमिवाभूवन् ततो नारायणः, ता आश्रित्य तज्जनकत्वात् । [3]अतोऽयनं, स्वमहिमप्रतिष्ठितस्य अयनान्तरानुपपत्तेः । समष्टिलिङ्गोपाधिकोऽण्डाभिमानी नारायण इति केचित् । तन्न ।

नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

इति ब्रह्माण्डपुराणोक्तेरव्यक्तादपि परो नारायणः । स कथ ब्रह्माण्डाभिमानी स्यादिति* ।" "ऋषिभिः परिगीतानि" इत्युक्त्वात्पुराणप्रसिद्धिं माहत्म्यं च नारायणनाम्नो वक्तुं पुराणवचनं पठति—

---

[1] तेन नारायणः—पा. [2] र्तें—पा. [3] अतोऽयनः—पा.

*इति मनुस्मृतौ राघवानन्दव्याख्या ।

### भाष्यम्

**नारायणाय नम इत्ययमेव [1]सत्यः**
**संसारघोरविषसंहरणाय मन्त्रः ।**
**शृण्वन्तु भव्यमतयो यतयोऽस्तरागा**
**उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥** (नृ. पु. १८-३१)

**इति श्रीनरसिंहपुराणे ।**

### विवृतिः

**नारायणेत्यादि ।** गीताभाष्यानन्दगिरीये तु–"*आपो नाराः" (मनु. १–१०) इत्यादिस्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः । सूक्ष्मदर्शिनः पुनराचक्षते–नरशब्देन चराचरात्मकं [2]शरीरजातमुच्यते । तत्र नित्यसन्निहिताश्चिदाभासा जीवा [3]नारा इति निरुच्यन्ते । तेषामयनमाश्रयोऽन्तर्यामी नारायण इति । यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यमन्त्राम्नायं चाधीयते" (भ. गी. श्लो. १–१) इत्युक्तम् । पुराणेषु तु विश्वस्रष्टुर्ब्रह्मणो नारायणसंज्ञा व्युत्पादिता । "इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति" (वि.पु. १-४-५) इत्युपक्रम्य—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ (वि. पु. १-४-६)

इति विष्णुपुराणोक्तेः । अस्यार्थः—नरः–पुरुषोत्तमः तस्माज्जाता आपो नारा जीवाः । "तस्येदम्" (पा. सू. ४–३–१२०) इत्यण् । "छन्दसि सर्वे विधयो विकल्प्यन्ते" इति ङीबभावे सामान्यलक्षणेन ८।प । ता अयनं यस्य स ब्रह्मा नारायणः उक्तम्—

तास्ववात्सीत्स्वसृष्टासु सहस्रं परिवत्सरान् ।
तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ इति ।

---

* अत्र आनन्दगिरीये मुद्रितकोशे 'आपो नारा' इत्यादिसम्पूर्णश्लोकपाठो दृश्यते ।

[1] सत्यं–**पा**　[2] शरीरमुच्यते–**पा.**　[3] नरा–**पा.**

### स्तोत्रम्

## नरः ॥ ३९ ॥

## असङ्ख्येयोऽप्रमेयात्मा विशिष्टः

### भाष्यम्

**"नयतीति नरः प्रोक्तः परमात्मा सनातनः"**
**इति व्यासवचनम् ॥ ३९ ॥**

**यस्मिन् सङ्ख्यानामरूपभेदादिः न विद्यत इति–असङ्ख्येयः। अप्रमेयः आत्मा–[1]स्वरूपमस्येति–अप्रमेयात्मा। अतिशेते सर्वं अतः–विशिष्टः। "विश्वतः परमं नित्यम्" (महाना.**

### विवृतिः

नृणाति–नयति कर्मणि प्रेरयति, प्रापयति कर्मफलमिति वा नरः। "नॄ नये" इत्यस्मात्पचाद्यजिति निष्पत्तिमभिप्रेत्यैतन्निर्वचनपरं वचनमाह—**नयतीति** ॥ ३९ ॥

सङ्ख्यातुं योग्यः सङ्ख्येयः–नामरूपादिविशेषः, स न विद्यते यस्मिन्नित्यसङ्ख्येय इति व्याचष्टे—**यस्मिन्निति**। अप्रमेयः–*फलाव्याप्यः आत्मा–स्वरूपमस्येत्याह—**अप्रमेय इति**। विशिष्यते–सर्वज्ञत्वादिभिः सर्वेभ्योऽतिरिच्यत इति विपूर्वात् "शिष्लृ विशेषणे" इत्यतः कर्मणि क्त इत्याह—**अतिशेत इति**। शिष्टं–शिष्टिः शासनं "शासु अनुशिष्टौ" अस्मान्नपुंसके भावे क्तः। "शास इदङ्हलोः" (पा. सू. ६–४–३४) इतीत्वम्। ष्टुत्वम्। शिष्टं–शासनं करोति

---

* फलं–वृत्तिप्रतिफलितचैतन्यं, तदव्याप्यः–तदविषय इत्यर्थः।

[1] रूपम–**पा.**

स्तोत्रम्

## शिष्टकृच्छुचिः ।
## सिद्धार्थः

भाष्यम्

उ. ९-१) इति श्रुतेः । शिष्टं-शासनं करोतीति—शिष्टकृत् । शिष्टान् करोति-पालयतीति वा । सामान्यवचनो धातुर्विशेषवचनो दृष्टः "कुरु काष्ठानि" इत्याहरणे यथा तद्वदिति शिष्टकृत् । अञ्जनं-माया तत्कार्यं च तद्रहितो निरञ्जनः-शुचिः ॥

सिद्धः- निर्वृत्तः अर्थ्यमानोऽर्थोऽस्येति सिद्धार्थः । "सत्य-

विवृतिः

ब्रह्मादीनामिति शिष्टकृन्नाम निर्वक्ति—शिष्टमिति । शिष्टान्-सदाचारपरान् करोति-पालयतीति निर्वचनान्तरमाह—शिष्टान् करोतीति ॥

ननु कृञो व्यापारसामान्यवाचिनः कथं पालनमर्थ इत्याशङ्क्य लोके व्यापारसामान्यवाचिनः कृञो विशेषपरतादर्शनात्पालनार्थतेत्याह—सामान्येति । † पूर्वं शुचिशब्दः पावनत्वगुणेन गौण इति व्याख्यातम् । अधुना शुचिः-शुद्ध इति मुख्यार्थमादाय व्याचष्टे—निरञ्जन इति । अञ्जनवदञ्जनमज्ञानम्, मलिनस्वभावत्वात्, तन्निर्गतं यस्मात् स निरञ्जनः, अतः शुद्ध इत्यर्थः ॥

अर्थ्यत इत्यर्थः-काम्यमानोऽर्थः स सिद्धः-निर्वृत्तो निष्पन्नोऽस्य, अवाप्तकामत्वादित्याह—सिद्ध इति । तत्र श्रुतिमाह—सत्येति । सिद्धः सङ्कल्पोऽस्य । सङ्कल्पस्य सिद्धत्वं च फलावश्य-

---

† "शुचिरूर्जितः" (वि. स. ३०) इत्यत्रेत्यर्थः ।

स्तोत्रम्

## सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ ४० ॥

## वृषाही

भाष्यम्

कामः" (छा. उ. ८-१-५) इति श्रुतेः। सिद्धः—निष्पन्नः सङ्कल्पोऽस्येति सिद्धसङ्कल्पः। "सत्यसङ्कल्पः" (छा. उ. ८-१-५) इति श्रुतेः। सिद्धिं—फलं कर्तृभ्यः स्वाधिकारानुरूपतो ददातीति—सिद्धिदः। [1]सिद्धेः साधकत्वात् सिद्धिसाधनः ॥ ४० ॥

वृषः—धर्मः—पुण्यम्, तदेवाहः, प्रकाशसाधर्म्यात्। यज्ञविशेषो वा द्वादशाहादिः क्रतुः वृषाहः, सोऽस्यास्तीति—वृषाही। वृषाह इत्यत्र "राजाहःसखिभ्यष्टच्" (पा. सू. ५-४-९१)

विवृतिः

म्भाव इत्यभिप्रेत्याह—सिद्ध इति। तत्र श्रुतिमाह—सत्यसङ्कल्प इति। सिद्धयः—कर्मफलानि, तानि कर्मकर्तृभ्यो ददातीति सिद्धिद इत्याह—[2]सिद्धिमिति। सिद्धेरणिमादिरूपाया मोक्षरूपाया वा स्वोपासनया स्वसाक्षात्कारेण वा साधकत्वात् सिद्धिसाधनः। साधेर्नन्द्यादित्वाल्ल्युरित्याह—सिद्धेरिति ॥ ४० ॥

वृषः—धर्मः, तद्रूपं च तदहश्च। †समासान्तष्टच्, वृषाहः द्वादशाहादिक्रतुः। सोऽस्यास्तीति वृषाहीति मत्त्वर्थीय इनिप्रत्यय इत्याह—वृष इति। द्वादशाहादिरूपस्य क्रतोः यजमानरूपेण देवतारूपेण वा कर्तृतया भोक्तृतया वा तद्वत्त्वमिति भावः। वर्षति—

† "राजाहस्सखिभ्यः" (पा. सू. ५-५-९१) इत्यादिनेत्यादिः।

[1] सिद्धेः—क्रियायाः साध—पा. [2] सिद्धीरिति—पा.

स्तोत्रम्

## वृषभो विष्णुर्वृषपर्वा वृषोदरः ।

भाष्यम्

**इति टच्प्रत्ययः समासान्तः। वर्षत्येष भक्तेभ्यः कामानिति—वृषभः। विष्णुः "विष्णुर्विक्रमणात्" (उद्योग. ७०-१३) इति [1]व्यासेनोक्तेः। वृषरूपाणि सोपानपर्वाणि आहुः परन्धामारुरुक्षोरित्यतः—वृषपर्वा। प्रजाः वर्षतीवोदरमस्येति—वृषोदरः**

विवृतिः

प्रयच्छति फलानीति "वृष सेचने" इत्यस्मात् "ऋषिवृषिभ्यां कित्" (उणा. ४०३) इत्यभच्प्रत्यय इत्याह—**वर्षतीति**। विशेषेण लोकान् क्रामतीति विष्णुः; विपूर्वात् क्रमेः ष्णुप्रत्ययो धातुलोपश्च पृषोदरादित्वात्। यद्वा विपूर्वात् "ष्णु प्रस्रवणे" इत्यस्माद्गत्यर्थाद्बाहुलकात्किनित्यभिप्रेत्य विष्णुनामनिर्वचनपरं [2]व्यासवचनं पठति—**विष्णुर्विक्रमणादिति**। वृषाः श्रवणमनननिदिध्यासनात्मका धर्माः यद्विष्ण्वाख्यं परं धाम आरुरुक्षोः पर्वाणीव प्राप्त्युपायाः स वृषपर्वेति व्याचष्टे—**वृषरूपाणीति**। वर्षति—सृजति हिरण्य[3]गर्भादिरूपाः प्रद्युम्नप्रभृतीर्वा अनेकाः प्रजा इति वृषः, [4]तादृशमुदरमस्येति वृषोदर इत्याह—**प्रजा इति**। वर्धयति भक्तेन दत्तं पत्रपुष्पफलादिकमिति, फलरूपेण सुदामदत्तानि कणानि वेति वृषेर्ण्यन्तात्ल्युः। ब्रह्मादिरूपेण प्रजा

---

[1] यास्केनोक्तेः—**पा.** [2] यास्कव—**पा.** "यदिदं किञ्च तद्विक्रमते विष्णुः"—(निरुक्त १२-२-१९) इति यास्कवचनं दृश्यते। [3] गर्भरूपाः—**पा.** [4] तादृशमुदरे यस्य **पा.**

## स्तोत्रम्

# वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः॥ ४१ ॥
# सुभुजः

## भाष्यम्

**वर्धयतीति–वर्धनः। प्रपञ्चरूपेण वर्धत इति–वर्धमानः। इत्थं वर्धमानोऽपि पृथगेव तिष्ठतीति–विविक्तः। श्रुतयः सागर इवात्र निधीयन्त इति–श्रुतिसागरः॥ ४१ ॥**

**शोभनाः भुजाः जगद्रक्षाकरा अस्येति सुभुजः।**

## विवृतिः

वर्धयतीति वेत्यभिप्रेत्य निर्वक्ति–**वर्धयतीति**। "वृधु वृद्धौ" इत्यतः लटि "लटः शतृशानचौ" (पा. सू. ३-२-१२४) इति शानच्। प्रपञ्चरूपेण वर्धमानत्वाद्वर्धमान इत्याह—**प्रपञ्चेति**। प्रपञ्चात्मकतामापन्नोऽपि तदात्मकताया मायिकत्वात्परमार्थतत्सम्बन्ध-रहिततया विविक्तः—तस्मा[1]त्पृथग्भूत इत्याह—**इत्थमिति**। प्रपञ्च-रूपतयेत्यर्थः। नदीनां सागर इव श्रुतीनां सागरः, सर्वासां श्रुतीनामनेकशाखाभिन्नानामत्र निधानादिति व्याचष्टे—**श्रुतयः सागर इवात्रेति**। सागर इवेति सप्तम्यन्तमत्रेत्यस्य विशेषणम्। सागरशब्दस्य गौणत्वख्यापनार्थ इवशब्दः। सागररूपेऽत्र निधीयन्त इति वा पाठः। उभयत्रापि श्रुतीनां सागर इव श्रुतिसागर इति विग्रहः। तत्कार्यत्वात्तत्तात्पर्याच्च श्रुतीनां तत्र निधानमिति बोध्यम्॥ ४१ ॥

सु–शोभनाः चक्रासिगदाशङ्खाद्याश्रयाः, अत एव जगद्रक्षाकराः भुजा अस्येत्याह—**शोभना इति**। दुःखेन ध्रियते दुरुपपदाद्धरते-

---

[1] त्पृथग्रूप इ-पा.

स्तोत्रम्

## दुर्धरो वाग्मी महेन्द्रो वसुदः

भाष्यम्

पृथिव्यादीन्यपि लोकधारकाण्यन्यैः धारयितुमशक्यानि धारयन् न केनापि धारयितुं शक्यत इति–दुर्धरः। दुःखेन ध्यानसमये मुमुक्षुभिः हृदये धार्यत इति वा–दुर्धरः। यतो निस्सृता ब्रह्ममयी वाक् तस्मात्–वाग्मी। महांश्चासाविन्द्रश्चेति–महेन्द्रः ईश्वराणामपीश्वरः। वसु–धनं ददातीति–वसुदः। "अन्नादो वसुदानः" (बृह. उ. ६·४-२४) इति श्रुतेः॥

विवृतिः

धारणार्थात् खल्। धारणस्य दुःखत्वादेव तदशक्यत्वमर्थात्सिद्ध्यतीति दुर्धर इत्याह—**न केनापीति**। एतदेवोपपादयति—**पृथिव्यादीनीति**। अन्यैर्धारयितुमशक्यानां सर्वधारकाणां पृथिव्यादीनामपि धारणादशक्यः सुतरां केनापि धारयितुमिति दुर्धरत्वमित्यर्थः। ध्यानसमाधयो दूरे। "देशबन्धश्चित्तस्य धारणा" (यो. सू. ३-१) इत्युक्ता धारणापि तस्मिन् दुष्करेत्यर्थान्तरमाह—**दुःखेनेति**। **ध्यानसमय इति**। तत्प्राक्काल इत्यर्थः। वाचः–वेदरूपाः जनकत्वात्प्रमाणत्वाद्वा सन्त्यस्येति वाग्मी। "वाचो ग्मिनिः" (पा. सू. ५-२-१२४) इति मत्वर्थीय इत्याह—**यत इति**। निस्सृता–निष्पन्ना, ब्रह्ममयी–वेदमयी। इन्द्रः–ईश्वरः, महांश्चासाविन्द्रश्च, ईश्वराणां ब्रह्मादीनामपि ईश्वरत्वात्। "तमीश्वराणां" (श्वेता. ६-७) इति श्रुतेः महेन्द्र इत्याह—**महांश्चेति**। वसु–धनं ददातीति **वसुदः**। "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति निर्वक्ति—**वस्विति**। तत्र श्रुतिमाह—**अन्नाद इति**। दीयमानं वस्वपि स एव। सर्वात्मकत्वा-

स्तोत्रम्

**वसुः ।**

**नैकरूपः**

भाष्यम्

दीयमानं तद्वस्वपि स एवेति—वसुः । आच्छादय[1]त्या त्मनः स्वरूपं माययेति वा—वसुः । अन्तरिक्ष एव वसति नान्यत्रेति असाधारणेन वसनेन वायुर्वा—वसुः । "वसुरन्तरिक्षसत्" (याज्ञिक्यु.–४९, कठ. उ. २-२-३) इति श्रुतेः ॥

एकं रूपमस्य न विद्यत इति—नैकरूपः । "इन्द्रो मायाभिः पुरुरूप ईयते" (बृह. २-५-१९) इति श्रुतेः । "ज्योतींषि

विवृतिः

दित्याह—**दीयमानमिति** । अस्मिन् पक्षे पुंस्त्वमार्षम् । यद्वा वसुरूपेण विवर्तमानतया आत्मानं वसुवदाचरतीत्याचारक्विबन्तात्कर्तरि क्विपि पुंस्त्वं साधु । क्वौ च तुक् न, आगम[2]शास्त्रस्यानित्यत्वादिति बोध्यम् । वस्ते—आच्छादयति आत्मानं माययेति वसेराच्छादनार्थात् "शृस्वृस्निहित्रप्यसिवसि" (उणा. १०) इत्यादिना उप्रत्यय इत्यर्थान्तरमाह—**आच्छादयतीति** । अन्तरिक्ष [3] एवासाधारण्येन वसतीति वसुर्वाय्वात्मक इत्यर्थान्तरमाह—**असाधारणेनेति** । पूर्ववद्वसेर्निवासार्थादुप्रत्ययः । अत्र श्रुतिमाह—**वसुरिति** ॥

एकं रूपं अस्य एकरूपः । न एकरूपो नैकरूपः । "नलोपो नञः" (पा. सू. ६-३-७३) इति नलोपो न । सानुबन्धकस्यैव नञस्तत्र ग्रहणात् । प्रकृते च नशब्दमादाय समास इति व्याचष्टे—**एकमिति** । तत्रानेकरूपत्वे विष्णुपुराणं पठति—**ज्योतींषीति** ।

---

[1] त्यात्मानं मा—**पा.** [2] शासनस्य—**पा.** [3] एव वसति भास्कर इत्यसाधारणेन वसुः—**पा.**

स्तोत्रम्

## बृहद्रूपः शिपिविष्टः

भाष्यम्

विष्णुः" (वि.पु. २-१२-३८) इत्यादिस्मृतेश्च। बृहत्-महत् वसुधातलं बिभ्रत् वराहादिरूपं अस्येति–बृहद्रूपः। शिपयः–पशवः, तेषु विशति–प्रतितिष्ठति यज्ञरूपेणेति–शिपिविष्टो यज्ञमूर्तिः। "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रति-

विवृतिः

धरणीधरणार्थं बृहत्–महत् रूपमस्य यज्ञवराहरूपेणावतीर्णस्य स बृहद्रूपः। तथा च विष्णुपुराणम्—

तस्योपरि जलौघस्य महती नौरिव स्थिता।

विततत्वात्तु देहस्य न मही याति सम्प्लवम्॥ (वि.पु. १-४-४६)

इति व्याचष्टे—बृहदिति। "विश प्रवेशने" अस्मात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तप्रत्यये विष्टः। शिपयः—पशवः, "पशवः शिपिः" (तै. सं. २-५-५-२) इति श्रुतेः। शिपिषु–पशुषु विष्टः–[1]प्रविष्टो यज्ञ[2]रूपेणेति शिपिविष्ट इत्याह—शिपय इति।

शैत्याच्छयनयोगाच्च शीति वारि प्रचक्षते।

तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः॥

तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते।

इति क्वचित् पठ्यते। तस्यायमर्थः–शैत्यवाचकशीतशब्दैकदेशस्य शीत्यस्य जलमर्थः। शयनयोगाच्च "शीङ् स्वप्ने" इति धात्वर्थभूतशयना-

---

[1] प्रतिष्ठितो य–पा.  [2] रूपेण चेति–पा.

## स्तोत्रम्

# प्रकाशनः ॥ ४२ ॥
# ओजस्तेजोद्युतिधरः

## भाष्यम्

तिष्ठति" (तै. सं. २–५–५) इति श्रुतेः। शिपयः—रश्मयः, तेषु निविष्ट इति वा।

"शैत्याच्छयनयोगाच्च शीति वारि प्रचक्षते।
तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः॥
तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते।"

सर्वेषां प्रकाशनशीलत्वात्—प्रकाशनः॥ ४२॥

ओजः–प्राणबलं, तेजः–शौर्यादयो गुणाः, द्युतिः–दीप्तिः, ता धारयतीति—ओजस्तेजोद्युतिधरः। अथवा ओजः, तेजः,

## विवृतिः

धिकरणत्वाच्च शीति जलमुच्यते। तत्पानात्–तस्य जलस्याष्टभिर्मासै-र्ग्रहणाद्रक्षणाच्च शिपयः। "पा रक्षणे" "पा पाने" आभ्यां बाहु-लकात्किः। तथाच शिशब्दस्य जलस्य पानाद्रक्षणाच्च शिपयो रश्मयः, तेषु विष्टः–निविष्टः सूर्यरूपोऽन्तर्यामी वेत्यर्थान्तरमाह—शिपय इति। सर्ववस्तुप्रकाशनशीलः–प्रकाशनः। "काशृ दीप्तौ" इत्यस्मात् ण्यन्तात्प्रपूर्वाल्ल्युट्प्रत्यय इत्याह—सर्वेषामिति॥ ४२॥

धरतीति धरः। पचाद्यच्। ओजस्तेजोद्युतीनां धरः तथेत्यो-जस्तेजोद्युतिशब्दार्थकथनपूर्वकं व्याचष्टे—ओज इति। एकनामत्वेन व्याख्याय नामत्रयपरत्वेनापि व्याचष्टे—अथवेति। तत्र ओज इति तेज इति च नामद्वयम्। ओजः–बलं, तेजः–प्रागल्भ्यम्,

## स्तोत्रम्

## प्रकाशात्मा प्रतापनः ।

### भाष्यम्

इति नामद्वयम्। "बलं बलवतां चाहं" (भ.गी. ७-१२) "तेजस्तेजस्विनामहम्" (भ. गी. ७-१०) इति भगवद्वचनात्। [1]द्युतिं-ज्ञानलक्षणां दीप्तिं धारयतीति-द्युतिधरः। प्रकाशस्वरूपः आत्मा यस्य सः-प्रकाशात्मा। सवित्रादिविभूतिभिः विश्वं प्रतापयतीति-प्रतापनः ॥

### विवृतिः

तदुभयरूपत्वादोजस्तेज इति च गीयते। तत्र भगवद्वचनमुदाहरति-बलमिति। यद्बलवतां बलं तद्रूपे मयि बलवन्तः प्रोताः इत्यर्थः। तेजः-प्रागल्भ्यं पराभिभवसामर्थ्यं, परैरप्रधृष्यत्वं वा; तेजस्विनां-प्रागल्भ्यवतां यत्प्रागल्भ्यं तद्रूपे मयि तद्वन्तः प्रोताः इत्यर्थः ॥

द्युतिः-ज्ञानं सर्वविषयकम्, तस्य धरो द्युतिधर इति तृतीयं नाम व्याचष्टे-ज्ञानेति। प्रकाशो ज्ञानं तत्स्वरूपलक्षण आत्मा प्रकाशात्मा, "सत्यं ज्ञानम्" (तै. उ. २ १) इति तत्स्वरूपलक्षणश्रुतेरित्याह-प्रकाशेति। प्रलयकाले सवितृसङ्कर्षणादिभिर्विश्वं प्रतापयति दाहयति, "तप दाहे" अस्मात् ण्यन्ताल्ल्युट्। यद्वा सूर्यादिभिर्विभूतिभिर्विश्वं प्रतापयति-प्रकाशयतीति प्रतापन इत्याह-सवित्रादिभिरिति ॥

---

[1] ज्ञानलक्षणां-पा.

### स्तोत्रम्

**ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥४३॥**

### भाष्यम्

धर्मज्ञानवैराग्यादिभिरुपेतत्वात्—ऋद्धः। स्पष्टं–उदात्तं ओङ्कारलक्षणं अक्षरं अस्येति—स्पष्टाक्षरः। ऋग्यजुस्साम-लक्षणः—मन्त्रः। मन्त्रबोध्यत्वाद्वा—मन्त्रः। संसारताप-तिग्मांशुतापतापितचेतसां चन्द्रांशुरिवाह्लादकत्वात्—चन्द्रांशुः। भास्करद्युतिसाधर्म्यात्—भास्करद्युतिः ॥ ४३ ॥

### विवृतिः

"ऋधु वृद्धौ" अस्मादकर्मकात् कर्तरि क्तः। ऋद्धयः–धर्म-ज्ञानवैराग्यादयः, तेषामाश्रयत्वादृद्ध इत्याह–**धर्मेति**। स्पष्टं उदा-त्तात्मकत्वात् स्फुटमक्षरं ओङ्काररूपं वाचकत्वेन प्रतीकत्वेन वा यस्य स तथेत्याह–**स्पष्टमिति**। "तेषामृग्यत्रार्थवशेन पादव्यवस्था" (जै. सू. २-१-३५) "शेषे यजुश्शब्दः" (जै. सू. २-१-६७) "गीतिषु सामाख्या" (जै. सू. २-१-३६) इत्युक्तलक्षणलक्षितर्गादिमन्त्ररूपत्वा-न्मन्त्र इत्याह–**ऋगिति**। ओङ्कारसावित्र्यष्टाक्षरादिरूपमन्त्रबोध्यत्वा-न्मन्त्र इति लक्षणयापि व्याचष्टे–**मन्त्रेति**। स्वाश्रितानां चन्द्रांशु-रिवाह्लादकत्वगुणयोगाच्चन्द्रांशुरिति गौणतया व्याचष्टे–**संसारेति**। भास्करद्युतिरिव जगद्भासकत्वगुणयोगाद्भास्करद्युतिरिति गौणं नामेत्याह–**भास्करेति** ॥ ४३ ॥

उद्भवत्यस्मादित्युद्भवः। 'ऋदोरप्' (पा. सू. ३-३-५७) इत्यप्। अमृतांशोरुद्भवः अमृतांशूद्भवः। उद्भवतीत्युद्भवः, अमृतांशुरुद्भवः–

स्तोत्रम्

## अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।

भाष्यम्

**मथ्यमाने पयोनिधौ अमृतांशोः—चन्द्रस्योद्भवो यस्मात् सः—अमृतांशूद्भवः । भातीति—भानुः । "तमेव भान्तं" (मुण्ड. २-२-१०) इत्यादिश्रुतेः । शश इव [1] बिन्दुः—लाञ्छनमस्येति—शशबिन्दुः चन्द्रः, तद्वत्प्रजाः पुष्णातीति—शशबिन्दुः । "पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः" (भ. गी. १५-१३) इति भगवद्वचनात् । सुराणां—देवानां शोभनदातॄणां चेश्वरः—सुरेश्वरः ॥**

विवृतिः

उत्पत्तिमान् अस्मादिति वा अमृतांशूद्भव इत्याह—**मथ्यमान इति**। भाति—प्रकाशते सर्वदेति भानुरित्याह—**भातीति**। अत्र श्रुतिमाह—**तमेवेति**। "सर्वविद्भानुः" (वि. स. २७) इत्येकं नामेति न तेनास्य पौनरुक्त्यमिति बोध्यम् । शशबिन्दुः—चन्द्रः, तद्वज्जगत्पोषकत्वगुणयोगात् शशबिन्दुरिति गौणं नामेत्याह—**शश इति**। गुणयोगं दर्शयति—**प्रजा इति**। अत्र भगवद्वचनं पठति—**पुष्णामीति**। सु-शोभनं रान्ति-प्रयच्छन्तीति सुराः—शोभनदातारः, तेषामीश्वरः—नियामकः सुरेश्वर इत्याह **सुराणामिति**। यद्यपि "सुरेशः शरणं" (वि. स. २३) इत्यत्रत्येन सुरेशशब्देनास्य शब्दभेदादपौनरुक्त्यम्, तथापि अर्थभेदादप्यपौनरुक्त्यमिति दर्शयितुमित्थं व्याख्यातम् ॥

---

[1] बिन्दुर्लक्ष्म यस्य स शश—**पा.**

स्तोत्रम्

## औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४४ ॥

भाष्यम्

संसाररोगभेषजत्वात्—**औषधम्** । जगतां समुत्तारणहेतुत्वात्, असम्भेद[1]करणाद्वा [2]सेतुवत् वर्णाश्रमादीनां—**जगतः सेतुः** । "एष सेतुर्विधरण एषां लोकानामसम्भेदाय" (बृह. उ. ६–४–२२) इति श्रुतेः । सत्या—अवितथा धर्माः—ज्ञानादयो गुणाः पराक्रमश्च यस्य सः—**सत्यधर्मपराक्रमः** ॥ ४४ ॥

विवृतिः

औषधवदौषधं स्वभक्तानां संसाराख्यरोगनिवर्तकत्वादिति गौणं नामेत्याह—**संसारेति** । यद्वा संसारे ये रोगास्तेषामौषधरूपेण परिणततया औषधमित्यभिप्रेत्याह—**संसारेति** । जगतः सेतुवत् सेतुः मुमुक्षुजनानां संसाराब्धिसमुत्तरणहेतुत्वगुणयोगाद्वर्णाश्रमासाङ्कर्यहेतुत्वाद्वेति गुणप्रदर्शनपूर्वकं गौणं नामेत्याह—**जगतामिति** । अत्र श्रुतिमाह—**एष इति** । **एषः**—चिदानन्दात्मा, **सेतुः**—वर्णाश्रमादिमर्यादानां विधारकः, न तु मृद्दार्वादिमयः, तदेतदाह—**विधरण** इति । विधारकत्वेन हेतुना सेतुशब्दाभिधेयः । [3]विधारकत्वे निमित्तमाह—**एषामिति** । **एषां**—प्रसिद्धानां, **लोकानां**—भूरादीनां देवतिर्यगादीनां ब्राह्मणादिवर्णाश्रमाणां च **असम्भेदाय**—असाङ्कर्यायेति श्रुत्यर्थः ॥

सत्याः—अवितथाः, धर्माः—ज्ञानेच्छादयः, पराक्रमः-विक्रमः सामर्थ्यमुद्योगश्च । "पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि" इति कोशात् । तादृशाः, ते अस्येति, ज्ञानादीनां सत्यत्वं यथार्थविषयकत्वं सफलत्वं च, पराक्रमस्य त्वमोघत्वमिति सत्यधर्मपराक्रम इत्याह—**सत्या इति** ॥४४॥

---

[1] कारणत्वा—**पा.** [2] वर्णाश्रमादीनां—**पा.** [3] विधारणे—**पा.**

## स्तोत्रम्

# भूतभव्यभवन्नाथः पवनः पावनः

## भाष्यम्

**भूतभव्यभवतां–भूतग्रामाणां नाथः, तैर्नाथ्यते–याच्यते, [1]तानुपतपति, तेभ्य आशास्ते, तेषामीष्टे, शास्तीति वा— भूतभव्यभवन्नाथः। पवत इति–पवनः। "पवनः पवतामस्मि" (भ.गी. १०-३१) इति भगवद्वचनात्। पावयतीति–पावनः। "भीषास्माद्वातः पवते" (तै. उ. ३-२-७) इति श्रुतेः।**

## विवृतिः

नाथ्यत इति नाथः। कर्मणि घञ्। भूतभव्यभवतां–अतीतानागतवर्तमानकल्पस्थानां भूतग्रामाणां नाथः तैः पुरुषार्थं याच्यमान इत्यभिप्रेत्याह—**भूतेति**। "नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु" इति धातुपाठाद्याच्ञार्थं गृहीत्वा व्याख्याय उपतापादिष्वर्थेषु व्युत्पादयति— **उपतपतीत्यादिना**। उपतपति प्रलयकाले, आशास्ते सृष्टिकाले, ईष्टे स्थितिकाल इत्यर्थः। भूतग्रामान्नाथते याचते इत्यपि पाठः। तत्र पुत्रादीनिव पिता सन्मार्गं याचत इत्यर्थः॥

पवते–पुनाति जगदिति पवनो वायुः तद्रूपीत्याह–**पवत इति**। वायोर्भगवद्विभूतित्वे गीतावचनमाह–**पवन इति**। पवतां–पावयितॄणां–शोधयितॄणां मध्ये पवनोऽस्मीत्यर्थः। पवते–निरन्तरमनलसः सञ्चरति वायुः, तस्य प्रयोजकत्वात् परमेश्वरः पवन इत्याह–**पावयतीति**। पावयितृत्वे श्रुतिमाह–**भीषेति**। **अस्मात्**–परमेश्वरात्, **भीषा**–भयेन,

---

[1] तानुपतापयतीति–**पा.**

### स्तोत्रम्

## अनलः ।

### भाष्यम्

अनान्–प्राणान् आत्मत्वेन [1]लातीति जीवः—अनलः। [2]णलतेर्गन्धवाचिनो नञ्पूर्वाद्वा। "अगन्धमरसम्" (बृह. उ. ५-८-८) इति श्रुतेः। अलं पर्याप्तमस्य न विद्यत इति वा[3] ॥

### विवृतिः

**वायुः पवते**–निरन्तरमनलसः सञ्चरति। तथा च वायुसञ्चरणानुकूलभयोत्पादकाज्ञाव्यापारयोगाद्भवति पावयितृत्वमित्यर्थः ॥

अनान्–प्राणान् लाति—आदत्ते स्वीकरोति जीवरूपेणेत्यनलः। लातेः कप्रत्यय इत्याह–**अनानिति**। [4]"णल गन्धे" अस्माद्भावे घञ्। संज्ञापूर्वकत्वान्न वृद्धिः। "घञर्थे कविधानं" (वा. २२०४) इति कप्रत्ययो वा। नलः। न विद्यते नलो गन्धोऽस्येति नञ्बहुव्रीहिरिति निर्वचनान्तरमाह—**णलतेरिति**। अगन्धत्वे श्रुतिमाह—**अगन्धमिति**। अलतेः पर्याप्त्यर्थकात् घञ्, पूर्ववत् "घञर्थे कविधानं" (वा. २२०४) इति कप्रत्ययो वा भावे, अलः–पर्याप्तिः–परिमितिः न विद्यते अस्य, अनन्तत्वादित्यभिप्रेत्य निर्वचनान्तरमाह—**अलमिति**। "अलं पर्याप्तमस्य" इति भाष्ये अलंशब्दो न विग्रहान्तर्गतः। किन्तु तदन्तर्गतालशब्दस्यार्थप्रदर्शनार्थः। अन्यथा अलंशब्दस्य मान्ताव्ययत्वेन नाम्न्यपि मान्तत्वं श्रूयेतेति बोध्यम् ॥

---

[1] अलङ्करोतीति–**पा.** [2] अनान् लातीति वा णलतेः–**पा.** नालतीति नलतेः–**पा.**
[3] अनत्यनेन लोको वानलः–**पा.** [4] णल बन्धने–**पा.**

### स्तोत्रम्

## कामहा कामकृत्कान्तः कामः

### भाष्यम्

**कामान्—हन्ति मुमुक्षूणां भक्तानां हिंसकानां चेति—कामहा । [1]सात्विकानां कामान् करोतीति—कामकृत् । [2]कामस्य प्रद्युम्नस्य जनकत्वाद्वा । अभिरूपतमः—कान्तः । काम्यते पुरुषार्थाभिकाङ्क्षिभिरिति—कामः ।**

### विवृतिः

कामान् मुमुक्षूणां विषयविषयकान् प्राणिनां हिंसा[3]व्यापाराणां साधुपीडनादिविषयकांश्च हन्तीति **कामहा,** हन्तेः क्विबिति व्याचष्टे—**कामानिति** । काम्यन्त इति कामाः—इष्टार्थाः, तान् करोति—साधयति साधूनामिति कामकृदित्याह—**सात्विकानामिति** । कामं—प्रद्युम्नं करोति—जनयतीति निर्वचनान्तरमाह—**कामस्येति** । परमानन्दरूपत्वात्कान्त इत्याह—**अभिरूपतम इति** । अभिरूपतमः—मनोज्ञतमः । "प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः" । (नाम. ३–३–१३१) इत्यमरकोशादित्यर्थः ॥

कं—ब्रह्माणं द्वितीयपरार्धावसाने अन्तयति—नाशयतीति, कं—जलं समुद्ररूपं अन्तति बध्नातीति वा **कान्तः,** "अति बन्धने" इत्यस्मात् कर्मण्यणित्यपि बोध्यम् । [4]काम्यते मोक्षकाङ्क्षिभिर्निःश्रेयसरूपत्वादिति **कामः** । कमेः कर्मणि घञित्याह—**काम्यत इति** ।

---

[1] कामिनां कामान्—**पा.**   [2] कामः प्रद्युम्नः तज्जनकत्वाद्वा—**पा.**
[3] विहाराणां—**पा.**   [4] काङ्क्ष्यते—**पा.**

स्तोत्रम्

## कामप्रदः प्रभुः ॥ ४५ ॥

## युगादिकृत्

भाष्यम्

[1]भक्तानां कामान् प्रकर्षेण ददातीति—कामप्रदः। प्रकर्षेण भवनात्—प्रभुः ॥ ४५ ॥

युगादेः कालभेदस्य कर्तृत्वात्—युगादिकृत्। [2]युगानामादिं–आरम्भं करोतीति वा। इति नाम्नां तृतीयशतकं विवृतम् ॥

इति तृतीयशतकभाष्यम्

---

विवृतिः

प्रददातीति प्रदः। "आतश्चोपसर्गे" (पा. सू. ३-३-१०६) इति कः। कामानां–काम्यमानपुरुषार्थानां प्रदः कामप्रद इत्याह—**भक्तानामिति**। प्रकर्षेण भवतीति प्रभुः। "विप्रसम्भ्यो ड्वसंज्ञायाम्" (पा. सू. ३-२-१८०) इति प्रपूर्वाद्भवतेर्डुप्रत्ययः। भवनस्य प्रकर्षश्च अभावाप्रतियोगित्वमित्यभिप्रेत्याह—**प्रकर्षेणेति** ॥ ४५ ॥

युगादिसंज्ञकस्य कालविशेषस्य कर्तृत्वाद्युगादिकृदित्याह—**युगादेरिति**। युगानां आदिं–आरम्भं करोति तत्तद्युगधर्मप्रवर्तनेनेति युगादिकृदित्यर्थान्तरमाह—**युगानामिति** ॥

इति तृतीयशतक[3]भाष्यविवृतिः

---

[1] भक्तेभ्यः–**पा.** [2] युगानामारम्भकृत् इति वा–**पा.** [3] भाष्यं व्याख्यातम्–**पा.**

### स्तोत्रम्

## युगावर्तो नैकमायो महाशनः ।

### अथ चतुर्थशतकभाष्यम्

**युगानि— कृतादीन्यावर्तयति कालात्मनेति—युगावर्तः । एका माया न विद्यते, बह्वीर्माया वहतीति—नैकमायः । "न-लोपो नञः" (पा. सू. ६-३-७३) इति नकारलोपो न भवति । अकारानुबन्धरहितस्यापि नकारस्य प्रतिषेधवाचिनो विद्यमानत्वात् । कल्पान्ते सर्वग्रसनात् महदशनमस्येति—महाशनः ।**

### अथ चतुर्थशतकभाष्यविवृतिः

आवर्तयतीत्यावर्तः। आङुपसृष्टात् वृतेर्ण्यन्तात्पचाद्यच् । युगानामावर्तो युगावर्तः । युगानि—कृतादीन्यावर्तयति कल्पमन्वन्तरादिभेदेनेति वृतेर्ण्यन्तादाङ्पूर्वात् "कर्मण्यण्" (पा. सू. ३-२-१) इत्यण्प्रत्ययः उपपदसमासो वा इति युगावर्तनाम निर्वक्ति—**कृतादीनीति** । न विद्यते एका माया यस्य स तथेति त्रिपदबहुव्रीहिः, नैकमाय इत्याह—**एका मायेति** । एकमायाप्रतिषेधेन लब्धार्थमाह—**बह्वीरिति** । मायासहस्रविदामपि मयप्रभृतीनां व्यामोहिका बह्व्यो मायाः सन्त्यस्येत्यर्थः । यद्वा प्रतिजीवं अविद्याभेदाङ्गीकाराद्बह्व्यो मायाः सन्त्यस्येत्यर्थः । अथवा साङ्ख्यैर्योगैश्च मूलप्रकृतेर्नानात्वानङ्गीकारात् "मायां तु प्रकृतिं विद्यात्" (श्वे. ४-१०) इत्येकत्वश्रुतेश्च पल्लवाज्ञानरूपा माया बह्व्यः सन्त्यस्येत्यर्थः । नैकमाय इत्यत्र "नलोपो नञः" (पा. सू. ६-३-७३) इति नलोपमाशङ्क्य सानुबन्धकस्यैव नञो नलोपविधानात् प्रकृते च निरनुबन्धकस्य निषेधार्थस्य नशब्दस्य समास इति समाधत्ते—**नलोप इत्यादिना** । महदशनं-संहार्यमस्य प्रलयकाल इति **महाशनः** । "यस्य ब्रह्म च क्षत्रं च" (कठ. २-२५) इत्यादिश्रुतेरित्याह—**कल्पान्त इति** ।

## स्तोत्रम्

# अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥४६॥

## भाष्यम्

**सर्वेषां बुद्धीन्द्रियाणामगम्यत्वात्—अदृश्यः। स्थूलरूपेण व्यक्तं रूपमस्येति—व्यक्तरूपः। स्वयंप्रकाशमानत्वात् योगिनां व्यक्तरूप इति वा। सहस्राणि असुराणां युद्धे जयतीति—सहस्रजित्। सर्वभूतानि युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीति—अनन्तजित् ॥ ४६ ॥**

## विवृतिः

द्रष्टुं योग्यो रूपादिमानर्थो दृश्यः, "दृशिर् प्रेक्षणे" इत्यस्मात् "ऋदुपधाच्चाक्लृपि चृतेः" (पा. सू. ३-१-११०) इति क्यप्। न दृश्योऽदृश्यः— ज्ञानेन्द्रियागम्य इत्याह—**सर्वेषामिति**। विराडात्मना व्यक्तं रूपमस्येति व्यक्तरूप इत्याह—**स्थूलरूपेणेति**। यद्वा व्यक्तं–स्वयं प्रकाशमानं परमानन्दलक्षणं रूपमस्येत्यर्थान्तरमाह— **स्वयमिति**। सुरारीणां सहस्राणि जयति–अभिभवति, "जि अभिभवे" इत्यस्मात् क्विबिति व्याचष्टे–**सहस्राणीति**। अनन्तानि–असङ्ख्यातानि भूतानि जयति–अतिशेत इति "जि जये" इत्यस्मात् क्विबित्याह—**सर्वभूतानीति**। युद्धक्रीडादिषु सर्वक्रियासु अचिन्त्यशक्तितया सर्वाणि भूतानि जयति–अतिशेते, यस्य यस्य भूतस्य यस्यां यस्यां क्रियायां शक्तिरस्ति तद्भूतं तस्यां क्रियायां अतिशेत इत्यर्थः। सर्वत्रेत्यस्य अचिन्त्यशक्तितयेत्यनेन वा सम्बन्धः ॥ ४६ ॥

## स्तोत्रम्

# इष्टोऽ[1]विशिष्टः

## भाष्यम्

**परमा[2]नन्दात्मकत्वेन प्रियः—इष्टः। यज्ञेन पूजित इति वा—इष्टः। सर्वेषामन्तर्यामित्वेन—[3]अविशिष्टः। शिष्टानां**

## विवृतिः

"इषु इच्छायाम्" "मतिबुद्धिपूजार्थेभ्यश्च" (पा. सू. ३-२-१८८) इति वर्तमाने कर्मणि क्तः। परमानन्दरूपत्वेन सर्वेषां प्रियत्वादिष्ट इत्याह— **परमेति**। "यज देवपूजायां" इत्यस्मात् कर्मणि वर्तमाने क्तः। "वचिस्वपि" (पा. सू. ६-१-१५) इत्यादिना सम्प्रसारणम्। "व्रश्च" (पा. सू. ८-२-३६) इत्यादिना षत्वं ष्टुत्वं च। इष्टः-यज्ञैः पूजित इति निर्वचनान्तरमाह—**यज्ञेनेति**। न विशिष्यत इत्यविशिष्टः। अन्तर्यामित्वेन सर्वप्राणिसाधारण इत्याह—**सर्वेषामिति**। शिष्टाः-अविद्वद्भ्यो विशिष्टाः ब्रह्मविदः "ये के चात्महनो जनाः" (ईश. ३) इति श्रुत्या,

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
> किं तेन न कृतं पापं चोरेणात्मापहारिणा॥
>
> (भार. उद्यो. प. ४२-३५)

इति स्मृत्या च अनात्मज्ञानामशिष्टत्वावगमात्। तेषामिष्टः-प्रिय इत्याह—**शिष्टानामिति**।

ननु शिष्टेष्ट इत्यत्र कथं समासः? "क्तेन च पूजायाम्" (पा. सू. २-२-१२) इति तन्निषेधादिति चेन्न। "कलहं स राम-महितः कृतवान्" (भट्टि. १०-२) इति भट्टिप्रयोगमुदाहृत्य कारक-

---

[1] विशिष्टः—**पा.** [2] नन्दत्वेन-**पा.** [3] विशिष्यत इति सर्वेषामुत्कृष्टत्वाद् विशिष्टः—**पा.**

स्तोत्रम्

## शिष्टेष्टः शिखण्डी नहुषो वृषः ।

भाष्यम्

विदुषां इष्टः— शिष्टेष्टः । शिष्टा इष्टा अस्येति वा । "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" (भ.गी. ७-१७) इति भगवद्वचनात् । शिष्टैरिष्टः—पूजित इति वा— शिष्टेष्टः । शिखण्डः—कलापोऽलङ्कारोऽस्येति— शिखण्डी गोपवेषधरः । यतो नह्यति भूतानि मायया अतः—नहुषः । कामानां वर्षणात्—वृषः—धर्मः ।

वृषो हि भगवान् धर्मः स्मृतो लोकेषु भारत! ।
नैघण्टुकपदाख्यानैर्विद्धि मां वृष इत्युत ।। (शान्ति. ३४३-५८)

इति महाभारते ।

विवृतिः

षष्ठ्या एवायं निषेध इति स्वीकुर्वतां मते शेषषष्ठीसमासे दोषाभावात् । विद्वदिष्टत्वे वचनमाह—**प्रियो हीति** । शिष्टैः—सदाचारसम्पन्नैरिष्टः—पूजित इत्यर्थान्तरमाह—**शिष्टैरिति** । [1]यजेर्धातोरिष्ट इति भूतार्थक्तान्तेन तृतीयासमासो वात्र बोध्यः । शिखण्डः—कलापः बर्हमलङ्करणतयाऽस्यास्तीति **शिखण्डी** । मत्वर्थीय इनिः । "बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ ।" (वि. पु. ५-६-३२) इति विष्णुपुराणवचनादित्याह—**शिखण्ड इति** । नह्यति—बध्नाति स्वमायया भूतानीति **नहुषः** । "णह बन्धने" "पॄनहिकलिभ्यः उषच्" (उणा. ५१५) इत्युषच्प्रत्यय इत्याह—**नह्यतीति** । वर्षति—ददाति कामानिति, "वृष सेचने" इत्यस्मात् इगुपधलक्षणः क इत्याह— **कामानामिति** ।

---

[1] यजधातोः-**पा**.

## स्तोत्रम्

# क्रोधहा क्रोधकृत्कर्ता

## भाष्यम्

**साधूनां क्रोधं हन्तीति–क्रोधहा । असाधुषु क्रोधं करोतीति–क्रोधकृत् । क्रियत इति कर्म-जगत् तस्य–कर्ता । "एतेषां पुरुषणा यः कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" (कौषी. ४-१९) इति श्रुतेः । † क्रोधकृतां दैत्यादीनां कर्ता**

## विवृतिः

क्रोधं हन्ति साधूनां इति हन्तेः क्विपि क्रोधहेत्याह—**साधूनामिति** । असाधूनां क्रोधं करोति-उत्पादयति अनर्थप्रापय इति कृञः क्विबित्याह—**असाधुष्विति** । कर्ता–उत्पादकः । कस्य कर्तेत्यपेक्षायां "यस्य वैतत्कर्म" (कौषी. ४-१९) इति कौषीतकिश्रुत्यनुसारेण जगन्मात्रं कर्मतया सम्बध्यत इति श्रुतिस्थकर्मशब्दं कार्यमात्रपरतया व्याचष्टे—**क्रियत इति** । "यस्य वैतत् कर्म" (कौषी. ४-१९) इति श्रुतिस्थकर्मशब्दस्य व्याख्यानमेतत् । तथा च कृत्स्नस्य जगतः कर्तेत्यर्थः । तत्र कौषीतकीश्रुतिं पठति—**एतेषां पुरुषाणामिति** । **पुरुषाणाम्**–आदित्यादीनाम्, न केवलमादित्यादीनां कर्ता, किन्तु सर्वस्य जगत इत्याह—**यस्येति** । क्रियत इति **कर्म**–कार्यमात्रं, **एतत्**–सर्वं जगत, **यस्य कर्म**–कार्यमित्यर्थः । कर्मग्रहणेन पुरुषाणामपि ब्रह्मकार्यत्वावगतौ पृथक् पुरुषाणामुक्तिः बालाकिनो ये ब्रह्मत्वेनाभिमताः तेषामब्रह्मत्वख्यापनार्था । "जगद्वाचित्वात" (ब्र. सू. १-४-१६) इत्यत्र* इदं व्युत्पादितम् ॥

† अस्य वाक्यस्य विवृतौ विवरणं न दृश्यते । * भाष्य इति शेषः ।

स्तोत्रम्

## विश्वबाहुर्महीधरः ॥ ४७ ॥

## अच्युतः

भाष्यम्

छेदक इत्येकं वा नाम। विश्वेषामालम्बनत्वेन विश्वे बाहवोऽस्येति वा–विश्वबाहुः। "विश्वतो बाहुः" (ऋ. सं. १०-८१-३) इति श्रुतेः। महीं–पूजां धरणीं वा धरतीति —महीधरः ॥ ४७ ॥

*षड्भावविकारशून्यत्वात्–अच्युतः। "शाश्वतं शिव-

विवृतिः

विश्वेषां–सर्वेषां प्राणिनां बाहुरिव बाहुरालम्बनत्वात्, विश्वे–बाहवोऽस्य विराडात्मकस्येति वा विश्वबाहुरिति द्विधा व्याचष्टे—**विश्वेषामिति**। द्वितीयव्याख्याने श्रुतिमाह—**विश्वत इति**। विश्वतः–विश्वे सर्वे बाहवो यस्य विराडात्मकस्य स तथेति श्रुत्यर्थः। "मह पूजायाम्" अस्मात् कण्ड्वादियगन्तात् सम्पदादित्वाद्भावे क्विप्। अल्लोपयलोपौ। मही–पूजा, तस्याः भक्तकृतायाः धरो **महीधरः**। यद्वा मही–पृथ्वी। मह्यते पूज्यत इति विग्रहे "मह पूजायाम्" इति चुरादावदन्तात् "अच इः" (उणा. ५७८) इति इप्रत्यये "कृदिकारात्" (ग. सू. ५०) इति ङीबिति व्युत्पत्तेः मह्याः–पृथिव्या धरोऽनन्तादिरूपेणेति महीधरनाम द्विधा व्युत्पादयति—**महीं पूजामित्यादिना** ॥ ४७ ॥

च्युतं–च्युतिः, नपुंसके भावे क्तः। † जनिप्रभृतिभावविकारलक्षणा च्युतिर्यस्य न विद्यते सोऽच्युत इत्याह—**षड्भावविकारेति**।

---

* षड्भावविकाराः जनिप्रभृतयो विनाशान्ताः। तच्छून्यत्वादित्यर्थः।

† "षड्भावविकारा भवन्तीति वार्ष्यायणिः; जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति" (निरु. १–२) इति निरुक्तोक्ता जनिप्रभृतयो भावविकाराः षडत्र ग्राह्याः।

## स्तोत्रम्

## प्रथितः प्राणः प्राणदो वासवानुजः ।

### भाष्यम्

मच्युतम्" (महाना. ९-१) इति श्रुतेः। जगदुत्पत्त्यादिकर्मभिः प्रख्यातः--प्रथितः। सूत्रात्मना प्रजाः प्राणयतीति–प्राणः। "प्राणो वा अहमस्मि" (ऐ. आ. २-२-३) इति बह्वृचाः[1]। सुराणामसुराणां च यथासङ्ख्यं प्राणं–बलं ददाति द्यति वेति–प्राणदः। अदित्यां कश्यपाद्वासवस्यानुजो जात इति–वासवानुजः ॥

### विवृतिः

*पूर्वं स्वरूपसामर्थ्यान्न च्यवत इति व्याख्यातम्। अतो न पौनरुक्त्यम्। "प्रथ प्रख्याने" अस्मात् कर्मणि क्तः। प्रथितः–प्रख्यातः जगज्जननादिकर्मभिरित्याह—**जगदिति**। "अन प्राणने" अस्मात् प्रपूर्वात् ण्यन्तात्पचाद्यच्। प्राणयति–[2]चेष्टयति प्रजाः सूत्रात्मनेत्याह–**सूत्रात्मनेति**। क्रियाशक्त्यात्मकसमष्टिप्राणरूपेणेत्यर्थः। तत्र श्रुतिमाह --**प्राणो वेति**। हे ऋषे! विश्वामित्र! अहं–इन्द्रः, त्वं–विश्वामित्रः, सर्वभूतानि च प्राण एवेति श्रुत्यर्थः। प्राणान् ददाति सुराणां इति "डुदाञ् दाने" अस्मात् "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्ययः। यद्वा प्राणान् द्यति–खण्डयति असुराणामिति पूर्ववत् कः इति द्विधा व्याचष्टे—**सुराणामिति**। सुराणां प्राणान् ददाति, असुराणां प्राणान् द्यतीति योजना। अनु–पश्चाज्जातः अनुजः। "उपसर्गे च संज्ञायाम्" (पा. सू. ३-२-९९) इति जनेर्डः। वासवस्यानुजो वामनरूपेणेत्याह—**अदित्यामिति** ॥

---

* "सर्वादिरच्युतः" (वि. स. २४) इत्यत्रेत्यर्थः।

[1] "वायुर्वै गौतम तत्सूत्रं" (बृह. ३-७-२) इति श्रुतेः–**पा.** [2] चेतयति–**पा.**

स्तोत्रम्

## अपां निधिरधिष्ठानं

भाष्यम्

**आपो यत्र निधीयन्ते सः—अपां निधिः। "सरसामस्मि सागरः" (भ. गी. १०-२४) इति भगवद्वचनात्। अधितिष्ठन्ति भूतानि उपादानकारणत्वेन ब्रह्म इति—अधिष्ठानम्। "मत्स्थानि सर्वभूतानि" (भ. गी. ९-४) इति भगवद्वचनात्। अधिकारिभ्यः कर्मानुरूपं फलं प्रयच्छन् न प्रमाद्यतीति—**

विवृतिः

निधीयन्ते अत्रेति निधिः। दधातेः "उपसर्गे घोः किः" (पा. सू. ३-३-९२) इति किप्रत्यय इत्याह—**आप इति**। समुद्रस्य भगव[1]द्विभूतित्वे वचनमाह—**सरसामिति**। अधितिष्ठन्ति भूतान्युपादानकारणभूतं ब्रह्मेत्यधिष्ठानं–सर्वभूतोपादानकारणभूतं ब्रह्मेत्याह—**अधितिष्ठतीति**। अधिपूर्वात्तिष्ठतेरधिकरणे ल्युट्। भूतानि कर्तृणि। ब्रह्म कर्म। अधितिष्ठन्तीत्यत्र भाष्ये "अधिशीङ्स्थासां कर्म" (पा. सू. १-४-४६) इत्याधारस्य कर्मसंज्ञायां "कर्मणि द्वितीया" (पा. सू. २-३-२) इति ब्रह्मशब्दोत्तरं द्वितीया। सर्वाधिष्ठानत्वे भगवद्वचनं पठति—**मत्स्थानीति**॥

कर्मोपासनविज्ञानानां तैस्तैरधिकारिभिरनुष्ठितानां सर्वज्ञतया तत्तद्देशकालनिमित्ताभिज्ञतया तदनुगुणं फलमविस्मरन् तत्तत्फलदाने न [2]प्रमाद्यतीत्यप्रमत्त इति व्याचष्टे—**अधिकारिभ्य इति**। "मदी हर्षग्लेपनयोः" अस्मात् प्रपूर्वात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२)

---

[1] द्विभूतित्वव—**पा.** [2] प्रमाद्यति स्म इ—**पा.**

स्तोत्रम्

## अप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥

## स्कन्दः *स्कन्दधरः

भाष्यम्

**अप्रमत्तः । स्वे महिम्नि स्थितः—प्रतिष्ठितः । "स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि" (छा. ७-२४-१) इति श्रुतेः ॥४८॥**

**स्कन्दति—अमृतरूपेण स्रवति वायुरूपेण शोषयति वा—स्कन्दः । [1]स्कन्दं—धर्मपथं धारयतीति—स्कन्दधरः ।**

विवृतिः

इत्यादिना कर्तरि क्तः । "न ध्याख्यापॄमूर्च्छिमदाम्" (पा. सू. ८-२-५७) इति निष्ठानत्वं नेत्यप्रमत्त इति रूपम् । **प्रतिष्ठितः ।** पपूर्वात् ष्ठाधातोः "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः, "द्यति स्यति" (पा. सू. ७-४-४०) इत्यादिना इत्वमिति व्याचष्टे—**स्वे महिम्नीति** । सर्वाधिष्ठानस्य परमात्मनः अधिष्ठानान्तराभावेन स्वमहिम्नि प्रतिष्ठितत्वात् प्रतिष्ठित इत्युच्यत इत्यर्थः । अत्र श्रुतिमाह—**स इति** । सः—भूमाख्यः परमात्मा क पतिष्ठित इति नारदप्रश्ने "स्वे महिम्नि" (छा. ७-२४-१) इति सनत्कु[2]मारस्योत्तरमित्यर्थः ॥ ४८ ॥

स्कन्दति—गच्छति—स्रवति सोमरूपेण, स्कन्दति—शोषयति वायुरूपेणेति वा विग्रहे "स्कन्दिर् गतिशोषणयोः" इति धातोः पचाद्यच् । उक्तधातोः क्रमेणार्थद्वयोपादानपूर्वकं स्कन्दनाम व्युत्पादयति—**स्कन्दतीति** । स्कन्दधरनाम व्याचष्टे—**स्कन्दमिति** ।

---

* अत्र भाष्यपाठान्तरानुरोधेन "धर्मस्कन्धान्" इत्यादिविवृत्यनुरोधेन च "स्कन्धधरः" इत्यपि पाठः प्रतीयते ।

[1] धर्मस्कन्धान् धारयतीति स्कन्धधरः—पा. [2] मारोत्तर—पा.

## विवृतिः

स्कन्दं–[1]धर्मपथं धारयतीति दन्त्यतृतीयपाठे स्कन्दति–शोषयति–नाशयत्यधर्ममिति स्कन्दो धर्मः। यद्वा स्कन्दनात् स्कन्दः स्कन्नः–प्रच्युतो धर्मः, स एव प्राप्यप्राप्त्युपायत्वात्पन्था इति धर्मपथः। तथा च अधर्मनाशकं धर्ममार्गं, अनुष्ठातृक्षयात् च्युतं वा धर्ममार्गं धारयति–अनुष्ठापयति, धारयति–स्थापयतीति वा स्कन्दधरः। "धृञ् धारणे" "धृञ् अवस्थाने" इत्यस्माद्वा हेतुमण्ण्यन्तात्पचाद्यचि "बहुलमन्यत्रापि संज्ञाच्छन्दसोः" (उणा. १८०) इति णिलुकि निमित्ताभावाद्वृद्ध्यभावे पचाद्यजन्तेन षष्ठीतत्पुरुषः।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!।

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ (भ. गी. ४-७)

इति स्मृतेरित्यर्थः। स्कन्दशब्दस्य धर्मपथे रूढ्यभावेन योग आश्रितः। धर्मस्कन्धान् धारयतीति दन्त्यचतुर्थपाठे स्कन्धशब्दो व्यूहवचनः। "स्कन्धः प्रकाण्डे कायेऽसे विज्ञानादिषु पञ्चसु। नृपे समुद्रे व्यूहे च" इति हैमकोशात्। तथा च स्कन्धान्—धर्मस्कन्धान्—धर्मव्यूहान् "त्रयो धर्मस्कन्धाः" (छा. २-२३-१) " इत्यादिश्रुत्युक्तान् गृहस्थवानप्रस्थब्रह्मचारिधर्मविभागान् धारयति–अनुष्ठापयति। णिलोपः समासश्च पूर्ववत्। स्कन्दं धरतीति पाठे–स्कन्दं–गुहं, धरति–देवसेनाधिपत्यप्रदानेनानुगृह्णातीति, स्कन्दं—धर्मं, धरति—अनुतिष्ठति, स्कन्दः–वायुलोकधारकः, तं धरतीति वा अर्थः॥

धुरं–जगज्जन्मस्थितिलक्षणं भारं वहतीत्यर्थे "धुरो यड्ढकौ" (पा. सू. ४-४-७७) इति यत्प्रत्यय इति धुर्य इत्याह—

---

[1] धर्मपदं–**पा.**

स्तोत्रम्

## धुर्यो वरदो वायुवाहनः ।

भाष्यम्

धुरं वहति समस्तभूतजन्मादिलक्षणमिति–धुर्यः । अभिमतान् वरान् ददातीति–वरदः । वरं–दक्षिणां ददाति यजमानरूपेणेति वा—वरदः । "गौर्वै वरः" (आप. श्रौ. ५-११-४) इति श्रुतेः । [1] वहतः–सप्त आवहादीन् वाहयतीति–वायुवाहनः ।

विवृतिः

धुरमिति । वरान्–ईप्सितार्थान् ददातीति वरद इत्याह—अभिमतानिति । यद्वा "गौर्वै वरः' (आ. श्रौ. सू. ५-२७-९९७) इति श्रुतेः गौः–वरः, तमृत्विग्भ्यो यजमानरूपेण ददातीत्यर्थान्तरमाह–वरमिति । गोर्वरशब्दार्थत्वं श्रुत्या स्पष्टयति—गौरिति । वायून्–सप्त आवहादीन् वहतो वाहयतीति "वह प्रापणे" इत्यतो हेतुमण्ण्यन्ताल्ल्युटि वायुवाहन इत्याह—वहतः सप्तेति । वहतो वाहयतीत्यनेन प्रयोजककर्तृत्वं दर्शितम् । आवहादीत्यनेन प्रवहादयो गृह्यन्ते । तथाच पुराणम्—

आवहः प्रवहश्चैव तथैवानुवहः* परः ।
संवहो विवहश्चैव तदूर्ध्वं स्यात्परावहः ॥
तथा परिवहश्चोर्ध्वं वायोर्वै सप्त [2] नेमयः ॥ इति ॥

स्थानानि च तेषामुक्तानि—

मध्ये भूमेघयोर्वायुरावहः प्रवहस्ततः ।
मेघभास्करयोः सूर्यशशिनोरुद्वहस्ततः ॥

---

* उत्तरत्र स्थाननिर्देशे "सूर्यशशिनोरुद्वहस्ततः" इत्युद्वहसंज्ञादर्शनादनुवहस्योद्वह इति नामान्तरं विज्ञेयम् ।

[1] मरुतः सप्त–पा.    [2] नाभयः–पा.

स्तोत्रम्

## वासुदेवः

भाष्यम्

**वसति–वासयति आच्छादयति वा [1]सर्वमिति वासुः, दीव्यति–क्रीडति, विजिगीषते, व्यवहरति, द्योतते, स्तूयते, काम्यते, गच्छतीति वा देवः, वासुश्चासौ देवश्चेति—वासुदेवः।**

विवृतिः

चन्द्रनक्षत्रगणयोः संवहो विवहस्ततः।
नक्षत्रग्रहमध्यस्थो ग्रहसप्तर्षिमध्यगः॥
परावहः परिवहः सप्तर्षिध्रुवमध्यगः।
इत्येवं वायवः सप्त वहन्ति भुवनत्रयम्॥ इति॥

वसति सर्वेषु भूतेषु जीवरूपेण अन्तर्यामिरूपेण चेति "वस निवासे" इत्यतो बाहुलकादुण्प्रत्ययः। "शृस्वृस्निहि" (उणा. १०) इत्यादिना उप्रत्यये "अन्येषामपि दृश्यते" (पा. सू. ६-३-१३७) इति आद्यचो दीर्घो वा, वासुः। यद्वा वसन्ति भूतानि तेषु तेषु [2]स्वकर्मार्जितेषु शरीरेषु, तानि प्रयुङ्क्ते; वासयति–सर्वाणि भूतानि स्वात्मनि वासयतीति वा विग्रहे वसेर्हेतुमण्ण्यन्तात्पूर्ववदुण्प्रत्ययः। अथवा वासयति–आच्छादयति प्राणिनः स्वमाययेति वा वियदादीनि मिथ्याभूतानि सत्तारहितानि स्वसत्तया सम्बद्धानि करोतीति वासुः। "वस आच्छादने" इत्यतो ण्यन्तात्पूर्ववदुण्प्रत्ययः। दीव्यतीति देवः। "दिवु क्रीडादौ" अस्मात् [3]पचाद्यच्। देवो द्योतनाद्यात्मकः। वासुश्चासौ देवश्च वासुदेव इत्यभिप्रेत्य निर्वक्ति—**वसतीत्यादिना**। तत्र वासुदेव[4]शब्दैकदेशं देवशब्दं क्रमेण क्रीडादिष्वर्थेषु व्युत्पादयति—**दीव्यतीत्यादिना**। क्रीडति सर्गस्थित्यादिभिः क्रियाभिः, विजि-

[1] स्वयमिति–**पा.** [2]स्वकर्मोर्जितेषु–**पा.** [3]पचादिपाठादच्–**पा.** [4]शब्दस्यैकदेशं–**पा.**

### भाष्यम्

**"छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः।**
**सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः" ॥ (मोक्षधर्मे.)**
**" वसनात्सर्वभूतानां वसुत्वाद्देव[1]योनितः।**

### विवृतिः

गीषते असुरान्, व्यवहरति जीवरूपेण, द्योतते प्रकाशात्मकत्वात्, स्तूयते ब्रह्मादिभिः, गच्छति व्यापकत्वात्सर्वमिति क्रमेणार्थो द्रष्टव्यः॥

उक्तनिरुक्तिपरं मोक्षधर्मस्थं वचनमाह — **छादयामीति** । भूत्या–विभूत्या मायया, भूत्या–सत्तया वा छादयामि—आवृणोमि, व्याप्नोमीति वा श्लोकार्थः। विश्वं–जगत्, वस्ते–आच्छादयति, इति निर्वचनमनेन दर्शितम्। "सर्वभूताधिवासश्च" इत्यनेन सर्वभूतेषु वसतीति वासुरिति निर्वचनं दर्शितम्। अधिवासयतीत्यधिवास इति णिजन्तप्रकृतिकोऽधिवासशब्द इति स्वीकारे सर्वेषां भूतानां स्वात्मनि वासयिता वासुरित्यपि द्रष्टव्यम्। "सूर्य इवांशुभिः" इत्यनेन अंशुभिः सूर्य इव द्योतमानत्वाद्देव इति देवशब्दनिर्वचनं दर्शितम्। उद्योगपर्वस्थं वासुदेवनामनिरुक्तिपरं वचनं पठति—**वसनादिति**। आच्छादनादित्यर्थः। तथा च वस्ते—आच्छादयति–मायया आवृणोति भूतानीति वासुरिति निरुक्तिर्दर्शिता। **वसुत्वादिति**। वस्यति–स्तभ्नाति भुवनमिति वा, वसत्यस्मिन् भुवनमिति वा वासुः। "वसु स्तम्भने" "वस निवासे" आभ्यां बाहुलकादुण्प्रत्ययः। वासुश्चासौ देवश्च वासुदेव इति द्वितीयं निर्वचनम्। तृतीयं निर्वचनमाह—**देवयोनित इति**। वसन्ति देवा अस्मिन् इति वा वासुः। करणग्रामस्योद्भव-

---

[1] योनिषु–पा.

भाष्यम्

वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः ॥"
इति उद्योगपर्वणि । (उद्योग. ८९-३)
"सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
(वि. पु. १-२-१२)
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥ "
इति च विष्णुपुराणे । (वि. पु. ६-५-८०)
"बृहन्तो भानवो यस्य चन्द्रसूर्यातिगामिनः ।

विवृतिः

प्रलयस्थानमित्यर्थः । वासुदेवनामनिरुक्तिपरं विष्णुपुराणवचनं पठति— **सर्वत्रेति** । अत्र श्रीधरीयव्याख्या—" परमात्मैव सात्वततन्त्रविद्भिर्वासुदेव इत्युच्यत इत्याह— **सर्वत्रेति** । [1]सर्वत्रासौ वसति, समस्तं चास्मिन् वसति, वै–प्रसिद्धं, यतस्ततो वासुदेव इति विद्वद्भिरुच्यत इत्यर्थः । वसनाद्वासनाच्च वासुः, द्योतनाद्देवः, वासुश्चासौ देवश्चेति वासुदेवः । " वसनाद्द्योतनाच्चैव वासुदेवं ततो विदुः ।" इति मोघक्षर्मे निरुक्तेरिति " ॥

बृहन्तः–महान्तः भानवः–रश्मयो यस्य सः बृहद्भानुरिति व्याचष्टे— **बृहन्त इति** । चन्द्रसूर्यातिगामिन इति यस्येति षष्ठ्यन्तस्य विशेषणम् । यस्य चन्द्रसूर्यातिगामिनः तदन्तर्यामिणः देवता-जीवरूपस्य वा स बृहद्भानुरित्यर्थः । भानुविशेषणं वा चन्द्रसूर्याति-गामिनो बृहन्तो भानवो यस्येति । भानुमत्तायाः फलमाह—

---

[1] सर्वत्रायं–**पा.**

स्तोत्रम्

बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥

भाष्यम्

तैर्विश्वं भासयति यः स बृहद्भानुरुच्यते" ॥

इति—बृहद्भानुः । आदिः—कारणं, स चासौ देवश्चेति—आदिदेवः । दानादिगुणवान् वा—आदिदेवः । द्योतनादिगुणवान् वा—आदिदेवः । सुरशत्रूणां पुरदारणात्—पुरन्दरः । "वाचंयमपुरन्दरौ च" (पा. सू. ६-३-६९) इति पाणिनिना निपातनात् ॥ ४९ ॥

विवृतिः

तैर्विश्वमिति । आदिः—कारणं, कार्यापेक्षया कारणस्यादित्वात् । वासुदेवनामव्याख्याने देव इत्येतत्कृतव्याख्यानमित्यभिप्रेत्य आदिश्चासौ देव इत्यादिदेव इत्याह—आदिरिति । दाता दीप्यमानो द्योतमानो द्युस्थानो वा देवः । "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवति" (निरु. ७-१५) इति यास्कवचनमाश्रित्य देव इति नामैकदेशस्य व्याख्यानान्तरमाह—दानादीति । पुराणि दारयतीति पुरन्दर इत्याह—सुरशत्रूणामिति । "वाचंयमपुरन्दरौ च" (पा. सू. ६-३-६९) इति निपातनात् इति क्वाचित्कः पाठः । तस्यायमर्थः—वाचं यच्छति, [1]पुरं दारयतीति च विग्रहे "वाचि यमो व्रते" (पा. सू. ३-२-४०) इति सूत्रेण यमेः खच्प्रत्ययः । "पूःसर्वयोर्दारिसहोः" (पा. सू. ३-२-४१) इति सूत्रेण पूर्शब्दे उपपदे दारयतेर्ण्यन्तात् खच्प्रत्ययः । "खचि ह्रस्वः" (पा. सू. ६-४-९४) इति खच्परे णौ उपधाह्रस्वः । "वाचंयम" (पा. सू. ६-३-६९) इति सूत्रेण तु वाक्पूर्शब्दयोः अमन्तत्वं निपात्यत इत्यर्थः ॥ ४९ ॥

---

[1] पुरो—पा.

स्तोत्रम्

## अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।

भाष्यम्

***शोकादिषड्र्मिवर्जितः—अशोकः । संसारसागरात्तारयतीति—तारणः । गर्भजन्मजरामृत्युलक्षणाद्भयात्तारयतीति—तारः । विक्रमणात्–शूरः ।** [1] **शूरस्यापत्यं वसुदेवस्य सुतः–शौरिः । जनानां-जन्तूनामीश्वरः–जनेश्वरः । आत्मत्वेन हि**

विवृतिः

शोकपदं "अशनायापिपासाशोकमोहजरामरणानि" (मुद्गल. उ. ४-१) इति श्रुत्युक्तानामन्येषामुपलक्षणम् । एते ऊर्मय इव आवर्तमानाः संसारे उर्मय उच्यन्ते । तद्रहितः परमात्मा अशोक इत्युच्यत इत्याह—**शोकादीति** । तारयति संसारसागरमिति तारयतेर्ण्यन्ताल्लयुडित्याह–**संसारेति** । गर्भादिभयात्तारयतीति तारयतेर्ण्यन्तात्पचाद्यचि प्रणवाभेदात्तार इत्याह–**गर्भेत्यादि** । शूरयतीति शूरः–विक्रमशाली । "शूर विक्रान्तौ" अस्माच्चुरादिण्यन्तात्पचाद्यजित्याह- **विक्रमणादिति** । शूरान्वयत्वाद्वेति क्वाचित्कः पाठः । शूरो नाम यादवविशेषः । तद्वंश्यत्वादुपचाराच्छूर इति तदर्थः । शूरस्यापत्यं, [2] बाह्वादित्वादिञ् । शौरिर्वासुदेवः बलभद्रो वा । तद्वंश्यत्वा[3]त्तयोर्भगवद्विभूतित्वाच्चद्रूपी शौरिरित्याह—**शूरस्येति** । जायन्त इति जनाः प्राणिनः, तेषामीश्वरो नियन्ता जनेश्वर इत्याह—**जनानामिति** । सर्वेषां प्राणिनां आत्मत्वेन परमप्रेमास्पदतया अनुकूल इत्युच्यत इत्याह— **आत्मत्वेनेति** । आनु-

---

* अशनायापिपासाशोकमोहजरामरणानि षड्र्मयः । "अशनायापिपासा" (मुद्गल. उ. ४-१) इत्यादिश्रुतेः ।

[1] शूरकुलोद्भवत्वाच्छौरिः–**पा.** [2] वृष्णिस्त्वेऽपि बाह्वा–**पा.** [3] त्तूभयोर्भगव–**पा.**

स्तोत्रम्

## अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥

## पद्मनाभः

भाष्यम्

**सर्वेषां-अनुकूलः । न हि स्वस्मिन् प्रातिकूल्यं स्वयमाचरति । धर्मत्राणाय शतमावर्तनानि-प्रादुर्भावा अस्येति-शतावर्तः । नाडीशते प्राणरूपेण वर्तत इति वा । पद्मं हस्ते विद्यत इति-पद्मी । पद्मनिभे ईक्षणे-दृशावस्येति —पद्मनिभेक्षणः ॥ ५० ॥**

**पद्मस्य नाभौ-मध्ये कर्णिकायां स्थित इति-पद्मनाभः[1] ।**

विवृतिः

कूल्यमुपपादयति-**न हीति ।** आवर्तनान्यावर्ताः । आङ्पूर्वात् वृतेः भावे घञ् । शतमावर्ताः-अवतारा धर्मत्राणायास्येति शतावर्त इत्याह— **शतमिति ।** शते- नाडीशते, आवर्तते-सञ्चरति प्राणरूपेणेति शतावर्तः । "अत्रैतदेकशतं नाडीनाम्" इत्युपक्रम्य "आसु व्यानश्चरति" (प. उ. ३ ६) इत्यादिना प्रश्नोपनिषदि प्राणानां नाडीषु सञ्चारोक्तेरित्यार्थान्तरमाह—**नाडीशत इति** । हस्ते पद्ममस्यास्तीति पद्मीत्याह-- **पद्ममिति** । पद्मनिभेक्षण इति स्पष्टं भाष्यम् ॥ ५० ॥

पद्मनाभ इत्यत्र नाभिशब्देन मध्यप्रतिपादकेन मञ्चाः क्रोशन्तीतिवत्[2] तत्स्थो लक्ष्यते । तथा च पद्मस्य-भूपद्मस्य मध्ये मेरुकर्णिकायां स्थितश्चतुर्मुखरूपेणेति विष्णोर्नाभिकमलस्थो वा पद्मनाभः । "ब्रह्माणमीशं कमलासनस्थम्" (भ. गी. ११-१५) इत्यत्र गीताभाष्ये इत्थं व्याख्यानदर्शनादित्याह-**पद्मस्येति** । अरविन्दे इवाक्षिणी यस्येति

---

[1] चतुर्दशभुवनात्मकं पद्मं नाभौ यस्येति वा पद्मनाभः-**पा**. [2] तत्स्थत्वं-**पा**.

स्तोत्रम्

## अरविन्दाक्षः पद्मगर्भः शरीरभृत् ।

भाष्यम्

[1]अरविन्दसदृशे अक्षिणी अस्येति–अरविन्दाक्षः । पद्मस्य–हृदयाख्यस्य मध्ये उपास्यत्वात्–पद्मगर्भः । [2]पोऽषयन्नन्नरूपेण प्राणरूपेण वा शरीरिणां शरीराणि [3]धारयतीति–शरीरभृत् । स्वमायया शरीराणि बिभर्तीति वा । महती ऋद्धिः---विभूति-

विवृतिः

"बहुव्रीहौ सक्थ्यक्ष्णोः" (पा.सू. ५-४-११३) इति समासान्तषजित्याह–**अरविन्देति** । पद्मस्य–हृत्पद्मस्य, गर्भः–मध्यस्थः पद्मगर्भः । "दहरं पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तराकाशः । तस्मिन् यदन्तस्तदन्वेष्टव्यम् ।" (छा. ८-१-१) इत्यादिश्रुत्या तत्र तदुपासनाविधानादित्याह–**पद्मस्येति** । देशविशेषकल्पनायाः फलमाह––**उपास्यत्वादिति** । शरीराणि बिभर्ति पोषयत्यन्नरूपेण, धारयति प्राणरूपेणेति वा," डुभृञ् धारणपोषणयोः" इति धातोरर्थद्वयं गृहीत्वा शरीरभृन्नाम निर्वक्ति–**पोषयन्नित्यादिना** । अन्नरूपेण पोषयन् प्राणरूपेण धारयंश्च शरीरभृदिति योजना । आविर्भावेषु स्वमायया शरीराणि बिभर्ति धारयतीत्यर्थान्तरमाह–**स्वमाययेति** । महती ऋद्धिः–समृद्धि अपेक्षितार्थसम्पत्तिः अस्येत्याह–**महतीति** । "ऋधु वृद्धौ" "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः । स च "मतिबुद्धिपूजार्थेभ्यश्च" (पा. सू. ३-२-१८८) इत्यत्रानुक्तसमुच्चयार्थचकाराद्वर्तमानक्रियावृत्तेर्धातोरिति **ऋद्धः** प्रपञ्चरूपेण वर्धमान इत्याह––

---

[1] अरविन्दोपमाक्षित्वादरविन्दाक्षः–**पा.** [2] पालयन्नन्न–**पा.** [3] धारयन्–**पा.**

स्तोत्रम्

## महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥५१॥

## अतुलः

भाष्यम्

रस्येति–महर्द्धिः । प्रपञ्चरूपेण वर्धमानत्वात्–ऋद्धः । वृद्धः–पुरातन आत्मा यस्येति–वृद्धात्मा । महती अक्षिणी महान्त्यक्षाणि वा अस्येति–महाक्षः । गरुडाङ्को ध्वजो यस्येति–गरुडध्वजः ॥ ५१ ॥

तुला–उपमानमस्य न विद्यत इति– अतुलः । "न तस्य प्रतिमास्ति यस्य नाम महद्यशः" (श्वेता. ४-१९) इति श्रुतेः। *"न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" (भ. गी. ११-४३)

विवृतिः

प्रपञ्चेति । वृद्धः–ब्रह्मादिभ्योऽपि पुरातन आत्मा अस्येत्याह—वृद्ध इति । महती–विशाले अक्षिणी अस्य महाक्षः । यद्वा महान्ति–[illegible]ष्टानि विषयानाकृष्टानि अक्षाणि–इन्द्रियाण्यस्येति महाक्ष इत्यक्षि[illegible]न अक्षशब्देन वा बहुव्रीहिरित्याह––महती इति । गरुडो ध्वजः चिह्नमस्येत्याह—गरुड इति ॥ ५१ ॥

न विद्यते तुला—उपमा अस्येत्यतुलः । "शेषाद्विभाषा" (पा. सू. ५-४-१५४) इति विकल्पान्न कप्, उपसर्जनह्रस्व इत्याह—तुलेति । अनौपम्ये श्रुतिमाह—न तस्येति । शीर्यन्त इति शराः—[illegible] । "शॄ हिंसायाम्" "ॠदोरप्" (पा. सू. ३-३-५७) । तेषु [illegible] प्रत्यगात्मतया भातीति " आतोऽनुपसर्गे कः " (पा. सू. ३-२-३)

* [illegible] गीतावचनस्य विवृतौ विवरणं न दृश्यते ।

स्तोत्रम्

## शरभो[ऽ]भीमः समयज्ञः

भाष्यम्

इति स्मृतेश्च। शराः-शरीराणि शीर्यमाणत्वात्, तेषु प्रत्यगात्मतया भातीति—शरभः। बिभेत्यस्मात्सर्वमिति—भीमः। "भीमादयोऽपादाने" (पा. सू. ३-४-७४) इति पाणिनिस्मृतेः। सन्मार्गवर्तिनामभीम इति वा। सृष्टि[1]स्थिति-संहारसमयवित्—समयज्ञः। षट् समयान् जानातीति वा—समयज्ञः। सर्वभूतेषु समत्वं यजनमस्येति वा—समयज्ञः।

विवृतिः

इति कप्रत्यय इति व्याचष्टे—**शरा इति**। बिभेत्यस्मात् सर्वमिति भीमः। "भियः षुग्वा" (उ. १५३) इति मक् प्रत्यये विकल्पात्षुगभाव इत्याह—**बिभेतीति**। अपादाने मक्प्रत्यय इत्यत्र सूत्रं पठति—**भीमादय इति**। भीमः शिवरूपः द्वितीयपाण्डवो वा, भीमपराक्रम इत्यतोऽग्रिमनाम्नोऽनेन न पौनरुक्त्यम्। "शरभोऽभीमः" इति संहितापाठे अकारप्रश्लेषं कृत्वा सन्मार्गवर्तिनामभयङ्करत्वादभीम इति शब्दतोऽप्यपौनरुक्त्याय व्याख्यानान्तरमाह—**सन्मार्गेति**। समयान्—सृष्टिस्थितिसंहारकालान् जानातीति समयज्ञः। यद्वा सन्धिविग्रहयानासनद्वैधाश्रयणां समयान्—कालान् जानातीति समयज्ञः। अथवा समेति भावप्रधानो निर्देशः। समत्वं—समदर्शनं आत्मन इव सर्वेषां भूतानां 'सुखमिष्टं' 'अनिष्टं दुःखं' इत्येवंरूपमहिंसाफलकं, तद्यज्ञः—यजनमाराधनमस्य परमेश्वरस्येति समयज्ञ इति त्रेधा समयज्ञनाम व्याचष्टे—**सृष्टीत्यादिना**।

---

[1] स्थित्यन्तकालवित्–**पा.**

## स्तोत्रम्

# हविर्हरिः ।

### भाष्यम्

"समत्वमाराधनमच्युतस्य" (वि. पु. १-१७-९०) इति प्रह्लाद-वचनात् । यज्ञेषु हविर्भागं हरतीति—हविर्हरिः । "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" (भ. गी. ९-२४) इति भगवद्वचनात् ॥

अथवा हूयते हविषा [1] असाविति—हविः । "अबध्नन्

### विवृतिः

समदर्शनस्येश्वराराधनरूपत्वे पुराणवचनं पठति—समत्वमिति । हरति—स्वीकरोति, "हृञ् हरणे" अस्मात् "अच इः" (उणा. ५७८) इति इप्रत्ययः । हविषः—यज्ञेषु देवतोद्देशेन त्यज्यमानस्य चरुपुरोडाशादेः हरिः स्वीकर्ता तत्तद्देवतारूपेणेति हविर्हरिरित्याह—हविर्भागमिति । हविर्भोक्तृत्वे गीतावचनमाह—अहं हीति । सर्वेषां यज्ञानां तत्तद्देवतारूपेण अहमेव भोक्ता, प्रभुश्च स्वामी फलदाता चाहमेवेत्यर्थः । एवं वैयधिकरण्येनैकनामत्वेन व्याख्याय सामानाधिकरण्येनापि व्याचष्टे—अथवेति । हविषेति इत्थम्भावे तृतीया । हवीरूपेण हूयत इति हविरित्यर्थः । "हु दानादनयोः" इत्यस्मात् "अर्चि-शुचिहुसृपि" (उणा. २६५) इत्यादिना इसिप्रत्ययः । विराडात्मकः पुरुषः सङ्कल्पमययज्ञे देवैर्हविष्ट्वेन कल्पित इत्यर्थः । पुरुषस्य हविरात्मकत्वे श्रुतिमाह—अबध्नन्निति । पूर्वोक्तरीत्या देवशरीरेषूत्पन्नेषु

---

[1] स एवेति—पा.

भाष्यम्

पुरुषं पशुम्" (तै. आ. ३-१२) [1]इति श्रुतेः । स्मृतिमात्रेण पुंसां पापं, अविद्यातत्कार्यं संसारं वा हरतीति, यज्ञभागं हरतीति वा हरितवर्णत्वाद्वा–हरिः ।

हराम्यघं च स्मर्तॄणां हविर्भागं क्रतुष्वहम् ।
वर्णश्च मे हरिश्चेति तस्माद्धरिरहं स्मृतः ॥
(शान्ति–३४३-३९)

इति भगवद्वचनात् । सर्वैर्लक्षणैः–प्रमाणैः लक्षणं–ज्ञानं जायते

विवृतिः

उत्तरसृष्टिसिध्यर्थं तत्साधनत्वेन देवाः—प्रजापतिप्राणेन्द्रियरूपाः, यज्ञं तन्वानाः—मानसं यज्ञं कुर्वाणाः, तदानीं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासम्भवात् यः पुरुषो वैराजोऽस्ति तं पुरुषं पशुमबध्नन्। विराट्पुरुषमेव पशुत्वेन भावितवन्त इत्यर्थः। स्मृतिमात्रेण पुंसां पापानि हरतीति हरिः, हरितवर्णो वा हरिरिति व्युत्पादयति—**स्मृतिमात्रेणेति**। तथा च हविश्चासौ हरिश्चेति हविर्हरिरिति समासात्मकमेकं नामेति हरिनामव्युत्पादकं मोक्षधर्मवचनं पठति—**हराम्यघमिति**। अघस्य—पापस्य हरणाद्धरिरित्यर्थः। द्वितीयं निर्वचनमाह—[2]**हविर्भागमिति**। क्रतुषु हविर्भागं हरे: स्वीकारोमि। अतः हविर्भागहरणाद्धरिरित्यर्थः। हरितवर्णत्वाद्धरिरिति तृतीयं निर्वचनमाह—**वर्णश्चम इति**। सर्वेषां लक्षणानां–प्रमाणानां यल्लक्षणं–फलभूतं प्रमारूपं तत्र साधुः सर्वलक्षणलक्षण्यः। "तत्र साधुः" (पा. सू. ४-४-९८) इति सूत्रेण यत्प्रत्यय इति व्याचष्टे—**सर्वैर्लक्षणैरिति**। तत्र हेतु-

---

[1] इति हविष्ट्वं श्रूयते-**पा.** [2] हरेर्भागमिति-**पा.**

स्तोत्रम्

## सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥५२॥
## विक्षरो रोहितो मार्गः

भाष्यम्

यत्तद्विनिर्दिष्टं सर्वलक्षणलक्षणम्, तत्र साधुः—सर्वलक्षणलक्षण्यः। तस्यैव परमार्थत्वात्। लक्ष्मीरस्य वक्षसि नित्यं वसतीति—लक्ष्मीवान्। समितिं—युद्धं जयतीति—समितिञ्जयः ॥ ५२ ॥

विगतः क्षरः—नाशो यस्यासौ—विक्षरः। स्वच्छन्दतया रोहितां मूर्तिं मत्स्यमूर्तिं वा वहन्—रोहितः। मुमुक्षवः तं देवं मार्गयन्तीति—मार्गः। परमानन्दो येन प्राप्यते स मार्ग इति वा ॥

विवृतिः

माह—तस्यैवेति। परमार्थवस्तुविषयस्यैव [1]प्रमेयत्वात् ब्रह्मव्यतिरिक्तस्यातादृशत्वात् ब्रह्मण एव सर्वप्रमाणप्रमेयतेत्यर्थः। लक्ष्मीर्नित्यमस्मिन्नस्तीति नित्ययोगे मतुबित्याह—लक्ष्मीरिति। समितिं—युद्धं जयतीति विग्रहे "संज्ञायां भृतॄवृजिधारिसहितपिदमः" (पा. सू. ३-२-४६) इति खचि "अरुर्द्विषदजन्तस्य" (पा. सू. ६-३-६७) इति मुमि समितिञ्जय इत्याह—समितिमिति ॥५२॥

विक्षरनामभाष्यं स्पष्टम्। इच्छया रोहितवर्णां मूर्तिं वहन् रोहित इति व्याचष्टे—स्वच्छन्दतयेति। मार्ग्यते—विचार्यते मुमुक्षुभिरिति मार्गः। "मार्ग अन्वेषणे" इत्यस्मात्कर्मणि घञित्याह—मुमुक्षव इति।—मार्ग इव मार्गः, यथा मार्गः ग्रामादे[2]रिष्टार्थस्य प्राप्तिहेतुः एवं परमात्मापि श्रवणमननादिना परमानन्दरूपस्य मोक्षरूपेष्टार्थस्य प्राप्तिहेतुरिति गौण्यापि व्याचष्टे—परमानन्द इति ॥

[1] प्रमाणत्वात्—पा. [2] रिष्टस्य प्रा—पा.

स्तोत्रम्

# हेतुर्दामोदरः

भाष्यम्

**उपादानं निमित्तं च कारणं स एवेति—हेतुः। दमादिसाधनेन उदरा—उत्कृष्टा [1]मतिर्या, तया गम्यत इति—दामोदरः। "दमाद्दामो[2]दरो विभुः" (उद्योग. ६९-८) इति महाभारते। यशोदया दाम्ना उदरे बद्ध इति वा।**

विवृतिः

विश्वस्योपादानं निमित्तं च स एवेति हेतुरित्याह—**उपादानमिति।** दमः—बहिरिन्द्रियनिग्रहः "शान्तो दान्तः" (सुबाल. ९-१४) इति श्रुत्युक्तो ज्ञानसाधनविशेषः। तज्जन्यो दामः। "तस्येदम्" (पा. सू. ४-३-१२०) इत्यण्। "ऋ गतौ" इति धातोः भावे "ऋदोरप् (पा. सू. ३-३-५७) इत्यपि गुणे रपरत्वे च अरः—अवगतिः; गत्यर्थानां ज्ञानार्थत्वात्। तस्य विशेषणमुदिति। उत्कृष्ट इत्यर्थः। तथा च दामः—दमसाधनकः, उत्—उत्कृष्टः, अरः—अवगतिः साक्षात्काररूपा यस्येति, उदरा—उत्कृष्टा, गतिः—धूमादिगतिमपेक्ष्यार्चिरादिः दमादिसाधना, सा अस्य सगुणस्येति वा दामोदरनाम निर्वक्ति—**दमादीति।** उक्तनिरुक्तौ भारतवचनं पठति—**दमादिति।** दमादिसाधनकावगतिगम्य इत्यर्थः। दाम उदरे यस्य दामोदरः। "सप्तमी विशेषणे बहुव्रीहौ" (पा. सू. २-२-३५) इति ज्ञापकाद्वैयधिकरण्येऽपि बहुव्रीहिः। गड्वादित्वात्सप्तम्याः परनिपात इति प्रकारान्तरेण व्याचष्ट—**यशोदयेति।** तथा च विष्णुपुराणम्—

---

[1] गतिर्या—**पा.** [2] दरं विदुः—**पा.**

स्तोत्रम्

## सहः ।

भाष्यम्

[1]"तयोर्मध्यगतं बद्धं दाम्ना गाढं तयोदरे ॥
ततश्च दामोदरतां स ययौ दामबन्धनात् ।"
इति ब्रह्मपुराणे। (ब्र. पु. १८४-४१, ४२)

दामानि लोकनामानि तानि यस्योदारान्तरे ।
तेन दामोदरो देवः श्रीधरस्तु रमाश्रितः ॥

इति व्यासवचनाद्वा—दामोदरः। सहते—सर्वानभिभवति क्षमत इति वा-सहः ॥

विवृतिः

दाम्ना मध्ये ततो बध्द्वा बबन्ध तमुलूखले ।
कृष्णमक्लिष्टकर्मा[2]णमुवाचेदममर्षिता ॥ (वि.पु. ५-६-१४) इति ।

"तस्य वाक्तन्तिर्नामानि दामानि" इति श्रुतौ नाम्नां दामत्वोक्त्या लोकानां—लोक्यमानानां पदार्थानां यानि नामानि, लोके वा यानि नामानि तानि दामानि । तथा च दामानि—तत्तत्पदार्थप्रतिपादकनामानि उदरे अस्येति दामोदरः । अर्थविशिष्टशब्दप्रपञ्चस्य नामरूपात्मकस्य तदाश्रितत्वादित्यभिप्रेत्य श्लोकेनोक्तनाम्नोऽर्थान्तरमाह—**दामानीति** । सर्वान् सहते—अभिभवति ज्ञानैश्वर्यादिभिरिति, [3]सर्वान् भक्तापराधान् सहते—क्षमत इति वा सहः । "षह मर्षणे अभिभवे च" इत्यस्माद्धातोः पचाद्यजित्याह—**सर्वानिति** ॥

---

[1] तयोर्मध्यगतं—पा.  [2] णमाह चेदम-पा.  [3] सर्वभक्ताप—पा.

स्तोत्रम्

# महीधरो महाभागो वेगवान्

भाष्यम्

महीं गिरिरूपेण [1] धरतीति–महीधरः। "वनानि विष्णुर्गिरयो दिशश्च" (वि. पु. २-१२-३८) इति [2] विष्णुपुराणे। स्वेच्छया धारयन् देहं महान्ति–उत्कृष्टानि भोजनानि भागजन्यानि भुङ्क्ते इति—महाभागः। महान् भागः–भाग्यमस्यावतारेष्विति वा—महाभागः। वेगः–जवः तद्वान्–वेगवान्।

विवृतिः

धरतीति धरः। मह्या धरो महीधरो गिरिरूपेणेत्याह—**महीमिति**। इत्थं च "विश्वबाहुर्महीधरः" (वि. स. ४७) इत्यनेनापौनरुक्त्यं दर्शितम्। गिरीणां विभूतित्वे विष्णुपुराणवचनं पठति—**वनानीति**। भागाः–भजनीयाः सेवनीया दधिपायसादिहवीरूपाः, ते महान्तः–प्रकृष्टाः यस्य स्वेच्छया गोवर्धनाभिधं मूर्तिविशेषं वहतः श्रीकृष्णस्य स तथेति महाभागनाम व्याचष्टे–**स्वेच्छयेति**। तथा च गोवर्धनमहे विष्णुपुराणम्–

गिरिमूर्धनि कृष्णोऽपि शैलोऽहमिति मूर्तिमान्।
बुभुजेऽन्नं बहुतरं [3]गोपवर्याहृतं द्विज॥
[4]तेनैव कृष्णरूपेण गोपैस्सह गिरेश्शिरः।
अधिरुह्यार्चयामास द्वितीयामात्मनस्तनुम्॥ इति॥

(वि. पु. ५-११-४७, ४८)

प्रकृष्टो वेगोऽस्यास्तीति वेगवान्। "तदस्यास्त्यस्मिन्निति मतुप्" (पा. सू. ५-२-९४) इति अतिशायने मतुबित्याह—**वेग इति**।

---

[1] धत्त इति–**पा.** [2] पराशरोक्तेः–**पा.** [3] गोपवर्यकृतं–**पा.** [4] तेन कृष्णस्वरूपेण–**पा.** स्वेनैव कृष्णो रूपेण–**पा.**

स्तोत्रम्

# अमिताशनः ॥ ५३ ॥

# उद्भवः

भाष्यम्

**" अनेजदेकं मनसो जवीयः " (ईश. ४) इति श्रुतेः। संहारसमये विश्वमश्नातीति—अमिताशनः ॥ ५३ ॥**

**प्रपञ्चोत्पत्त्युपादानकारणत्वात्—उद्भवः। उद्गतो भवात्-**

विवृतिः

वेगवत्त्वे श्रुतिमाह—**अनेजदिति** । अनेजत्—अचलं, एकम्—अद्वितीयं, मनसोऽप्यतिशयेन जववत्—जवीयः। अनेजत्त्वस्य जवीयस्त्वस्य च विरोधेनैकत्रानुपपत्तौ एकमौपाधिकमपरं पारमार्थिकमिति व्यवस्था। तदुपपादनीयम्। तत्र सर्वव्यापिन आत्मनश्चलनं न स्वाभाविकमित्यचलत्वं स्वाभाविकम्। मनोरूपोपाधिमनुसृत्य मनसि गच्छति सति तदग्रे अयमप्यात्मा गच्छतीव प्रतीयते। यथा द्वयोः पुरुषयोरेकदेशस्थितयोः धावने प्रवृत्ते योऽतिशयेन जववान् सोऽग्रे गत्वा तिष्ठति, एवमौपाधिकजवीयस्त्वमात्मन इति श्रुत्यर्थः। अमितं—अपरिमितं कृत्स्नं जगत्, अशनं-संहार्यमस्येति, " यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः " (कठ. १-२-२५) इत्यादिश्रुतेरमिताशन इत्याह—**संहारेति** ॥ ५३ ॥

उद्भवत्यस्मादित्युद्भवः। उत्पूर्वाद्भूधातोः " ऋदोरप् " (पा. सू. ३-३-५७) इत्यपादाने अप्प्रत्यय इति व्याचष्टे—**प्रपञ्चोत्पत्तीति**। प्रपञ्चोपादनत्वादित्यर्थः। भवः—संसारः, तस्मादुद्गतः, " निरादयः क्रान्ताद्यर्थे पञ्चम्या " (वा. ७८०) इति तत्पुरुषः। उद्भवः—संसारास्पृष्ट इत्यर्थान्तरमाह—**उद्गत इति**। सर्गकाले प्रधानपुरुषौ प्रविश्य

स्तोत्रम्

## क्षोभणः

भाष्यम्

संसारादिति वा । सर्गकाले प्रकृतिं पुरुषं च प्रविश्य क्षोभयामासेति—क्षोभणः ।

[1]प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास भगवान् सर्गकाले व्ययाव्ययौ ॥

(वि. पु. १-२-२९)

इति विष्णुपुराणे । यतो दीव्यति—क्रीडति सर्गादिभिः,

विवृतिः

क्षोभयामास—सृष्ट्युन्मुखौ चकारेति क्षोभयतेर्बाहुलकात् कर्तरि ल्युट्, औणादिको युज्वेत्याह—सर्गकाल इति । तथा च विष्णुपुराणम्—

[2]प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥

(वि. पु. १-२-२९) इति ।

सर्गकाले सम्प्राप्ते हरिः व्ययाव्ययौ—परिणाम्यपरिणा[3]मिनौ उपादाननिमित्तभूतौ प्रलयकाले वियुक्ततया आत्मनि तूष्णीं स्थितौ स्वांशभूतौ प्रधानपुरुषौ स्वकालशक्त्योद्बोध्द्ध्य इच्छाशक्त्या संयोज्य सृष्ट्युन्मुखौ चकारेत्यर्थः । दीव्यतीति देवः । दिवेः क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वर्थेषु वर्तमानात्पचाद्याजित्यभिप्रेत्य व्याचष्टे—दीव्यतीति । दीव्यति यतस्तस्माद्देव इत्युत्तरेण सम्बन्धः । क्रीडार्थं दर्शयति—क्रीडति सर्गादिभिरिति । सर्गादिरूपां क्रीडां

---

[1] प्रकृतिं पुरुषं चैव—पा. [2] प्रधानं पुरुषं चापि—पा. [3] मिनोरुपादन—पा.

### स्तोत्रम्

## देवः

### भाष्यम्

**विजिगीषते सुरारीन् , व्यवहरति सर्वभूतेषु, आत्मतया द्योतते, स्तूयते स्तुत्यैः, (काम्यते) सर्वत्र गच्छति तस्मात्–देवः। "एको देवः" (श्वे. ६-११) इति मन्त्रवर्णात् । श्रीः–विभूतिर्यस्य गर्भे-**

### विवृतिः

करोतीत्यर्थः । विजिगीषते शत्रून्, व्यवहरति सर्वभूतेष्वात्मतया, *द्योतत इत्युत्तरेण वा अन्वयः । सर्वेषु भूतेषु प्रत्यगात्मतया प्रकाशत इत्यर्थः । **स्तूयते स्तुत्यैरिति** । सर्वस्तुत्यैर्ब्रह्मादिभिरपि स्तूयत इत्यर्थः । अनेन स्तुत्यर्थे दीव्यते स्तूयते इति दिवेः कर्मणि घञि निष्पन्नो देवशब्द इति दर्शितम् । **सर्वत्र गच्छतीति**। सङ्कोचकप्रमाणाभावेन दीव्यति–सर्वत्र गच्छतीति व्यापकत्वलाभ इति भावः। देवनाम्नः श्रुतिप्रसिद्धिं दर्शयति—**एक इति** । श्रीः–विभूतिः ।

"लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु ।
उपकरणवेषरचनाविधासु च श्रीरिति प्रथिता" ॥ (व्याडिः)

इत्यभिधानकोशात् । तथा च श्रीर्विभूतिर्जगद्रूपा यस्य गर्भे–उदरान्तरे विराडात्मन इति स तथा ।

"गर्भोऽपवरकेऽन्नेऽग्नौ सुते पनसकण्टके।
कुक्षौ कुक्षिस्थजन्तौ च"

इति कोशात् श्रीगर्भः, गड्वादित्वात् सप्तम्याः परनिपात इत्याह—**श्रीरिति** । परमः–उत्कृष्टः ईश्वरेभ्यः–हिरण्यगर्भादिभ्यः, स चासावी-

* आत्मतयेत्यस्येत्यादिः ।

स्तोत्रम्

## श्रीगर्भः परमेश्वरः ।

## करणं

भाष्यम्

उदरान्तरे जगद्रूपा स्थिता सः–श्रीगर्भः । परमश्चासौ ईशनशीलश्चेति–परमेश्वरः । "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" (भ. गी. १३-२७) इति भगवद्वचनात् ॥

जगदुत्पत्तौ साधकतमं–करणम् । [1]उपादानं निमित्तं

विवृतिः

श्वरश्चेति व्याचष्टे— परमश्चेति । एतन्नाम्नो भगवद्गीताप्रसिद्धिं दर्शयति —सममिति ॥

"साधकतमं करणम्" (पा. सू. १-४-४२) प्रकृष्टं साधकं साधकतमम् । प्रकर्षश्च व्यापारवत्त्वं फलायोगव्यवच्छेदो वा । तथा च कार्योत्पत्तावेतादृशं प्रकृष्टोपकारकं करणमिति पाणिनिसूत्रानुसारेण करणनाम व्युत्पादयति---जगदुत्पत्ताविति । जगदुत्पत्तौ यत्करणं तद्रूपो विष्णुरित्यर्थः । उपादानं कर्तृभिन्नं निमित्तं च कारणम्, कर्तुः पृथगुपादानात् । तथा च तदुभयात्मकत्वात्कारणमित्युच्यत इत्याह— उपादानमिति । स्वतन्त्रः कर्ता । स चेतरकारकाप्रयोज्यत्वे सति सकलप्रयोज्यकारकप्रयोक्तृरूप इति कर्तृनाम व्याचष्टे—

---

[1] कारणं उपादानं निमित्तं च–**पा.** उपादानं कारणम् । निमित्तं कर्ता–**पा.**

स्तोत्रम्

## कारणं कर्ता विकर्ता गहनो गुहः ॥५४॥

## व्यवसायः

भाष्यम्

**च–कारणम् । कर्ता–स्वतन्त्रः । विचित्रं भुवनं कृतवान् इति–विकर्ता । *(स एव भगवान् विष्णुः)। स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यत इति—गहनः । गूहते–संवृणोति स्वरूपादि निजमाययेति–गुहः । "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" (भ. गी. ७-२५) इति भगवद्वचनात् ॥ ५४ ॥**

**[1]संविन्मात्रस्वरूपत्वात्—व्यवसायः । अस्मिन् व्यव-**

विवृतिः

**कर्ता स्वतन्त्र इति ।** विशब्दो वैचित्र्यवचनः । विचित्रं भुवनं स्वयमेव क्रियत इति विपूर्वात्कृञः कर्मकर्तरि तृच्प्रत्यय इत्याह—**विचित्रं भुवनं कृतवानिति । स एवेति ।** यः करणादि कर्त्रन्तकारणस्वरूपः स एव भगवान् विचित्रलोकात्मककार्यस्वरूपोपीत्यर्थः । "कलिलं गहनं समे" (नाम ३-१-८५) इत्यमरकोशाद्दुर्ज्ञेयतावचनो गहनशब्दः । तथा च तदीयं स्वरूपं सामर्थ्यं चेष्टितं च बुध्या ज्ञातुं न शक्यत इति गहननाम व्याचष्टे—**स्वरूपमिति ।** गूहते–संवृणोति स्वरूपादीनि निजमाययेति गुहः । "गुहू संवरणे" अस्मादिगुपधलक्षणः क इति व्याचष्टे—**गूहत इति ॥ ५४ ॥**

व्यवसायशब्दो ज्ञानवाची, ज्ञानस्वरूपत्वाद्व्यवसाय इत्याह—**संविन्मात्रेति ।** व्यवतिष्ठते सर्वं जगदसाङ्कर्येणात्रेति स्थाधातोरधिकरणे ल्युडित्याह—**अस्मिन्निति ।** व्यवस्थापयति–विभजति लोक-

---

* अयं धनुरङ्कितो भागः केषुचित्कोशेषु न दृश्यते । [1] सच्चिन्मात्र–**पा.**

स्तोत्रम्

## व्यवस्थानः

भाष्यम्

**स्थितिः सर्वस्येति-व्यवस्थानः। लोकपालाद्यधिकारजरायुजाण्डजस्वेदजोद्भिज्जब्राह्मणक्षत्रियवैश्यशूद्रावान्तरवर्णब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्न्यासलक्षणाश्रमतद्धर्मादिकान् विभज्य करोतीति वा-व्यवस्थानः। "कृत्यल्युटो बहुलम्" (पा. सू. ३-३-११३)**

विवृतिः

पालाद्यधिकारादीनिति अन्तर्भावितण्यर्थाद्व्यवपूर्वात्तिष्ठतेर्बाहुलकात्कर्तरि ल्युडित्यभिप्रेत्य निर्वचनान्तरमाह—**लोकपालेत्यादिना**।

"अपामधीशं वरुणं धनानां
राज्ञां प्रभुं वैश्रवणं च तद्वत्।
चकार शक्रं मरुतामधीशं
यमं पितॄणां"

इत्यादिपुराणोक्तरीत्या लोकपालाद्यधिकारविभागः। मनुष्यादीनां जरायुजत्वादिविभागः। सत्वगुणः, सत्वोपसर्जनं रजः, तमउपसर्जनं रजः, रजउपसर्जनं तम इति ब्राह्मणादिवर्णानां गुणभेदाद्विभागः। अवान्तरवर्णस्तु—षडनुलोमजाः। षट् प्रतिलोमजाः। सङ्कीर्णसङ्करास्तु—बहवः। एतेषां योनितो विभागः। तथा च याज्ञवल्क्यः—

"विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥"

(या. स्मृ. अ. १. श्लो. ९१, ९२)

## विवृतिः

**अथ प्रतिलोमजाः—**

"ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥"

(या. स्मृ. अ. १ श्लो. ९३, ९४)

**अथ सङ्कीर्णसङ्क[1]रजातिः—**

"माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्त[2]श्च विज्ञेयाः प्रतिलोमानुलोमजाः ॥" इति

(या. स्मृ. अ. १ श्लो. ९५)

ब्रह्मचर्यदीनामाश्रमाणां लक्षणतो विभागः—

"अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥" इति

---

[1] रजः–पा.　　　[2] न्तस्तु–पा.

विवृतिः

चतुर्णां वर्णानां धर्मविभागः भगवताप्युक्तः—

शमो दमस्तपः [1]शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥

(भ. गी. १८-४२-४४) इति ॥

तत्र ब्राह्मणस्य स्वाभाविकसत्वकृता धर्माः शमादय इति बोध्यम् । अवान्तरवर्णानां धर्मविभागस्तु—

सूतानामश्वसारथ्यमम्बष्ठानां [2]चिकित्सितम् ।
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥
मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥
क्षत्त्रुग्रपुल्कसानां तु बिलौकोवधबन्धनम् ।

(मनु. १०.४७-४९)

इत्यादिना मनुनोक्ताः । चिकित्सितं—भिषक्क्रिया । स्त्रीकार्यं—अन्तःपुररक्षा । वणिक्पथः—नौयायित्वम् । त्वष्टिः—काष्ठतक्षणम् । *चुञ्चुमद्गू—वैदेहीमागध्योर्ब्राह्मणजौ । बिलौकोवधबन्धनम्—बिलौकाः गोधाकूर्मादीत्यादि द्रष्टव्यम् । आदिशब्दादन्येऽपि विभागाः शास्त्रोक्ता द्रष्टव्याः । तान् करोतीति व्यवस्थान इत्यर्थः । जातिवर्णा-

---

[1] शौचमित्यादिना—**पा.** [2] चिकित्सनम्—**पा.**

* अत्र "चुञ्चुः मद्गुश्च वैदेहकवन्दिस्त्रियोर्ब्राह्मणेन जातौ बोधायनेनोक्तौ बोद्धव्यौ" इति कुल्लूकभट्टीयमनुसन्धेयम्.

स्तोत्रम्

## संस्थानः स्थानदो ध्रुवः ।
## परर्द्धिः

भाष्यम्

इति बहुलग्रहणात्कर्तरि ल्युट्प्रत्ययः । [1]अत्र भूतानां संस्थितिः प्रलयात्मिका, समीचीनं स्थानमस्येति वा–संस्थानः । ध्रुवादीनां कर्मानुरूपं स्थानं ददातीति–स्थानदः । अविनाशित्वात्—ध्रुवः ॥

परा ऋद्धिः–विभूतिरस्येति–परार्द्धिः । (*परा मा–शोभा

विवृतिः

श्रमधर्मादिकान् विभज्य करोतीति वा व्यवस्थान इति पाठान्तरम् । उक्त एवास्यार्थः । पूर्वं सर्वाधिष्ठानत्वमुक्तम् । अधुना विभागहेतुत्वमुच्यत इति भेदः ॥

सन्तिष्ठते–लीयते जगदत्र प्रलयकाल इत्यधिकरणे ल्युट् । समीचीनं स्थानं क्षीरोदधि-सूर्यमण्डल-योगिहृदयादिरूपमस्येति वा संस्थान इत्यर्थद्वयमाह—अत्रेति । कर्मानुरूपं स्थानं ददातीति स्थानदः । "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यय इत्याह—ध्रुवादीनामिति । ध्रुवति—स्थिरो भवति अविनाशी भवतीति "ध्रु गतिस्थैर्ययोः" पचाद्यच् । कुटादित्वेन ङित्वाद्गुणाभावे उवङित्याह—अविनाशित्वादिति ॥

परा–प्रकृष्टा ऋद्धिः–विभूतिरस्येत्याह—परेति । स्पष्टता निस्सन्दिग्धं भातीति व्यवहारगोचरता । सा च घटादीनां विषये-

* अयं धनुरङ्कितोंऽशः केषुचित्पुस्तकेषु न दृश्यते. [1] यत्र–**पा.**

## स्तोत्रम्

# परमस्पष्टस्तुष्टः पुष्टः

## भाष्यम्

अस्येति–परमः, सर्वोत्कृष्टो वा।) अनन्याधीन[1]सिद्धित्वात्, [2]संविदात्मतया स्पष्टः–परमस्पष्टः। [3]परमानन्दैकरूपत्वात्–तुष्टः। [4]सर्वसम्पूर्णत्वात्–पुष्टः। ईक्षणं–दर्शनं यस्य शुभं–शुभकरं नराणाम्, मुमुक्षूणां मोक्षदं, [5]भोगार्थिनां भोगदं,

## विवृतिः

न्द्रियसन्निकर्षजन्यवृत्तिदशायां प्रमात्रभेदाद्भवति। परमात्मनस्तु नित्यशुद्धप्रकाशरूपत्वात्सार्वदिकीत्यभिप्रेत्य हेतुमाह—**अनन्याधीनसिद्धित्वादिति**। परागर्थेषु स्पष्टतायाः आत्मप्रकाशाधीनत्वेन कादाचित्कत्वान्न परमत्वमिति भावः। तुष्यतीति तुष्टः। "तुष प्रीतौ" अस्मात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः। स्वप्रकाशपरमानन्दरूपत्वाद्वैषयिकानन्दे नित्यं सञ्जातालम्प्रत्ययः तुष्टः। तुष्ट्यर्थप्रतीतेरानन्दरूपत्वात्परमानन्दस्वरूपो वा तुष्ट इत्याह—**परमानन्देति**। सर्वदा कामैर्गुणैश्च सर्वैः सम्पूर्णत्वात्पुष्ट इत्याह—**सर्वेति**॥

शुभं–शुभकरं अभ्युदयनिःश्रेयसहेतुभूतं, ईक्षणं–दर्शनमस्य सगुणस्य निर्गुणस्य वेति शुभेक्षण इत्याह—**ईक्षणमिति**। शुभपदं विवृण्वन् ईक्षणमेव विशिनष्टि—**मोक्षदमिति**। **भोगदमिति**। इदं

---

[1] सिद्धत्वात्–**पा.** [2] संविदात्मत्वात्–पा. [3] परानन्दैक–**पा.** [4] पूर्णत्वात्–**पा.** [5] भोगकाङ्क्षिणां- **पा.**

## स्तोत्रम्

# शुभेक्षणः ॥ ५५ ॥

# रामः

### भाष्यम्

पापिनां पावनं, सर्वसन्देहविच्छेदकारणं, हृदयग्रन्थेर्विच्छेदकरं, सर्वकर्मणां क्षपणं, अविद्यायाश्च निवर्तकं सः–शुभेक्षणः। "भिद्यते हृदयग्रन्थिः" (मु. २-८) इत्यादिश्रुतेः ॥ ५५ ॥

नित्यानन्दलक्षणेऽस्मिन् योगिनो रमन्त इति-रामः।

"* रमन्ते योगिनो[1]ऽनन्ते नित्यानन्दे चिदात्मनि।
इति रामपदे[2]नैतत्परं ब्रह्माभिधीयते ॥

इति पद्मपुराणे। स्वेच्छया रमणीयं वपुर्वहन् वा दाशरथी-रामः।

### विवृतिः

च सगुणेक्षणविषयम्। मोक्षप्रदानप्रकारमेव विशयदति—**सर्वसन्देहेति**। इदं च "छिद्यन्ते सर्वसंशयाः" (मुण्ड. २-२-८) इति श्रुतिमाश्रित्य विशेषणमुक्तम्। "भिद्यते हृदयग्रन्थिः" (मुण्ड.२-२-८) इति श्रुतिमाश्रित्य विशिनष्टि-**हृदयेति**। "क्षीयन्ते चास्य कर्माणि" (मुण्ड. २-२-८) इत्यंशमाश्रित्य विशिनष्टि—**सर्वकर्मणामिति**। "तरति शोकमात्मवित्" (छा. ७-१-३) इति श्रुतिमाश्रित्याह—**अविद्यायाश्चेति** ॥ ५५ ॥

रमन्ते सत्यज्ञानानन्दलक्षणेऽस्मिन् योगिन इति अधिकरणे पाभित्याह—**रमन्त इति**। अभिरामवपुष्ट्वाद्राम इत्याविर्भावपरतया अर्थान्तरमाह—**स्वेच्छयेति**। विरमन्ति–प्रलीयन्तेऽस्मिन् प्राणिनः

---

* पद्यमिदं रामतापिन्यां (रामता १-६) दृश्यते.

[1] यस्मिन्-**पा.** [2]नासौ परं–**पा.**

स्तोत्रम्

## विरामो [1]विरतो मार्गः

भाष्यम्

**विरामः— अवसानं प्राणिनामस्मिन्निति—विरामः । विगतं [2]रतमस्य विषयसेवायामिति—[3]विरतः* । यं विदित्वा अमृतत्वाय कल्पन्ते योगिनो मुमुक्षवः स एव पन्थाः—मार्गः। "नान्यः पन्था विद्यतेऽयनाय" (तै. आ. ३-१३) इति श्रुतेः। मार्गेण**

विवृतिः

प्रलय इति विपूर्वाद्रमेरधिकरणे [4]घञित्याह—**विरामोऽवसानमिति** । विगतं रतं—रतिः—आसक्तिर्विषयसेवायामस्येत्याह—**विगतमिति** । विरज इति वा पाठः । तत्र रजश्शब्देन रागः प्रतिपाद्यते । विगतं रजो रागोऽस्य विषयसेवायामिति विरजः । ब्रह्मेति विशेष्यं नपुंसकत्वादिति द्रष्टव्यम् ॥

मार्गो मोक्षप्राप्त्युपायभूतं ज्ञानं "एष पन्थाः" (बृह. ४-४-१, जाबाल. ५) इत्यादौ तत्पर्यायस्य तत्र प्रयोगात् । यद्वा मार्ज्यते-शोध्यते जीवगतमविद्यादिमलमनेनेति मार्गः । "मृजूष् शुद्धौ" अस्मात् कर्मणि घञ् । **यं विदित्वेति** । तथा च मोक्षप्राप्त्युपायभूतं यज्ज्ञानं तद्रूप इत्यर्थः । तत्र श्रुतिमाह—**नान्य इति** । वाक्य-जन्यसाक्षात्कारादन्यो मार्गः—उपायः । अयनाय—मोक्षप्राप्तये नेत्यर्थः । "णीञ् प्रापणे" अस्मात् "अचो यत्" (पा. सू. ३-१-९७)

---

* अत्र "विरजः" इति पाठे "विरज परः आकाशात्" (बृ. उ. ४-४-२०) इति श्रुतेः । इति पाठो दृश्यते.

[1] "विरजो"—**पा.** [2] रजो यस्य—**पा.** [3] विरजः—**पा.** [4] ल्युडित्याह—**पा.**

## स्तोत्रम्

# नेयो नयोऽनयः ।

## भाष्यम्

[1]सम्यग्ज्ञानेन जीवः परमात्मतया नीयत इति-नेयः। नयतीति-नयः-नेता । मार्गो नेयो नय इति त्रिरूपः परिकल्प्यते । नास्य नेता विद्यत इति—अनयः ॥ इति चतुर्थशतकं विवृतम् ॥

इति चतुर्थशतकभाष्यम्

---

## विवृतिः

इति यत्प्रत्ययः। सम्यग्ज्ञानरूपेण मार्गेण जीवो ब्रह्मतां नीयत इति तद्रूपत्वान्नेय इत्याह—**सम्यग्ज्ञानेनेति** । मोक्षस्य प्राप्तुः प्रापयितापि स एवेत्याह—**नयतीति** । नयतेः पचाद्यच् । प्राप्तृप्रापयितृप्राप्तिसाधनरूपेण त्रैरूप्यं परमात्मन इत्याह—**मार्ग इत्यादिना** । न विद्यते नयः नेता अस्येति-अनयः । जीवस्य तदधीनतया तन्नेतृत्वाभावादित्याह—**नास्येति** ॥

इति चतुर्थशतक[2]विवृतिः

---

[1] सम्यग्दर्शनेन-**पा.** [2] भाष्यं व्याख्यातम्-**पा.**

## स्तोत्रम्

**वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥५६॥**

## अथ पञ्चमशतकभाष्यम्

**विक्रमशालित्वात्–वीरः । शक्तिमतां [1]विरिञ्चयादी–नामपि शक्तिमत्त्वात्–शक्तिमतां श्रेष्ठः । सर्वभूतानां धारणात्–धर्मः । " अणुरेष धर्मः " (कठ. उ. १-१-२१) इति श्रुतेः । धर्मैरा-राध्यत इति वा–धर्मः । श्रुतयः स्मृतयश्च [2]यस्याज्ञाभूताः स एव सर्वधर्मविदामुत्तम इति—धर्मविदुत्तमः ॥ ५६ ॥**

## अथ पञ्चमशतकविवृतिः

वीरयतीति वीरः । " वीर विक्रान्तौ " पचाद्यच् । वीरो विक्रमशालीत्याह—**विक्रमेति** । शक्तिमतामिति निर्धारणे षष्ठी । परिमितशक्तीनां ब्रह्मादीनां मध्ये अपरिमितशक्तित्वात शक्तिमतां श्रेष्ठ इत्याह—**शक्तिमतामिति** । सर्वाणि भूतानि धारयतीति धर्मः । " धृञ् धारणे " " अर्तिस्तुसुहुसृधु " (उ. १३७) इत्यादिना मन्प्रत्यय इति निर्वक्ति—**धारणादिति** । धर्मनाम्नः श्रुतिप्रसिद्धिमाह—**अणुरेष इति** । यौगिकतया धर्मनाम व्याख्याय श्रौतैः स्मार्तैः सात्वततन्त्रोक्तैश्च धर्मैराराध्यत्वात् धर्म इति लक्षणया वृत्त्या व्याचष्टे—**धर्मैरिति** ॥

धर्मं विदन्तीति धर्मविदः । तेषां सर्वेषामुत्तमो धर्मविदुत्तमः । पुरुषोत्तमनामवत्समास इति व्याचष्टे –**श्रुतय इति** । " वेदोऽखिलो

---

[1] विरोचनादीनामपि–**पा.** [2] येषां ब्रह्मादीनां ज्ञानभूतास्तेषामुत्तम -**पा.**

## स्तोत्रम्

# वैकुण्ठः

### भाष्यम्

**विविधा कुण्ठा–[1]गतेः प्रतिहतिः विकुण्ठा ; विकुण्ठायाः [2]कर्तेति—वैकुण्ठः। जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं [3]प्रतिबध्नातीति।**

**"मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना।**
**वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम"॥ (३५२-१५)**

**इति शान्तिपर्वणि। सर्वस्मात्पुरा सदनात् सर्वपापस्य साद-**

### विवृतिः

धर्ममूलम्। तद्विदां च स्मृतिशीले" (गौ. ध. सू. १-१, २) इति स्मृत्या श्रुतिस्मृत्योर्धर्मप्रमाणत्वावगमात्। "श्रुतिस्मृती ममैवाज्ञे" इति तयोः परमेश्वराज्ञारूपत्वावगमात्तादृशश्रुतिस्मृतिजन्यधर्मज्ञानवद्भ्यस्तादृशस्मृतिप्रणेतुः परमेश्वरस्य अधिकधर्मविषयविज्ञानवत्त्वाद्धर्मविदामुत्तमत्वमिति भावः॥ ५६॥

कुण्ठनं-कुण्ठा-गतिप्रतिहतिः। "कुठि गतिप्रतिघाते" अस्मात् "षिद्भिदादिभ्योऽङ्" (पा. सू. ३-३-१०४) इत्यङ्प्रत्ययः। विविधा कुण्ठा विकुण्ठा, तस्याः कर्ता। "तस्येदम्" (पा. सू. ४-३-१२०) इत्यणिति वैकुण्ठनाम निर्वक्ति—**विविधेति**। एतदेवोपपादयति—**जगदारम्भ इति**। भूतानां परस्परसंश्लेषणेन गतिप्रतिबन्धकरणात् कुठिधात्वर्थलाभ इति भावः। एतन्नामनिरुक्तिपरं मोक्षधर्मस्थं वचनमाह—**मयेति**। भूमिरद्भिः सार्धं मया संश्लेषिता-

---

[1] गतिप्रतिहतिः–**पा.** [2] कर्तेति वा विकुण्ठाया अपत्यमिति वै–**पा.**
[3] प्रत्यबध्नादिति–**पा.**

स्तोत्रम्

## पुरुषः

भाष्यम्

नाद्वा–पुरुषः । "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन

विवृतिः

परस्पराधारेण स्थापिता, पृथिव्यादीनि भूतानि उत्तरैर्दशगुणैः विकुण्ठयामीति विकुण्ठः । विकुण्ठ एव वैकुण्ठ इति, विकुण्ठायाः कर्तेति वा वैकुण्ठ इति श्लोकार्थः । विकुण्ठायाः अयं वैकुण्ठः ।

"[1]चाक्षुषे चान्तरे देवो वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठैर्दैवतैः सह "।

(वि. पु. ३-२-४१)

इति विष्णुपुराणान्निर्वचनान्तरमपि द्रष्टव्यम् ॥

श्रुत्यनुसारेण पुरुषनाम व्युत्पादयितुं तन्निरुक्तिपरां श्रुतिं पठति —स यदिति । सः–प्रजापतिः **यत्**–यस्मात्–**पूर्वोऽस्मात्सर्वस्मात्** ज्ञानकर्मसमुच्चयेन प्रजापतिपदेच्छुः [2]ज्ञानकर्मसमुच्चयोत्कर्षेण प्रथमस्सन्, **सर्वान् पाप्मनः**–निखिलान् प्रजापतिपदप्राप्तिप्रतिबन्धहेतून् अशास्त्रियज्ञानकर्मादीन्, **औषत्**–अदहत्, **तस्मात्**–ततः, **पुरुषः**–पुरुषनामधेय इति श्रुत्यर्थः । अस्मात् सर्वस्मात् पूर्वं औषत्–अदहत् पाप्मन इति पुरुषः। "उष दाहे" अस्मादिगुपधलक्षणः कः । पूर्वशब्दस्य पुराशब्दस्य वा पुरित्यादेशः, पृषोदरादित्वादिति भावः ॥

पुरि–शरीरे शेत इति पुरुषः । "अन्येष्वपि दृश्यते" (पा. सू. ३-२-१०१) इति सूत्रे अपिशब्दः सर्वोपाधिव्यभिचारार्थ इति

---

[1] चाक्षुषस्यान्तरे-**पा.** [2] गुणान्निखिलान् ज्ञान–**पा ?**

## स्तोत्रम्

# प्राणः

### भाष्यम्

**औषत्तस्मात्पुरुषः" (बृह. १-४-१) इति श्रुतेः। पुरि शयनाद्वा– पुरुषः। "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः" (बृह. २-५-१८) इति श्रुतेः। प्राणिति क्षेत्रज्ञरूपेण प्राणात्मना [1]चेष्टकत्वात् वा प्राणः। "चेष्टां करोति [2]श्वसनस्वरूपी" इति**

### विवृतिः

व्याख्यानात् शीङो डप्रत्ययः सप्तम्यन्त उपपद इति। पूर्शब्दस्य पुरुभावः, शीङः शकारस्य षत्वं च पृषोदरादित्वादिति साधनिकाम- भिप्रेत्य श्रुत्यन्तरानुसारेण पुरुषनाम्नो निर्वचनान्तरमाह—**पुरि शयनाद्वेति**। एतन्नामनिरुक्तिपरां श्रुतिं पठति–**स वा इति**। **स वै**– स एव **अयं**–आत्मा सृष्ट्यादिकर्तृतया प्रकृतः, **सर्वासु पूर्षु**–सर्वशरीरेषु, **पुरिशय** इति व्युत्पत्त्या पुरिशयः सन् पुरुष इत्युच्यत इत्यर्थः॥

प्राणिति क्षेत्रज्ञरूपेण, प्रपूर्वादनितेः पचाद्यच्। "अनितेः" (पा. सू. ८-४-१९) इति णत्वं चेत्यभिप्रेत्य प्राणनाम निर्वक्ति— **प्राणितीति**। क्षेत्रज्ञरूपेण प्राणितीति प्राण इति योजना। क्षेत्रज्ञस्य प्राणितृत्वमेवोपपादयति—**प्राणात्मना चेष्टकत्वादिति**॥

व्याख्यानान्तरमाह—**प्राणेति**। क्रियाशक्तिमत्प्राणतादा- त्म्याध्यासेन प्राणनव्यापारवत्त्वं क्षेत्रज्ञस्येत्यर्थः। प्राणस्य क्रियावत्त्वे विष्णुपुराणवचनमाह—**चेष्टामिति**। "प्राणात्मना चेष्टयन् वा प्राणः" इति पाठे प्राणवायुरूपेण सर्वं जगत् प्राणयति–चेष्टयतीति प्राण इति योज्यम्। तत्र विष्णुपुराणमाह—**चेष्टामिति**। प्राणान्

---

[1] चेष्टकत्वात् प्रा–**पा.** [2] श्वसनरूपेण–**पा.**

स्तोत्रम्

## प्राणदः प्रणवः

भाष्यम्

**विष्णुपुराणे । सृष्ट्यादौ सर्वप्राणिनामन्तर्यामितया प्राणान् ददातीति प्राणदः। द्यति–खण्डयति प्राणिनां प्राणान्[1] प्रलय-काल इति वा–प्राणदः। प्रणौतीति–प्रणवः। "तस्मादोमिति प्रणौति" इति श्रुतेः। प्रणम्यते इति वा–प्रणवः।**

विवृतिः

द्यति–**खण्डयति** प्रलयकाल इति प्राणोपपदात् "दो अवखण्डने" इत्यस्मात् "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कः। "ईशानः प्राणदः" (वि. स. २१) इत्यत्र कालात्मना शरीरात् प्राणवियोजनं खण्डनमुक्तम्। अत्र तु प्रलयकाले प्राणानां संहर्तृत्वं खण्डनमुच्यत इत्यपौनरुक्त्यमभिप्रेत्य प्राणदनाम निर्वक्ति—**खण्डय-तीति**। प्रणौति–प्रकर्षेण स्तौति परमेश्वरमिति **प्रणवः**। "णु स्तुतौ" पचाद्यच्। "उपसर्गात्" (पा. सू. ८-४-१४) इति णत्वम्। प्रणम्यते देवैरिति वा **प्रणवः**। नमेर्वा कर्मणि घञ्। संज्ञापूर्वक-त्वद्वृद्ध्यभावः। पृषोदरादित्वान्मस्य व इति [2]द्वितीयं निर्वक्ति—**प्रणौतीति**। तत्राद्यनिरुक्तावार्षश्रुतिमाह—**तस्मादिति**। तस्मा-त्सर्वसारत्वाद्धोता प्रयोगमध्ये ओमिति प्रणवं करोतीति श्रुत्यर्थः।

---

[1] प्रलयादिष्विति प्राणदः–**पा.** [2] द्विधा–**पा.**

स्तोत्रम्

# पृथुः ।

भाष्यम्

"प्रणमन्तीह यं वेदास्तस्मात्प्रणव उच्यते ।"

**इति सनत्कुमारवचनात् । प्रपञ्चरूपेण विस्तृतत्वात्-पृथुः ॥**

**हिरण्यं--हिरण्यगर्भसम्भूतिकारणं हिरण्मयमण्डं**

विवृतिः

द्वितीयनिर्वचने सनत्कुमार[1]वचनं पठति—**प्रणमन्तीति** । "परं चापरं च ब्रह्म यदोङ्कारः" (प्रश्न. ५-२) इति ब्रह्मणः प्रणवप्रतीकाभेदावगमात्तच्छब्देन तन्निर्देश इति भावः । सूक्ष्मत्वस्य परा काष्ठापि परमात्मा स्वमायाशक्त्या प्रपञ्चरूपमापन्नः पृथुरिति व्याचष्टे—**प्रपञ्चेति** ॥

हिरण्यं—हिरण्मयमण्डम् । हिरण्मयत्वं चाण्डस्य शुद्धिगुणयोगात् । न तु हिरण्मयमेव । तदीयैकशकलेन भूमिनिर्माणस्योक्तेः । भूमेश्च हैमत्वस्याप्रत्यक्षत्वादुपचाराश्रयणम् । तथा च तादृशमण्डं गर्भोऽन्तर्वर्त्यस्येति, गर्भे—उदरे अस्येति वा हिरण्यगर्भ इति समासमभिप्रेत्य "हिरण्यगर्भो भूगर्भः" (वि. स. २१) इत्यत्रत्येन हिरण्यगर्भनाम्ना हिरण्मयाण्डान्तर्वर्ती हिरण्यगर्भ इत्यर्थकेनापौनरुक्त्याय विधान्तरेण निर्वक्ति—**हिरण्यमिति** । अण्डमेव विशिनष्टि—**हिरण्यगर्भेति** । हिरण्यगर्भस्यादित्यस्य सम्भूतिकारणमित्यर्थः । आदित्यस्य ब्रह्माण्डोदरजातहिरण्यगर्भरूपत्वस्य "असदेवेदमग्र आसीत्, तत्सदासीत्, तत्समभवत्, तदण्डं निरवर्तत" (छा. उ. ३-१८-१) इत्यादिछान्दोग्योप-

[1] वचनमाह—**पा.**

स्तोत्रम्

## हिरण्यगर्भः

भाष्यम्

**यद्वीर्यसम्भूतं तदस्य गर्भ इति–हिरण्यगर्भः॥**

विवृतिः

निषद्वचनेन मृते द्वेधा भवनादार्ते ब्रह्माण्डे जातो मार्तण्ड इत्यादित्यवाचिनो मार्तण्डशब्दस्य पौराणिककृत[1]व्युत्पादनस्य,

विद्यासहायो भगवान् यश्चासौ मण्डलान्तरे।
हिरण्यगर्भः पुत्रोऽसावीश्वरो दृश्यते परः॥

इत्यादित्यपुराणवचनेन चावगमात्।

यद्वा [2]हिरण्यगर्भः सम्भूतिकारणं यस्याण्डस्य तत्तथा। अपञ्चीकृतपञ्चमहाभूतात्मकहिरण्यगर्भजन्यत्वादण्डस्येत्यर्थः। अथवा हिरण्यगर्भात् सम्भूतिः—जन्म यस्य तस्याण्डाभिमानिनो विराजः कारणं, तदभिमानित्वेन विराजस्तत्र जातत्वादित्यर्थः। **यद्वीर्यसम्भूतमिति।** पूर्वजन्मनि हिरण्यगर्भेण यजमानावस्थेन क्षिप्तान्यग्निहोत्रसमवायीनि [3]अबुपलक्षितापञ्चीकृतानि पञ्चमहाभूतानि, तेषु हिरण्यगर्भोऽहंवासनावासितकर्तृत्वाद्यवच्छिन्नचैतन्यं यत्तत्परमेश्वरस्य वीर्यमित्युच्यते। तत्सम्भूतमित्यर्थः। यद्वीर्यं—यच्छक्तिः तत्सम्भूतमिति वार्थः। तथा च मनुः—

सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत्॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥

(मनु. १-८, ९) इति।

---

[1] व्युत्पादनेन—**पा.** [2] हिरण्यगर्भसम्भूति—**पा.** [3] अम्बूपलक्षित—**पा.**

## विवृतिः

अस्यार्थः–सः–ईश्वरः, अभिध्याय–सृज्यमानसूक्ष्मप्रपञ्चमाभिमुख्येन मायावृत्तिभिरालोच्य, स्वात्–स्वाख्यस्तात् शरीरात्–शरीरवदवच्छेदकतया शरीरस्थानीयादविद्यातो विचित्रशक्तिमतः ससर्जेत्यन्वयः। आदौ सृष्टेः किं कुर्वन्? विविधाः––स्थावरादिभेदभिन्नाः, प्रजाः सिसृक्षुः, अपः–अपञ्चीकृतपञ्चमहाभूतानि,

"अण्व्यो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः।
ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः"॥ (मनु. १-२७)

इत्युपसंहारे वक्ष्यमाणत्वात्। पूर्वजन्मनि हिरण्यगर्भेण यजमानावस्थेन क्षिप्तान्यग्निहोत्रादिसमवायीनि अम्बूपलक्षितापञ्चीकृतानि पञ्चमहाभूतानि, तासु बीजं–हिरण्यगर्भोऽहमिति वासनावासितकर्तृत्वाद्यवच्छिन्नचैतन्यम्, अवासृजत्–प्रकटतामनयत्। अपञ्चीकृतपञ्चमहाभूतकार्यलिङ्गशरीरावच्छिन्नचैतन्यस्य हिरण्यगर्भत्वात्ततोऽण्डं–विराड् जज्ञे इत्याह––तदिति। तत्–पूर्वोपस्थितजलरूपमपञ्चीकृतं, पञ्चीकृतभूताकारेणाभवत्–परिणनाम, तस्मिन्नण्डे ब्रह्मा–विराड्, जज्ञे–अभिमानी जात इति॥

*भास्करानुसारिणस्तु "सोऽभिध्याय" इत्यादिमनुवचनमित्थं व्याचख्युः। सः–परमात्मा, विविधाः–नानाविधाः, प्रजाः सिसृक्षुः, अभिध्यायापो जायन्तामित्यभिध्यानमात्रेणाप एव ससर्ज। अभिध्यानपूर्विकां सृष्टिं वदतो मनोः 'प्रकृतिरेवाचेतना स्वतन्त्रा परिणमते' इत्ययं पक्षो न सम्मतः। किन्तु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्त एवाभिमतः प्रतिभाति। तथा च छान्दोग्योपनिषत्––"तदैक्षत बहु स्यां प्रजायेय" (छा. ६-२-३) इति। [1]अत

* अयं पाठो मनुस्मृतेः कुल्लूकभट्टीये व्यक्तः।

[1] अत एव शारीरकमव्याकृतशब्देन सि–पा.

## विवृतिः

एव शारीरकसूत्रकृता व्यासेन सिद्धान्तितं "ईक्षतेर्नाशब्दम्" (ब्र.सू. १-१-५-) इति। स्वात् शरीरात्—अव्याकृतरूपात्, अव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिः, तदेव तस्य शरीरं, अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते। अव्याकृतस्य च ब्रह्मणा सह भेदाभेदस्वीकारात् ब्रह्माद्वैतम्। शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते। आदौ—स्वकार्यब्रह्माण्डसृष्टेः प्राक्, अपां सृष्टिश्चेयं, महदहङ्कारतन्मात्रक्रमेण बोद्धव्या। *"महाभूतानि व्यञ्जयन्" इति पूर्वाभिधानात्। अनन्तरमपि महदादिसृष्टेर्वक्ष्यमाणत्वात्। तासु—अप्सु बीजं—शक्तिरूपं अवासृजत्—आरोपितवान्। तदण्डमभवदिति। तत्—बीजं परमेश्वरेच्छया हैममण्डमभवत्। हैममिव हैमम्। शुद्धिगुणयोगात्। †सहस्रांशुः—आदित्यः तत्तुल्यप्रभम्। तस्मिन्नण्डे हिरण्यगर्भो जातवान्। येन पूर्वजन्मनि हिरण्यगर्भोऽहमस्मीति भेदाभेदभावनया परमेश्वरोपासना कृता तदीयलिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः, सर्वलोकानां पितामहः—जनकः सर्वलोकपितामह इति [1]वा तस्य नामेति॥

त्रिदशशत्रून् असुरान् हन्तीति हन्तेः ‡[2]मूलविभुजादित्वात्कप्रत्यये "गमहन" (पा. सू. ६-४-९८) इत्युपधालोपे "हो हन्तेः" (पा. सू. ७-३-५४) इत्यादिना कुत्वे च शत्रुघ्नः। "अमनुष्यकर्तृके च" (पा.सू.

---

* अयमर्थानुवादः। † अत्र कुल्लूकभट्टीये—"न तु हैममेव। तदीयैकशकलेन भूमिनिर्माणस्य वक्ष्यमाणत्वात्। भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचाराश्रयणम्" इति अधिकः पाठो दृश्यते। ‡ "कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्" (वा. १९८५) इति वार्तिकमत्रानुसन्धेयम्। [1] वेति-पा. [2] विभुजादि—पा.

स्तोत्रम्

## शत्रुघ्नो व्याप्तो वायुः

भाष्यम्

**त्रिदशशत्रून् हन्तीति-शत्रुघ्नः। कारणत्वेन सर्वकार्याणां [1]व्यापनात्-व्याप्तः। वाति-गन्धं करोतीति-वायुः। "पुण्यो गन्धः पृथिव्यां च" (भ. गी. ७-९) इति भगवद्वचनात्।**

विवृतिः

३-२-५) इति टग्वा, इति व्याचष्टे—**त्रिदशशत्रूनिति**। सर्वं कार्यमुपादानकारणत्वेन व्याप्नोतीति विपूर्वादाप्नोतेः "गत्यर्थाकर्मक" (पा.सू. ३-४-७२) इत्यादिना कर्तरि क्त इति व्याप्तनाम निर्वक्ति—**कारणत्वेनेति**। वाति—पुण्यगन्धं करोतीति, "वा गतिगन्धनयोः" इत्यस्मात् "कृवापाजि" (उणा. १) इत्यादिना उण्प्रत्यये "आतो युक्" (पा.सू. ७-३-३३) इति युगागम इति निर्वक्ति—**वातीति**। परमात्मैव पुण्यगन्धरूपेण विवर्तमानः पुण्यं गन्धं करोतीत्युच्यत इत्यत्र भगवद्वचनमाह—**पुण्यो गन्ध इति**। पुण्यः—सुरभिगन्धः, **पृथिव्यां** चाहमस्मि। तस्मिन् मयि गन्धभूते पृथिवी प्रोता। सुरभित्वं गन्धस्य स्वाभाविकम्। असुरभित्वं तु अविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवतीत्यर्थः॥

अधः—संसारे, न क्षीयते-न क्षियति न गच्छति, जातु-कदाचिदपि इति विग्रहे पृषोदरादित्वाज्जात्वित्युत्तरपदावयवलोपह्रस्वपरनिपातैः न क्षीयत इत्यक्ष इति क्षियतेरप्रत्ययेन चाधोक्षजनाम निष्पन्नम्। सततोर्ध्वरूपः-संसारधर्मेणास्पृष्ट इति तस्यार्थ इत्याभिप्रेत्य

[1] व्याप्तत्वात्—**पा.**

स्तोत्रम्

## अधोक्षजः ॥ ५७ ॥

भाष्यम्

" अधो न क्षीयते जातु [1]यस्मात्तस्मादधोक्षजः "
इत्युद्योगपर्वणि । (उद्योग. ६९-१०)
" [2]द्यौरक्षं पृथिवी चाधः तयोर्यस्मादजायत ।
मध्ये वैराजरूपेण " इति वा–अधोक्षजः ।
* " अधो भूते ह्यक्षगणे प्रत्यग्रूपप्रवाहिते ।
जायते तस्य वै ज्ञानं तेनाधोक्षज उच्यते " ॥ ५७ ॥

विवृतिः

उद्योगपर्वस्थमधोक्षजनामनिर्वचनपरं वचनं पठति—अध इति । यद्वा अधश्शब्देन पृथिवीवाचिना अण्डस्याधरकपालमुच्यते । द्युवाचकेनाक्षशब्देन चोपरितनकपालमुच्यते । ताभ्यां शब्दाभ्यां तन्मध्यं लक्ष्यते । तथा चाधोक्षयोः—अण्डस्याधरकपालोत्तरकपालयोर्मध्ये वैराजरूपेण जायत इत्यधोक्षजः । " सप्तम्यां जनेर्डः " (पा. सू. ३-२-९७) इति डप्रत्यय इत्यभिप्रेत्य निर्वचनान्तरमाह—द्यौरक्षमिति । तयोरिति मध्य इत्यनेनान्वेति ॥ ५७ ॥

ब्रह्मणः स्वमायाविष्कृतव्यक्ताव्यक्तपुरुषकालाख्यरूपचतुष्टयोपेतस्य प्रधानपुरुषक्षोभकं यत्कालाख्यं रूपं तद्दतुशब्देन लक्ष्यत इति

---

*इदं पद्यं केषुचित्कोशेषु न दृश्यते । अस्य विवृतिरपि नोपलभ्यते ।

[1] यस्मादुक्त अधोक्षजः । इति स्मृतेः–पा. [2] द्यौरन्तरिक्षं–पा.

स्तोत्रम्

# ऋतुः सुदर्शनः

भाष्यम्

कालात्मना ऋतुशब्देन लक्ष्यत इति–ऋतुः। सु–शोभनं निर्वाणफलं दर्शनं–ज्ञानमस्येति, शुभे दर्शने–ईक्षणे पद्मपत्रायते अस्येति, [1]सुखेन दृश्यते भक्तैरिति वा–सुदर्शनः। [2]कालयति

विवृतिः

ऋतुनाम व्याचष्टे—**कालात्मनेति**। इत्थम्भावे तृतीया। कालरूप इत्यर्थः। तथा च विष्णुपुराणम्—

> तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत्।
> तथा पुरुषरूपेण कालरूपेण च स्थितम्॥ इति
>
> (वि. पु. १-२-१४)

सु-शोभनं दर्शनं–सकलसंसारनिवर्तकं ज्ञानं यस्य स तथा। यद्वा शोभने पद्मपत्रायते दर्शने–चक्षुषी यस्य स तथा, अथवा सुखेन भक्तैर्दृश्यत इति सुपूर्वाद्दृशेः कर्मणि ल्युडिति त्रिधा सुदर्शननाम[3] व्युत्पादयति—**शोभनमित्यादिना**। कालयति–गणयति–परिच्छिनत्ति सर्वमिति "कल शब्दसङ्ख्यानयोः" इत्यस्मात् ण्यन्तात् पचाद्यचि कालः। चुरादावदन्तेषु पठ्यमानस्य कलयतेर्ग्रहणे तस्या अदन्तत्वेनाल्लोपस्य स्थानिवत्त्वादुपधावृद्धिर्न स्यादिति भौवादिको ण्यन्तः कलतिर्गृहीत इति कालनाम निर्वक्ति —**कालयति—गणयति**

---

[1] [illegible]छया सुंदरं देहं बिभर्ति, सुखेन–**पा.** [2] कलयति सर्व–**पा.** [3] नाम-[illegible] **पा.**

## स्तोत्रम्

# कालः परमेष्ठी

### भाष्यम्

**गणयति सर्वमिति–कालः। "कालः कलयतामहम्" (भ. गी. १०-३०) इति भगवद्वचनात्। परमे-प्रकृष्टे स्वे महिम्नि हृदयाकाशे स्थातुं शीलमस्येति–परमेष्ठी। 'परमेष्ठी [1]विभ्राजते' (आप. ध. १-२३-२) इति मन्त्रवर्णात्। [2]शरणार्थिभिः परितो**

### विवृतिः

**सर्वमितीति।** अत्र भगवद्वचनमाह—**काल इति। कलयतां**–गणयतां–परिच्छिन्दतां मध्ये **कालो**ऽहमस्मीत्यर्थः। पूर्वं प्रवाहरूपः कालः ऋतुशब्देन लक्षितः। अत्र तु [3]आयुर्गणाद्यात्मकः संवत्सर-शताद्यायुष्यरूप उच्यते, यद्वा पूर्वमभिमानिदेवतारूपः काल उक्तः। अत्र कलातत्त्वमुच्यत इति विशेषः॥

परमे स्वे महिम्नि स्वकार्यरूपे हार्दाकाशे तिष्ठतीति विग्रहे परमोप-पदात्तिष्ठतेः "परमे कित्" (उ. ४५८) इति इनिप्रत्ययः, "तत्पुरुषे कृति" (पा.सू. ६-३-१४) इत्यलुक्; स्थः स्थास्थिन्स्थृणाम्" (वा. ४९६१) इति षत्वमित्यभिप्रेत्य व्याचष्टे—**परम इति।** एतन्नाम्नः आपस्तम्ब-धर्मोक्तश्रुतिप्रसिद्धिमाह--**परमेष्ठीति।** शरणार्थिभिः परितः सर्वत्र गृह्यते–लभ्यते व्यापकत्वादिति परिग्रहः। "ग्रहवृदृनिश्चिगमश्च" (पा. सू. ३-३-५८) इति कर्मण्यबित्याह—**शरणार्थिभिरिति।** तत्र

---

[1] विराजते–**पा**, विराजः–**पा**. [2] परमार्थिभिः–**पा**. [3] आयुर्गुणा–**पा**.

## स्तोत्रम्

# परिग्रहः ।

# उग्रः

### भाष्यम्

**गृह्यते सर्वगतत्वात्, [1]परितो ज्ञायत इति वा पत्रपुष्पादिकं भक्तैरर्पितं परिगृह्णातीति वा–परिग्रहः ॥**

**सूर्यादीनामपि भयहेतुत्वात्—उग्रः । "भीषास्माद्वातः पवते। भीषोदेति सूर्यः" (तै. उ. २-७) इति श्रुतेः । संवसन्ति**

### विवृतिः

हेतुमाह—**सर्वगतत्वादिति** । शरणार्थी भक्तो यत्र यत्र ध्यायति शरण्यं विष्णुं ग्रामेऽरण्येऽन्यत्र वा तत्र भक्तापदामपहर्तृत्वेनास्ते–यथा प्रह्लादस्येत्यर्थः । तत्वविद्भिः परितो गृह्यते–[2]व्यापकतया ज्ञायत इत्यर्थान्तरमाह—**परित इति** । पत्रपुष्पफलादिकं भक्तैरर्पितं परिगृह्णाति–अङ्गीकरोतीति परिपूर्वाद्ग्रहेः पचाद्यच् । "पत्रं पुष्पं फलं तोयम्" (भ. गी. ९-२६) इति भगवद्वचनादित्यभिप्रेत्य निर्वचनान्तरमाह—**पत्रपुष्पादिकमिति** ॥

यद्भयात्सूर्य उदेति, वायुश्च सदा सञ्चरति, अन्ये च स्वस्वकार्यमप्रमादेन कुर्वन्ति, ततो भयहेतुत्वादुग्र इत्याह—**सूर्यादीनामिति** । अत्र श्रुतिमाह—**भीषेति** । भीषा–भयेन **पवते**–सञ्चरति । संवसन्ति भूतान्यस्मिन्निति विग्रहे सम्पूर्वाद्वसेः "सम्पूर्वाच्चित्" (उ. ३५२) इति सरप्रत्यये संवत्सर इत्याह—**संवसन्तीति** । एवं च "अहः संवत्सरो व्यालः" (वि. स. २३) इत्यत्रत्येनापौनरुक्त्यं दर्शितम् ।

[1] परिज्ञायते–**पा.**　[2] व्यापकत्वाज्ज्ञायते–**पा.**

स्तोत्रम्

## संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८ ॥

भाष्यम्

भूतान्यस्मिन्निति–संवत्सरः । जगद्रूपेण वर्धमानत्वात्सर्वकर्माणि क्षिप्रं करोतीति वा–दक्षः । संसारसागरे क्षुत्पिपासादिभिः षडूर्मिभि[1]स्तरङ्गिते अविद्याद्यैर्महाक्लेशैः मदादिभिरुपक्लेशैश्च वशीकृतानां विश्रान्तिं [2]काङ्क्षतां विश्रामं–मोक्षं करोतीति–विश्रामः । विश्वस्मात् दक्षिणः–शक्तः, विश्वेषु कर्मसु दाक्षिण्याद्वा—विश्वदक्षिणः ॥ ५८ ॥

विवृतिः

दक्षते–वर्धते जगद्रूपेणेति दक्षः । दक्षते–शीघ्रं करोतीति वा दक्षः । "दक्ष वृद्धौ शीघ्रार्थे च" इत्यस्मात् पचाद्यजिति धातोरर्थद्वयं क्रमेण गृहीत्वा व्याचष्टे—जगद्रूपेणेत्यादिना ॥

विश्रामं–मोक्षं करोतीति विश्रामः । "तत्करोति" (गण. सू. २०४) इति ण्यन्तात्पचाद्यजिति व्याचष्टे–[4] विश्रान्तिं काङ्क्षतामिति । विश्रान्त्याकाङ्क्षायाः संसारश्रमानुभवपूर्वकत्वात्तं दर्शयितुं संसारं सागरत्वेन रूपयति—संसारसागर इत्यादिना वशीकृतानां इत्यन्तेन । क्षुत्पिपासादिभिरिति । आदिशब्देन शोकमोहादयो गृह्यन्ते । तरङ्गित इति। सञ्जाततरङ्ग इत्यर्थः। अविद्याद्यैरित्यादिशब्देनास्मितादयो गृह्यन्ते । मदादिभिरित्यादिशब्देन मानादयो गृह्यन्ते । विकृतानामिति पाठे दुःखितानामित्यर्थः । विश्वस्मात्–सर्वस्माद्दक्षिणः–शक्तः ।विश्वदक्षिणः । पञ्चमीति योगविभागात्समासः । विश्वेषु–सर्वेषु कर्मसु दाक्षिण्यात्–सामर्थ्यात् विश्वदक्षिणो वेति द्वेधा निर्वक्ति–विश्वस्मादिति ॥ ५८ ॥

---

[1] तरङ्गैः–पा. [2] काङ्क्षमाणानां–पा.

### स्तोत्रम्

# विस्तारः स्थावरस्थाणुः

### भाष्यम्

*[1] **विस्तीर्यन्ते समस्तानि जगन्त्यस्मिन्निति– विस्तारः। [2] स्थितिशीलः—स्थावरः। स्थितिशीलानि पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति–स्थाणुः। स्थावरश्चासौ स्थाणुश्च–स्थावर-**

### विवृतिः

विस्तीर्यन्ते जगन्त्यस्मिन्निति विपूर्वात् "स्तृञ् आच्छादने" इति धातोः "प्रथने वावशब्दे" (पा. सू. ३-३-३३) इति घञि विस्तार इति व्याचष्टे—**विस्तीर्यन्त इति।** स्थातुं शीलमस्य "स्थेशभासपिसकस" (पा. सू. ३-२-१७५) इत्यादिना वरच्। तिष्ठन्त्यस्मिन् स्थितिशीलानि पृथिव्यादीनीति "स्थो णुः" (उणा. ३२४) इति णुप्रत्ययः। स्थावरश्चासौ स्थाणुश्चेति समासात्मकमेकं नामेति व्याचष्टे—**स्थितिशील इति।** स्वयं स्थितिशीलः स्थावरः। अन्येषां स्थितिशीलानां पृथिव्यादीनां स्थित्यधिकरणं स्थाणुरिति [illegible]। "प्रमाणं हेतुमर्यादाशास्त्रयत्ताप्रमातृषु" (नाम ३-३-३) इत्यभिधानात्प्रमातृवचनः प्रमाणशब्दः। तेन प्रत्यक्चैतन्यं लक्ष्यते।

---

* "स्तृञ् आच्छादने" इत्यस्मात् व्युपसृष्टात् णिजन्तात्कर्मणि विस्तार्यन्त इति, अण्यन्तात्कर्मणि विस्तीर्यन्त इति च भवति। तरतिवत्।

[1] विस्तीर्णानि–पा. विस्तार्यन्ते–पा. [2] स्थितिशीलत्वात् स्थावरः–पा.

स्तोत्रम्

## प्रमाणं बीजमव्ययम् ।

## अर्थः

भाष्यम्

स्थाणुः । संविदात्मना—प्रमाणम्[1] । अन्यथाभावव्यतिरेकेण कारणमिति–बीजमव्ययम् । *सविशेषणमेकं नाम ॥

सुखरूपत्वात्सर्वैरर्थ्यत इति—अर्थः । न विद्यते प्रयो-

विवृतिः

तद्रूपो विष्णुरित्याह—संविदात्मनेति । बीजं—[2]कारणं, तस्य विशेषणमव्ययमिति । व्येति–विकारं प्राप्नोतीति विपूर्वादिणः पचाद्यच् । न व्ययमव्ययमिति विशेषणविशिष्टमेकं नामेत्याह—अन्यथाभावेति । स्वसमानसत्ताकान्यथाभावव्यतिरेकेण वियदादिप्रपञ्चविवर्तोपादानमित्यर्थः ॥

अर्थ्यते–प्रार्थ्यते सुखरूपत्वात् सर्वैरिति "अर्थ उपयाच्ञायाम्" इति धातोः कर्मणि घञित्याह—सुखरूपत्वादिति । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृह. ४-३-३२) इति श्रुत्या ब्रह्मानन्दस्यैव प्राणिनां पुण्यतारतम्यप्रयुक्तान्तःकरणवृत्तितारतम्याद‌भिव्यज्यमानस्य सुखरूपत्वादिति भावः । अर्थः–प्रयोजनं धर्मार्थकाममोक्षरूपं सृष्ट्यादिकर्माणि वा न विद्यतेऽस्याप्तकामत्वादित्याह—न विद्यत इति । महान्तः–बाह्येभ्यो गौणात्मभ्यो दृढतराहमध्यासविषयत्वेन प्रकृष्टाः कोशाः–आत्मस्वरूपस्य कोशवदाच्छदकाः अन्नमयाद्याः सन्त्यस्य जीवरूपेणावस्थितस्येति महाकोशः । यद्वा

---

* इदं वाक्यं एकस्यां मातृकायां नास्ति.

[1] प्रत्यक्षादि प्रमाणं वा, अन्य—पा. [2] करणं—पा.

### स्तोत्रम्

## अनर्थो महाकोशो महाभोगो महाधनः ॥ ५९ ॥

### भाष्यम्

**जनं आप्तकामत्वादस्येति--अनर्थः। महान्तः कोशा [1]अन्नमयादय आच्छादका अस्येति-महाकोशः। महान् भोगः-[2]सुखरूपोऽस्येति—महाभोगः। महत् भोगसाधनलक्षणं धनमस्येति--महाधनः ॥ ५९ ॥**

### विवृतिः

महान्तः-आधिदैविकात्मना अपरिच्छिन्नाः कोशा उक्ताः स्वज्ञानोपायतासम्बन्धेन सन्त्यस्य पुच्छब्रह्मण इति **महाकोशः**। आत्मज्ञानोपायत्वं च "अन्नमय आत्मा" इत्युपासनया बाह्यविषयाद्व्यावर्त्यात्मत्वबुद्धेर्देह एव सङ्कोचनात्। एवं प्राणमयाद्यानन्दमयपर्यन्तोपास्त्या पूर्वपूर्वव्यावर्तनेन पुच्छब्रह्मणि बुद्धिसम्पादनात्परमात्मज्ञानोपायत्वं कोशानामित्यभिप्रेत्य महाकोशनाम व्याचष्टे—**महान्त इति** ॥

भोगशब्देन सुखमुच्यते। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" (नाम. ३-३-२३) इत्यमरकोशात्। तथा च महान्-अपरिच्छिन्नः भोगः-सुखं स्वरूपभूतं यस्य स तथा। "यो भूमा तत्सुखम्। नाल्पे सुखमस्ति। भूमैव सुखम्" (छा. ७-२३-१) इति श्रुतेरित्यभिप्रेत्याह—**महानिति**। यद्वा महान्-उत्कृष्टः हिरण्यगर्भाद्यपेक्षया अतिशयितो भोगः-ब्राह्मलौकिक आनन्दो यस्य स तथेत्यभिप्रेत्यार्थान्तरमाह—**महानिति**। महत्-उत्कृष्टं धनं ब्राह्मलौकिकसुखसाधनलक्षणं, आविर्भावेषु वा महत्-प्रभूतं धनं-हिरण्यमस्येति महाधन इत्याह—**महदिति** ॥ ५९ ॥

---

[1] अन्नमयादयः अस्येति-**पा.**   [2] सुखस्वरूपं-**पा.** सुखरूपं-**पा.**

स्तोत्रम्

## अनिर्विण्णः स्थविष्ठः

भाष्यम्

[1]अवाप्तसर्वकामत्वात् निर्वेदोऽस्य न विद्यत इति— अनिर्विण्णः। वैराजरूपेण स्थितः-स्थविष्ठः। "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" (मुण्ड. २ १·४) इति श्रुतेः॥

विवृतिः

निपूर्वात् "विद्लृ लाभे" इत्यस्मात्, निपूर्वात् "विद सत्तायाम्" इत्यस्माद्वा "नपुंसके भावे क्तः" (पा. सू. ३-३-११४) इति भावे "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना कर्तरि वा क्तः। "रदाभ्यां निष्ठातो नः" (पा.सू. ८-२-४२) इति निष्ठातकारस्य पूर्वस्य दकारस्य च नत्वे "निर्विण्णस्योपसङ्ख्यानम्" (वा. २८३५) इति णत्वम्। तथा च निर्विण्णं—निर्वेदः खेदः विषयालाभप्रयुक्तो न विद्यतेऽस्य। कामानवाप्त्या निर्विण्णः—खिन्नः स नेत्यनिर्विण्णः—अखिन्न इति वार्थः। आप्तकामत्वादित्यभिप्रेत्य व्याचष्टे—आप्तकामत्वादिति॥

अतिशयेन स्थूलः स्थविष्ठः। "अतिशायने तमबिष्ठनौ" (पा. सू. ५-३-५५) इतीष्ठन्प्रत्ययः। "स्थूलदूर" (पा. सू. ६-४-१५६) इत्यादिना यणादेः परस्य लोपः, पूर्वस्य च गुणः, अवादेशः, स्थविष्ठो विराडात्मक इति व्याचष्टे—वैराजेति। विराड्रूपत्वे श्रुतिमाह— अग्निरिति। आदिशब्देन "तस्य ह वा एतस्यात्मनो वैश्वानरस्य" (छा. उ. ५·१८-२) इत्यादिग्रहः॥

---

[1] आप्तकामत्वात्—पा.

## स्तोत्रम्

## *अभूर्धर्मयूपो महामखः ।

### भाष्यम्

अजन्मा-अभूः। अथवा 'भू सत्तायाम्' इत्यस्मात् सम्पदादित्वात्[1] क्विप्। मही वा। यूपे पशुवत्तत्समाराधनात्मका धर्मास्तत्र बध्यन्त इति-धर्मयूपः। यस्मिन्नर्पिता मखाः—यज्ञा [2]निर्वाणलक्षणफलं [3]प्रयच्छन्तो महान्तो जायन्ते स-महामखः।

### विवृतिः

भवत्युत्पद्यत इति भूः। कर्तरि क्विप्। न भूरभूः-अजन्मेत्याह—अभूरिति। भवनं भूः सत्ता। सम्पदादित्वाद्भावे क्विबित्यकारप्रश्लेषमकृत्वा अर्थान्तरमाह-भू सत्तायामिति। सर्वानुगतसद्रूप इत्यर्थः। भवत्यस्यां सर्वमिति भूः। बहुलवचनादधिकरणे क्विप्। यद्वा स्वाश्रयेषु प्राणिषु नश्यत्स्वपि स्वयं भवति-विद्यत इति कर्तरि क्विपि भूः-मही तद्रूपो विष्णुरिति तृतीयं निर्वचनमाह—मही वेति। धर्माणां भगवत्समाराधनात्मकानां यूप इव यूपो धर्मयूप इति व्याचष्टे—यूप इति। यथा यूपः पशूनां नियोजनस्थानमेवं विष्णुः स्वसमाराधनात्मकानां धर्माणां स्थानमित्यर्थः। महान्तो मखाः—यज्ञा अस्येति महामख इति भगवदर्पितानां मखानां निर्वाणफलकत्वेन महत्त्वमुपपादयन्नेव व्याचष्टे—यस्मिन्निति। भगवदर्पितानां मखानां चित्तशुद्धयादिद्वारा निर्वाणफलकत्वादितरमखापेक्षया महत्त्वमित्यर्थः॥

नक्षत्रशब्दः छत्रिन्यायेन वर्तते। नेमिः-रथचक्रप्रान्तभागः। नेमिरिव नेमिः। [4]प्रवर्तकत्वयोगात्। नक्षत्रसंज्ञितस्य ज्योतिश्चक्रस्य

---

* अत्र भाष्यविवृत्यनुरोधेन "भूः" इत्यपि पाठो द्रष्टव्यः।

[1] त्वाद्भवतेः क्विप्-पा. [2] निर्वाणं प्र-पा. [3] यच्छन्तो-पा. [4] प्रवर्तकगुणयोगात्-पा.

### स्तोत्रम्

## नक्षत्रनेमिः

### भाष्यम्

"*नक्षत्रतारकैःसार्धं चन्द्रसूर्यादयो ग्रहाः ।
वायुपाशमयैर्बन्धैर्निबद्धा ध्रुवसंज्ञके ॥" इति ।

स ज्योतिषां चक्रं भ्रामयंस्ताराामयस्य शिंशुमारस्य [1]पुच्छदेशे [2]व्यवस्थितो ध्रुवः । तस्य शिंशुमारस्य हृदये ज्योतिश्चक्रस्य [3]नेमिवत्प्रवर्तकः स्थितो विष्णुरिति— नक्षत्रनेमिः ।

### विवृतिः

रथचक्रस्य नेमिवत्प्रवर्तको विष्णुर्नक्षत्रनेमिरिति निर्वक्ष्यन् [4]नक्षत्रसंज्ञकस्य ज्योतिश्चकस्य स्वरूपं दर्शयति—नक्षत्रेति । नक्षत्राणि च तारकाणि च ।

"नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च" (शाश्व. ४-२०) इति शाश्वतकोशान्नपुंसकत्वम् । नक्षत्राणि—अश्विन्यादीनि, इतराणि तारकाणि, तैः सार्धं वायवः—आवहप्रवहादयः, त एव पाशाः, तन्मयैः—तत्स्वरूपैः ; बन्धैः—बन्धनहेतुभिः, चन्द्रसूर्यादयो ग्रहाः [5]ध्रुवसंज्ञके ज्योतिर्विशेषे बद्धा वर्तन्ते । स च ध्रुवः ज्योतिषां चक्रं भ्रामयन् ताराामयस्य तत्पुञ्जात्मकस्य शिंशुमारचकस्य—शिंशुमारो जलजन्तुविशेषः सरटगोधाद्याकारः, तदाकृति ज्योतिश्चक्रं—शिंशुमारचक्रं

---

* अस्मिन् विषये विष्णुपुराणे "सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह। वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै" ॥ (वि.पु. २-९-३) इति श्लोको दृश्यते ।

[1] पुच्छैकदेशे—**पा.** [2] अवस्थितो—**पा.** स्थितो—**पा.** [3] नेमिवत्प्रवर्तमानस्य हृदये विष्णुरिति कथितो नक्षत्रनेमिः-**पा.** [4] नक्षत्रसंज्ञितस्य—**पा.** [5] ध्रुवसंज्ञिते—**पा.**

### भाष्यम्

**शिंशुमारवर्णने " विष्णुर्हृदयम् " (तै. आ. २-१९) इति**

### विवृतिः

तस्य प्रदक्षिणावर्तकुण्डलीभूतस्योन्नमितपुच्छाग्रे व्यवस्थितो ध्रुवः। तस्य शिंशुमारस्य ज्योतिश्चक्रस्य हृदये तारारूपेण नेमिरिव चक्रस्य प्रवर्तकः स्थितो विष्णुः **नक्षत्रनेमिः** इति समुदायार्थः। ज्योतिश्चक्रस्य हृदये विष्णोरवस्थितौ तैत्तिरीयकश्रुतिमाह--**शिंशुमारवर्णन इति**। तथा च विष्णुपुराणम्—

तारामयं भगवतः शिंशुमाराकृति प्रभोः।
दिवि रूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः॥
सैष भ्रमन् भ्रामयति [1]चन्द्रसूर्यादिकान् ग्रहान्।
भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत्॥
सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह।
वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै॥
शिंशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि।
नारायणोऽयनं धाम्नां तस्याधारः स्वयं हृदि॥

(वि. पु. २-९-१-४) इति।

ग्रहैः—बुधादिभिः, वातानीकमयैः—वातसमूहमयैः, बध्यन्ते एभिरिति बन्धाः पाशाः, तैर्ध्रुवे बद्धा यतोऽतस्तमनुयान्ति। शिंशुमारस्याश्रयं दर्शयन्नाह—शिंशुमारेति। ज्योतिषां—नक्षत्राणां, धाम्नां च ध्रुवादिस्थानानां अयनं दिवि शिंशुमाराकृति यद्रूपं तस्य हृदि स्थितः स्वयं नारायण एव तारारूपस्तदाधार इति श्लोकपदानामन्वयः। नक्षत्राणि सन्त्यस्य चन्द्रात्मकस्येति अत इनिः मत्त्वर्थीय इति व्याचष्टे—

[1] चन्द्रादित्यादिकान्—पा.

स्तोत्रम्

**नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥**

भाष्यम्

स्वाध्यायब्राह्मणे श्रूयते। चन्द्ररूपेण–नक्षत्री। "नक्षत्राणामहं शशी" (भ. गी. १०–२१) इति भगवद्वचनात्। [1]सर्वकार्येषु समर्थः–क्षमः। क्षमत इति वा। "क्षमया पृथिवीसमः" (बाल. १-१८) इति वाल्मीकिवचनात्॥

[2]सर्वविकारेषु क्षपितेषु स्वात्मना अवस्थित इति–क्षामः। ("*क्षायो मः" (पा. सू. ८-२ ५३) इति निष्ठातकारस्य मकारादेशः।) सृष्ट्याद्यर्थं सम्यगीहत इति समीहनः॥ ६० ॥

विवृतिः

**चन्द्ररूपेणेति**। चन्द्रो विष्णोर्विभूतिरित्यत्र भगवद्वचनमाह–**नक्षत्राणामिति**। विचित्रप्रपञ्चनिर्माणादिकार्येषु **क्षमः** शक्तः "युक्ते क्षमं शक्ते हिते त्रिषु" (नाम. ३-३-१४२) इत्यभिधानकोशात्। यद्वा क्षमते–सहते भक्तानां अपराधमिति **क्षमः**। "क्षमूष् सहने" अस्मात्पचाद्यजिति क्षमनाम द्विधा व्याचष्टे–**सर्वकार्येष्विति**। क्षमावत्त्वे वाल्मीकिवचनमाह–**क्षमयेति**। "क्षै क्षये" "आदेचः" (पा.सू. ६-१-४५) इत्यात्वम् 'गत्यर्थाकर्मक' (पा.सू. ३-४-७२) इत्यादिना कर्तरि क्तः। 'क्षायो मः' (पा. सू. ८-२-५३) इति निष्ठातकारस्य [3]मत्वम्। प्रलये सर्वं जगत् स्वात्मन्युपसंहृत्य स्वस्वरूपेणावस्थानात् कृशः **क्षाम** इति व्याचष्टे–**सर्वेति**। सृष्ट्याद्यर्थं सम्यगीहते–चेष्टते, "ईह चेष्टायाम्" इत्यतो बाहुलकात्कर्तरि ल्युटि **समीहन** इत्याह—**सृष्टीति** ॥ ६० ॥

---

* केषुचित्कोशेषु इदं धनुराङ्कितं वाक्यं न दृश्यते।

[1] समस्तका–**पा.** [2] सर्वभूतेषु स्वात्मना–**पा.** [3] मकारः–**पा.**

स्तोत्रम्

## यज्ञ इज्यः

भाष्यम्

सर्वयज्ञस्वरूपत्वात्–यज्ञः। सर्वेषां देवानां तुष्टिकारको यज्ञाकारेण प्रवर्तत इति वा। "यज्ञो वै विष्णुः" (तै. सं. २-५ ५) इति श्रुतेः। यष्टव्योऽप्ययमेवेति–इज्यः।

ये यजन्ति मखैः पुण्यै[1]र्देवतादीन् पितॄनपि।
आत्मानमात्मना नित्यं [2]विष्णुमेव यजन्ति ते॥

विवृतिः

इज्यतेऽनेनात्र वेति विग्रहे "यज देवपूजासङ्गतिकरणदानेषु" इत्यतो "यजयाच" (पा. सू. ३-३-९०) इति नङ्। विष्णुर्यज्ञाभिमानिदेवतारूपो यज्ञः। श्रौतस्मार्तसर्वयज्ञरूपेण विवर्तमानो वा। "यज्ञो वै विष्णुः" (तै. सं. २-५-५) इति श्रुतेरित्यभिप्रेत्याह— सर्वयज्ञस्वरूपत्वादिति। सर्वेषां देवानां तृप्तिकारको यज्ञः तद्रूपेण प्रवर्तत इति यज्ञ इति काचित्कः पाठः। पूर्वोक्तद्वितीयव्याख्यानस्यार्थः। यजेर्बाहुलकात्कर्मणि क्यपि सम्प्रसारणे इज्यः–यजनीयः। यद्वा "व्रजयजोर्भावे क्यप्" (पा. सू. ३-३-९८) इति क्यपि इज्येति रूपम्। इज्या अस्यास्तीति अर्श आद्यचि इज्य इति व्युत्पत्तिमभिप्रेत्याह—यष्टव्योऽपीति। विष्णोः सर्वदेवमयत्वादिति भावः। विष्णुर्यष्टव्य इत्यत्र हरिवंशवचनमाह—ये यजन्तीति। महांश्चासाविज्यश्च महेज्यः। "सन्महत्" (पा. सू. २-१-६१) इति

---

[1] दैवतानि–पा. [2] विष्णुं वै हि य–पा.

### स्तोत्रम्

## महेज्यश्च क्रतुः सत्रं सतां गतिः ।

### भाष्यम्

**इति हरिवंशे। सर्वासु देवतासु यष्टव्यासु प्रकर्षेण यष्टव्यो मोक्षफलदातृत्वादिति–महेज्यः। यूप[1]सहितो यज्ञः—क्रतुः। [2]आसत्युपैतिचोदनालक्षणं–सत्रम्। सतस्त्रायत इति वा। सतां–मुमुक्षूणां नान्या गतिरिति–सतां गतिः॥**

### विवृतिः

समासः। सर्वेषां यष्टव्यानां देवानां मध्ये विष्णोरेव यष्टव्यस्य महत्त्वम्, मोक्षदातृत्वादिति महेज्यनाम व्याचष्टे—**सर्वास्विति**॥

यूपवान् यज्ञः क्रतुः, तद्रूप इत्याह—**यूपेति**। "आसीरन्" इति "उपेयुः" इत्येवं वा चोदनाप्रमाणकः क्रतुविशेषः सत्रम्, तद्रूपं ब्रह्मेत्याह—[3]**आसतीति**। [4]आसत्युपैतिचोदनयोरन्यतरवत्त्वं सत्रलक्षणम्। "सप्तदशावराः सत्रमासीरन्" "ये (एवं विद्वांसः) सत्रमुपयन्ति" (तै. सं. ७-४-९) इत्युदाहरणं बोध्यम्। सतः–साधून् त्रायत इति, "त्रैङ् पालने" "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्ययः। नपुंसकत्वात् सत्रं ब्रह्मेति विशेष्यमित्यभिप्रेत्य योगार्थमादायार्थान्तरमाह—**सत इति**। सतां–स्वभक्तानां मुमुक्षूणां मोक्षहेत्वपरोक्षज्ञानजनकश्रवणादिप्रतिबन्धकानि निरस्य श्रवणादिप्रवर्तनापूर्वकं संसारनिवर्तकज्ञानप्रदानेन रक्षणात् सतां गतिः–शरणं अयमेवेत्याह—**सतामिति**॥

---

[1] समीहितः–**पा.** [2] आसनेपायिचो–**पा.** [3] असनेति–**पा.** [4] आसनोपायिचो–**पा.**

## स्तोत्रम्

# सर्वदर्शी विमुक्तात्मा

### भाष्यम्

**सर्वेषां प्राणिनां कृताकृतं [1]सर्वं पश्यति स्वाभाविकेन बोधेनेति-सर्वदर्शी। स्वभावेन विमुक्त आत्मा यस्येति, विमुक्तश्चासावात्मा चेति वा-विमुक्तात्मा। "विमुक्तश्च**

### विवृतिः

सर्वं द्रष्टुं शीलमस्य, "सुप्यजातौ णिनिस्ताच्छील्ये" (पा. सू. ३-२-७८) इति णिनिप्रत्यय इति निर्वक्ति—**सर्वेषां प्राणिनामिति। कृताकृतमिति।** कृतं–विहितम्। अकृतं–विहितान्यत् प्रतिषिद्धं पुण्यपापात्मकं कर्म। यद्वा अकर्तव्यं सत् यत् कृतं तत्कृतं। कर्तव्यं सत् यन्न कृतं तदकृत[2]मित्युच्यते। स्वभावेन अविद्याकामादिना विशेषेण मुक्तः–विमुक्तो जीवन्मुक्तो वामदेवादिः; स आत्मा स्वरूपमस्येति विमुक्तात्मा। विमुक्तश्चासावात्मेति कर्मधारयो वा। भाष्ये पाठद्वयदर्शनादित्यभिप्रेत्य व्याचष्टे—**स्वभावेनेति।** [3]जीवन्मुक्तसद्भावे श्रुतिमाह—**विमुक्तश्चेति।** जीवन्नेव दृष्टबन्धात्कामादेर्विशेषेण मुक्तः सन् देहपाते भाविबन्धाद्विशेषेण मुच्यत इत्यर्थः। यद्वा बन्धस्य मिथ्यात्वादात्मा स्वभावतो निसर्गतो विमुक्त एवेति विमुक्तात्मेत्यभिप्रेत्याह—**स्वभावेनेति।** नित्यमुक्तत्वे श्रुतिमाह—**विमुक्तश्चेति।** जानातीति ज्ञः। "इगुपध" (पा. सू. ३–१–१३५) इति कः। सर्वः सर्वात्मकः; सर्वश्चासौ ज्ञश्च–बोधरूपः इति "पूर्वकालैक" (पा.सू. २-१-४९) इत्यादिना समास इत्यभिप्रेत्याह–

---

[1] पश्यति–**पा.** [2] मित्यर्थः–**पा.** [3] जीवन्मुक्ति–**पा.**

स्तोत्रम्

## सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥

## सुव्रतः

भाष्यम्

विमुच्यते" (कठ. ५-१) इति श्रुतेः* । सर्वश्चासौ ज्ञश्चेति-सर्वज्ञः । "इदं सर्वं यदयमात्मा" (बृह. ६ ५-७) इति श्रुतेः । ज्ञानमुत्तममित्येतत्सविशेषणमेकं नाम । ज्ञानं उत्तमं-प्रकृष्टमजन्यं अनवच्छिन्नं सर्वस्य साधकतममिति ज्ञानमुत्तमं ब्रह्म । "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. २-१) इति श्रुतेः ॥ ६१ ॥

सु-शोभनं व्रतमस्येति-सुव्रतः ।
"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम ॥ (युद्ध. १८-३३)

विवृतिः

सर्वश्चेति । सर्वात्मकत्वे श्रुतिमाह —इदमिति । ज्ञप्तिः-ज्ञानं चिद्रूपं; भावे ल्युट् । उत्कृष्टार्थवृत्तेरुच्छब्दादातिशयेनोत्कृष्ट इत्यर्थे तमप्प्रत्यये उत्तमः । एवं चोत्तममिति विशेषणविशिष्टमेकं नामेत्याह—ज्ञानमुत्तममिति । उत्तममिति विशेषणं प्रकृष्टार्थकम् । प्रकर्षश्च त्रिविधपरिच्छेदशून्यत्वम् । स्वाध्यस्तस्य सर्वस्य प्रपञ्चस्य साधकत्वं च । ततश्च जन्यज्ञानव्यावृत्तिर्ब्रह्मरूपज्ञानस्य सिद्ध्यतीत्याह—ज्ञानं प्रकृष्टमिति । अत्र श्रुतिमाह—सत्यमिति ॥ ६१ ॥

सु-शोभनं व्रतं-नियमः प्रपन्नाभयदानसङ्कल्पलक्षणोऽस्येति व्याचष्टे—सु-शोभनमिति । अस्मिन्नर्थे वाल्मीकिवचनमाह—सकृदिति । सु-शोभनं प्रसन्नं मुखमस्येति व्याचष्टे-सु-शोभनमिति ।

---

* अत्र श्रुतेरित्यनन्तरमेकस्मिन् कोशे "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥" इति गौडपादीयवचनाच्च"। इत्यधिकः पाठो दृश्यते । नास्य विवृतिरुपलभ्यते ।

स्तोत्रम्

# सुमुखः

भाष्यम्

इति श्रीरामायणे रामवचनम् । सु–शोभनं मुखमस्येति–सुमुखः । "प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम् ।" (वि. पु. ६-७-८०) इति श्रीविष्णुपुराणे । [1]वनवाससुमुखत्वाद्वा दाशरथी रामः— सुमुखः ।

स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम् ।
मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ।। (सुन्दर. ३३-२५)
इमानि तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ।। (अयो. २४-१७)
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव [2]मनो रामस्य विव्यथे ।।
(अयो. १९-३३)

इति रामायणे । सर्वविद्योपदेशेन वा—सुमुखः । "यो ब्रह्माणं विदधाति पूर्वं" (श्वे. ६-१८) इत्यादिश्रुतेः ।

विवृतिः

अत्र विष्णुपुराणवचनमुदाहरति—प्रसन्नवदनमिति । सु–शोभनं वनवासाद्यप्रियश्रवणेऽपि शोकादिप्रयुक्तविकाररहितं मुखमस्य दाशरथि-रामस्येत्यर्थान्तरमाह—वनवासेति । अत्र वाल्मीकिवचनमाह—स पितुरिति । सु–शोभनं सर्वविद्योपदेष्टृ मुखमस्येत्यर्थान्तरमाह—सर्वेति । विद्योपदेष्टृत्वे श्रुतिमाह–य इति । पूर्वं–सर्गादौ, विदधाति–सृजति, तस्मै–ब्रह्मणे, प्रहिणोति–उपदिशतीत्यर्थः ॥

---

[1] वनवासे सुमु-पा. [2] लक्ष्यते चित्तविक्रिया–पा.

स्तोत्रम्

## सूक्ष्मः सुघोषः सुखदः

भाष्यम्

**शब्दादिस्थूलकारणराहितत्वात्–शब्दादयो ह्याकाशादीनामुत्तरोत्तरस्थूलकारणानि, तदभावात्–सूक्ष्मः। "सर्वगतं सुसूक्ष्मम्" (मुण्ड. १-१-६) इति श्रुतेः। सु–शोभनो घोषो वेदात्मकोऽस्येति, मेघगम्भीरघोषत्वाद्वा—सुघोषः। सद्वृत्तानां सुखं ददाति, असद्वृत्तानां सुखं द्यति खण्डयतीति वा—सुखदः।**

विवृतिः

शब्दादीनां तूत्तरोत्तरस्थूलकारणानामभावात्सूक्ष्म इत्याह—**शब्दादीति**। उक्तं हेतुं विवृणोति—**शब्दादयो हीति**। आकाशवाय्वादीनां मध्ये उत्तरोत्तरस्थूलकारणानि शब्दादयः। शब्दगुणवानाकाशः स्थूलः। शब्दस्पर्शगुणवान् स्थूलतरो वायुः। शब्दस्पर्शरूपगुणवत् स्थूलतमं तेज इत्यादि द्रष्टव्यम्। तदभावात् सूक्ष्म इत्यर्थः। तत्र श्रुतिमाह—**सर्वगतमिति**॥

सु–शोभनो घोषो वेदात्मकः उत्पाद्यतया प्रतिपादकतया वा अस्येति सुघोषः। "अस्य महतो भूतस्य निश्वसितमेवैतद्यदृग्वेदः" (बृह. उ. २-४-१०) इत्यादिश्रुतेः, "सर्वे वेदा यत्पदमामनन्ति" (कठ. उ. १-१-१५) इत्यादिश्रुतेश्चेत्यभिप्रेत्याह—**शोभन इति**। शोभनो मेघवद्गम्भीरो घोषो निस्वनोऽस्य स्वीकृतलीलाविग्रहस्येत्यर्थान्तरमाह—**मेघेति**। सद्वृत्तानां सुखं ददाति, असद्वृत्तानां सुखं द्यति–खण्डयतीति वा सुखदः। "डुदाञ् दाने" "दो अवखण्डने" आभ्यां "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यय इति द्विधा निर्वक्ति—**सद्वृत्तानामिति**। श्रुतिस्मृतिभिः प्राणिनामभ्युदयनिश्श्रेयसो-

स्तोत्रम्

## सुहृत् ।

## मनोहरो जितक्रोधः

भाष्यम्

प्रत्युपकारनिरपेक्षतयोपकारित्वात्–सुहृत् ॥

निरतिशयानन्दरूपत्वान्मनो हरतीति–मनोहरः। "यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति" (छा. ७-२३-१) इति श्रुतेः। जितः क्रोधो येन सः–जितक्रोधः। [1]वेदमर्यादां स्थापयन् सुरारीन् हन्ति, न तु कोपवशादिति। (*त्रिदशशत्रून्निघ्नन्

विवृतिः

पायस्य प्रत्युपकारानपेक्षयोपदेशा[2]त्सुहृल्लक्षणयोगात् सुहृदिति व्याचष्टे–प्रत्युपकारेति। "सुहृद्दुर्हृदौ मित्रामित्रयोः" (पा. सू. ५-४-५०) इति निपातनात्साधुत्वम् ॥

समाधौ योगिभिरन्तःकरणेन गृह्यमाणो निरतिशयानन्दरूप आत्मा मनो हरति-आकर्षतीति "हृञ् हरणे" अस्मात् "हरतेरनुद्यमनेऽच्" (पा. सू. ३-२-९) इत्यच्प्रत्यय इत्यभिप्रेत्याह—निरतिशयेनेति। सुखात्मकत्वे श्रुतिमाह—यो वा इति। जितक्रोधनाम व्याचष्टे—जित इति। ननु क्रोधाभावे असुरसंहारादिरूपं कार्यं कथमित्यत आह—वेदमर्यादामिति। वीरयति–विक्रामयतीति वीरः। "वीर विक्रान्तौ" पचाद्यच्। वीरः–विक्रमशाली बाहुर्दक्षिणोऽस्य वीरबाहु-

* अयं धनुरङ्कितो भागः एकस्मिन् कोशे न दृश्यते। अस्य विवृतिरपि नोपलभ्यते।

[1] वेदमर्यादास्थापनार्थं सु–पा., वेदमार्गं स्थापयन् सु–पा. [2] सुहृल्लक्षणाद–पा.

स्तोत्रम्

## वीरबाहुर्विदारणः ॥ ६२ ॥

## स्वापनः स्ववशः

भाष्यम्

वेदमर्यादां स्थापयन्) विक्रमशाली बाहुरस्येति–वीरबाहुः । अधार्मिकान् विदारयतीति–विदारणः ॥ ६२ ॥

प्राणिनः [1]स्वापयन्–आत्मसम्बोधविधुरान् मायया कुर्वन्—स्वापनः । स्वतन्त्रः—स्ववशः । जगदुत्पत्तिस्थिति-

विवृतिः

रित्याह—विक्रमेति । अधार्मिकान् विदारयतीति "दृ विदारणे" इत्यस्मात् ण्यन्ताल्ल्युडित्याह—अधार्मिकानिति ॥ ६२ ॥

स्वापयति—स्वमायया आत्मज्ञानविधुरान् करोति, "ञिष्वप् शये" अस्मात् ण्यन्ताल्ल्युट्, औणादिको युज्वा, इत्याह—स्वापयन्निति । स्वस्मिन् वशः–आयत्तः स्ववशः । "वश आयत्ततायां स्याद्वशश्शक्तिप्रभुत्वयोः" इत्यभिधानात् । तथाच सृष्ट्यादिकर्मणि स्ववशः—स्वतन्त्रः अपराधीन इत्याह—स्वतन्त्र इति । [2]स्वातन्त्र्ये हेतुमाह—जगदिति । स्वेच्छया सकल-जगज्जन्मादिकारणस्य स्वप्रवर्तकपुरुषान्तराभावान्न पारतन्त्र्यं सम्भवतीति भावः ॥

व्याप्तुं शीलमस्येति विपूर्वादाप्नोतेः "सुप्यजातौ" (पा. सू. ३-२-७८) इति ताच्छील्ये णिनिप्रत्ययः । उपसर्गेऽपि सुपि णिनि-

---

[1] स्वीयान्–पा ? [2] स्वतन्त्रत्वे–पा.

## स्तोत्रम्
# व्यापी नैकात्मा

## भाष्यम्

लयहेतुत्वात् । आकाशवत्सर्वगतत्वात् —व्यापी । "आकाशवत्सर्वगतश्च नित्यः" इति श्रुतेः । कारणत्वेन सर्वकार्याणां व्यापनाद्वा—व्यापी । जगदुत्पत्त्यादिभिरात्रिर्भूतनिमित्तशक्तिभि(र्विभूतिभि)रनेकधा तिष्ठन् —नैकात्मा ॥

## विवृतिः

प्रत्ययस्य "स बभूवोपजीविनाम्" (रघुवं. १-१६) इत्यादौ दर्शनादित्यभिप्रेत्य व्यापीति नाम व्याचष्टे—**आकाशवदिति** । व्यापित्वे हेतुमाह—**सर्वेति** । उपादानतया सर्वकार्यानुगतत्वादित्यर्थः । **व्यापीति** । व्यापिशब्दवाच्य इत्यर्थः । एकश्चासावात्मा च, "पूर्वकालैक" (पा. सू. २-१-४९) इत्यादिना समासः । नशब्दस्य तेन सह "*सुप्सुपा" (पा. सू. २-१-४) इति समासः । "न लोपो नञः" (पा. सू. ६-३-७३) इत्यत्र सानुबन्धकस्यैव ग्रहणात् नशब्दस्य नलोपो न भवतीत्यभिप्रेत्य नैकात्मेति नाम व्याचष्टे—**जगदिति** । ब्रह्मा दक्षादयः कालः सकलजन्तवश्च उत्पत्तौ विष्णोर्विभूतयः । विष्णुर्मन्वादयः कालः सर्वभूतानि चेति स्थितिनिमित्तस्य विष्णोः विभूतयः । रुद्रः कालोऽन्तकाद्याः समस्ता जन्तवश्च [1] प्रलयायैता विष्णोर्विभूतयः । या एता विभूतयस्तद्रूपेण जगदुत्पत्त्यादिप्रयोजनाय अनेकधा तिष्ठन्नैकात्मेत्युच्यत इत्यर्थः । जगदुत्पत्त्यादिभिरित्यत्र 'अध्ययनेन वसती'त्यादाविव फले हेतौ तृतीयेति बोध्यम् । जगदुत्पत्त्या-

* "सह सुपा" (पा. सू. २-१-४) इति सूत्रार्थानुवादोऽयम्।

[1] प्रलय एता—**पा.**

स्तोत्रम्

# नैककर्मकृत् ।

# वत्सरो वत्सलो वत्सी

भाष्यम्

जगदुत्पत्तिसम्पत्तिविपत्तिप्रभृतिकर्माणि करोतीति—नैककर्मकृत् ॥

वसत्यत्राखिलमिति—वत्सरः । भक्तस्नेहित्वात्—वत्सलः । "वत्सांसाभ्यां कामबले" (पा. सू. ५-२-९८) इति लच्प्रत्ययः । वत्सानां पालनात्–वत्सी ।

विवृतिः

दिष्वाविर्भूतनिमित्तशक्तिभिरनेकधा तिष्ठन्निति पाठः स्पष्टार्थः । नैकानि–अनेकानि जगदुत्पत्तिसम्पत्तिविपत्तिरूपाणि कर्माणि करोतीति नैककर्मकृदिति व्याचष्टे—जगदिति । सम्पत्तिः—स्थितिः । विपत्तिः–लयः ॥

वसत्यखिलमत्रेति "वसेश्च" (उ. ३५८) इत्यधिकरणे सरप्रत्ययः । "सः स्यार्धधातुके" (पा. सू ७-४-४९) इति सकारस्य तत्त्वमित्यभिप्रेत्याह—वसतीति । भक्तेषु—स्नेहपात्रेषु वत्सः–कामः स्नेहोऽस्यास्तीति वत्सलः । "वत्सांसाभ्यां कामबले" (पा. सू. ५-२-९४) इति लच्प्रत्ययः । लच्प्रत्ययसन्निधाने च वत्सशब्दः कामवचनः । तथा च भक्तेषु स्नेहशाली वत्सल इत्यभिप्रेत्याह—भक्तस्नेहित्वादिति । वत्साः–गोवत्साः पाल्यत्वेनास्य सन्तीति गोपालवेषस्य विष्णोरिति वत्सीत्याह—वत्सानामिति । यद्वा

स्तोत्रम्

# रत्नगर्भो धनेश्वरः ॥ ६३ ॥

# धर्मगुप्

भाष्यम्

जगत्पितुस्तस्य वत्सभूताः प्रजा इति वा–वत्सी ॥

रत्नानि गर्भभूतानि अस्येति समुद्रः–रत्नगर्भः । धनानामीश्वरः—धनेश्वरः ॥ ६३ ॥

धर्मान् गोपायतीति–धर्मगुप् । "धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" (भ. गी. ४-८) इति भगवद्वचनात् ।

विवृतिः

स्थावरजङ्गमात्मकसर्वप्रजारूपाः वत्साः–पुत्रा अस्य जगत्पितुः सन्तीति "वत्सः पुत्रादिवर्षयोः" (मेदिनी) इत्यभिधानाद्वत्सीत्यर्थान्तरमाह— **(जगत्पितुरिति) तस्येति ॥**

रत्नानि गर्भा गर्भे वा यस्य स तथा रत्नगर्भः । "सरसामस्मि सागरः" (भ. गी. १०-२४) इति सागरस्य भगवद्विभूतित्वावगमाद्रत्नगर्भः–सागररूप इत्याह—**रत्नानीति** । धनानामीश्वरो धनेश्वरः–कुबेरः । "वित्तेशो यक्षरक्षसाम्" (भ. गी. १०-२३) इति कुबेरस्य भगवद्विभूतित्वावगमाद्धनेश्वरः–कुबेररूप इत्याह—**धनानामिति ॥ ६३ ॥**

धर्मान् गोपायति–रक्षतीति "गुपू रक्षणे" इत्यस्मात् "आयादय आर्धधातुके वा" (पा. सू. ३-१-३१) इत्यायप्रत्ययस्य वैकल्पिकत्वाद्भावे क्विप्प्रत्यय इत्याह—**धर्मानिति** । धर्मान् करोति–अनुतिष्ठति स्वस्य धर्मानुष्ठानप्रयोजनाभावेऽपि लोकसङ्ग्रहार्थमिति

### स्तोत्रम्

## धर्मकृद्धर्मी सदसत्

### भाष्यम्

**धर्माधर्मविहीनोऽपि धर्ममर्यादास्थापनार्थं धर्ममेव करोतीति—धर्मकृत्। [1] धर्मान् धारयतीति—धर्मी। अवितथं परं ब्रह्म—सत्। "सदेव सोम्येदम्" (छा. ६-२-१) इति श्रुतेः। अपरं ब्रह्म—असत्। "वाचारम्भणं विकारो नामधेयम्"**

### विवृतिः

धर्मकृदिति व्याचष्टे—**धर्माधर्मेति**। धर्माः—यागादिरूपाः श्रौताः स्मार्ताः तान्त्रिकाश्च [2]भगवत्समाराधनरूपाः ग्राह्यत्वेन च स्थाप्यत्वेन च सन्त्यस्येति धर्मीत्याह—**धर्मान् धारयतीति**। गृह्णात्यनुष्ठापयति वेत्यर्थः। धर्माचारतया धर्मीति पाठे—धर्माः पूर्वोक्ता अनुष्ठेयत्वेन सन्त्यस्येति धर्मीत्याह—धर्माचारतयेति। धर्मानाचरतीति धर्माचारः। तस्य भावस्तत्ता तयेत्यर्थः। धर्माधारतयेति पाठे तु—धर्माणां ज्ञानैश्वर्यतेजआदीनां आश्रयतया धर्मीति व्याख्येयम्॥

सत्—सत्यमवितथं कालत्रयाबाध्यं वस्तु, तदित्याह—**सदिति**। तत्र श्रुतिमाह—**सदेवेति**। असत्—अपरं ब्रह्म हिरण्यगर्भादिकं, असत्यविकारोपाधिकत्वादसदिति व्याचष्टे—**अपरमिति**। विकारस्यासत्त्वे श्रुतिमाह—**वाचारम्भणमिति**। वागारभ्यं नाममात्रं विकारः, न वस्तुभूतोऽस्तीत्यर्थः। क्षरति—नश्यतीति क्षरम्। "क्षर सञ्चलने" इत्यस्मात् पचाद्यच्। सर्वाणि भूतानि क्षरमित्युच्यते। न क्षरति—

---

[1] धर्माचारतया धर्मी—**पा.** धर्माधारतया धर्मी—**पा.** [2] भगवदाराधन—**पा.**

स्तोत्रम्

## क्षरमक्षरम् ।

भाष्यम्

(छा. उ. ६-४-१) इति श्रुतेः । क्षरम्—सर्वाणि भूतामि । कूटस्थः—अक्षरम् ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

इति भगवद्वचनात् ॥ (भ. गी. १८-१६)

आत्मनि कर्तृत्वं कल्पितमिति तद्वासनावगुण्ठितो जीवो विज्ञाता । तद्विलक्षणो विष्णुः—

विवृतिः

न विनश्यति ज्ञानं विनेति, अश्नुते वा स्वकार्याणीति कूटस्थं कारणमविद्याख्यमक्षरमित्युच्यते । तदुभयात्मकं ब्रह्म क्षरमक्षरं चेत्यभिप्रेत्य क्षराक्षरनामद्वयं व्याचष्टे—क्षरमिति । भूतानीति । उत्पत्तिमन्ति कार्याणीत्यर्थः । कूटस्थ इति । कूटो यथार्थवस्त्वाच्छदनेनायथार्थवस्तुप्रकाशनम् । वञ्चनं मायेत्यनर्थान्तरम् । तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितं कूटस्थमित्यर्थः । अविद्यातत्कार्ययोः क्षराक्षरात्मकत्वे भगवद्वचनमुदाहरति—द्वाविति । पुरुषाविति । पुरुषोपाधी मायातत्कार्ये इत्यर्थः ॥

विज्ञानात्मनि प्रतीच्यन्तःकरणोपाधिवशात्कर्तृत्वं कल्पितमिति परमार्थत आत्मा विज्ञात्रभिन्न एव ; न विज्ञानकर्ता । किन्तु विज्ञानघनरूपः । "विज्ञानघन एव" (बृह. २-४-१२) इति श्रुतेरित्यभिप्रेत्याह—कर्तृत्वमिति । आत्मनि कर्तृत्वादिज्ञानं कल्पित–

### स्तोत्रम्

## अविज्ञाता सहस्रांशुः

### भाष्यम्

**अविज्ञाता । [1]आदित्यगता अंशवोऽस्येत्ययमेव मुख्यः— सहस्रांशुः । "येन सूर्यस्तपति तेजसेद्धः" (तै. ब्रा. ३-१२-९) इति श्रुतेः, 'यदादित्यगतं तेजः' (भ.गी. १५-१२) इति स्मृतेश्च ।**

### विवृतिः

मिति तद्वासनावगुण्ठितो जीवोऽविज्ञातेति पाठान्तरम् । तस्यायमर्थः । आत्मन्यकर्तरि कर्तृत्वादिज्ञानं कर्तृत्वादिना सह अविद्यया अध्यस्तमिति कर्तृत्वाद्यध्यासजन्यवासनया आवृतः "कर्ता आहं" इत्यभिमन्यमानो जीवः स्वस्वरूपस्याकर्त्रभोक्त्रात्मकस्याविज्ञानादविज्ञाता । तद्रूपः परमात्मा । "स एष इह प्रविष्ट आनखाग्रेभ्यः" (बृह. उ. १-४-७) इति श्रुतेरित्यर्थः । आत्मनि कर्तृत्वादिविकल्पोऽज्ञानकल्पित इति तद्वासनावगुण्ठितो जीवो विज्ञाता, तद्विलक्षणो विष्णुरविज्ञातेति क्वचित् पाठो दृश्यते । तस्यायमर्थः । विपर्ययेण ज्ञाता विज्ञाता । आत्मनि कर्तृत्वादिज्ञानस्य विपर्ययज्ञानरूपत्वात्तदन्यो विष्णुरविज्ञातेति ॥

सहस्रमंशवोऽस्य सहस्रांशुः परमात्मेति व्याचष्टे—**आदित्यगता इति । अयमेवेति ।** आदित्यस्य तद्गतांशूनां च सत्तास्फूर्तिप्रदत्वेन तत्रानुगमात्परमात्मैव मुख्यः सहस्रांशुरित्यर्थः । मुख्यत्वे श्रुतिमाह—**येनेति । येन**—चैतन्यज्योतिषा **इद्धः**—प्रकाशितः सन् **सूर्यः तपति**—प्रकाशत इत्यर्थः । तत्रैव भगवद्वचनमुदाहरति—**यदादित्येति । आदित्यगतं यत्तेजः**—चैतन्यात्मकं, **चन्द्रमस्यग्नौ च यत्तेजः तन्मामकं**-मदीयं मम—विष्णोः स्वरूपभूतं **विद्धि** ॥

---

[1] आदित्यादिगता—**पा.**

### स्तोत्रम्

## विधाता कृतलक्षणः ॥ ६४ ॥

### भाष्यम्

**विशेषेण [1] शेषदिग्गजभूधरान् [2] सर्वभूतानां धातॄन् दधातीति–विधाता। नित्यनिष्पन्नचैतन्यरूपत्वात्—कृतलक्षणः। कृतानि लक्षणानि—शास्त्राण्यनेनेति वा। "वेदाः शास्त्राणि**

### विवृतिः

ननु स्थावरजङ्गमेषु समानं [3]तत्तेजः। अत आदित्यगतमिति विशेषणं किमर्थम्? उच्यते–आदित्यादिषु सत्त्वमत्यन्तभास्वरम्। अतस्तत्रैवाविस्तरां ज्योतिरिति विशेष्यते। न तु तत्रैव तदधिकमिति। यथाहि तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति। आदर्शादौ तु स्वच्छे अविर्भवति तद्वदित्यर्थः। विशेषेण दधातीति विपूर्वाद्दधातेस्तृजिति व्याचष्टे **विशेषेणेति**। शेषश्च दिग्गजाश्च भूधराश्च शेषदिग्गजभूधराः। तानन्येषां धारकान्विशेषेण धारणशक्तिप्रदानलक्षणेन धारयति--पोषयतीति विधाता। तथाच "विधाता धातुरुत्तमः" (वि. स. १८) इत्यत्रत्येन द्वितीयव्याख्यानेनापौनरुक्त्यमित्यर्थः। कृतं—नित्यासिद्धलक्षणं चैतन्यात्मकं स्वरूपमस्येति कृतलक्षण इत्याह—**नित्येति**। कृतानि लक्षणानि–शास्त्राणि ऋग्वेदादिरूपाण्यनेनेति कृतलक्षण इत्यर्थान्तरमाह—**कृतानीति**। तत्र प्रमाणमाह–**वेदा इति**। सजातीयेभ्यो विजातीयेभ्यश्च व्यावर्तको धर्मविशेषो लक्षणम्। तत्कृतमनेन सर्वेषां

---

[1] शेषदिग्गजादीन् भूधरान्–पा. [2] समस्तभूतानां–पा. [3] तज्ज्योतिः–पा.

स्तोत्रम्

# गभस्तिनेमिः

भाष्यम्

विज्ञानमेतत्सर्वं जनार्दनात् " (वि. म. १३९) इत्यत्रैव वक्ष्यति। सजातीयविजातीयव्यवच्छेदकं लक्षणं सर्वभावानां कृतमनेनेति वा, आत्मनः श्रीवत्सलक्षणं वक्षसि तेन कृतमिति वा–कृतलक्षणः ॥ ६४ ॥

गभस्ति[1]चक्रस्य मध्ये सूर्यात्मना [2]स्थित इति–गभस्तिनेमिः। सत्त्वं गुणं प्रकाशकं प्राधान्येनाधितिष्ठतीति,

विवृतिः

पदार्थानामिति कृतलक्षण इति प्रकारान्तरेण व्याचष्टे––सजातीयेति। यद्वा लक्षणं पृथिव्यादीनां गन्धादिरूपम्; तत् कृतं —[3] उपदिष्टमनेन गौतमकणादादिरूपेणेत्यभिप्रेत्याह—सजातीयेति। अथवा लक्षणं–प्रदक्षिणावर्तविचित्ररोमसंस्थानात्मकं श्रीवत्साख्यं चिह्नं वक्षसि कृतं–धृतं येन स तथेति प्रकारान्तरेण व्याचष्टे—आत्मन इति। श्रीवत्सलक्षणं गरुडपुराणे दर्शितम्—

" प्रदक्षिणावर्तविचित्ररोमश्रीवत्स[4]सद्बिम्बविभूषिताङ्गम् " इति ॥ ६४ ॥

नेमिपदेन चक्रावयववाचिना अवयवि चक्रं लक्ष्यते। गभस्त्यात्मिका नेमिः–चक्रमस्य गभस्तिचक्रमध्यवर्तिनः सूर्यात्मनः परमेश्वरस्येति गभस्तिनेमिनाम व्याचष्टे—गभस्तिचक्रस्येति। सत्त्वं–सत्त्वगुणं, प्रकाशकं–प्रकाशात्मकं, अधितिष्ठति पालनोपाधितया विष्णुरूपेणेति सत्त्वस्थ इत्यभिप्रेत्याह—सत्त्वमिति। यद्वा सत्त्वेषु–सर्वप्राणिषु

---

[1] चक्रमध्ये–पा. [2] स्थितो गभस्तिनेमिः–पा. [3] उपपादितं उद्दिष्टं वा अनेन–पा. [4] सद्देषवि–पा.

स्तोत्रम्

## सत्त्वस्थः सिंहो भूतमहेश्वरः ।

भाष्यम्

**सर्वप्राणिषु तिष्ठतीति वा–सत्त्वस्थः । विक्रमशालित्वात् सिंहवत्–सिंहः । नृशब्दलोपेन " सत्यभामा भामा " इति–[1]यद्वा नृसिंहः–सिंहः । भूतानां [2] महानीश्वरः, भूतेन–सत्येन स एव [3]परमात्मा महानीश्वर इति वा–भूतमहेश्वरः ॥**

विवृतिः

जीवरूपेण अन्तर्यामिरूपेण च तिष्ठतीति सत्त्वस्थः । " सुपि स्थः " (पा.सू. ३-२-४) इति तिष्ठतेः कप्रत्यय इति व्याचष्टे–**सर्वप्राणिष्विति।** विक्रमशालित्वगुणेन सिंहवत् सिंह इति व्याचष्टे—**विक्रमेति** । अथवा सिंहः—नृसिंहः, 'सत्यभामा भामा' इतिवत् नामैकदेशे नामग्रहणमित्यभिप्रेत्याह—**नृशब्दलोपेनेति** । महान्—उत्कृष्टश्चासावीश्वरश्च, " सन्महत् " (पा. सू. २-१-६१) इति समानाधिकरणसमासः । भूतानां महेश्वरः अन्यैरनियम्य ईश्वरो भूतमहेश्वरः । यद्वा " भूतं क्ष्मादौ पिशाचादौ न्याये सत्योपमानयोः " (मेदिनी) इत्यभिधानाद्भूतशब्दः सत्यवचनः । भूतेन—सत्यात्मना महान्–उत्कृष्ट ईश्वरो भूतमहेश्वर इति द्विधा व्याचष्टे—**भूतानामिति** ॥

आदीयन्ते–उपसंह्रियन्ते भूतान्यस्मिन्निति आङ्पूर्वाद्ददातेः " उपसर्गे घोः किः " (पा.सू. ३-३-९२) इति किप्रत्यये अदिशब्दः । दीव्यति–प्रकाशत इति देवः । आदिश्चासौ देवश्चादिदेव इति " आदिदेवः पुरन्दरः " (वि. सं. ४१) इत्यत्रत्येनादिदेवशब्देनापान-

---

[1] यद्वा सिंहः–पा. [2] महानीश्वर इति महेश्वरः–पा. [3] परमो महा–पा.

स्तोत्रम्

## आदिदेवो महादेवः

भाष्यम्

सर्वभूतान्यादीयन्तेऽनेनेति–आदिः। आदिश्चासौ देवश्चेति–आदिदेवः। महांश्चासौ देवश्चैतन्यरूपेण *विद्यत इति–महादेवः। "सर्वान् भावान् परित्यज्य [1]आत्मज्ञानयोगैश्वर्ये महति महीयते, तस्मादुच्यते भगवान् † महादेवः।" (अ. शि. ४) इति श्रुतेः।

विवृतिः

रुक्तयं दर्शयन् व्याचष्टे—**आदीयन्त इति** । अथर्वशिरोवाक्यानुसारिणीं महादेवनामनिरुक्तिं दर्शयितुं तद्वाक्यं पठति—**सर्वानिति**। **सर्वान्**–निखिलान्, **भावान्**–पदार्थान्, **परित्यज्य**–समन्तात्त्यक्त्वा, **आत्मज्ञानयोग्यैश्वर्ये**–अहं ब्रह्मास्मीत्यात्मज्ञानं तदेव योग्यैश्वर्यं तस्मिन्, **महति**–प्रौढे, निष्ठां लब्ध्वा स्वात्मानन्दस्फुरणवशान्महीयत इति महान्, स चासौ देवश्च महादेवः॥

अथवा **सर्वान् भावान्**–पदार्थान्, **परित्यज्य**–तत्र [2]सक्तिमकृत्वा, **आत्मज्ञानयोग्यैश्वर्ये**—"अहं ब्रह्मास्मि" इत्यात्मज्ञानमेव योग्यैश्वर्यं तास्मिन् **महति महीयते**–तद्विषयीभूतः सन् सर्वैर्योगिभिः पूज्यत इति। अस्मिन् पक्षे 'अहं ब्रह्मास्मीत्या' त्मज्ञानेन योगिभिर्महीयते—पूज्यत इति महान्, द्योतनाद्देवः, महांश्चासौ देवश्च महादेव इति व्युत्पत्तिर्द्रष्टव्या॥

---

* "विद्यते" इत्यत्र "दीव्यति" इति पाठः स्यादिति भाति. † अत्र श्रुतौ महेश्वर इति पाठो दृश्यते। [1] आत्मज्ञानेन योगैश्वर्येण मह–**पा.**
[2] आसक्तिम–**पा.**

स्तोत्रम्

## देवेशो देवभृद्गुरुः ॥ ६५ ॥

भाष्यम्

**[1]प्राधान्येन देवाना[2]मीशो–देवेशः। देवान् बिभर्तीति देवभृत्–शक्रः, तस्यापि शासितेति –देवभृद्गुरुः। देवानां [3]भरणात्, सर्वविद्यानां च[4] गरणाद्वा—देवभृद्गुरुः ॥ ६५ ॥**

विवृतिः

देवानां—इन्द्रादीनां ईशः–प्रधानभूतः देवेशः, "विष्णुः परमः" (तै. सं. ५-५-१) इति श्रुतेरित्यभिप्रेत्याह—**देवानामिति**। देवान् बिभर्ति—पोषयतीति देवभृत्—शक्रः, तस्यापि गुरुः–शासिता, "भयादिन्द्रश्च सूर्यश्च मृत्युर्धावति पञ्चमः" (कठ. २-३-३) इति श्रुतेः देवभृद्गुरुरिति निर्वक्ति—**देवानिति**। यद्वा देवान् बिभर्ति–पोषयतीति देवभृत्—विष्णुः। स एव सर्वा विद्या गृणन्—उपदिशन् गुरुः। "गॄ शब्दे" अस्मात् "कृग्रोरुच" (उणा. २४) इत्युप्रत्यय इत्यभिप्रेत्यार्थान्तरमाह—**देवानामिति**। **गरणादिति**। उपदेशादित्यर्थः। सर्वविद्यानां चेत्यत्र चकारो गरणाद्वेत्यत्र वाशब्दात्पूर्वं योज्यः। तत्र चशब्दः भरणेन साकं गरणस्य समुच्चयार्थः। वाशब्दो व्याख्याविकल्पार्थ इति बोध्यम् ॥ ६५ ॥

---

[1] प्राधान्यात्–**पा.**  [2] मीश्वरो–**पा.**  [3] भरणाद्वा देवभृद्गुरुः–**पा.**
[4] निगरणात्–**पा.**

स्तोत्रम्

# उत्तरो गोपतिः

भाष्यम्

[1]जन्म[2]संसारबन्धनादुत्तरतीति—उत्तरः । [3]विश्वस्मादुत्कृष्ट इति वा*। गवां पालनात् गोपवेषधरः–गोपतिः। गौः- मही, तस्याः पतित्वाद्वा। समस्तभूतानि पालयन् रक्षको

विवृतिः

जन्मसंसारबन्धनादुत्तरति–उत्तीर्णो भवतीति तरतेरुत्पूर्वात् पचाद्यजिति निर्वक्ति—जन्मेति। उत्कृष्टार्थवृत्तेरुच्छब्दात्तरप्। अद्रव्यप्रकर्ष इत्युक्तेः नाम्। विश्वस्मादुत्तरः–उत्कृष्टः, "विश्वाधिकः" (महाना. १०-३) इति श्रुतेरित्यर्थान्तरमाह—**विश्वस्मादिति**। गवां पतिः, गोकुलबृन्दावनादिषु गोपालरूपेण गवां पालनादित्याह—**गवामिति**। गौः–मही, तस्याः पतिः–पालकः, रामादिरूपेणेत्याह–**गौरिति**। यद्वा गौः--मही भूदेवी, तस्याः पतिः–भर्ता, "महीं देवीं विष्णुपत्नीं" (तै. ब्रा. ३-१-२) इति श्रुतेरित्यभिप्रेत्य रूढिमाश्रित्यापि व्याचष्टे—**गौरिति**। सर्वाणि भूतानि गोपायति–रक्षतीति गोप्ता। "गुपू रक्षणे" "आयादय आर्धधातुके वा" (पा. सू. ३-१-३१) इति आयाभावे तृच्प्रत्यय इति व्याचष्टे—**समस्तेति**। ज्ञानेनैव गम्यो ज्ञानगम्यः; सर्वं वाक्यं सावधारणमिति न्यायात् ज्ञानेनैवेत्यवधारण-

---

* वा। "विश्वस्मादिन्द्र उत्तरः" (ऋक्. सं. १०-१६-२) इति श्रुतेः। इति विवृत्यननुगुणं पाठान्तरम्। क्वचिन्मातृकायामिदं श्रुतिवाक्यं नास्ति।

[1] जन्मसंसारादुत्तरति–**पा.** [2] संसारसागरादुत्तारयतीति–**पा.** [3] उत्कृष्ट–**पा.** सर्वोत्कृष्ट–**पा.**

स्तोत्रम्

# गोप्ता ज्ञानगम्यः पुरातनः ।
# शरीरभूतभृत्

भाष्यम्

जगत इति—गोप्ता । न कर्मणा, न ज्ञानकर्मभ्यां वा गम्यते । किन्तु ज्ञानेनैव गम्यत इति—ज्ञानगम्यः । कालेनापरिच्छिन्नत्वात् [1]पुरापि भवतीति–पुरातनः ॥

[2]शरीरारम्भकभूतानां भरणात्प्राणरूपधरः—शरीरभूत-

विवृतिः

लाभः । "समर्थः पदविधिः" (पा. सू. २-१-१) इति सामर्थ्यबलाद्वेत्त्याभिप्रेत्याह—**न कर्मणेति** । अनेन केवलकर्मणां साक्षान्मोक्षसाधनत्वं व्यावर्त्यते । **न ज्ञानकर्मभ्यामित्यनेन** समुच्चयो वार्यते । **पुरातनः** । "सायं चिरम्" (पा. सू. ४-३-२३) इत्यादिना ट्युल्प्रत्ययः तुडागमश्च । कालेनापरिच्छिन्नत्वात् पूर्वकालेऽपि वर्तमानत्वेन पुरापि भवतीति पुरातन इत्याह—**कालेनेति** ॥

शरीरारम्भकाणि भूतानि शरीरभूतानि । शाकपार्थिवादिवत्समासः । शरीरभूतानि बिभर्ति प्राणस्वरूपेणेति व्याचष्टे–**शरीरेति** । "भुज परिपालनाभ्यवहारयोः" इत्यस्मात्पालनाभ्यवहारार्थकात् तृच्प्रत्यये भोक्तृशब्दः । तत्राभ्यवहारो भोगः । तथा च सर्वस्य पालनात् सर्वरूपानन्दसन्दोहभोगाद्वा भोक्तेत्यर्थद्वयं क्रमेण गृहीत्वा

---

[1] पुरा भव-पा. [2] शरीरभूतभूतानां—पा.

स्तोत्रम्

भोक्ता

भाष्यम्

भत्। [1]पालकत्वात्—भोक्ता। [2]परमानन्दसन्दोहसम्भोगाद्वा—भोक्ता। इति नाम्नां पञ्चमशतकं विवृतम्।

इति पञ्चमशतकभाष्यम्

---

विवृतिः

व्याचष्टे—पालकत्वादिति। परमानन्देति। स्वरूपानुभवरूपाद्भोगात्परमानन्दस्वरूपविषयकचित्प्रतिबिम्बयुक्तमायावृत्त्यात्मकभोगाद्वेत्यर्थः॥

इति पञ्चमशतकभाष्यं[3] विवृतम्

---

[1] पालको भो—पा. [2] स्वरूपानन्द—पा. स्वरसानन्द—पा, [3] व्याख्यातम्—पा.

### स्तोत्रम्

## कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥

### अथ षष्ठशतकभाष्यम्

[1]कपिश्चासाविन्द्रश्चेति । कपिः–वराहः, वाराहं वपुरास्थितः–[2]कपीन्द्रः । कपीनां वानराणामिन्द्रः—कपीन्द्रः राघवो वा । भूरयः–बह्वयो यज्ञदक्षिणाः धर्ममर्यादां दर्शयतो यज्ञं कुर्वतोऽस्य विद्यन्त इति—भूरिदक्षिणः ॥ ६६ ॥

### अथ षष्ठशतकभाष्यविवृतिः

वराहरूपेण कात्-उदकात् भूमिं पाति स्मेति कपिः । पातेर्बाहुलकात् किप्रत्ययः । कपिर्वराहरूपो विष्णुः । इन्द्रः परमेश्वरः । कपिश्चासाविन्द्रश्च कपीन्द्र इति व्याचष्टे—**कपिरिति** । कपीनां—सुग्रीवप्रभृतीनामिन्द्रः—ईश्वरो दाशरथिरूप इत्यर्थान्तरमाह—**कपीनामिति** । भूरयः–बह्वयो यज्ञदक्षिणा लोकसङ्ग्रहार्थं यज्ञं कुर्वतोऽस्येति भूरिदक्षिणः । "शेषाद्विभाषा" (पा.सू.५-४-१५४) इति विकल्पात्कप्रत्ययाभाव इत्याह—**भूरय इति** ॥ ६६ ॥

सोमं पिबति यष्टव्येन्द्रादिरूपेणेति सोमपः । *देवताधिकरणोक्तन्यायेन देवानां विग्रहहविर्भोगादीनां सत्त्वात् । "अहं हि सर्वयज्ञानां

* "तदुपर्यपि बादरायणः सम्भवात्" (ब्र. सू. १-३-२६)–देवानां विग्रहप्रतिपादकमन्त्राणां मानान्तरविरोधसंवादाभावेन स्वार्थे प्रामाण्यात्, अर्थित्वसामर्थ्याधिकारकारणस्य तेषामपि सत्त्वेन ब्राह्मणस्य बृहस्पतिसव इव देवानां ब्रह्मविद्यायामधिकारोऽस्त्येवेति देवताधिकरणन्यायः ।

[1] कपिर्वराह इन्द्र–पा. [2] कपीन्द्रो वराहमूर्तिः–पा.

## स्तोत्रम्

# सोमपः

### भाष्यम्

सोमं पिबति सर्वयज्ञेषु [1] यष्टव्यदेवतारूपेणेति–सोमपः। धर्ममर्यादां दर्शयन् यजमानरूपेण वा–सोमपः। [2] स्वात्मामृतरसं

### विवृतिः

भोक्ता च प्रभुरेव च" (भ. गी. ९-२४) इति भगवद्वचनादित्याह—**सोममिति**। आविर्भावेषु धर्ममर्यादास्थापनाय स्वयमेव यजमानो भूत्वा सोमं पिबति स्मेति सोमप इत्यर्थान्तरमाह—**धर्मेति**। स्वात्मैवामृतरसः–सुधारसः, तद्वत्परमप्रेमविषयत्वात्। यद्वा स्वात्मैवामृतरसः–मोक्षानन्दः, तं पिबति–अनुभवति स्वरूपप्रकाशेन वृत्तिज्ञानेन वेत्यमृतप इति व्याचष्टे—**स्वात्मेति**। यद्वा अमृतं धन्वन्तरिहस्तस्थं असुरैर्ह्रियमाणं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबद्गणदेवतान्तर्गतो भूत्वेति–अमृतपः।

" ततस्ते जगृहुर्दैत्या धन्वन्तरिकरे स्थितम्।
कमण्डलुं महावीर्या यत्रास्ते [3] तद्द्विजामृतम्॥
मायया लोभयित्वा तान् विष्णुः स्त्रीरूपसंस्थितः।
दानवेभ्यस्तदादाय देवेभ्यः प्रददौ [4] प्रभुः॥
ततः पपुः सुरगणाः शक्राद्यास्तत्तदामृतम्।"

(वि. पु. १-९-१०८-११०)

---

[1] यद्द्रव्यत्वाद्देवता–पा., द्रव्यदेवता–पा. ? [2] स्वात्मनामृत–पा. [3] स्तेऽमृतसुत्तमम्–पा. [4] विभुः–पा.

## स्तोत्रम्

# अमृतपः सोमः पुरुजित्

### भाष्यम्

**पिबन्–अमृतपः। [1] असुरैर्ह्रिय[2]माणममृतं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबदिति वा। सोमरूपेणौषधीः पोषयन्–सोमः। उमया सहितः शिवो वा। पुरून्–बहून् [3] जयतीति–पुरुजित्।**

### विवृतिः

इति विष्णुपुराणोक्तेरित्याह—**अमृतमिति**। ओषधीनां पोषणाय सोमात्मकविभूत्यात्मना स्थितः सोम इत्याह—**सोमरूपेणेति**। उमया सहितः सोमः–शङ्करः। तद्रूपेणावस्थित इति स्वविभूतिवाचकेन शब्देन स्तूयते परमेश्वर इत्याह—**उमयेति**। "तेन सहेति तुल्ययोगे" (पा. सू. २-२-२८) इति बहुव्रीहौ "वोपसर्जनस्य" (पा. सू. ६-३-८२) इति सभावविकल्पः। शिवरूपत्वं च विष्णुपुराणे दर्शितम्—

"सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥"

(वि. पु. १-२-६६)

इति। शिवपदरहिते पाठे उमा–ब्रह्मविद्या, तया सह वर्तत इति सोम इत्यर्थो बोध्यः। पुरून्–बहून् शत्रून् जयति–अभिभवतीति पुरुजित्। "जि अभिभवे" अस्मात् "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना क्विबिति निर्वक्ति—**पुरूनिति**। जगद्रूपेण

---

[1] मथितममृतमसु–**पा.** [2] माणं रक्षि–**पा.** [3] विजयत इति–**पा.**

स्तोत्रम्

# पुरुसत्तमः ।
# विनयो जयः

भाष्यम्

**विश्वरूपत्वात्पुरुः, उत्कृष्टत्वात्सत्तमः, पुरुश्चासौ सत्तमश्चेति–पुरुसत्तमः ॥**

**विनयं–दण्डं करोति दुष्टानामिति–विनयः । समस्तानि भूतानि जयतीति–जयः । सत्या सन्धा–सङ्कल्पः अस्येति–सत्यसन्धः । "सत्यसङ्कल्पः" (छा. उ. ८-१-५) इति श्रुतेः ।**

विवृतिः

बहुत्वात्पुरुः, अतिशयेन सन् सत्तमः । अतिशायने तमप् । पुरुश्चासौ सत्तमश्चेति पुरुसत्तम इति व्याचष्टे—**विश्वरूपत्वादिति** ॥

विनयः–अनौद्धत्यं अनेनेति विपूर्वान्नयतेः करणे "एरच्" (पा. सू. ३-३-५६) इत्यच्प्रत्ययः । विनयः–दण्डः । दण्डेन ह्युद्धतानां विनयो भवतीति तं करोतीति विग्रहे "तत्करोति तदाचष्टे" (ग. सू. २०४) इति णिचि णिजन्तात्पचाद्यचि "णेरनिटि" (पा. सू. ६-४-५१) इति णिलोपे विनय इत्यभिप्रेत्य निर्वक्ति—**विनयमिति । दण्डमिति** । दममित्यर्थः । "दण्डः सैन्ये दमे यमे" (हैमः) इत्यभिधानकोशात् । तथा च उद्धतानां प्रजानां अनौद्धत्यहेतुं दण्डं कुर्वन् विनय इत्युच्यत इत्यर्थः । तथा च श्रुतिः "दाम्यत दत्त दयध्वम्" (बृह. उ ५-२-३) इति । समस्तानि भूतानि जयति–अतिशेत इति जयतेः पचाद्यजिति व्याचष्टे—**समस्तानीति** ॥

सत्याः–अवितथाः, सन्धाः–सङ्कल्पा अस्येति बहुव्रीहावुपसर्जनह्रस्वत्वमित्याह—**सत्येति** । तत्र श्रुतिमाह—**सत्यसङ्कल्प इति** ।

स्तोत्रम्

## सत्यसन्धो दाशार्हः सात्वतां पतिः ॥ ६७ ॥

## जीवः

भाष्यम्

दाशः-दानं, तमर्हतीति–दाशार्हः। दाशार्हस्य कुलोद्भवाद्वा। सात्वतं नाम तन्त्रम्। "तत्करोति तदाचष्टे" ( ग. सू.२०४) इति णिचि कृते क्विप्रत्यये णिलोपे च कृते पदं सात्वत्, तेषां पतिः–योगक्षेमकर इति–सात्वतां पतिः ॥ ६७ ॥

प्राणान् क्षेत्रज्ञरूपेण धारयन्—जीव उच्यते।

विवृतिः

"दाशृ दाने" अस्मात् भावे घञ्। दाशः–दानं पत्रपुष्पफलतोयादीनां, भक्तकर्तृकं तदर्हतीति विग्रहे "अर्ह" (पा. सू. ३-२-१२) इति सूत्रेणाच्प्रत्यये दाशार्ह इति व्याचष्टे––दाश इति। दाशार्हो नाम यादवविशेषः। तद्वंश्यत्वाद्वा दाशार्ह इति व्याख्यानान्तरमाह— दाशार्हस्येति। सात्वतमिति भागवतधर्मप्रतिपादकं तन्त्रम्। "तत्करोति तदाचष्टे" (ग. सू. २०४) इति णिचि णिजन्तात्क्विपि "णेरनिटि" (पा. सू. ६-४-५१) इति णिलोपे सात्वदिति तकारान्तः शब्दः। तेषां सात्वतां–सात्वततन्त्रमाचक्षाणानां भक्तानां पतिः–पालको योगक्षेमवहनादिति निर्वक्ति––सात्वतामिति ॥ ६७ ॥

जीवति–प्राणान् धारयति क्षेत्रज्ञरूपेणेति जीवः। "जीव प्राणधारणे" इत्यस्मात्पचाद्यजिति निर्वक्ति––प्राणानिति। क्षेत्रज्ञरूपेणेति। "विराजं देवताः कोशांश्च सृष्ट्वा [1] प्रविश्यामूढो मूढ इव

[1] प्रविश्य मूढ इव–पा.

स्तोत्रम्

## विनयिता(ऽ)साक्षी

भाष्यम्

**विनयित्वं विनायिता, तां च साक्षात्पश्यति प्रजानामिति–विनयितासाक्षी। अथवा नयतेर्गतिवाचिनो रूपं–विनयिता। असाक्षी–असाक्षाद्द्रष्टा–आत्मातिरिक्तं वस्तु न [1]पश्यतीत्यर्थः।**

विवृतिः

व्यवहरन्नास्ते माययैव" (नृ-उत्तर-उ-९) इति श्रुतेरित्यर्थः। विनयः–उपशमः यतीनां धर्मः। "यतेरुपशमो धर्मः" इति स्मरणात्। स एषामस्तीति विनयिनः, तेषां भावो विनयिता, "अत इनिठनौ" (पा. सू. ५-२-११५) इतीनन्तात् "तस्य भावः" (पा. सू. ५-१-११९) इति तल्प्रत्ययः। तस्या–विनयितायाः–उपशमवत्ताया-स्साक्षी–द्रष्टा, ज्ञानरूपफलप्रदानाय ईश्वररूपेण गुरुरूपेण चेति विनयितासाक्षीति व्याचष्ट––**विनायित्वमिति**। यद्वा विनयते–विशेषेण गच्छति सर्वत्रेति विनयिता–सर्वव्यापी, विपूर्वात् "नय गतौ" इत्यस्मात्तृच्। "णीञ् प्रापणे" इति धातोर्ग्रहणे तु तस्यानिट्कत्वाद्विनयितेति सेट्कं रूपं न सिद्ध्येत्। असाक्षी–असाक्षाद्द्रष्टा, विनयिता चासौ असाक्षी चेति सविशेषणमेकं नामेत्या-श्रित्य अकारप्रश्लेषेणार्थान्तरमाह––**अथवेति**। **आत्मातिरिक्तं वस्तु न पश्यतीति**। बाह्यं वस्तु आत्मातिरिक्तत्वेन न पश्यति। किन्तु स्वमायया स्वतादात्म्येन स्वस्मिन् कल्पितं पश्यतीत्यसाक्षीत्यर्थः। यद्वा समाधि-दशायां समाधिस्थयोगिरूपेण स्वात्मातिरिक्तवस्तुनः असाक्षी–अद्रष्टे-त्यर्थः॥

---

[1] पश्यतीति बा–पा.

### स्तोत्रम्

## मुकुन्दोऽमितविक्रमः ।

### भाष्यम्

विनायितासाक्षीत्येकं नाम । मुक्तिं ददातीति–मुकुन्दः । पृषोदरादित्वात्साधुत्वम् । अक्षर[1]साम्यात्" (निरु. २-१-१) इति निरुक्तिवचनात् नैरुक्तानां मुकुन्द इति निरुक्तिः । अमिताः–अपरिच्छिन्ना विक्रमाः–त्रयः पादविक्षेपा अस्य, अमितं विक्रमणं–शौर्यमस्येति वा–अमितविक्रमः ॥

### विवृतिः

मुक्ति ददातीति "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्ययः । पृषोदरादित्वान्मुक्तिशब्दस्य मुभावो मुमागमश्चेत्यभिप्रेत्याह––मुक्तिमिति । [2] अक्षरवर्णसाम्यान्निरुक्तौ पृषोदरादित्वकल्पनायाश्च यास्कवचनं पठति––[3] अक्षरेति । " अक्षर[4]वर्णसाम्यान्निर्ब्रूयात्" (निरु. २-१-१) इति वचनात् नैरुक्तानां–निरुक्तिविदां यास्कप्रभृतीनां, मुकुन्द इति नाम्न उक्ता निरुक्तिरिष्टेत्यर्थः । अमिताः–अपरिच्छिन्नाः पदविक्षेपा अस्य वामनरूपेणावतीर्णस्येति अमिताविक्रमः, अमितः–अपरिच्छिन्नः–अनल्पो विक्रमः शौर्यमस्येति वेति द्विधा व्याचष्टे––अमिता इति ॥

अम्भांसि–देवादयः निधीयन्ते अस्मिन्निति अम्भोनिधिः । अम्भांसि–जलानि समुद्ररूपेऽस्मिन्निधीयन्त इति वा अम्भोनिधिः । "कर्मण्यधिकरणे च" (पा. सू. ३-३-९३) इति किप्रत्यय इति

---

[1] साम्यान्निरु–पा. [2] वर्णाक्षरसा–पा. [3] वर्णेति–पा. [4] वर्णसाम्यान्निर्वं · भाष्यम् · पा.

### स्तोत्रम्

## अम्भोनिधिरनन्तात्मा महोदधिशयः

### भाष्यम्

**अम्भांसि–देवादयोऽस्मिन्निधीयन्त इति–अम्भोनिधिः। "तानि वा एतानि चत्वार्यम्भांसि। देवा मनुष्याः पितरोऽसुराः" (तै. ब्रा. २-३-८) इति श्रुतेः। सागरो वा। "सरसामस्मि सागरः" (भ. गी. १०-२४) इति भगवद्वचनात्। देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वात्–अनन्तात्मा। संहृत्य सर्वभूतान्येकार्णवं जगत्कृत्वा अधिशेते महोदधिमिति–महोदधि-**

### विवृतिः

द्विधा व्याचष्टे—**अम्भांसीति**। देवादीनां चतुर्णामम्भस्त्वे श्रुतिमाह—**तानीति**। समुद्रस्य भगवद्विभूतित्वे वचनमाह —**सरसामिति**॥

अन्तः–परिच्छेदो देशतः कालतो वस्तुतश्च न विद्यते अस्येति अनन्तः–अभावमात्राप्रतियोगी आत्मा–स्वरूपमस्येत्यनन्तात्मेति व्याचष्टे—**देशत इति**। देशान्तरनिष्ठाभावप्रतियोगित्वरूपं देशतः परिच्छिन्नत्वं, कालान्तरनिष्ठाभावप्रतियोगित्वरूपं कालतः परिच्छिन्नत्वं, वस्त्वन्तरनिष्ठभेदप्रतियोगित्वलक्षणं वस्तुतः परिच्छिन्नत्वं च व्यापकत्वान्नित्यत्वात्सर्वात्मकत्वाच्च नेत्यनन्तत्वमित्यर्थः। महोदधौ शेत इति विग्रहे "अधिकरणे शेतेः" (पा. सू. ३-२-१५) इत्यच्प्रत्यय इति महोदधिशय इत्याह— **संहृत्येति**। तथा च भारतवचनम्—

सम्भक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत्।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः॥ इति॥

स्तोत्रम्

## अन्तकः ॥ ६८ ॥

## अजः

भाष्यम्

शयः। अन्तं करोति भूतानामिति–अन्तकः। "तत्करोति तदाचष्टे" (ग.सू. २०४) इति णिचि ण्वुलि अकादेशः ॥ ६८ ॥

आत्-विष्णोः अजायत इति कामः—अजः। * "अक्षराणामकारोऽस्मि" (भ. गी. १०-३३) "धर्माविरुद्धो भूतेषु

विवृतिः

अन्तं–नाशं करोति भूतानामित्यन्तकः। अन्तशब्दात् "तत्करोति तदाचष्टे" (ग. सू. २०४) इति सूत्रेण करोत्यर्थे णिचि "सनाद्यन्ताः" (पा. सू. ३-१-३२) इति णिजन्तस्य धातुसंज्ञायां "ण्वुल्तृचौ" (पा. सू. ३-१-१३३) इति ण्वुलि "युवोरनाकौ" (पा. सू. ७-१-१) इत्यकादेश इति निर्वक्ति—अन्तमिति ॥ ६८ ॥

अततीति अः—विष्णुः। अततेर्डः। आत्–विष्णोरजायतेत्यजः। "पञ्चम्यामजातौ (पा. सू. ३-२-९८) इति जनेर्डः। कन्दर्पः। "प्रजनश्चास्मि कन्दर्पः" (भ. गी. १०-२८) इति स्मृतेरित्यभिप्रेत्य अजनाम निर्वक्ति—आदिति। पूर्वं "अजः सर्वेश्वरः" (वि. स. २४) इत्यत्र "अजो दुर्मर्षणः" (वि. स. ३५) इत्यत्र च न जायत इत्यजः अजतीत्यज इति व्याख्यातम्। अधुना विधान्तरेण व्याख्यानादपौनरुक्त्यं द्रष्टव्यम् ॥

महः–पूजा, तमर्हतीति विग्रहे "अर्हः (पा. सू. ३-२-१२) इति सूत्रात् 'अर्हतेरच् स्यात् कर्मण्युपपदे' इत्यर्थकादच्प्रत्ययः

* इदं भगवद्वचनं केषुचित्पुस्तकेषु न दृश्यते.

### स्तोत्रम्

## महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।

### भाष्यम्

कामोऽस्मि" (भ. गी. ७-११) इति भगवद्वचनात् । महः—पूजा, तदर्हत्वात्—महार्हः । स्वभावेनैवाभाव्यो नित्यनिष्पन्नरूपत्वादिति—स्वाभाव्यः । जिता अमित्राः— अन्तर्वर्तिनो रागद्वेषादयो [2]बाह्याश्च [3]रावणकुम्भकर्णशिशुपालादयो येनासौ–जितामित्रः । स्वात्मामृतरसास्वादान्नित्यं प्रमोदते, ध्यायिनां ध्यानमात्रेण प्रमोदं [4]करोतीति वा—प्रमोदनः ॥

### विवृतिः

इत्यभिप्रेत्य निर्वक्ति—महः इति । भावयतीति भवतेर्ण्यन्तात्कर्मणि यत् । भाव्यः–साध्यः । न भाव्योऽभाव्यः । स्वभावेनैवाभाव्यो नित्यसिद्धरूपत्वादिति व्याचष्टे—स्वभावेनैवेति । जिताः अमित्राः–कामक्रोधादयो रावणादयश्च येनेति जितामित्र इति व्याचष्टे—जिता इति । प्रमोदते–हृष्यति स्वरूपानन्दानुभवादिति प्रमोदनः ; "मुद हर्षे" इत्यस्मात् प्रपूर्वात् "अनुदात्तेतश्च हलादेः" (पा. सू. ३-२-१४९) इति युच्प्रत्यय इत्याह स्वात्मेति । स्वात्मैवामृतरसः–अमृतद्रवः, तस्यास्वादनादित्यर्थः । ध्यायिनः–योगिनः प्रमोदयति–हर्षयतीति प्रमोदनः । मुदेः प्रपूर्वात् णिजन्तात् कर्तरि ल्युट्, औणादिको युज्वेति निर्वचनान्तरमाह—ध्यायिनामिति ॥

---

[1] अभ्यन्तरराग–पा. [2] बाह्यरावणादयश्च येनासौ–पा. [3] रावणादयश्चानेनेति जितामित्रः–पा. [4] कुरुत इति वा–पा.

स्तोत्रम्

## आनन्दो नन्दनो(ऽ)नन्दः सत्यधर्मा

भाष्यम्

आनन्दः स्वरूपं अस्येति—आनन्दः। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृह. उ. ६ ३-३२) इति श्रुतेः। नन्दयतीति—नन्दनः। सर्वाभिरुपपत्तिभिः समृद्धो—नन्दः। सुखं—वैषयिकं नास्य विद्यत इति वा—अनन्दः। "यो वै भूमा तत्सुखम्। नाल्पे सुखमस्ति" (छा. उ. ७-२३-१) इति श्रुतेः। सत्या धर्मज्ञानादयोऽस्येति—

विवृतिः

आनन्दरूपत्वादानन्दः। यद्वा आनन्दस्वरूपमस्यास्तीति मत्त्वर्थीयः अर्शआद्यच्प्रत्यय इत्यभिप्रेत्याह—**आनन्द इति**। आनन्दरूपत्वे श्रुतिं पठति—**एतस्येति**। मात्रां-लेशं सर्वाणि भूतानि स्वरूपानन्दलेशप्रदानेन नन्दयतीति नन्द्यादित्वाल्ल्युप्रत्यय इत्याह—**नन्दयतीति**। नन्दते-स्वरूपकरणैः समृद्धो भवतीति—**नन्दः**। "टुनदि समृद्धौ" अस्मात् पचाद्यजिति व्याचष्टे—**सर्वाभिरिति**। **उपपत्तिभिरिति**। उपकरणैरित्यर्थः। नन्दनं-नन्दः। सुखं-वैषयिकं, तन्नास्त्यस्येत्यकारप्रश्लेषेण अनन्द इति निर्वचनान्तरमाह—**सुखमिति**। वैषयिकसुखाभावे श्रुतिं पठति—**यो वा इति**। भूम्नः-अपरिच्छिन्नस्य सुखस्य ब्रह्मरूपत्वेनाल्पवैषयिकसुखरूपता नास्तीत्यर्थः। सत्याः-अवितथाः धर्माः-ज्ञानादयोऽस्येति सत्यधर्मा। "धर्मादनिच् केवलात्" (पा. सू. ५-४-१२४) इति समासान्तोऽनिच्प्रत्यय इत्याह—**सत्या इति**। त्रयो विक्रमाः-पादन्यासाः त्रिषु लोकेषु

स्तोत्रम्

## त्रिविक्रमः ॥ ६१ ॥

भाष्यम्

सत्यधर्मा[1] । त्रयो विक्रमास्त्रिषु लोकेषु क्रान्ता यस्य सः—त्रिविक्रमः । "त्रीणि पदा विचक्रमे" (तै. ब्रा. २-४-६) इति श्रुतेः । त्रयो लोकाः क्रान्ता येनेति वा—त्रिविक्रमः ।

त्रिरित्येवं त्रयो[2] लोकाः कीर्तिता मुनिसत्तमैः ।
क्रमते तांस्त्रिधा सर्वांस्त्रिविक्रमोऽसि जनार्दन ! । (२७९-५०)

इति हरिवंशे ॥ ६९ ॥

विवृतिः

[3]यस्य वामनमूर्तेः स त्रिविक्रम इत्याह—त्रय इति । तत्र श्रुतिमाह—त्रीणीति । पदा–पदानि, विचक्रमे–त्रिषु लोकेषु न्यस्तवानिति श्रुत्यर्थः । त्रयः–लोकाः विशेषेणान्तर्बहिश्च क्रान्ताः–व्याप्ता येन स तथेति त्रिविक्रम इत्यर्थान्तरमाह—त्रय इति । इदं च भाष्यं यथाकथञ्चित्त्रिविक्रमनाम्नोऽर्थकथनमात्रपरम् । व्युत्पत्तिस्तु त्रीन् लोकान् विशेषेण क्रामति–व्याप्नोतीति त्रिविक्रम इति द्रष्टव्या । अत्र निरुक्तौ हरिवंशवचनं पठति—त्रिरित्येवं त्रयो लोका इति । तान् त्रीन् लोकान् क्रमसे–व्याप्नोषीति वचनार्थः । "त्रिरित्येवं त्रयो वेदाः" इत्यपि पाठो दृश्यते । तत्र त्रयो वेदा विशेषेण क्रान्ताः––प्रतिपाद्यतया व्याप्ता येन स त्रिविक्रमः । "सर्वे वेदा यत्पदमामनन्ति"

---

[1] सत्यं यथार्थभूतार्थविषयं दर्शनमेव धर्मो यस्येति वा-सत्यधर्मा । आचारश्च दयाऽहिंसा दानं स्वाध्याय एव च । अयं हि परमो धर्मो यद्योगेनात्मदर्शनम् ॥ इति श्रुतेः–पा. [2] वेदाः–पा. [3] क्रान्ता व्याप्ता यस्य–पा.

स्तोत्रम्

## महर्षिः कपिलाचार्यः

भाष्यम्

**"महर्षिः कपिलाचार्यः" इति सविशेषणमेकं नाम। महांश्चासावृषिश्चेति महर्षिः। कृत्स्नस्य वेदस्य दर्शनात्।**

विवृतिः

(कठ. १-२-१५) इति श्रुतेरित्यभिप्रेत्योक्तनिरुक्तिपरं हरिवंशवचनं पठति—**त्रिरित्येवं त्रयो वेदा इति।** व्याख्येयम्। व्युत्पत्तिस्तु त्रिशब्देन वेदा गृह्यन्ते। त्रीन् वेदान् विशेषेण क्रामत्यर्थप्रकाशन-शक्त्यात्मना प्रतिपाद्यतया वा व्याप्नोतीति त्रिविक्रम इति बोध्या। क्वचिच्च द्वितीयव्याख्यानरहितः "त्रिरित्येवं त्रयो लोकाः" इति श्लोकपाठः त्रीणि पदेति श्रुतेरुत्तरं दृश्यते। तत्र पक्षे प्रथमव्याख्यान एवेदमपि वचनं योजनीयम्॥ ६९॥

ऋषति—जानाति पश्यति सर्वान् मन्त्रानिति ऋषिः। "ऋष गतौ" अस्मात् "इगुपधात् कित्" (उणा. ५५९) इतीन्प्रत्ययः किदिति व्युत्पत्तेः 'मन्त्रद्रष्टा ऋषिः' इति स्मरणाच्च ऋषिर्मन्त्रद्रष्टा। महांश्चासौ ऋषिश्च महर्षिः। महत्त्वं चास्य कृत्स्नवेदद्रष्टृत्वात्। कपिलो वासुदेवः। सगरपुत्राणां प्रतप्तानां साङ्ख्यशब्दितस्य शुद्धात्मतत्त्वविज्ञानस्याचरणात् प्रचारणाच्चाचार्यः।

"आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते"॥

इति स्मरणात्। कपिलश्चासावाचार्यश्चेति कपिलाचार्यः। महर्षिः कपिलाचार्य इति सविशेषणमेकं नामेत्यभिप्रेत्य व्याचष्टे—**महर्षिरित्यादिना।** कपिलर्षेर्महत्त्वमुपपादयति—**कृत्स्नस्येति।**

### स्तोत्रम्

## कृतज्ञो मेदिनीपतिः।

### भाष्यम्

अन्ये तु वेदैकदेशदर्शनादृषयः। कपिलश्चासौ साङ्ख्यस्य शुद्ध-तत्त्वविज्ञानस्याचार्यश्चेति कपिलाचार्यः।

"शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्याभिधीयते।"

इति व्याससमृतेः। "ऋषिं प्रसूतं कपिलं महान्तम्" (श्वे. ५-२) इति श्रुतेश्च, "सिद्धानां कपिलो मुनिः" (भ. गी. १०-२६) इति [1]स्मृतेश्च। कृतं—कार्यं जगत्, ज्ञः—आत्मा, कृतं च तत् ज्ञश्चेति—कृतज्ञः[2]। मेदिन्याः—भूम्याः पतिः—मेदिनीपतिः॥

### विवृतिः

अन्ये त्विति। मधुच्छन्दप्रभृतयः। "अग्निं नव मधुच्छन्दाः" इत्यादिशौनकस्मरणान्मधुच्छन्दप्रभृतीनां वेदैकदेशद्रष्टृत्वादमहत्त्वमिति भावः। शुद्धात्मविज्ञानं साङ्ख्यमित्यत्र स्मृतिमाह—शुद्धेति। कपिलस्यात्मज्ञानवत्त्वे श्रुतिं पठति—ऋषिमिति॥

कृतं—कार्यं जगद्रूपं, जानातीति ज्ञः—आत्मा। "इगुपधज्ञाप्रीकिरः कः" (पा. सू. ३-१-१३५) इति कप्रत्ययः। कृतश्चासौ ज्ञश्चेति कृतज्ञ इति "कृतज्ञः कृतिरात्मवान्" इत्यनेनापौनरुक्त्यं दर्शयन् व्याचष्टे—कृतमिति। मेदिन्याः—भूमेः, भूदेवताया वा पतिः—पालको भर्ता वा मेदिनीपतिः। "महीं देवीं विष्णुपत्नीम्" (तै. ब्रा. ३-१-२) इति श्रुतेरित्यभिप्रेत्याह—मेदिन्या इति॥

---

[1] भगवद्वचनाद्—पा. [2] प्राणिनां सुकृतं दुष्कृतं च जानातीति वा—पा.

## स्तोत्रम्

# त्रिपदः त्रिदशाध्यक्षः

### भाष्यम्

त्रीणि पदान्यस्येति—त्रिपदः । "त्रीणि पदा विचक्रमे" (तै. ब्रा. २-४-६) इति श्रुतेः । गुणावेशेन सञ्जातास्तिस्रो दशाः—अवस्थाः [1]जाग्रदादयः, तासामध्यक्ष इति—त्रिदशाध्यक्षः[2] ॥

### विवृतिः

त्रीणि पदानि–पादन्यासा अस्य वामनमूर्तेरिति त्रिपद इत्याह–**त्रीणीति** । अर्थैक्येऽपि शब्दभेदान्न त्रिविक्रमादिशब्दैः पौनरुक्त्यमिति द्रष्टव्यम् । तत्र श्रुतिमाह—**त्रीणीति** । तिस्रो दशाः–अवस्था जाग्रदादयः तासामध्यक्षः–स्वामी जीवरूपः साक्षी वेति व्याचष्टे–**गुणावेशेनेति** । इन्द्रियान्तःकरणतल्लयरूपोपाधिभेदेनेत्यर्थः । यद्वा इन्द्रियार्थसन्नि[3]कर्षहिताख्यनाडीविशेषमनस्संयोगपुरीतन्मनस्संयोगरूपगुणावेशेनेत्यर्थः । अथवा गुणकार्यान्तःकरणयोगेनेत्यर्थः । अन्तःकरणस्य कृत्स्नविकासो जागरः, अर्धविकासः स्वप्नः, विकासनश्रमकृतान्तःकरणलयोपहिताज्ञानावस्थाविशेषः सुषुप्तिरिति [4]तल्लक्षणात् । तासां दशानां–अवस्थानामध्यक्षः–स्वामी, अध्यक्षयति–प्रत्यक्षं करोतीति व्युत्पत्त्या साक्षी वेत्यर्थः । क्वचिच्च जाग्रदादय इत्येवमवस्थाविशेषणरहितः पाठोऽस्ति । तस्मिन् पक्षे गुणावेशेन-रजआदिगुणयोगेन सञ्जातास्तिस्रोऽवस्थाः–सृष्टिस्थितिसंहाररूपाः, तासामध्यक्षः–अधि-

---

[1] तासामध्यक्ष–पा. [2] त्रिदशानां देवानामध्यक्ष इति वा–पा. [3] कर्षेण्डाख्य–पा.
[4] तल्लक्षणम्–पा.

## स्तोत्रम्

# महाशृङ्गः कृतान्तकृत् ॥ ७० ॥

## भाष्यम्

मत्स्यरूपी महति शृङ्गे प्रलयाम्भोधौ नावं बद्ध्वा [1]चिक्रीडेति—महाशृङ्गः। कृतस्य--संसारस्यान्तं-संहारं करोतीति—कृतान्तकृत् । कृतान्तं—मृत्युं कृन्ततीति वा कृतान्तकृत् ॥ ७० ॥

## विवृतिः

कृत.। [3] अथवा सृष्ट्यादिकर्तेति जीवव्यावृत्त ईश्वरः ताभिः सृष्ट्याद्यवस्थाभिरक्षेणाधिगत इवासन्दिग्धतया ज्ञात इति वा, तासामध्यक्षोऽधिकृतो वा त्रिदशाध्यक्षः। "प्रत्यक्षेऽधिकृतेऽध्यक्षः" (नाम. ३-३-२२५) इत्यभिधानादित्यर्थः । अत्र तिसृणां दशानां समाहारः त्रिदशम् । "तद्धितार्थ" (पा. सू. २-१-५१) इत्यादिना द्विगुसमासे "गोस्त्रियोरुपसर्जनस्य" (पा. सू. १-२-४८) इति ह्रस्वत्वे "आबन्तो वा" (वा. १८८) इति वैकल्पिकं नपुंसकत्वम् । तस्याध्यक्ष इति समासो द्रष्टव्यः ॥

महत् शृङ्गं अस्य मत्स्यरूपिण इति महाशृङ्ग इत्याह—**मत्स्यरूपीति**। कृतस्य कार्यस्य जगतोऽन्तं-नाशं करोति प्रलय इति कृतान्तकृत् । यद्वा "कृतान्तो यमसिद्धान्त" (नाम. ३-३-६४) इति कोशात्कृतान्तं-यमं कृन्तति-[4]छिनत्ति संहारकाल इति, "कृती छेदने" इत्यस्मात् क्विपि कृतान्तकृदितिनाम द्वेधा व्याचष्टे—**कृतस्येति** ॥ ७० ॥

---

[1] विचिक्रीड—**पा.** [2] कृतस्यान्तं—**पा.** [3] अस्त्येव—**पा.** [4] भिनत्ति—**पा.**

## स्तोत्रम्

# महावराहो गोविन्दः

### भाष्यम्

**महांश्चासौ वराहश्चेति–महावराहः। गोभिः–वाणीभिः [1]वेद्यत इति वेदान्तवाक्यैरिति वा–गोविन्दः॥**

**"गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः"**

**इति [2]विष्णुतिलके।**

### विवृतिः

महांश्चासौ वराहश्च महावराहः। महत्त्वं चास्य [3]अतिविपुलशरीरधारणात्पृथिव्युद्धरणायेति व्याचष्टे—**महानिति**। गोभिः–वाणीभिः स्तोत्ररूपाभिः विद्यते–प्राप्यते भक्तैः, यथा गजेन्द्रेण, यथा वा द्रौपद्या, गोभिः–प्रणवाष्टाक्षरादिजप्य[4]रूपाभिः विद्यते–प्राप्यते जापकैरिति वा गोविन्दः। "स्वाध्यायादिष्टदेवतासम्प्रयोगः" (यो. सू. २-४४) इति पातञ्जलसूत्रात्। विद्यते–ज्ञायते गोभिः–वेदान्तवाक्यैरिति वा गोविन्दः। विन्दतेर्वेत्तेर्वा विद्यत इति कर्मणि ल्युडन्तं पदं विन्दतिवेत्त्योः साधारणम्। उभयत्रापि पृषोदरादित्वात्साधुत्वम्। विन्दतेः कर्मणि शप्रत्ययस्य दुर्लभत्वात्। "गवादिषु च विन्देः संज्ञायाम्" (वा. १९६९) इति कर्तरि तद्विधानात्। वेत्तेस्तु न शप्रत्ययः, विधानाभावादेव। अतः पृषोदरादित्वं कल्पनीयम्। तत्कल्पनामूलभूतं वचनं पठति—**गोभिरिति**। **वेद्य इति**। लभ्यो ज्ञेयो वेति वचनगतवेद्यपदस्यार्थः। "गोभिर्वाणीभिर्वेद्यत इति वेदान्त-

---

[1] विद्यते वेदैरिति वेदान्त–**पा.** [2] विष्णुकीलके–**पा.**, विष्णुपुराणे-**पा** [3] विपुल–**पा.** [4] रूपाभिर्वा–**पा.**

स्तोत्रम्

# सुषेणः

भाष्यम्

**शोभना सेना गणात्मिका [1]यस्येति–सुषेणः ॥**

विवृतिः

वाक्यैरिति वा गोविन्दः " इति पाठ इत्थं व्याख्यातः । "गोभिर्वाणीभिर्विन्दते, वेत्ति वेदान्तवाक्यैरिति वा गोविन्दः " इत्यपि पाठो दृश्यते । तत्र गोभिः–वाणीभिर्विन्दते–प्राप्नोति यं स गोविन्दः । वेत्ति वेदान्तवाक्यैर्यं मुमुक्षुः स गोविन्द इति योजना । "गोभिरेव यतो वेद्यः" इत्येतन्निर्वचनप्रदर्शकवचने वेद्यत इति कर्मणि प्रत्ययस्य दर्शनात् यमित्यध्याहृत्य व्याख्यातम् । अन्यत्सर्वं पूर्ववत् । "गोभिर्वाणीभिर्विन्दते वेद्यो वेदान्तवाक्यैरिति वा" इत्यपि पाठः । तत्र गोभिर्वाणीभिः स्तोत्रप्रणवादिजप्यरूपाभिर्विन्दते–प्राप्नोति भक्तानिति गोविन्दः । "अनुपसर्गाल्लिम्पविन्द" (पा. सू. ३-१-१४१) इत्यादिना कर्तरि शप्रत्ययः । द्वितीयव्युत्पत्तौ तु गोभिः–वेदान्तैर्वेद्यः–ज्ञेय इति गोविन्दः । बाहुलकात् कर्मणि शप्रत्ययः । अत्रैवं व्युत्पत्तौ गोभिरेवेति * वचनमिति बोध्यम् ॥

सु–शोभना सेना गणात्मिका अस्येति **सुषेणः** । "सुषमादिषु च" (पा. सू. ८-३-९८) इति षत्वमित्याभिप्रेत्याह—**शोभनेति** । **गणात्मिकेति** । वसवो रुद्रा आदित्या मरुतः साध्या इत्येवं गणात्मिकेत्यर्थः । तदुक्तम्—

"आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः ।
वसवश्चाष्ट[2]सङ्ख्याताष्षड्विंशत्तुषिता मताः ॥

---

* वचनं प्रमाणमितीत्यर्थः.

[1] यस्य स सु–पा. [2] सङ्ख्याकाष्ष–पा.

स्तोत्रम्

# कनकाङ्गदी ।

# गुह्यः

भाष्यम्

[1]कनकमयान्यङ्गदानि अस्येति–कनकाङ्गदी। रहस्योपनिषद्वेद्यत्वात् [2]गुहायां–हृदयाकाशे निहित इति वा–गुह्यः ॥

विवृतिः

अभास्वराश्चतुष्षष्टिः वाताः पञ्चाशदूनकाः।
महाराजिकनामानो दश ते विंशतिस्तथा॥
साध्या द्वादश विख्याता रुद्रा एकादश स्मृताः"॥ इति ॥

कनकस्य विकारः कनकं, तच्च तदङ्गदं च कनकाङ्गदम्। तदस्मिन्नस्तीति कनकाङ्गदी। मत्वर्थीय इनिः। "न बहुव्रीहिनिर्वाह्या भवन्ति मतुबादयः" इति त्वनित्यमित्यभिप्रेत्याह—कन[3]कमयानीति ॥

गूहितुं योग्यो गुह्यः। वेदरहस्यं–उपनिषदादिः। तद्वेद्यत्वा-ल्लक्षणया गुह्यो विष्णुः। "शंसिदुहिगुहिभ्यः क्यप्वा वक्तव्यः" (काशिका) इति गुहेः क्यबिति निर्वक्ति—रहस्येति। गुहायां–हृदयाकाशे साधुः। तत्र प्रकाशमानत्वात्। "तत्र साधुः" (पा. सू. ४–४–९८) इति यत्प्रत्ययः। "यो वेद निहितं गुहायां" (तै. उ. २-१) इति श्रुतेरिति निर्वचनान्तरमाह—गुहायामिति ॥

---

[1] कनकेन निर्मितं अङ्गदं अस्य विद्यत इति–पा. [2] गुहायां निहित–पा.
[3] कनकेनेति–पा.

स्तोत्रम्

## गभीरो गहनः

भाष्यम्

ज्ञानैश्वर्यबलवीर्यादिभिर्गभीरः—गभीरः। दुष्प्रवेशतया—गहनः। [1] अवस्थात्रयभावाभावसाक्षि[2]त्वाद्वा—गहनः॥

विवृतिः

ज्ञानैश्वर्यादीनामियत्ताया दुर्ज्ञेयत्वा[3]द्गभीरवद्गभीर इत्याह—**ज्ञानेति**। गहनशब्दोऽरण्यवाची। तस्माद्गहनवदात्मानमाचरतीत्यर्थे "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" (वा. १७२२) इति क्विबन्तात्पचाद्यच्। अत एव गहन इति पुंस्त्वमपि साधु। तथा च ज्ञानवैराग्यरहितानां तत्प्रवेशो दुर्घट एवेत्यर्थलाभमभिप्रेत्याह—**दुष्प्रवेशतयेति**। गहनशब्दो विशेष्यनिघ्नः कलिलपर्यायो वा द्रष्टव्य इत्यर्थः। "गहनं वनदुर्गयोः" (हैमः) "गह्वरे कलिले चापि" (विश्वहेमौ) इति कोशात्। जाग्रदादीनामवस्थानां साक्षिणः कर्तृकर्मविरोधेन घटादिवदिदन्तया दृश्यत्वायोगाद्दुर्ज्ञेयो गहन इत्यर्थान्तरमाह—**अवस्थेति**। पूर्वव्याख्याने तत्प्राप्तिर्दुर्घटेत्युक्तम्। इदानीं तज्ज्ञानं दुर्घटमित्युच्यत इति भेदः। *अवस्थात्रयभावाभावसाक्षिण इत्यत्र अवस्थात्रयस्य यौ भावाभावौ तत्साक्षिण इत्यर्थः। अवस्थात्रयसाक्षित्वादिति वा पाठः। पूर्वं "विकर्ता गहनो गुहः" (वि. स. ५४) इत्यत्र सगुणमूर्तेः स्वरूपं सामर्थ्यं चेष्टितं च ज्ञातुं न शक्यत

---

* अयं षष्ठ्यन्तः पाठो भाष्यकोशेषु नोपलभ्यते.

[1] अवस्थात्रयरहितत्वात्—**पा.** [2] त्वाद्गहनो वा—**पा.** [3] गभीर इत्याह—**पा.**

स्तोत्रम्

## गुप्तश्चक्रगदाधरः ॥ ७१ ॥

भाष्यम्

**वाङ्मनसयोरगोचरत्वात्–गुप्तः। "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" (कठ. १·३-१२) इति श्रुतेः। मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदां [1]लोकरक्षार्थं धारयतीति–चक्रगदाधरः ॥ ७१ ॥**

विवृतिः

इत्युक्तम्। अधुना निर्गुणस्य प्रतिज्ञानं च गहनमित्युच्यत इति भेदः ॥

"गुप गोपने" इत्यस्मात् क्तप्रत्यये गुप्तशब्दः; अविद्यावृततया वाङ्मनसयोरगोचरत्वान्निरुपाधिक आत्मा गुप्त इत्याह—**वाङ्मनसयोरिति**। अत्र श्रुतिमाह—**एष इति**। श्रुतौ गूढ आत्मेति पदविभागः। आवरणाविद्यया आवृतो गूढः। अतो न प्रकाशत इत्यर्थः। [2]"मन्त्रि गुप्तपरिभाषणे" इति ज्ञापकात् गुप्त इत्यत्र इडाद्यभावो बोध्यः। चक्रगदयोर्मनस्तत्त्वबुद्धितत्त्वात्मकयोर्धरः **चक्रगदाधर** इत्याह—**मन इति**। तथा च विष्णुपुराणम्—

"चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम्।"

(वि. पु. १-२२-७१) इति।

"बुद्धिरप्यास्ते गदारूपेण माधवे।" इति च ॥ ७१ ॥

(वि. पु. १-२२-६९)

---

[1] धारयन् लोकरक्षार्थमुक्तः चक्र–**पा.** [2] चक्रगदयोर्मनस्तत्त्व–**पा.**

## स्तोत्रम्

# वेधाः

### भाष्यम्

विदधाति-सृजतीति विधाता-वेधाः। पृषोदरादित्वात्साधुत्वम्। स्वयमेव कार्यस्य [1]करणे अङ्ग-सहकरोतीति-

### विवृतिः

रजोगुणमाश्रित्य जगद्विदधातीति वेधाः "विधाञो वेध च" (उ. ६६४) इति [2]व्युपसृष्टस्य दधातेर्वेधादेशोऽसिप्रत्ययश्च, "मिथुनेऽसिः" (उ. ६७२) इत्युपक्रमादित्यभिप्रेत्याह—विधातेति। यत्तु सहस्रनामव्याख्यातृभिः कैश्चिदुक्तम्—"विधत्ते वेधा इति। भाष्यकृतः इदं चार्थिकम्। न त्वेतद्धातो रूपम्। पृषोदरादित्वकल्पनापत्तेः। रूपं तु "विध विधाने" इत्यस्मादसुनि बोध्यम्" इति। तदेतत् "विधाञो वेध च" (उ. ६६४) इत्येतत्सूत्रानवबोधमूलम्। यच्चोक्तम्—"'विध विधाने' इत्यस्मादसुनि रूपम्" इति तदपि न। असुन्याद्युदात्तत्वापत्तेः। "वेधा अजिन्वत् त्रिषधस्थ" (ऋ. सं. १-१५६-७) इत्यादावन्तोदात्तश्रवणात्। यत्तु भाष्ये—"पृषोदरादित्वात्साधुत्वम्" इत्युक्तं तद्विपूर्वाद्धाञो बाहुलकादसिप्रत्यये वीत्युपसर्गस्य "विधाञो वेध च" (उ. ६६४) इत्येतत्सूत्रेण विनापि पृषोदरादित्वाद्गुणे कृते साधुत्वमिति प्रौढ्या पक्षान्तराभिप्रायमिति बोध्यम्॥

स्वात्मैवाङ्ग-सहकारि अस्य जगत्सृष्ट्यादाविति स्वाङ्ग इत्याह—स्वयमिति। कार्यस्य करण इति। कार्यस्य-जगत उत्पादन

---

[1] कारणान्यङ्गैः सह-पा. [2] व्युपसृष्टाद्धातेर्वे-पा.

### स्तोत्रम्

## स्वाङ्गोऽजितः कृष्णः

### भाष्यम्

**स्वाङ्गः । [1]केनाप्यवतारेषु न जित इति–अजितः । कृष्ण-द्वैपायनः–कृष्णः ।**

### विवृतिः

इत्यर्थः । "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" (ब्र. सू. २-१-२४) इत्यत्र *सहकार्यनपेक्षत्वं समर्थितम् । आविर्भावेषु केनापि न पराजित इत्यजित इत्याह––[2]**केनेति** । कृष्णवर्णः कृष्णः–व्यासः, तस्य विष्णुविभूतित्वात्तद्रूप इत्याह—**कृष्णद्वैपायन इति** । द्वीपं अयनमस्य द्वीपायनः, स एव द्वैपायनः । प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । यमुना-द्वीपमयनमस्येति द्वीपायनः–पराशरः, तस्यापत्यं द्वैपायन इति वा । कृष्णः–कृष्णवर्णः, स चासौ द्वैपायनश्चेति समासः । अतः "अग्राह्यः शाश्वतः कृष्णः" (वि. स. २०) इत्यत्रत्येन न पौनरुक्त्यम्, अर्थ-

---

*सहकार्यनपेक्षत्वसमर्थनं तावदेवम्- –ब्रह्म न उपादानं कर्तृ वा, असहायत्वात् [illegible]मतवदिति न्यायेन असहायाद्ब्रह्मणो जगत्सर्वं भुवन् समन्वयो विरुध्यते । उपसंहारदर्श-नात्–लोके कुलालस्य कर्तुः दण्डचक्रादिसहायदर्शनात्, मृदो वा उपादानस्य स्वभिन्न-[illegible]कादिसहायदर्शनात्, तदुभयविलक्षणस्य ब्रह्मणो न जगत्कर्तृत्वसम्भव इत्याक्षेपे, [illegible]न्यायेन तत्समर्थ्यते । यथा लोके क्षीरं बाह्यसाधनानपेक्षतया दध्याकारेण परिणमते, [illegible]पि असहायमेव समस्तजगत उपादानं कर्तृ च भवति । "देवादिवदपि लोके" (ब्र. सू. २-१-२५) मन्त्रार्थवादेतिहासपुराणादौ देवाः ऋषयः पितरः इत्येवमाद्याश्चेतनाः [illegible]सामर्थ्याद्बाह्यसाधनमनपेक्ष्य सङ्कल्पेनैव नानाविधकार्यकर्तार उपलभ्यन्ते । [illegible]प्यसहायमेव जगदुपादानं कर्तृ च भवितुमर्हति । अतोऽसहायस्य ब्रह्मणो जगदु-[illegible]नत्वं युक्तमेवेति ।

[1] न केनाप्यवतारेषु जितः–**पा.**   [2] न केनेति–**पा.**

स्तोत्रम्

## दृढः सङ्कर्षणोऽच्युतः ।

भाष्यम्

कृष्णद्वैपायनं [1]व्यासं विद्धि नारायणं प्रभुम् ।
को [2]ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥
(वि. पु. ३-४-५)

इति विष्णुपुराणवचनात् । स्वरूपसाम[3]र्थ्यादेः प्रच्युत्यभावात्-दृढः । संहारसमये युगपत् प्रजाः सङ्कर्षतीति-सङ्कर्षणः । न च्योतति स्वरूपादित्यच्युतः । "सङ्कर्षणोऽच्युतः" इति सविशेषणमेकं नाम । *"अच्युतः प्रथितः" (वि. स. ४७) इति पूर्वोक्तत्वात् ॥

विवृतिः

भेदादिति बोध्यम् । कृष्णद्वैपायनस्य भगवदवतारत्वे स्मृतिं पठति—**कृष्णेति** । स्वरूपसामर्थ्यादीनां प्रच्युतिः-अन्यथाभावः, तद्रहितो दृढः । "दृढः स्थूलबलयोः" इति निपातितो दृढ इत्याह—**स्वरूपसामर्थ्यादेरिति** । आदिशब्देन ज्ञानादीनां ग्रहणम् । सङ्कर्षति-सम्यक् कर्षति संहरति संहारसमये प्रजा इति सङ्कर्षणः । सम्पूर्वात् "कृष विलेखने" इत्यस्मान्नन्द्यादित्वाल्ल्युप्रत्ययः । न च्यवत इत्यच्युतः । सर्वाः प्रजाः संहरन् स्वयं न च्यवते-न विनश्यतीति सविशेषणमेकं नामेत्याह—**संहारसमय इति** ॥

---

* इदं वाक्यं केषुचित्कोशेषु न दृश्यते.

[1] विद्धि विष्णुं नारायणं-**पा.** [2] ह्यन्यो भुवि मैत्रेय महा-**पा.** [3] र्थ्यादप्रच्युतस्वभावो दृढः-**पा.**

## स्तोत्रम्

# वरुणो वारुणः

### भाष्यम्

[1]**स्वरश्मीनां संवरणात्सायं गतः सूर्यो–वरुणः । "इमं मे वरुण श्रुधी हवम्" (तै. सं. २-१-११) इति मन्त्रवर्णात् । [2]वरुणस्यापत्यं वसिष्ठोऽगस्त्यो वा–वारुणः ।**

### विवृतिः

रश्मीनां वरणात्–संवरणात् सङ्कोचनाद्वरुणः । "वृञ् वरणे" इत्यस्मात् "कृवृदारिभ्य उनन्" (उ. ३४०) इत्युनन् प्रत्ययः ।

"वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः"

इति कोशादादित्यवाच्यप्युक्तयोगात्सायमादित्यपरो वरुणशब्दः । तथाच सायंगतादित्यरूपी वरुण इत्याह—**स्वरश्मीनामिति** । वरुणशब्दस्य सायंगतादित्यपरत्वे मन्त्रमुदाहरति—**इमं मे वरुण इति** । सायंसन्ध्योपस्थाने विनियोगान्मन्त्रस्थवरुणशब्दस्य सायंगतसूर्यपरत्वमिति भावः । वरुणस्यायं वारुणः । "तस्येदम्" (पा. सू. ४-३-१२०) इत्यण् । अपत्यविवक्षायां "अत इञ्" (पा. सू. ४-१-९५) इतीञ्प्रत्ययापत्तेः । न च ऋष्यणा बाध इति वाच्यम् । वरुणस्य ऋषित्वे मानाभावात्, सम्बन्धसामान्यस्यापत्यरूपे विशेषे पर्यवसानमित्यभिप्रेत्याह—**वरुणस्येति** । **वसिष्ठोऽगस्त्यो वेति** । तथा च तद्रूपेणास्थितो विष्णुरित्यर्थः । तत्र रामायणम्—

---

[1] वरणेशां सायंगत आदित्यो वरुणः स्वरश्मिसंवरणा–**पा.** वरणात् सायंगत आदित्यो व–**पा.** [2] वरुणः—यादसां पतिः । "गौरी लक्ष्मीर्महाभागा केशवो वरुणः स्वयम्" इति विष्णुपुराणे-**पा.**

### विवृतिः

"[1]यः स कुम्भो [2]नरश्रेष्ठ ! तेजःपूर्णो महात्मनोः ।
तस्मिंस्तेजोमयौ विप्रौ सम्भूतावृषिसत्तमौ ॥
पूर्वं समभवत्तत्र ह्यगस्त्यो भगवानृषिः ।
नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥
तद्धि तेजस्तु मित्रस्य ऊर्वश्याः पूर्वमाहितम् ।
तस्मिन् समभवत्कुम्भे तत्तेजो यत्र वारुणम् ॥
कस्यचित्त्वथ कालस्य मित्रावरुणसम्भवः ।
वसिष्ठस्तेजसा युक्तो जज्ञे चेक्ष्वाकुदैवतम् " ॥

(वा. रा. उ-५७-४-७) इति ।

विष्णुपुराणे च—" तच्छापाच्च मित्रावारुणयोः *तेजसि [3]वसिष्ठस्य चेतः प्रविष्टम् । (वि. पु. ४-५-११) ऊर्वशीदर्शनादुद्भूतबीजप्रपातयोस्तयोः सकाशाद्वसिष्ठो देहमपरं लेभे । " (वि. पु. ४-५-१२) इति । तत्र रामायणश्लोकानामयमर्थः—महात्मनोः—मित्रावरुणयोः, तेजःपूर्णः । अत्रैवमाख्यायिका—प्रथममूर्वशीं मित्रो दृष्ट्वा तामामन्त्रितवान् । तया च त्वन्निवासमागच्छामीत्युक्तः । तदा वरुणलोकस्थ एव मित्रः तद्दर्शनाद्वृथा स्खलितं निजं तेजः कुम्भे उत्सृज्य स्वनिवासं जगाम । पश्चाद्वरुणोऽपि तां दृष्ट्वा स्खलितं तेजः कुम्भे व्यसृजत् । ततो मित्रनिवासं गता मित्रेण शप्ता चेति । नाहं सुतस्तवेति । यद्यपि मित्रेणापि कुम्भे रेत उत्सृष्टम् । तथापि तवैकस्य पुत्रो न भवामीत्युक्त्वाऽपाक्रामत् । एवमुक्तौ बीजमाह—तद्धि तेज इति । अगस्त्योत्पत्ति-

---

*तेजसि—वीर्ये, वासिष्ठस्य चेतः—चैतन्यं लिङ्गशरीरं वा प्रविष्टं इत्यर्थः ।

[1] यस्तु कुम्भो—पा. [2] रघुश्रेष्ठ—पा. [3] वसिष्ठतेजः प्र—पा.

## स्तोत्रम्

# वृक्षः

### भाष्यम्

वृक्ष [1]इवाचलितः स्थिर इति–वृक्षः। "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः" (याज्ञिक्यु. १२) इति श्रुतेः। व्याप्त्यर्थादक्षतेर्धातोः

### विवृतिः

हेतुभूतं मित्रस्य तेजः ऊर्वश्याः पूर्वं–ऊर्वशीनिमित्तवरुणवीर्यविसर्गात्पूर्वमाहितम्। तस्मिन् कुम्भे–तस्मिन्नेव कुम्भे, वारुणं तेजः समभवत्–सङ्गतमभवत्। यत्र–कुम्भे, तत्तेजः–मित्रस्य तेजः, आसीत्। अतस्तेजोऽन्तरसङ्गादुत्पत्तेः [2]नैकस्य तव सुत [3]इत्युक्तमगस्त्येन। [4] अतो मैत्रावरुणिरित्यगस्त्यनाम। तदनन्तरं कस्यचित् कालस्य मित्रावरुणसम्भवः वसिष्ठो जज्ञे। तेजसा युक्त इति। मित्रावरुणयोर्दिव्येन तेजसा युक्त इत्यर्थः॥

वृक्ष इव वृक्षः, अचलत्वगुणयोगादित्याह—वृक्ष इवेति। तत्र श्रुतिमाह-वृक्ष इति। निवात[5]देशस्थवृक्ष इव स्तब्धः–अविकारी–सर्वविकारानास्कन्दित इति यावत्। दिवि–द्योतनस्वभावे प्रकाशस्वभावे आदित्यमण्डले तिष्ठतीति श्रुत्यर्थः। पुष्करं–हृदयपुण्डरीकं अक्ष्णोति–व्याप्नोति अन्तर्या[6]मितयेति पुष्कराक्षः। पुष्करोपपदात् "अक्षू व्याप्तौ" इति धातोः "कर्मण्यण्" (पा. सू. ३–२–१) इत्यण्प्रत्ययः। "पुष्कराक्षो महास्वनः" (वि. स. १८) इत्यत्रत्येनापौनरुक्त्यम्, अर्थभेदादिति व्याचष्ट—व्याप्त्यर्थादिति।

---

[1] इवाचलतया स्थित इति–पा. [2] तेजः नैकस्य–पा. [3] इत्युक्तं भवत्येव–पा. [4] अत एव मै–पा. [5] स्थो वृक्ष–पा. [6] मिरूपेणेति–पा.

## स्तोत्रम्

# पुष्कराक्षो महामनाः ॥ ७२ ॥

## भाष्यम्

पुष्करोपपदा[1]दच्प्रत्यये–पुष्कराक्षः । हृदयपुण्डरीके चिन्तितः स्वरूपेण प्रकाशत इति वा–पुष्कराक्षः । सृष्टिस्थित्यन्तकर्माणि मनसैव करोतीति–महामनाः ।

* " मनसैव जगत्सृष्टिं संहारं च करोति यः । "

[2]इति विष्णुपुराणे ॥ ७२ ॥ (वि. पु. ५-२३-१५)

## विवृतिः

सर्वव्यापकस्य विष्णोः हृदयपुण्डरीके विशिष्य [3]व्यापनोक्तिः स्वच्छान्तःकरणयोगात्तत्र प्रकाशमानत्वाभिप्रायेति नामार्थं विवृणोति—**हृदयपुण्डरीके चिन्तित इति** । स्वरूपेण प्रकाशत इति वेति वाशब्दयुक्तपाठे–पुष्करे–हृदयपुण्डरीके अक्षवत्–रथाक्षवत् योगिनां स्फुटतया प्रकाशत इति पुण्डरीकाक्षः । पुण्डरीके अक्ष इव पुण्डरीकाक्षः, सप्तमीति योगविभागात्समास इत्यर्थान्तरमाह—**हृदयपुण्डरीके चिन्तित इति** । इत्यर्थो बोद्धव्यः ॥

महत्–सृष्टिस्थित्यन्तक्रियाहेतुत्वेन उत्कृष्टं मनः–सङ्कल्पात्मकं अस्येति महामना इत्याह—**सृष्टीति** । तत्र विष्णुपुराणवचनमाह–**मनसैवेति** । सङ्कल्पमात्रेणेत्यर्थः ॥ ७२ ॥

---

* अस्योत्तरार्धं " तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः " ॥ इति.

[1] दच्प्रत्यये सति–**पा.** [2] इति हरिवंशे–**पा.** [3] व्याप्त्युक्तिः–**पा.**

## स्तोत्रम्

# भगवान्

### भाष्यम्

"ऐश्वर्यस्य समग्रस्य [1]वीर्यस्य यशसः श्रियः।
[2]ज्ञानवैराग्ययोश्चैव षण्णां भग [3]इतीङ्गना ॥"

(वि. पु. ६-५-७४)

सोऽस्यास्तीति–भगवान् ।

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।

### विवृतिः

ऐश्वर्यवीर्ययशश्श्रीज्ञानवैराग्याणि समग्राणि नित्यं यत्र वर्तन्तेऽप्रतिबन्धेन भगशब्दवाच्यानि स भगवान् । नित्ययोगे मतुबित्यभिप्रेत्य भगवच्छब्दार्थप्रदर्शनपरं विष्णुपुराणवचनं पठति—**ऐश्वर्यस्येति** । इङ्गना–ईरणा संज्ञेत्यर्थः ॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।

वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना (वि. पु. ६-५-७४) इत्यपि पाठः । अस्मिन् पाठे मोक्षस्येति तत्साधनज्ञानस्येत्यर्थः। उत्पत्तिविनाशगत्यागतिविद्याविद्यानां वेत्ता भगवानिति विष्णुपुराणानुसारेण व्युत्पत्त्यन्तरं दर्शयितुं विष्णुपुराणवचनं पठति—**उत्पत्तिमिति** । भूतानामिति प्रत्येकं सम्बन्धः । उत्पत्तिविनाशशब्दौ [4]तत्कारणस्याप्युपलक्षणौ । आगतिगती–आगामिन्यौ सम्पदापदौ । "ऐश्वर्यस्य समग्रस्य" इत्यादिश्लोकोक्तानि षट् भगशब्दार्थभूतानि ईशनीयाद्युपसंहारपूर्वकं हन्ति–उपसंहरतीति भगहेति व्याचष्टे—

---

[1] धर्मस्य–**पा.** [2] वैराग्यस्याथ मोक्षस्य–**पा.** [3] इतीरणा–**पा.** [4] तत्करण–**पा.**

## स्तोत्रम्

# भगहाऽऽनन्दी

### भाष्यम्

वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" (वि. पु. ६-५ ७८) इति विष्णुपुराणे । ऐश्वर्यादिकं संहारसमये हन्तीति–भगहा । सुखस्वरूपत्वात्–आनन्दी । सर्वाभिः सम्पद्भिः समृद्धत्वाद्वा-आनन्दी । भूततन्मात्ररूपां [1] वैजय-

### विवृतिः

ऐश्वर्यादिकमिति । अथवा दुर्विनीतानां श्रीकाममाहात्म्यवीर्ययशांसि भगशब्दवाच्यानि हन्ति–उपसंहरति विनाशयतीति भगहा । "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' (नाम. ३·३-२६) इत्यमरकोशादित्यभिप्रेत्याह—ऐश्वर्यादिकमिति ॥

स्वरूपभूते आनन्दे भेदकल्पनया आनन्दः–सुखमस्यास्तीति आनन्दी । "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते" (पञ्च-अध्यास) इत्यभियुक्तोक्तेरानन्दधर्मकत्वमित्याह—सुखस्वरूपत्वादिति । यद्वा आनन्दः–समृद्धिः । "टुनदि समृद्धौ" इत्यस्मादाङ्पूर्वाद्भावे घञ् । सोऽस्यास्तीत्यानन्दी । सर्वसम्पत्समृद्ध इत्यर्थान्तरमाह—सर्वाभिरिति । वनमाला वैजयन्त्याख्या भूततन्मात्रनिर्मिता अस्मिन्नस्तीति वनमाली, व्रीह्यादित्वादिनिप्रत्यय इत्याह—भूतेति । हलं–मुसलं आयुधं–प्रहरणमस्येति हलायुधः बलभद्ररूपः ।

---

[1] वनमाल्यं–पा.

स्तोत्रम्

## वनमाली हलायुधः।
## आदित्यः

भाष्यम्

न्त्याख्यां वनमालां वहन्–वनमाली। हलं आयुधमस्येति–हलायुधो [1]बलभद्राकृतिः॥

[2]अदित्यां कश्यपाद्वामनरूपेण जात इति–आदित्यः।

विवृतिः

"हलं च बलभद्रस्य गगनादागतं [3]ज्वलत्।
मनसोऽभिमतं विप्र! [4]सौनन्दं मुसलं तथा"

(वि. पु. ५-२१-७)

इति जरासन्धयुद्धोद्योगे विष्णुपुराणवचनादित्याह–हलमिति।

अदितेरपत्यमादित्यः–वामनरूपः, "दित्यदित्यादित्य" (पा. सू. ४-१-८५) इत्यादिना अपत्यार्थे ण्य इत्याह—आदित्यमिति। वामनमूर्तिर्द्वादशादित्यान्तर्गतभगवद्विभूत्यपेक्षया पृथगित्यपौनरुक्त्यं "स्वयम्भूः शम्भुरादित्यः" (वि. स. १८) इत्यत्रत्येन।

"मन्व[5]न्तरेऽथ सम्प्राप्ते तथा वैवस्वते द्विज!।
वामनः काश्यपाद्विष्णुरदित्यां सम्बभूव ह॥

(वि. पु. ३-२-४२)

इति विष्णुपुराणे।

---

[1] बलभद्रः–पा. [2] काश्यपाज्जातो वामनस्त्रिविक्रमार्थमित्यादित्यः–पा.
[3] महत्–पा. [4] सानन्द–पा. [5] न्तरेऽत्र–पा.

स्तोत्रम्

## ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥

भाष्यम्

**ज्योतिषि—सवितृमण्डले स्थितः—ज्योतिरादित्यः। * ज्योतिश्चासावादित्यश्चेति वा। द्वन्द्वानि—शीतोष्णादीनि सहत इति—सहिष्णुः। गतिश्चासौ सत्तमश्चेति—गतिसत्तमः ॥ ७३ ॥**

विवृतिः

ज्योतिषि—सवितृमण्डले तिष्ठन् देवता जीवरूपो वान्तर्यामी वा। "य आदित्ये तिष्ठन्" (बृह. उ. ३-७-९) इत्यादिश्रुतिसिद्धो ज्योतिरादित्यः। वाप्यामश्वो वाप्यश्व इतिवज्ज्योतिष्यादित्यो ज्योतिरादित्य इति † सुप्सुपेति समास इत्याह—**ज्योतिषीति**। सहते शीतोष्णादीनि बदर्यां तपश्चरन्नरनारायणरूपेणेति, "षह मर्षणे" इत्यस्मात् "अलंकृञ्निराकृञ्" (पा. सू. ३-२-१३६) इत्यादिना इष्णुच्प्रत्यय इति व्याचष्ट—**सहत इति**। गतिः—अवगतिः बोधरूपः, प्राप्यं स्थानं[1] वा, सत्यतमस्साधुतमो विद्यमानतमः प्रशस्ततमोऽभ्यर्हिततमो वा सत्तमः। "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" (नाम. ३-३-८३) इत्यमरः। गतिश्चासौ सत्तमश्च गतिसत्तम इति व्याचष्टे—**गतिश्चेति** ॥ ७३ ॥

---

* इदं वाक्यं केषुचित्कोशेषु नोपलभ्यते। विवृतौ चास्य विवरणं न दृश्यते। † "सह सुपा" (पा. सू. २-१ ४) इति सूत्रार्थानुवादोऽयं सुप्सुपेति।

[1] ज्ञानं—**पा.**

## स्तोत्रम्

# सुधन्वा(ऽ)खण्डपरशुः

### भाष्यम्

शोभनमिन्द्रियादिमयं शार्ङ्गं [1]धनुरस्यास्तीति–सुधन्वा। शत्रूणां खण्डनात् खण्डः परशुरस्य [2] जामदग्न्याकृतेरिति— खण्डपरशुः। अखण्डः परशुरस्येति वा ॥

### विवृतिः

सु–शोभनं धनुः–शार्ङ्गरूपं अस्येति सुधन्वा। "धनुषश्च" (पा. सू. ५-४-१३२) "वा संज्ञायाम्" (पा. सू. ५-४-१३३) इत्यनङ् बहुव्रीहिसमासान्त इत्याह—शोभनमिति। इन्द्रियादिमयमिति।

भूतादिमिन्द्रियादिश्च द्विधाहङ्कारमीश्वरः।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥

(वि. पु. १-२२ ७०)

इति विष्णुपुराणवचनादिन्द्रियाहङ्कारमयमित्यर्थः। खण्डयति शत्रूनिति खण्डः। पचाद्यच्। तादृशः परशुः–कुठारोऽस्य जामदग्न्याकृतेरिति खण्डपरशुरित्याह—शत्रूणामिति। "सुधन्वा खण्डपरशुः" इत्यत्र अखण्डेत्यकारं प्रश्लिष्य अखण्डः परशुरस्येति पाठान्तरम्। तत्र पक्षे

---

[1] धनुर्यस्य स सुधन्वा–**पा.** [2] जामदग्न्यो रामः—खण्डपरशुः–**पा.**

## स्तोत्रम्

# *दारुणो द्रविणप्रदः ।

### भाष्यम्

[1]सन्मार्गविरोधिनां दारुणत्वात्–दारुणः । द्रविणं–वाञ्छितं भक्तेभ्यः प्रददातीति–द्रविणप्रदः ॥

### विवृतिः

खण्ड्यत इति खण्डः, न खण्डः अखण्डः केनाप्यखण्डितः परशुरस्य जामदग्न्याकृतेरित्यखण्डपरशुरित्यर्थो द्रष्टव्यः ॥

सन्मार्गविरोधिनो दैत्यदानवादीन् दारयतीति, "दॄ विदारणे" इत्यस्माण्ण्यन्तात् "कॄवृदारिभ्य उनन्" (उ. सू. ३४०) इत्युनन्-प्रत्यय इत्याह—**सन्मार्गेति** । द्रविणशब्देन हिरण्यवाचकेन वाञ्छितार्थमात्रं लक्ष्यते । तद्ददाति भक्तेभ्य इति द्रविणप्रद इत्याह—**द्रविणमिति** ॥

[2]दिवं—द्युलोकं स्पृशति त्रिपात् ब्रह्मेति दिविस्पृक्, दिविशब्दे सप्तम्यन्ते वृत्तिविषये कर्मत्वपरे उपपदे "स्पृशोऽनुदके क्विन्" (पा. सू. ३-२-५८) इति क्विन्, "हृद्युभ्यां च" (वा. ३८८५) इति सप्तम्या अलुक् । "त्रिपादस्यामृतं दिवि" (छा. उ. ३-१२-६) इति श्रुतेः ।

---

* अत्र पाठान्तरदृष्ट्या "दारणः" इत्यपि पाठः स्यात् .

[1] सन्मार्गविरोधिदारणात्—दारणः–**पा.** [2] दिव्यं–**पा.**

### स्तोत्रम्

## दिविस्पृक् सर्वदृग्व्यासः

### भाष्यम्

दिवः [1]स्पर्शनात्—[2]दिविस्पृक्। सर्वदृशां-सर्वज्ञानानां विस्तारकृत् व्यासः-सर्वदृग्व्यासः। अथवा [3]सर्वं च तत् दृक् चेति

### विवृतिः

त्रिविक्रममूर्तिर्वा दिवः स्पर्शनादित्यभिप्रेत्य व्याचष्टे—दिवः स्पर्शनादिति। अत्र सप्तम्यर्थस्यैव कर्मणः षष्ठ्या विवरणं कृतमिति बोध्यम्। "हृद्युभ्यां[4] च" (वा. ३८८५) इत्यलुग्विधानसामर्थ्यात्सप्तम्या द्वितीयार्थे वृत्तिः। दिविस्पृगिति सप्तम्यन्तपाठो व्याख्यातः। दिवःस्पृगिति षष्ठ्यन्तपाठे तु स्पृगिति कर्तरि क्विबन्तेन योगात्कर्मणि षष्ठी बोध्या। [5]दर्शनानि दृशः। दृश्यन्ते आभिरिति वा दृशः सम्पदादित्वाद्भावे क्विप्। सर्वाश्च ता दृशश्च सर्वदृशः, सर्वाणि ज्ञानानि सर्वा विद्याः सर्वदृश इत्युच्यन्ते। ता व्यस्यति-विस्तारं करोतीति सर्वदृग्व्यासः। कर्मण्यण् (पा. सू. ३-२-१) इत्यण्प्रत्यये उपपदसमास इत्यभिप्रेत्याह—सर्वदृशामिति। सर्वदृग्व्यास इत्युपपदसमासरूपमेकं नामेति व्याख्याय सर्वदृगिति व्यास इति च द्वे नामनी, समानाधिकरणविशेषणविशिष्टमेकं नाम वा, नामद्वयपक्षे "अमृत्युः सर्वदृग्" (वि. स. ३५) इत्यनेनापौनरुक्त्यमर्थभेदादिति मनसि व्याचष्टे—अथवेति। दृशेर्भावे क्विप्। सर्वं च तद्दृक्चेति कर्मधारयः॥

---

[1] दिवि स्पर्शनात्–पा. [2] दिवस्पृक्–पा. [3] सर्वा च सा दृक् च–पा.
[4] हृद्युभ्यां च सप्तम्यलुग्विधान–पा. [5] दर्शनात्–पा.

## भाष्यम्

**सर्वदृक्–सर्वाकारं [1]ज्ञानं, सर्वस्य दृष्टित्वाद्वा सर्वदृक्। ऋग्वेदा-**

## विवृतिः

" ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।

तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् " (वि. पु. १-२-६)

इति विष्णुपुराणवचनात् । सर्वात्मकत्वाच्चिद्रूपत्वाच्च सर्वदृगित्यर्थः । उक्तमेव विवृणोति—**सर्वाकारमिति ।** सर्वाकारेण [2]विवर्तमानं ज्ञानमित्यर्थः । सर्वस्य दृक् सर्वदृक् । सर्वप्राणिदृक्स्वरूप इत्युक्तस्यैव नाम्नोऽर्थान्तरमाह—**सर्वस्य दृष्टित्वाद्वेति ।** अखण्डं वेदं ऋग्यजुस्सामाथर्वात्मना विभज्य शाखाभेदेनापि व्यस्यति–विभजतीति विस्तारयतीति वा व्यासः । विपूर्वादस्यतेः बाहुलकात्कर्तरि घञ् ; वेदव्यास इति वक्तव्ये व्यास इत्येकदेशव्यवहारो वा ॥

यद्वा व्यसनं व्यासः । विपूर्वादस्यतेर्भावे घञ् । तस्मात् तत्करोतीति विस्तारयतीति वा व्यासः । विपूर्वादस्यतेः ण्यन्तात्पचाद्यच् । वेदादीनां विभजनकर्तेत्यर्थः । तथा च विष्णुपुराणम्—

वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः ।

करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ (वि. पु. ३-२-५८)

द्वापरे द्वापरे विष्णुः व्यासरूपी महामुने ! ।

वेदमेकं स बहुधा कुरुते जगतो [3]हिते ॥

(वि. पु. ३-३-५) इति ॥

---

[1] विज्ञानं–**पा.** [2] वर्तमानं–**पा.** [3] हितः–**पा.**

भाष्यम्

**द्विभागेन चतुर्धा वेदा व्यस्ताः—कृताः, आद्यो वेद एकविंशतिधा कृतः, [1]द्वितीय एकोत्तरशतधा कृतः। सामवेदः सहस्रधा कृतः। अथर्ववेदो नवधा शाखाभेदेन कृतः। [2]एव-**

विवृतिः

[3]*यया स कुरुते तन्वा वेदमेकं पृथक् प्रभुः।*
*वेदव्यासाभिधाना तु सा [4]सा मूर्तिर्मधुद्विषः॥*

(वि. पु. ३-३-७) इति च॥

अवान्तरविभागमाह—**आद्यो वेद इति**। तथा च महाभारतम्—

एकविंशतिशाखं च ऋग्वेदं मां प्रचक्षते।
सहस्रशाखं यत्साम ये वै वेदविदो जनाः॥
गायन्त्यारण्यके विप्रा मद्भक्तास्ते हि दुर्लभाः।
षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्युत॥
यस्मिञ्छाखा यजुर्वेदे सोहमाध्वर्यवे स्मृतः। इत्यादि।

"एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। एकविंशतिधा बाह्वृच्यम्। नवधाऽऽथर्वणो वेदः" (म. भा. पस्पशाह्निकम्) इति पतञ्जलिस्मरणञ्च। एवं अन्यान्यपि पुराणादीनीत्यर्थः। तथा च विष्णुपुराणम्—

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराणसंहिताश्चक्रे पुराणार्थविशारदः॥

(वि. पु. ३-६-१५) इति।

---

[1] यजुर्वेदष्षडशीतिधा—पा. [2] अन्यानि—पा. [3] ययासौ—पा. [4] च—पा.

## विवृतिः

एवं च "सा सा मूर्तिर्मधुद्विषः" (वि. पु. ३-३-७) इत्युक्तवचनात् ब्रह्माद्यष्टाविंशतिव्यासस्वरूपो विष्णुरित्यर्थः। तथा चोक्तं विष्णुपुराणे—

अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः।
वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनः पुनः॥
वेदव्यासा व्यतीता [1]वै अष्टाविंशति सत्तम!।
चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः॥
द्वापरे प्रथमे [2]व्यस्ता स्वयं [3]वेदाः स्वयम्भुवा।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः॥

(वि. पु. ३-३-९-११) इत्याद्यारभ्य

भविष्ये द्वापरे [4]चापि द्रौणिर्व्यासो भविष्यति।
व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने॥

(वि. पु. ३-३-२१) इत्यन्तम्।

उक्तश्लोके प्रजापतिरिति मनुर्बोध्यः।

*ब्रह्मा वाचस्पतिरयोनिजः—वाचस्पतिरयोनिज इति पदद्वयात्मकप्रतीकग्रहणं सविशेषणमेकं नामेति स्पष्टीकरणार्थम्। ब्रह्मपदं च विशेष्यप्रदर्शनार्थम्। "तथा च वाचस्पतिरयोनिजः" इत्यस्य चतुर्मुखस्वरूप इत्यर्थः। वाचः—ऋग्वेदादिविद्यायाः पतिः—पालकः। स्वयं परमेश्वराल्लब्ध्वाऽन्यत्र प्रवर्तनात्। "यो वै वेदांश्च प्रहिणोति तस्मै"

---

*अत्र मातृकायां 'ब्रह्मा वाचस्पतिरयोनिज इति पदद्वयात्मक, इति दृश्यते। परन्त्वर्थौचित्यादेवं निवेशितम्।

[1] ये—पा. [2] व्यस्तः—पा. [3] वेदः—पा. [4] चैव—पा.

## स्तोत्रम्

# वाचस्पतिरयोनिजः ॥ ७४ ॥

## भाष्यम्

**मन्यानि च पुराणानि व्यस्तान्यनेनेति—व्यासो *ब्रह्मा—वाचस्पतिरयोनिज इति सविशेषणमेकं नाम। वाचः—विद्यायाः पतिः वाचस्पतिः। [1]योन्यां न जायत इति—अयोनिजः ॥७४॥**

## विवृतिः

(श्वे. ६-१८) इति श्रुतेः। स्वामी वा ऋग्वेदादिभिः स्तूयमानत्वात्। ऋग्वेदादीनां पालकत्वं च पुराणे दर्शितम्—

युगान्तेऽन्तर्हितान् वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥ इति
चतुर्युगान्ते वेदानां जायते कलिविप्लवः।
प्रवर्तयन्ति तानेत्य भूमौ सप्तर्षयो दिवः ॥ इति च ॥

इत्यभिप्रेत्य वाचस्पतिरिति नामैकदेशं व्याचष्टे—**वाच इति**। अत्र "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" (पा. सू. ८-३-५३) इति सत्त्वविधानाज्ज्ञापकात् षष्ठ्या अलुग्बोध्यः। योनौ—[2]योनिपदलक्षितायां जनन्यां शरीरे वा जायत इत्ययोनिजः। "सप्तम्यां जनेर्डः" (पा. सू. ३-२-९७) इति डप्रत्यय इत्येकदेशान्तरं व्याचष्टे—**योन्यामिति**। हिरण्यगर्भस्यायोनिजत्वं प्रसिद्धम्। ब्रह्मपदस्य व्यासपदेनान्वये तु व्यासो ब्रह्मेत्यर्थः।

"द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा"
(वि. पु. ३-३-११)

इति पूर्वोक्तविष्णुपुराणवचनादिति बोध्यम् ॥ ७४ ॥

---

* अस्य ब्रह्मपदस्य व्यासपदेन वाचस्पतिरित्याद्युत्तरपदेन च विवृतावन्वयो दर्शितः।

[1] जनन्यां—**पा.** [2] योनिपदोपलक्षितायां—**पा.**

स्तोत्रम्

## त्रिसामा सामगः साम

भाष्यम्

देवव्रतसमाख्यातैः त्रिभिः सामभिः सामगैः स्तुत इति त्रिसामा। साम गायतीति-सामगः। "वेदानां सामवेदोऽस्मि" (भ. गी. १०-२२) इति भगवद्वचनात्सामवेदः—साम। सर्व-

विवृतिः

देवव्रतसमाख्यातानि "अधिपता इ मित्रपता इ क्षत्रपता इ सुवः पता इ धनपता इ" इत्येवमादिकानि त्रीणि सामानि स्तुतिसाधनानि यस्य स त्रिसामा। तत्र अधिपत्यादिशब्दैः परमेश्वरस्य स्तवनादित्यभिप्रेत्याह—देवव्रतेति। सामानि गायति जैमिन्यादि सामशाखाप्रवर्तकरूपेण, सन्दीपनिगृहे सर्वान् वेदानधीयानः साम गयतीति वा; "गापोष्ठगिति' (पा. सू. ३-२-८) ठक्प्रत्ययः॥

प्रोवाच वेदानखिलान्साङ्गोपनिषदो गुरुः।

सरहस्यं धनुर्वेदं [1]धर्म्यान्न्यायपथांस्तथा॥ (भाग-पू. ४५-३४)

इति शुकोक्तेः। साम—सान्त्वं दुर्योधनादीन् प्रति गायति। "यत् खलु साधु तत् सामेत्याचक्षते" (छा. उ. २-१-१) इति श्रुत्या साम—साधु शोभनं भक्तेभ्यो गायतीति वा सामग इत्यभिप्रेत्याह—साम गायतीति। सामवेदरूपः "वेदानां सामवेदोऽस्मि" (भ. गी. १०-२२) इति सामवेदस्य भगवद्विभूतित्वावगमादित्याह—वेदानामिति॥

सर्वदुःखोपशमात्मकत्वान्निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थ-कैवल्यरूपं ब्रह्म निर्वाणमुच्यत इत्याह—सर्वेति। ननु नात्मा दुःखोपशमात्मकः, सर्वदा सत्त्वात्। नाप्यानन्दरूपः। अनान्दस्यानित्यत्वेन नित्यात्मस्वरूपत्वानुपपत्तेः। तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एव स्यादितिचेत्—न; "यो वै भूमा तत्सुखम्" (छा. उ. ७-२३-१)

---

[1] धर्मान्न्याय—पा.

### स्तोत्रम्

# निर्वाणं

### भाष्यम्

## दुःखोपशमलक्षणं परमानन्द[1]रूपं-निर्वाणम् ॥

### विवृतिः

" एष एव परम आनन्दः " (बृह. उ. ४-३-३३) " विज्ञानमानन्दं ब्रह्म " (बृह. उ. ३-९-३४) इत्यादिश्रुतिभिस्तस्य परमानन्दरूपत्वोपदेशात्। तस्य च नित्यत्वेऽपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारात् । अज्ञानव्यवहितस्य तस्य अप्राप्तस्येव ज्ञानमात्रादविद्यानिवृत्तौ प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तेः। *अध्यस्तस्य प्रपञ्चस्य दुःखरूपस्य अधिष्ठानत्वात्परमानन्दात्मैवाभाव इति दुःखाभावरूपत्वेनापि तस्य पुरुषार्थता ॥

ननु निरतिशया[2]नन्दब्रह्मस्वरूपं मोक्षसुखं वेद्यं न वा? नाद्यः। तदानीं देहेन्द्रियाद्यभावेन व्यञ्जकाभा[3]वात्। व्यञ्जकाभावेऽपि तत्संवेदनाभ्युपगमे संसारदशायामपि तद्भान[4]प्रसङ्गात्। न द्वितीयः। अपुरुषार्थत्वात्। ज्ञायमानस्य पुरुषार्थत्वमिति चेत्—न; यद्यपि संसारदशायामविद्यावृतत्वादात्मा परमानन्दरूपतया न प्रकाशते। तथापि तत्त्वज्ञानेनाविद्यानिवृत्तौ स्वप्रकाशज्ञानरूपतया स्वयमेव परमानन्दरूपेण प्रकाशत इति न व्यञ्जकापेक्षेति स्वरूपानन्दस्य [5]निर्वाणत्वे न कोऽपि दोष इति। यद्वा प्रकाशमानः परमानन्द एव निर्वाणम्। दुःखनिवृत्तिस्तु परमानन्दाभिव्यञ्जकतया तच्छेष इत्याभिप्रेत्याह—**सर्वदुःखेति**। अस्मिन् पक्षे सर्वदुःखोपशमः

---

* अध्यस्तवस्तुनाशस्याधिष्ठानस्वरूपत्वे - " अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः " (सू. सं. यज्ञ. २-८) इति वचनमनुसन्धेयम्।

[1] लक्षणं- **पा.** [2] नन्दस्वरूपं—**पा.** [3] भावेऽपि तत्संवेदना—**पा.**
[4] तत्प्रसङ्गः—**पा.** [5] निर्वाणत्वेन न—**पा.**

### स्तोत्रम्

## भेषजं भिषक् ।

### भाष्यम्

**संसाररोगस्यौषधं-भेषजम् । [1]संसाररोगनिर्मोक्षकारिणीं परां [2]विद्यामुपदिदेश गीतास्विति—भिषक् । "भिषक्तमं त्वा भिषजां शृणोमि" (ऋ. सं. २-३३-४) इति श्रुतेः ॥**

### विवृतिः

लक्षणं व्यञ्जकमस्येत्यर्थो बोध्यः । सर्वदुःखोपशमकारणमिति पाठे तु संसारदशायामविद्याप्रमुखदुःखात्मकप्रपञ्चभ्रमे सति "परमानन्दोऽस्ति, भाति" इति व्यवहाराभावात्तदुपशमो व्यवहारकारणमस्येत्यर्थः । यद्वा महावाक्यजन्यवृत्त्यभिव्यक्तः सन्नविद्याप्रमुखसकलदुःखोपशमकारणमित्यर्थः । क्वचिच्च सर्वदुःखोपशमलक्षणं निर्वाणमित्येव पाठः । तस्मिन् पक्षे तद्रूपत्वान्निर्वाणत्वं बोध्यम् ।

अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥

इति निर्वाणरूपत्वे भारतवचनम् ॥

स्वसाक्षात्कारेण संसाररोगस्य भेषजवद्भेषजं—निवर्तकम् । "देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम्" इति [3]भारते । "औषधं जगतः सेतुः" (वि. स. ४४) इत्यौषधभेषजशब्दयोरर्थैक्येऽपि शब्दभेदान्न पौनरुक्त्यमित्यभिप्रेत्याह—**संसारेति** । यथा लौकिको भिषग्राजयक्ष्मादिरोगग्रस्तानां रोगनिवर्तकमौषधमुपदिशत्येवं संसारनिवर्तकमौषधं गीतोपनिषदमुपदिदेशेति भिषक् । "भिषक्तमं त्वा भिषजां शृणोमि" "प्रथमो दैव्यो भिषक्" (तै. सं. ४-५-१) इत्यादिश्रुतिसिद्धमिदं नाम व्याचष्टे—**संसाररोगेति** ॥

---

[1] संसारिणां मोक्षकारिणीं-**पा.** [2] विद्यामुपदिशत्युपनिषद्गीतायामिति-**पा.**
[3] महाभारते-**पा.**

## स्तोत्रम्

# सन्न्यासकृच्छमः

### भाष्यम्

[1]**मोक्षार्थं चतुर्थमाश्रमं कृतवानिति—सन्न्यासकृत्। सन्न्यासिनां प्राधान्येन ज्ञानसाधनं शममाचष्ट इति—शमः।**

**" यतीनां प्रशमो धर्मो नियमो वनवासिनाम्।**
**दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्॥"**

[2]**इति स्मृतेः। "तत्करोति तदाचष्टे" (गण. सू. २०४)**

### विवृतिः

ब्रह्मचर्यादयश्चत्वार आश्रमाः प्रत्येकं चतुर्विधाः स्मृतिप्रसिद्धाः। तत्र तुरीयः सन्न्यासश्चतुर्विधः। कुटीचक–बहूदक–हंस–परमहंस-भेदात्। तत्र परमहंसाख्यं सन्न्यासं मोक्षाश्रमं कृतवानिति सन्न्यासकृन्नाम व्याचष्टे—**मोक्षार्थमिति**। सर्वेषामाश्रमाणां निर्मातृत्वेऽपि भगवतः [3]पारमहंस्ये ज्ञानार्थे आदराद्विशेषाभिधानं सन्न्यासकृदिति बोध्यम्॥

शममाचष्टे शमः। "तत्करोति तदाचष्टे" (गण. सू. २०४) इति णिजन्तात्पचाद्यचि रूपं शम इति। परम-हंसाख्यं मोक्षाश्रमं कृत्वा तेषां प्राधान्येन शममाचष्टे श्रुतौ गीतासु चेत्यभिप्रेत्याह—**सन्न्यासिनां प्राधान्येन ज्ञानसाधनं शममाचष्ट इतीति**। सर्वभूतानां शमयितेति वा शम इति पाठान्तरम्। शमयतेर्ण्यन्तात्पचाद्यच्। प्रलयकाले सर्वेषां भूतानां संहर्तेति

---

[1] सन्न्यासं चतुर्थाश्रमं योगिनां मोक्षार्थं करोतीति-**पा**. [2] इति श्रुतेः-**पा**.
[3] परमरहस्ये–**पा**.

स्तोत्रम्

# शान्तो निष्ठा

भाष्यम्

इति णिचि [1]पचाद्यचि कृते रूपं शम इति। सर्वभूतानां शमयितेति वा—शमः। विषयसुखेष्वसङ्गतया—शान्तः। निष्कलं निष्क्रियं शान्तम्" (श्वे. ६-१९) इति श्रुतेः॥

[2] प्रलये नितरां तत्रैव तिष्ठन्ति भूतानीति—निष्ठा। समस्ता-

विवृतिः

तस्यार्थः। विषयसुखेषु सङ्गः—आसक्तिः, तद्रहितः। विषयसुखासक्तौ हि तत्सम्पादने व्यापारः; तदनुकूले रागः; तत्प्रतिकूले द्वेष इत्येवं विक्षेपः स्यात्। तदभावाच्छान्त इत्याह—**विषयेति**। इदं नाम श्रुतिसिद्धमित्याह—**निष्कलमिति**॥

कल्पान्ते सर्वाणि भूतानि नितरां तिष्ठन्त्यत्रेति निष्ठा। "आतश्चोपसर्गे" (पा. सू. ३-१-१३६) इत्यधिकरणे प्रत्यय इत्यभिप्रेत्याह—**प्रलय इति**। कार्यकारणरूपाणां मूलाविद्यातदवस्थारूपाणां वा समस्तानामविद्यानामधिष्ठानतया तन्निवृत्तिरूपत्वाच्छान्तिरित्याह—**समस्तेति**। आवरणविक्षेपशक्तिभेदाद्वा अविद्यानानात्वं बोध्यम्। नानाविद्यावादिमते स्पष्टमेवाविद्यानानात्वम्॥

नन्वविद्यानिवृत्तिः सती? उतासती?, सदसती? सदसद्विलक्षणा वा? आद्ये आत्मभिन्ना? उताभिन्ना?, भिन्नाभिन्ना? [3] भिन्नाभिन्नविलक्षणा वा? नाद्यः। द्वैतापत्तेः। न द्वितीयः।

---

[1] पचाद्यचि प्रत्यये—**पा.** [2] प्रलयकाले—**पा.** [3] भिन्नविलक्षणा—**पा.**

## स्तोत्रम्

# शान्तिः

### भाष्यम्

**विद्यानिवृत्तिः—शान्तिः । सा ब्रह्मैव ॥**

### विवृतिः

आत्मनोऽनादित्वेनाविद्यानिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तेः । नापि तृतीयः । विरोधात् । अत एव न चतुर्थोऽपि । [1]भिन्नाभिन्नव्यतिरेकेण प्रकारान्तरस्याभावात् ॥

न च प्रथमद्वितीयः । असत्त्वे शशशृङ्गतुल्यायास्तस्याः साध्यत्वानुपपत्तेः । पुरुषार्थत्वाभावप्रसङ्गाच्च । नापि तृतीयः । विरोधात् । उक्तपक्षद्वयदूषणापत्तेश्च न चतुर्थोऽपि । सदसद्विलक्षणत्वेऽनिर्वचनीयत्वेन तस्या अज्ञाना[2]वस्थाप्रसङ्गात् । अनिर्वचनीयाज्ञाननिवृत्तेरनिर्वचनीयत्वानुपपत्तेश्च । न हि घटनिवृत्तिर्घटो भवति । तथा च सर्वथाप्यनुपपत्तेर्नाज्ञानस्य निवृत्तिस्सम्भवतीति—

अत्रोच्यते—अज्ञाननिवृत्तिः सद्रूपा आत्माभिन्ना च । न च तदभिन्नाया अज्ञाननिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तिः । यस्मिन् सति यस्याग्रिमक्षणसम्बन्धः, असति च यस्मिन् यस्याभावः तत् तत्साध्यमिति लक्षणस्य ज्ञाने सति अज्ञाननिवृत्तिरूपात्मनोऽग्रिमक्षणसम्बन्धः, ज्ञानाभावे अज्ञाननिवृत्त्यभावोऽज्ञानमित्यज्ञाननिवृत्तिरूपात्मन्यपि साध्यत्वोपपत्तेः । भिन्नसत्ताकयोर्भावाभावयोर्विरोधाभावाच्च । नित्यसिद्धायामप्यज्ञाननिवृत्तौ भ्रान्त्या वा पुरुषप्रवृत्त्युपपत्तेश्च । "प्रपञ्चोपशमः" (मण्डू. उ. १२) इत्यादिश्रुत्या तस्या आत्माभेदावगमाच्चेत्यभिप्रेत्याह—**सा ब्रह्मैवेति** ॥

---

[1] भिन्नत्वव्यति–**पा**.　　[2] वस्थाप्र-**पा**.

स्तोत्रम्

# परायणम् ॥ ७५ ॥

# शुभाङ्गः

भाष्यम्

**परं–उत्कृष्टमयनं–स्थानं पुनरावृत्तिशङ्कारहितमिति—परायणम्। पुल्लिङ्गपक्षे बहुव्रीहिः ॥७५॥**

**[1]सुन्दरीं तनुं धारयन्—शुभाङ्गः। रागद्वेषादिनिर्मोक्ष-**

विवृतिः

परमं–उत्कृष्टं पुनरावृत्तिरहितं च तदयनं–मुक्तप्राप्यं चेति परायणम्। "पूर्वपदात्संज्ञायम्" (पा. सू. ८-४-३) इति णत्वमित्यभिप्रेत्य "विश्वात्मानं परायणम्" (महाना. ११-३) इति श्रुतिसिद्धं नाम व्याचष्टे—**परमिति**। परायण इति पुल्लिङ्गपाठपक्षे परं–उत्कृष्टमयनं–स्थानं क्षीराब्धिवैकुण्ठयोगिहृदयसूर्यमण्डलादिरूपमस्येति व्याख्येयमित्यभिप्रेत्याह—**पुल्लिङ्गपक्ष इति** ॥

शुभानि—"आजानुबाहुः सुशिराः" (वा. रा. १-१-१९) इत्याद्युक्तलक्षणलक्षितानि, अङ्गानि–अवयवाः, अस्येति शुभाङ्गः। यद्वा "येनाङ्गविकारः" (पा. सू. २-३-२०) इत्यत्र सूत्रे अङ्गशब्द इवात्रापि अर्शआद्यजन्तत्वेनाङ्गशब्दः अङ्गिपरः। तथा च शुभं–कन्दर्पकोटिलावण्ययुक्तं, अङ्गं–देहः, अस्यास्तीति शुभाङ्ग इत्यभिप्रेत्याह—[2]**सुन्दरीमिति**। शान्तिं भक्तानां रागद्वेषविनिर्मोहलक्षणां ददातीति शान्तिद इत्याह—**रागेति**। सृष्टिकाले सर्वाणि

---

[1] शुभां–**पा.** सुन्दरां–**पा.** [2] सुन्दरामिति–**मा.**

स्तोत्रम्

# शान्तिदः स्रष्टा कुमुदः

भाष्यम्

**लक्षणां शान्तिं ददातीति—शान्तिदः। सर्गादौ सर्वभूतानि ससर्जेति—स्रष्टा॥**

**कौ—भूम्यां मोदत इति—कुमुदः। कोः—क्षितेर्वलनात्—संवर-**

विवृतिः

भूतानि सृजतीति स्रष्टा। सृजेः कर्तरि तृच्। "विश्वस्य [1]स्रष्टा-रमनेकरूपम्" (श्वे. ४-१४) इति श्रुति[2]सिद्धं स्रष्टृनाम व्याचष्टे —**सर्गादाविति**॥

कुः—पृथ्वी, तस्यां रामकृष्णाद्यवतारं वहन् मोदते—हृष्यतीति, "मुद हर्षे" इत्यस्मादिगुपधलक्षणः क इत्यभिप्रेत्याह—**काविति**। यद्वा कुः—भूदेवी, तस्यां मोदते—रमत इत्यभिप्रेत्याह—**काविति**॥

कुं—भूमिं वलते—संवृणोतीति कुवलं—तोयम्। "वल संवरणे" अस्मात्पचाद्यच्। कुवले—तोये शेत इति कुवलेशयः। "अधि-करणे शेतेः" (पा. सू. ३-२-१५) इत्यच्प्रत्ययः। "शयवास-वासिष्वकालात्" (पा. सू. ६-३-१८) इति कुवलशब्दात्सप्तम्या अलुगिति व्याचष्टे—**कोरिति**।

दद्दशाते च पुरुषं तमेवादिकरं प्रभुम्।
[3]श्वेतं चन्द्रविशुद्धाभमनिरुद्ध[4]तनौ स्थितम्॥
भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतम्।
आत्मप्रमाणरचिते अपामुपरि कल्पिते॥
शयने नागभोगाढ्ये ज्वालामालासमावृते।
निष्कल्मषेण सत्त्वेन सम्पन्नं रुचिरप्रभम्॥

---

[1] स्रष्टारं तमने-पा. [2] सिद्धस्रष्टृ-पा. [3] श्वेतचन्द्र-पा. [4] तनोः-पा.

स्तोत्रम्

## कुवलेशयः ।

भाष्यम्

णात् कुवलं-[1] जलम्। [2] तस्मिन् शेत इति--कुवलेशयः। "शयवासवासिष्वकालात्" (पा. सू. ६-३-१८) इति अलुक् सप्तम्याः। [3] कुवलस्य-बदरीफलस्य मध्ये शेते तक्षकः; सोऽपि तस्य विभूतिरिति वा हरिः-कुवलेशयः। कौ

विवृतिः

तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ।
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ॥
अयं स पुरुषः श्वेतः शेते निद्रामुपागतः ।
अनेन नूनं देवानां कृतमाहरणं रसात् ॥
कस्यैष को नु खल्वेष किञ्च स्वपिति भोगवान् ।
इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम् ॥

(शान्ति ३५७-६१-६६)

इति महाभारतीया कथा हयशिरोरूपेण महाजलौघमध्ये शेते स्मेत्यत्रानुसन्धेया। "कुवलं-बदरीफलं, तस्य मध्ये शेते तक्षकः, सोऽपि तद्विभूतिरिति वा हरिः कुवलेशयः" इति क्वचित् पाठः। तस्यायमर्थः-कुवली-बदरी, तस्याः फलं-कुवलम्, फले अण् लुकौ, "लुक् तद्धितलुकि" (पा. सू. १-२-४९) इति ङीपो लुक्। तस्मिन् कुवले-बदरीफले तक्षकरूपेण शेत इति कुवलेशयः। *अन्यत् पूर्ववत्। ऋषिपुत्रशापवशात् बदरान्तर्गतेन

---

* सप्तम्यलुगादीत्यर्थः।

[1] तोयं-पा. [2] तस्मिन् शेषोदरे शेते-पा. [3] कुवलं बदरीफलं तस्य मध्ये-पा।

## स्तोत्रम्

# गोहितः

### भाष्यम्

**भूम्यां वलते—संव्रीयत इति सर्पाणामुदरं कुवलम् । तस्मिन् शेषोदरे शेत इति वा—कुवलेशयः ॥**

**गवां वृद्ध्यर्थं गोवर्धनं धृतवानिति गोभ्यो हितः-गोहितः ।**

### विवृतिः

तक्षकेण राजा परीक्षित् मृत्युं गमित इति भारतकथात्रानुसन्धेया । कौ-भूम्यां वलते—संव्रीयते संश्लिष्यतीति "वल संवरणे" "वल चलने" इति धात्वोर्वलते वलतीति वा सर्पाणामुदरं कुवलं, तस्मिन् शेषोदरे शेत इति कुवलेशयः । रूपसाधनं पूर्ववदित्यभिप्रेत्यार्थान्तरमाह—**भूम्यां वलते संव्रीयत इति** । इदं [1] च "व्रीङ् वृणोत्यर्थे" इति धातोः सम्पूर्वस्य श्यनन्तस्य रूपम् ॥

गोभ्यो हितो गोहितः "चतुर्थी तदर्थ" (पा. सू. २-१-३६) इत्यादिना चतुर्थीतत्पुरुषः । गोहितत्वं च [2] इन्द्रमहविहतिरुष्टेन्द्रप्रेरित-घनासारं गोवर्धनं धृत्वा वारयन् गा ररक्षेत्यभिप्रेत्याह—**गवां वृद्ध्यर्थमिति** । गवे—भूम्यै हितो **गोहितः** । [3] भूमिहितत्वं च भूभारोत्तारणार्थमवतरणात् । तथा च विष्णुपुराणम्—

"एवं संस्तूयमानस्तु भगवान्परमेश्वरः ।
उज्जहारात्मनः केशौ सितकृष्णौ महामुने ! ॥

[1] श्रीङ्-पा. [2] महारुष्टेन्द्रप्रेरित-पा, इन्द्रप्रेरित-पा. [3] भूमेर्हितत्वं च-पा.

स्तोत्रम्

## गोपतिर्गोप्ता

भाष्यम्

**गोः-भूमेः भारावतरणेच्छया शरीरग्रहणं कुर्वन् वा-गोहितः। गोः—[1]भूम्याः पतिः-गोपतिः ॥**

**रक्षको जगत इति-गोप्ता। [2]स्वात्मानं स्वमायया**

विवृतिः

उवाच च सुराने‌तान् [3]मत्केशौ वसुधातले।

अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥ (वि. पु. ५-१-६०, ६१) इतीत्यभिप्रेत्यार्थान्तरमाह—**गोर्भूमेरिति**। गोः-भूमेः पतिः-पालकः भर्ता वेति गोपतिनाम व्याचष्टे—**गोरिति** ॥

"गुपू रक्षणे" अस्मात् तृच्प्रत्यये "आयादय आर्धधातुके वा" (पा. सू. ३-१-३१) इत्यायाभावे ऊदित्वादिडभावे रूपम्। सर्वजगद्रक्षणाद्गोप्ता। "संसृज्य विश्वा भुवनानि गोप्ता" (अ. शि. उ. ४) इति श्रुतेरिति गोप्तृनाम व्याचष्टे—**रक्षको जगत इति**। गोपयति-स्वमात्मानं मायया संवृणोतीति "गुप गोपने" तस्मात्तृचि गोप्तेत्यर्थान्तरपरतया व्याचष्टे—**स्वात्मानमिति**। सर्वान् कामान् वर्षतीति **वृषभः**। "वृष सेचने" "ऋषिवृषिभ्यां कित्" (उण. सू. ४१०) इत्यभच्प्रत्ययः। वृषभे-सर्वान् कामनीक्षणमात्रेण

---

[1] भूम्यादेः-पा. [2] स्वमायया स्वात्मानं-पा. [3] तत्केशौ-पा.

## स्तोत्रम्

# वृषभाक्षो वृषप्रियः ॥ ७६ ॥

## भाष्यम्

**संवृणोतीति वा—गोप्ता । [1]सकलान् *कामान् वर्षुके अक्षिणी अस्येति—वृषभाक्षः । वृषभः–[2] धर्मः, स एव वा दृष्टिरस्येति—वृषभाक्षः । वृषः–धर्मः प्रियो यस्य सः—**

## विवृतिः

[3] वर्षुके, अक्षिणी अस्येति निर्वक्ति—सकलानिति । भाति अलौकिकश्रेयस्साधनात्मना वेदादिति भः । वृष एव भः **वृषभः**—धर्मः फलानां वर्षणाद्वा वृषभो धर्मः । अक्षिशब्दो ज्ञानसाधनलक्षकः प्राधान्यलक्षको वा । तथा च धर्मः वेदानुवचनादिरूपश्चाक्षिवत् ज्ञानसाधनमस्य । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" (बृह. उ. ४-४-२२) इत्यादिश्रुतेः, "शान्तो दान्तः" (बृह. उ. ४-४ २३) इत्यादिश्रुतेश्च वृषभाक्षः । रामादिरूपेणाविर्भूतस्य वृषभ.–धर्म एवाक्षिवत् प्रधानभूतो व्यवहारेषु, नार्थकामौ यस्य स वृषभाक्ष इति वा अर्थमभिप्रेत्यार्थान्तरमाह—**वृषभ इति** । वृषो धर्मः प्रियोऽस्य । "वा प्रियस्य" (वा. १४२०) इति प्रियशब्दस्य परनिपातः ॥

"धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" (भ. गी. ४-८) इति वचनाद्वृषप्रियत्वमित्याह—**वृष इति** ॥ ७६ ॥

---

* अत्र "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (पा. सू. २-३-६९) इति षष्ठीनिषेधात् "कर्तृकर्मणोः कृति" (पा. सू. २-३-६५) इति षष्ठी न प्रवर्तते ।

[1] सर्वकामादिवर्षके–**पा.** [2] धर्मो दृष्टिरस्येति वा वृषभाक्षः–**पा.** [3] वर्षके-**पा.**

स्तोत्रम्

## अनिवर्ती

भाष्यम्

**वृषप्रियः। "वा प्रियस्य" (वा. १४२०) इति पूर्वनिपातविकल्पविधानात्परनिपातः। * वृषश्चासौ प्रियश्चेति वा॥ ७६॥**

**देवासुरसङ्ग्रामान्न निवर्तत इति–अनिवर्ती। वृषप्रियत्वाद्धर्मान्न निवर्तत इति वा। स्वभावतो विषयेभ्यो निवृत्त**

विवृतिः

देवासुरसङ्ग्रामेषु शत्रू[1]नविजित्य ततो न निवर्तत इत्यनिवर्तीति व्याख्याय पूर्वोत्तरनाम्नोर्हेतुहेतुमद्भावमाश्रित्य धर्मप्रियत्वादेव धर्मान्न निवर्तितुं शीलमस्येत्यनिवर्ती।

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।

सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥ (भ. गी. ३-४)

नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि। (भ. गी. ३-२२)

इति भगवद्वचनादित्यभिप्रेत्यार्थान्तरमाह— **वृषप्रियत्वादिति**। क्षुद्रानन्दाभिव्यक्त्यर्थं हि विषयेषु प्रवृत्तिर्लोकानाम्। ते च क्षुद्रानन्दा यस्य नित्यसिद्धपरमानन्दसिन्धोः परमात्मनो लवा इति न तस्य विषयापेक्षेति विषयेभ्यो निवृत्तिः स्वतः सिद्धेत्यभिप्रेत्याह—**स्वभावत इति**। स्वभावतः–निसर्गतः अस्मदादीनामिव विषये दोषदृष्टिं विना निवृत्त आत्मा–मनोऽस्येति निवृत्तात्मेत्यर्थः। स्वात्मनि स्थितिकाले विस्तीर्णं जगत् स्थूलात्मकं सूक्ष्मात्मना संक्षिपति संहारकाल इति संक्षेप्ता।

---

* इदं वाक्यमेकस्मिन् कोशे न दृश्यते। अस्य विवृतिरपि नोपलभ्यते।

[1] नाविजित्य–**पा.**

स्तोत्रम्

## निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।

भाष्यम्

आत्मा–मनः [1]अस्येति निवृत्तात्मा। संहारसमये विस्तृतं जगत् सूक्ष्मरूपेण [2]संक्षिपन्–संक्षेप्ता। उपात्तस्य क्षेमं–परिरक्षणं करोतीति–क्षेमकृत्। [3]स्वनामस्मृतिमात्रेण[4] पावयन्–शिवः। इति नाम्नां षष्ठं शतकं विवृतम्॥

इति षष्ठशतकभाष्यम्

---

विवृतिः

"युगान्ते प्रसुप्तः स संक्षिप्य लोकान्
युगादौ प्रबुद्धो जगद्यः ससर्ज॥"

इति भारतवचनादित्याह—संहारेति[5]। प्राप्तस्य परिपालनं क्षेमः। तं करोतीति क्षेमकृत्। "योगक्षेमं वहाम्यहम्" (भ. गी. ९-२२) इति वचनादित्याह—उपात्तस्येति। स्वनामस्मृतिमात्रेण स्मर्तॄणां पावनः-पापनिवर्तक इति शिवः। "शिवं पुण्यं च पावनम्" इत्यभिधानात् पावनवाची विशेष्य[6]निघ्नोऽयं शिवशब्दः। पूर्वं निस्त्रैगुण्यतया शुद्धत्वाच्छिव इत्युक्तम्। अधुना पावनत्वाच्छिव इति व्याख्यायत इत्यपौनरुक्त्यमित्यभिप्रेत्य व्याचष्टे—स्वनामेति॥

इति षष्ठशतकभा[7]ष्यविवृतिः

---

[1] यस्येति–पा. [2] संक्षिपतीति–पा. [3] नामस्मृति–पा. [4] पावनात्–पा.
[5] संसारेति–पा. [6] निष्ठोऽयं–पा. [7] ष्यं व्याख्यातम्–पा.

स्तोत्रम्

## श्रीवत्सवक्षाः श्रीवासः

## अथ सप्तमशतकभाष्यम्

श्रीवत्स[1]संज्ञं चिह्नमस्य वक्षसि स्थितमिति–श्रीवत्सवक्षाः। अस्य वक्षसि श्रीरनपायिनी वसतीति–श्रीवासः। अमृतमथने सर्वान् सुरासुरादीन् विहाय श्रीरेनं [2] पतित्वेन

## अथ सप्तमशतकभाष्यविवृतिः

प्रदक्षिणावर्तविचित्ररोमसंस्थानात्मकं [3] श्रीवत्साख्यं चिह्नं वक्षस्यस्येति श्रीवत्सवक्षाः। गड्वादित्वात् सप्तम्याः परनिपात इत्याह—श्रीवत्सेति। वसत्यत्रेति वासः–आश्रयः। श्रियः–लक्ष्म्या वासः श्रीवासः। विष्णोर्वक्षसि तस्या अवस्थानात्। तथा च विष्णुपुराणम्—

दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता।
पश्यतां सर्वदेवानां ययौ वक्षस्स्थलं हरेः॥

(वि. पु. १-९-१०५)

इतीत्यभिप्रेत्याह—अस्येति। श्रियः–लक्ष्म्याः पतिः–भर्ता श्रीपतिः। अमृतमथने सर्वान् देवान् विहाय विष्णुमेव पतित्वेन वृतवतीति पूर्वोक्तविष्णुपुराणवचनादित्याह—अमृतेति। अनेन सकलसुन्दरीजनातिशायिसौन्दर्यवत्यपि लक्ष्मीरेनं वृतवतीति विष्णोः सर्वातिशायि सौन्दर्यं द्योतितम्। श्रीः–परा शक्तिः, तस्याः पतिरिति वा। "परास्य शक्तिर्विविधैव श्रूयते" (श्वे. उ. ६-८) इति श्रुतेरित्यस्यैव नाम्नो व्याख्यानान्तरं दृश्यते क्वचित्। तस्यायमर्थः—"अवष्टम्भो गदा-

---

[1] लक्षणं चि–पा. [2] वरयामास–पा. [3] श्रीवत्सात्मकं–पा.

## स्तोत्रम्

# श्रीपतिः

### भाष्यम्

**वरयामासेति—श्रीपतिः । श्रीः—परा शक्तिः, तस्याः पतिरिति वा । "परास्य शक्तिर्विविधैव श्रूयते" (श्वे. ६-८) इति श्रुतेः । ऋग्यजुस्सामलक्षणा [1]श्रीर्येषां तेषां सर्वेषां श्रीमतां**

### विवृतिः

पाणिः शक्तिर्लक्ष्मीर्द्विजोत्तम !" (वि. पु. १-८-२९) इति शक्तेर्लक्ष्म्य-भेदोक्त्या लक्ष्मीवाचकेन श्रीशब्देन शक्तिर्गृह्यते । श्रयति चिन्मात्र-मिति योगेन वा मायाशक्तिः श्रीशब्देन गृह्यते । एवञ्च श्रियः—शक्तेः मायायाः पतिः—स्वामीत्यर्थान्तरमाह—**श्रीः परेति** । तत्र श्रुतिमाह—**परेति । अस्य**—देवस्य **परा** मूलप्रकृतित्वेन सर्वव्यापकत्वात् **शक्तिः** "देवात्मशक्तिम्" (श्वे. उ. २३) इत्यत्रोक्ता **विविधा**—अनन्तकार्य-करणप्रकृतित्वात्तद्रूपेण विविधा **श्रूयते** श्रुतिस्मृत्यादिष्विति श्रुत्यर्थः ॥

श्रीः—वाणी ।

श्रीर्वेषरचना शोभा भारती सरलद्रुमे ।
लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे [2]मतौ ॥

इति विश्वकोशात् । सा च ऋग्यजुस्सामलक्षणा येषां विरिञ्च्यादीना-मस्ति ते श्रीमन्तः । तदस्यास्तीत्यर्थे मतुप् । तेषां श्रीमतां विरिञ्च्यादीनां वरः—श्रेष्ठः परमेश्वरः । ऋग्यजुस्सामलक्षणश्रीलाभस्य परमेश्वरोपदेशायत्तत्वात् । "यो वै वेदांश्च प्रहिणोति तस्मै"

---

[1] श्रीः, सा येषां—**पा.** [2] मता—**पा.**

स्तोत्रम्

## श्रीमतां वरः ॥ ७७ ॥

## श्रीदः श्रीशः

भाष्यम्

विरिञ्चयादीनां वरः--प्रधानभूतः--श्रीमतां वरः। "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्।" (तै. ब्रा. १·२-१) इति श्रुतेः ॥ ७७ ॥

श्रियं ददाति भक्तानामिति–श्रीदः। श्रिय ईशः–श्रीशः।

विवृतिः

(श्वे. उ. ६-१८) इति श्रुतेरित्यभिप्रेत्य श्रीमदित्यत्र मत्वर्थं विशदयन् व्याचष्टे—विरिञ्चयादीनामिति। ऋग्यजुस्सामलक्षणा श्रीः, सा येषां विरिञ्चयादीनां सतामस्ति तेषां श्रीमतां प्रधान इति योजना। श्रीशब्दस्य ऋगाद्यर्थत्वे श्रुतिमाह—ऋच इति। सतां सा हि श्रीः, यतोऽद्वयानन्दतात्पर्यवतीति श्रुत्यर्थः ॥ ७७ ॥

श्रियं–त्रिवर्गसंपत्तिं ददातीति—श्रीदः। "एष उ एव वामनीः" (छा. उ. ४-१५-३) इति श्रुतेरित्याह—श्रियमिति। भक्तानामिति। [1]शेषत्वविवक्षायां षष्ठी। श्रियः–वाण्या अष्टादश-विद्यात्मिकाया ईशः–पतिः, श्रियः–शोभायाः स्वाध्यस्तसकलप्रपञ्च-गतस्फुरणरूपायाः सूर्यादिगताया वा ईशः-नियामकः, अध्यस्त-प्रपञ्चस्फूर्तेरधिष्ठानभानाधीनत्वात्। श्रियः–ऋग्वेदादिलक्षणाया वाण्या ईशः–स्वामी, वन्दिभिरिव ऋग्वेदादिभिः स्तूयमानत्वादित्यर्थत्रयमभि-प्रेत्याह—श्रिय इति। श्रीशब्देन श्रीमन्तो लक्ष्यन्ते। निवसन्त्यत्रेति

---

[1] श्रेष्ठत्व–पा. ?

## स्तोत्रम्

# श्रीनिवासः

### भाष्यम्

**श्रीमत्सु नित्यं वसतीति–श्रीनिवासः। श्रीशब्देन श्रीमन्तो**

### विवृतिः

निवासः। श्रियः–श्रीमन्तो निवासो[1]ऽस्येति विग्रहः। "यतो लक्ष्मीस्ततो हरिः" इत्युक्तेरित्यभिप्रेत्याह—**श्रीमत्स्विति। श्रीशब्देनेति।** नन्वत्र श्रीशब्दस्य लक्षणोक्तिरयुक्ता। श्रियो निवासः श्रीनिवास इति व्याख्यातुं शक्यत्वादिति चेत्–न; श्रियो निवास इति व्याख्याने "श्रीनिवासः सतां गतिः" (वि. स. ३३) इत्यत्रत्येन श्रीनिवासशब्देन पौनरुक्त्ये सति अपौनरुक्त्याय लक्षणाश्रयणात्। न चात्र श्रियः–शोभायाः–बुद्धेर्वा निवास इत्यत्रत्यश्रीनिवासशब्दस्य व्याख्यानान्न पौनरुक्त्यमिति वाच्यम्। तथा व्याख्याने निरभिप्रायत्वापत्तेः। मत्वर्थलक्षणया व्याख्याने तु 'यत्र श्रीस्तत्र हरिः" इत्यधिकार्थलाभादित्थं व्याख्यानमिति बोध्यम्। यद्वा

"श्रीर्लक्ष्मीः सरस्वती धीस्त्रिवर्गसम्पद्विभूतिशोभासु।
रूपकरणवेषरचनाविधासु च श्रीरिति प्रथिता॥"

इत्यभिधानकोशात् श्रीशब्दो धीवाचकः। तेन तद्वन्तो लक्ष्यन्ते। तथा च श्रीमन्तः–धीमन्तः पुरुषा निवासोऽस्येति श्रीनिवासः। "पुरुषे त्वेवाविस्तरामात्मा, स हि प्रज्ञानेन सम्पन्नतमः" (ऐत. उ. ३-२-३) इत्यादिश्रुतेरित्यभिप्रेत्याह—**श्रीमत्स्विति।** श्रीमत्सु नित्यं वसतीति भाष्यं अर्थवर्णनमात्रम्। न तु विग्रह[2]प्रदर्शकम्। कर्तरि घञो दुर्लभत्वादिति ज्ञेयम्॥

---

[1] ऽस्तीति–**पा.**　　[2] प्रदर्शनम्–**पा.**

स्तोत्रम्

## श्रीनिधिः श्रीविभावनः ।

## श्रीधरः

भाष्यम्

लक्ष्यन्ते । सर्वशक्तिमये अस्मिन् अखिलाः श्रियो निधीयन्त इति-श्रीनिधिः । कर्मानुरूपेण विविधाः श्रियः सर्वभूतानां विभावयतीति-श्रीविभावनः ॥

सर्वभूतानां जननीं श्रियं वक्षसि वहन्-श्रीधरः ।

विवृतिः

श्रियः—विभूतयश्चराचरात्मिका निधीयन्तेऽत्रेति श्रीनिधिः । "कर्मण्यधिकरणे च" (पा. सू. ३-३-९३) इति किप्रत्यय इत्याह—**सर्वशक्तिमय इति** । सर्वकार्यानुकूला याः शक्तयः तत्प्रधान इत्यर्थः । यद्वा सर्वकार्यानुकूलमायाशक्तियुक्तेऽस्मिन् श्रियः-शक्तयो निधीयन्ते तत्तत्कार्यानुकूला इति श्रीनिधिरित्याह—**सर्वेति** । श्रियः—**इष्टार्थान्** विविधान् स्वर्गपशुपुत्रधनधान्यादिरूपान् भूतानां-प्राणिनां भावयति —साधयति तत्तदनुष्ठितकर्मानुसारेणेति श्रीविभावन इत्याह—**कर्मेति** ॥

धरतीति धरः, श्रियो धरः श्रीधरः, वक्षसि श्रियो धारणादित्याह—**सर्वभूतानां जननीमिति** ।

[1]देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ।
[2]स्त्रीनाम्नी [3]श्रीश्च विज्ञेया नानयोर्विद्यते परम् ॥"

(वि. पु. १-८-३५)

---

[1] देवतिर्यङ्मनुष्यादौ—**पा.** [2] श्रीनाम्नी—**पा.** [3] लक्ष्मीर्मैत्रेय—**पा.**

स्तोत्रम्

## श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ७८ ॥

## स्वक्षः

भाष्यम्

**स्मरतां स्तुवतां अर्चयतां च भक्तानां श्रियं करोतीति–श्रीकरः। अनपायिसुखावाप्तिलक्षणं श्रेयः, तच्च परस्यैव रूपमिति–श्रेयः। श्रियोऽस्य सन्तीति–श्रीमान्। त्रयाणां लोकानामाश्रयत्वात्–लोकत्रयाश्रयः ॥ ७८ ॥**

**सु—शोभने पुण्डरीकाभे अक्षिणी अस्येति–स्वक्षः।**

विवृतिः

इति विष्णुपुराणात्सर्वजननीत्वमित्यर्थः । स्मरणादिपरेभ्यो भक्तेभ्यः श्रियं–मोक्षसाम्राज्यलक्ष्मीं करोतीति श्रीकरः । "कृञो हेतुताच्छील्यानुलोम्येषु" (पा. सू. ३-२-२०) इति कृञष्टप्रत्यय इत्याह—**स्मरतामिति**। श्रेयः–निश्श्रेयसं निवृत्तनिखिलानर्थपरमानन्दावाप्तिलक्षणम्। तद्रूपत्वात् ब्रह्म श्रेय इत्याह—**अनपायीति**। श्रियः–विभूतयः शोभा वा धियो वा प्रशस्ताः सन्त्यस्येति श्रीमानित्याह—**श्रिय इति**। लोकानां–जनानां देवासुरमनुष्याणां त्रयम् । तदाराधित इष्टप्राप्तिमनिष्टपरिहारं च कुर्वन् तस्याश्रयः । त्रयाणां लोकानां भुवनानां वा आश्रयः–आधार इति वा लोकत्रयाश्रय इत्याह—**त्रयाणामिति** ॥ ॥ ७८ ॥

सु—शोभने शतपत्रपत्राभे अक्षिणी अस्येति स्वक्ष इत्याह—**शोभन इति**। सु—शोभनानि शास्त्रोक्तलक्षणलक्षितानि अङ्गान्यस्य, शोभनानि सर्वज्ञत्वादिरूपाणि अङ्गान्यस्य,

## स्तोत्रम्

### स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।

## भाष्यम्

सु—शोभनान्यङ्गानि अस्येति–स्वङ्गः । एक एव परमानन्दः उपाधिभेदाच्छतधा भिद्यत इति–शतानन्दः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृह. उ. ६-३-३२) इति श्रुतेः । परमानन्दविग्रहः–नन्दिः । ज्योतिर्गणानामीश्वरः–ज्योतिर्गणेश्वरः ।

"तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति" (मुण्ड. २-२-११)

## विवृतिः

शोभनान्यङ्गानि ज्ञानेच्छाकृतिरूपाणि वा अस्येति स्वङ्ग इत्याह—**शोभनानीति** । शतं–अनेकं अन्तःकरणवृत्तिविशेषेषूपाधिषु अभिव्यज्यमाना आनन्दा अस्य परमानन्दसिन्धोर्ब्रह्मण इति **शतानन्दः** । "एतस्यैवानन्दस्य" (बृह. उ. ४-३-३२) इत्यादिश्रुतेरित्याह—**एक एवेति** । आनन्दरूपो नन्दिः । "टुनदि समृद्धौ" इत्यतः "सर्वधातुभ्य इन्" (गण. सू. ५६७) इतीन्प्रत्ययः । "विज्ञानमानन्दं ब्रह्म" (बृह. उ. ३-९-३४) इति श्रुतेरित्याह—**परमेति** । भारूपाणामपि सूर्यचन्द्रादिज्योतिर्गणानां स्वकल्पितानामीश्वरः–सत्तास्फुरणप्रदानेन स्वामी, ज्योतिश्चक्रस्य प्रवर्तको वेति ज्योतिर्गणेश्वर इत्याह— **ज्योतिरिति** । तत्र श्रुतिमाह—**तमेवेति** । **सर्वं**–सूर्यचन्द्रादि, **तमेव**–परमेश्वरं, स्वतो **भान्तमनुभाति** । ब्रह्मभानवदन्यत्र घटभानम् । यथा प्रदीपप्रकाशादन्यत् घटभानं नेत्याह—**तस्य भासेति** ।

स्तोत्रम्

## विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ७९ ॥
## उदीर्णः सर्वतश्चक्षुः

भाष्यम्

विधेय आत्मा—स्वरूपमस्येति—अविधेयात्मा। सती—अवितथा कीर्तिरस्येति—सत्कीर्तिः। [1]करतलामलकवत्सर्वं साक्षात्कृतवतः क्वापि संशयो नास्तीति—छिन्नसंशयः ॥ ७९ ॥

सर्वभूतेभ्यः समुद्रिक्तत्वात्—उदीर्णः। सर्वतः—सर्वं स्वचैतन्येन पश्यतीति—सर्वतश्चक्षुः। "विश्वतश्चक्षुः" (श्वे. उ.

विवृतिः

नित्याह—सतीति। यद्वा "कीर्तिः प्रसादयशसोः" इत्यभिधानकोशात् सती—सत्या अवितथा कीर्तिः—प्रसादोऽस्येति सत्कीर्तिरित्याह—सतीति। छिन्नः—अनुत्पन्नः सर्वेषु पदार्थेषु संशयोऽस्य, करतलामलकवत्सर्ववस्तुसाक्षात्कारवति परमेश्वरे विरोधात्संशयानुदयादित्याह—करतलेति ॥ ७९ ॥

सर्वेभ्यो भूतेभ्य उत्कृष्टोऽधिक इति—उदीर्णः। सर्वज्ञत्वात्सर्वशक्तत्वात्सर्वेश्वरत्वाच्च। "विश्वाधिको रुद्रो महर्षिः" (श्वे. उ. ४-१२) इति श्रुतेरित्याह—सर्वभूतेभ्य इति। सर्वतः—सर्वं स्वरूपचैतन्येन पश्यतीति व्याचष्टे—पश्यतीति। सर्वद्रष्टा सर्वतश्चक्षुः। सार्वविभक्तिकस्तसिः। "चक्षेः शिच्च" (उणा. सू. २८४) इत्युसिः। शित्वादनार्धधातुकत्वात् ख्याञादेशाभाव इत्यभिप्रेत्याह—सर्वत इति। न विद्यते

---

[1] करामलक—पा.

### स्तोत्रम्

## अनीशः शाश्वतस्थिरः ।

### भाष्यम्

**३-३) इति श्रुतेः । न विद्यतेऽस्येश इति—अनीशः । "न तस्येशे कश्चन" (महा. उ १-१०) इति श्रुतेः । शश्वद्भवन्नपि न विक्रियां कदाचिदुपैतीति-शाश्वतस्थिर इति नामैकम् ॥**

### विवृतिः

[1]**ईशः**-स्वामी नियन्ता वा अस्येति अनीशः । "न तस्य कश्चित्पति-रस्ति लोके न चेशिता" (श्वे. उ. ६-९) इति श्रुतेरित्याह—**न विद्यत इति** । नियन्तुरभावे श्रुत्यन्तरमाह—**न तस्येश इति** । ईष्ट इत्यर्थः । **शश्वत्**-सर्वदा भवः शाश्वतः, "तत्र भवः" (पा. सू. ४-३-५३) इत्यणि अव्ययानां भमात्रे टिलोपस्यानित्यत्वान्न टिलोपः । स्थिर इति "अजिरशिशिरशिथिलस्थिर" (उ. सू. १-५३) इत्यादिना निपातनात्साधुः । शाश्वतश्चासौ स्थिरश्च शाश्वतस्थिरः । स्थिर इत्येतावत्युक्ते आकाशादिवदापेक्षिकं स्थैर्यं शङ्क्येत, तद्वारणाय शाश्वत इति । तावत्युक्ते प्रधानवत्परिणामिनित्यता शङ्क्येत । अतः स्थिर इति । तथाच *षड्भावविकाररहितः [2]कूटस्थनित्य इत्यभिप्रेत्य शाश्वतस्थिरनाम व्याचष्टे — **शश्वदिति** ॥

लङ्कां प्रति मार्गान्वेषणं कुर्वन् समुद्रं प्रति व्रताचरणाय तदुपकण्ठे भूमौ शेते दाशरथिरूपेणेति भूशयः । "अधिकरणे शेतेः"

---

* षड्भावविकाराः अत्रैव २९० तमपुटे टिप्पण्यां विशदीकृताः ।

[1] ईशो नियन्ता-स्वामी वा—**पा.**  [2] कूटस्थो नित्यः—**पा.**

### स्तोत्रम्

# भूशयो भूषणो भूतिः

### भाष्यम्

[1]लङ्कां प्रति [2]मार्गमन्वेषयन् [3]सागरोपकण्ठभूमौ शेत इति–भूशयः। स्वेच्छावतारैः बहुभिः भूमिं भूषयन्–भूषणः। भूतिः–भवनं सत्ता विभूतिर्वा। [4]समस्तविभूतीनां कारणत्वाद्वा–[5]भूतिः।

### विवृतिः

(पा. सू. ३-२-१५) इत्यच्प्रत्यय इत्याह—**लङ्कामिति**। तथा च श्रीरामायणम् —

"ततः सागरवेलायां दर्भानास्तीर्य राघवः।
अञ्जलिं [6]प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः॥ इति।
(वा. रा. युद्ध. २१-१)

[7]आविर्भावेषु रामकृष्णादिरूपेण भुवं भूषयतीति भूषणः। "भूष अलङ्कारे" अस्मात् "क्रुध मण्डार्थेभ्यश्च" (पा. सू. ३-२-१५१) इति युच्प्रत्यय इत्याह—**स्वेच्छेति**। अकर्मप्रयुक्तैरित्यर्थः॥

भूतिः–भवनं सत्ता सर्व[8]सद्व्यक्त्यनुगतसद्रूप इत्याह–**भवनमिति**। अथवा भूतिः–विभूतिः ज्ञानैश्वर्यादिसम्पत्तिः, अणिमादिर्वा। "भूतिर्भस्मनि सम्पदि" (नाम. ३-३-६९) इत्यभिधानकोशात्। तत्कारणत्वात् करणे कार्यशब्दो गौण इति व्याचष्टे—**विभूतिर्वेति**। यद्वा विभूत्यध्यायोक्ताया विभूतेर्विवि[9]धभावस्य हेतुत्वाद्वा ब्रह्मादिस्थावरान्ताया विभूतेः कारणत्वाद्वा विभूतिः भूतिरित्याह—**विभूतिर्वेति**। समस्तविभूतीनां कारणत्वाद्विभूतिर्वा भूतिरिति योजना। "समस्तविभूतीनां कारणत्वाद्वे"ति वाशब्दपाठे-विभूत्यात्मकत्वेन व्याख्याय तत्कारणत्वेनापि व्याचष्टे—**समस्तेति**, इति व्याख्येयम्॥

---

[1] लङ्कामार्गान्वेषणाय सा–**पा.** [2] सीतामन्वेषमाणः मार्गं–**पा.** [3] सागरं प्रति भूमौ–**पा.** [4] सर्व–**पा.** [5] विभूतिः–**पा.** [6] प्राङ्मुखं–**पा.** [7] आविर्भावे–**पा.** [8] सद्व्यक्त्यनुगत–**पा.** [9] धाभावस्य–**पा.**

स्तोत्रम्

## विशोकः शोकनाशनः ॥ ८० ॥

## अर्चिष्मान्

भाष्यम्

विगतः शोकोऽस्य परमानन्दैकरूपत्वादिति–विशोकः । [1]स्मृतिमात्रेण भक्तानां शोकं नाशयतीति–शोकनाशनः ॥ ॥ ८० ॥

अर्चिष्मन्तो यदीयेनार्चिषा चन्द्रसूर्यादयः, स एव मुख्यः–अर्चिष्मान् ॥

विवृतिः

परमानन्दस्वरूपे परमात्मनि शोकस्य विरोधादयोगात् विगतः शोकोऽस्येति विशोकः । "विशोको विजिघत्सः" (छा. उ. ८-१-५) इति श्रुतेरित्याह—**विगत इति** । [2]स्वाभेदसाक्षात्कारेण संसारिणां संसारशोकं नाशयतीति शोकनाशनः । नन्द्यादित्वाल्ल्युः । "तत्र को मोहः कः शोकः" (ईश. उ. ७) इति श्रुतेरित्याह—**शोकमिति** ॥ ८० ॥

अर्चिः–चित्प्रकाशः अतिशयितोऽस्येत्यर्चिष्मान् । अतिशायने मतुप् । यस्मिन् परमात्मनि भानात्मके अध्यासवशाल्लब्धभानाः प्रकाशन्ते चन्द्रसूर्यादयः प्रकाशात्मकाग्नितादात्म्याध्यासाल्लब्धप्रकाशायःपिण्डवत्स एव मुख्योऽर्चिष्मान् ; नेतरे ; योऽन्येषां धनित्वमापादयति स एव मुख्यो धनी यथेत्यभिप्रेत्य मत्वर्थमतिशयं विवृण्वन् व्याचष्टे—**अर्चिष्मन्त इति** ॥

---

[1] स्मरणमात्रेण–**पा.**  [2] स्वरूपसाक्षा–**पा.**

स्तोत्रम्

## अर्चितः कुम्भो विशुद्धात्मा विशोधनः ।

भाष्यम्

**सर्वलोकार्चितैः [1] विरिञ्च्यादिभिरप्यर्चित इति–अर्चितः । कुम्भवदस्मिन् सर्वं प्रतिष्ठितमिति–कुम्भः । गुणत्रयातीततया विशुद्धश्चासावात्मा चेति–विशुद्धात्मा । स्मृतिमात्रेण पापानां क्षपणात्–विशोधनः ॥**

विवृतिः

अर्चितः–पूजितो ब्रह्मादिभिस्सर्वलोकार्चितैरपीति स एव मुख्योऽर्चितः ।

[2] सब्रह्मकाः सरुद्राश्च सेन्द्रा देवा महर्षयः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥

इति मोक्षधर्मवचनादित्यभिप्रेत्याह—**सर्वेति** । कुम्भवत् कुम्भः ब्रह्माण्डोपाधिको हरिः ; चराचरात्मकप्राणिजातस्य तत्र समाहितत्वात् । कारणोपाधिको वा कुम्भवत् कुम्भः ; आश्रयत्वगुणयोगात् ; "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" (छा. उ. ८-१-३) इति "तस्मिन् सर्वं प्रतिष्ठितम्" (बृह. उ. १·५-१) इति च श्रुतेरिति गौण्या व्याचष्टे—**कुम्भवदिति** ॥

गुणत्रयस्य मिथ्यात्वाद्वस्तुतस्तदसंस्पृष्टो विशुद्धः । स चासावात्मा चेति विशुद्धात्मेत्याह—**गुणत्रयेति** । विशोधयति–स्मृतिमात्रेण पापानि नाशयतीति विशोधनः ।

"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥" (वि. पु. २-६-३९)

इति पराशरोक्तेरित्याह—**स्मृतीति** ॥

---

[1] ब्रह्मादिभिः–**पा**. विरिञ्चादिभिः–**पा**. [2] सब्रह्माद्याः सरुद्राश्च सेन्द्राश्चैव महर्षयः ।–**पा**.

## स्तोत्रम्

# अनिरुद्धोऽप्रतिरथः

### भाष्यम्

चतुर्व्यूहेषु[1] चतुर्थो व्यूहः—अनिरुद्धः[2]। प्रतिरथः-

### विवृतिः

वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धेषु [3] चतुर्षु व्यूहेषु अनिरुद्धात्मको भगवतो व्यूहः—**अनिरुद्धः**। "अनिरुद्धः सुरानन्दः" (वि. स. ३३) इत्यत्राविर्भावेषु केनापि न निरुद्धोऽनिरुद्ध इति व्याख्यातम्। अधुना [4] चतुर्षु व्यूहेषु अनिरुद्धात्मको व्यूहः अनिरुद्ध इत्युच्यत इत्यपौनरुक्त्यमभिप्रेत्याह—**चतुर्ष्विति**। तथा च महाभारते—

"तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च।
तस्मात्सर्वं सम्भवति जगत्स्थावरजङ्गमम्॥
सोऽनिरुद्धः स ईशानो व्यक्तिः सर्वेषु कर्मसु।" इति।

अस्यार्थः—अनिरुद्धस्वरूपमाह—तस्मादिति। सृष्टेः कर्ता, कार्यं च प्रपञ्चः, कारणं प्रकृतिः, कर्तृकार्यकारणानां अधिष्ठातेत्यर्थः। व्यक्तिः सर्वेषु कर्मसु—साधुपरित्राणधर्मसंस्थापनभक्तानुग्रहादिसर्वकार्येषु [5] या व्यक्तिः सोऽनिरुद्धो मत्स्यकूर्माद्यवताररूपेणाविर्भवतीति॥

प्रतिरथः—प्रतिपक्षः, स न विद्यतेऽस्येत्यप्रतिरथ इत्याह—**प्रतिरथ इति**। प्रकृष्टं द्युम्नं—द्रविणं, "हिरण्यं द्रविणं द्युम्नं" (नाम. २-९-९०) इत्यमरकोशात्। तत् प्रकृष्टमस्य धनदरूपस्येति

---

[1] पु अनिरुद्धः—**पा.** [2] अनिरुद्धः। न निरुध्यते शत्रुभिः कदाचिदिति वा।—**पा.**
[3] चतुर्षु अनि-**पा.** [4] चतुर्व्यूहेषु—**पा.** [5] सा—**पा.**

स्तोत्रम्

## प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥

भाष्यम्

प्रतिपक्षोऽस्य न विद्यत इति–अप्रतिरथः। प्रकृष्टं द्युम्नं–द्रविणमस्येति–प्रद्युम्नः। चतुर्व्यूहात्मा वा॥

[1]अमितः–अतुलितो विक्रमोऽस्येति–अमितविक्रमः। *अहिंसित[2]विक्रमो वा। मीङ् हिंसायाम्॥ ८१॥

विवृतिः

प्रद्युम्नः। "वित्तेशो यक्षरक्षसाम्" (भ. गी. १०-२३) इति स्मरणादित्याह—**प्रकृष्टमिति**। चतुर्षु व्यूहेषु प्रद्युम्नसंज्ञको व्यूहः प्रद्युम्न इत्युच्यते। तथा च भारते—

"तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा।
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये॥
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते।" इति॥

श्लोकस्यायमर्थः—प्रद्युम्नस्वरूपमाह–-तस्मादिति। सङ्कर्षणात् प्रसूत इत्यर्थः। स्वेन कर्मणा–सदा दुष्टमारणकर्मणा, सनत्कुमारत्वं–सनत्कुमाराख्यां, मनोऽधिष्ठातृत्वान्मन इत्यर्थ इति॥

मितः–परिच्छिन्नः इयत्तावान्, स न भवतीत्यमितः, तादृशो विक्रमः–पराक्रमोऽस्येत्यमितविक्रम इत्याह—**अमित इति**॥ ८१॥

कालनेमिनामानमसुरं [3]निहतवानिति–[4]**कालनेमिनिहा**।

कालनेमिश्च दैत्येन्द्रो देवानां च भयप्रदः।
सहस्रकिरणाभेन चक्रेण निहतो युधि॥

---

*इदं वाक्यं केषुचित्कोशेषूपलभ्यते। अस्य विवृतिर्नोपलभ्यते।

[1] अमितो विक्रमो–**पा.** [2] विक्रमोऽपरिच्छिन्नविक्रमो वा–**पा.** [3] हन्तीति-**पा.**
[4] कालनेमिहा-**पा.**

स्तोत्रम्

## प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥

भाष्यम्

प्रतिपक्षोऽस्य न विद्यत इति–अप्रतिरथः। प्रकृष्टं द्युम्नं–द्रविणमस्येति–प्रद्युम्नः। चतुर्व्यूहात्मा वा ॥

[1] अमितः–अतुलितो विक्रमोऽस्येति–अमितविक्रमः। *अहिंसित[2]विक्रमो वा। मीङ् हिंसायाम् ॥ ८१ ॥

विवृतिः

प्रद्युम्नः। "वित्तेशो यक्षरक्षसाम्" (भ. गी. १०-२३) इति स्मरणादित्याह—प्रकृष्टमिति। चतुर्षु व्यूहेषु प्रद्युम्नसंज्ञको व्यूहः प्रद्युम्न इत्युच्यते। तथा च भारते—

"तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा।
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये ॥
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते।" इति ॥

श्लोकस्यायमर्थः—प्रद्युम्नस्वरूपमाह--तस्मादिति। सङ्कर्षणात् प्रसूत इत्यर्थः। स्वेन कर्मणा—सदा दुष्टमारणकर्मणा, सनत्कुमारत्वं–सनत्कुमाराख्यां, मनोऽधिष्ठातृत्वान्मन इत्यर्थ इति ॥

मितः–परिच्छिन्नः इयत्तावान्, स न भवतीत्यमितः, तादृशो विक्रमः–पराक्रमोऽस्येत्यमितविक्रम इत्याह—**अमित इति** ॥ ८१ ॥

कालनेमिनामानमसुरं [3]निहतवानिति–[4]**कालनेमिनिहा**।
कालनेमिश्च दैत्येन्द्रो देवानां च भयप्रदः।
सहस्रकिरणाभेन चक्रेण निहतो युधि ॥

---

*इदं वाक्यं केषुचित्कोशेषूपलभ्यते। अस्य विवृतिर्नोपलभ्यते।

[1] अमितो विक्रमो–**पा.** [2] विक्रमोऽपरिच्छिन्नविक्रमो वा–**पा.** [3] हन्तीति-**पा.**
[4] कालनेमिहा- **पा.**

### स्तोत्रम्

## कालनेमिनिहा [1]वीरः शौरिः

### भाष्यम्

[2]कालनेमिमसुरं निजघानेति–कालनेमिनिहा। [3]वीरः–शूरः। शूरकुलोद्भवत्वात्–शौरिः[4]। शूरजनानां–वासवादीनां

### विवृतिः

इति हरिवंशोक्तिरित्याह–कालेति। "ईर गतौ कम्पने च" इत्यस्मात् भावे घञ्। ईरणं ईरः–पलायनं कम्पनं च, तदुभयं *परवीरप्रयुक्तं विगतमस्येति वीर इत्यभिप्रेत्याह–**वीरः शूर इति**। शूरवंशोद्भवत्वात् शौरिः। यद्यपि वृष्णित्वात् "ऋष्यन्धकवृष्णिकुरुभ्यश्च" (पा. सू. ४-१-११४) इत्यणा भाव्यम्। तथापि बाह्वादित्वादिञेवेत्यभिप्रेत्याह–**शूरकुलोद्भवत्वादिति**। "शूरः शौरिर्जनेश्वरः" (वि. स. ५०) इत्यत्र तु शूरस्यापत्यं [5]वासुदेवः शौरिरिति, शूरवंशोद्भवत्वादिति तत्र पाठे तु बलभद्रः शौरिरिति च व्याख्येयम्। अधुना श्रीकृष्णमूर्तिः शौरिरित्युच्यत इत्यपौनरुक्त्यं द्रष्टव्यम्। अत्र "शूरः शूरजनेश्वरः" इति पाठे तु—विक्रमवत्तया शूर इति पूर्वं व्याख्यातम्। अधुना शूरकुलोद्भवत्वाच्छूर इति व्याख्यानादपौनरुक्त्यं बोध्यम्॥

ईशितुं शीलमस्येतीश्वरः। शूरजनानां–इन्द्रादीनां [6]ईशनाभिरतिशयशौर्यशाली शूरजनेश्वर इत्याह–**शूरेति**। †(कालनेमिनिहा-

---

* अत्र परवीर्येति वा स्यात्। † धनुरङ्कितोऽयं भागः मातृकाद्वये नोपलभ्यते।

[1] वीरश्शूरश्शूरजनेश्वरः–**पा.** शौरिश्शूरश्शूरजनेश्वरः–**पा.** [2] कालनेमिनामानं निहतवानिति–**पा.** [3] गतागतानामपि शत्रूणां कुलानि विजित्य विराजत इति–वीरः।–**पा.** कालनेम्यादीनां कुलानि विजित्य विराजत इति–**पा.** [4] शूरः–**पा.** शौरिः। भूतविक्रमशालित्वाद्वा। शूरविक्रान्ताविति धातुपाठे।–**पा.** [5] वसुदेवः ?–**पा.** [6] ईशाभिर–**पा.**

## स्तोत्रम्

# शूरजनेश्वरः ।

# त्रिलोकात्मा

## भाष्यम्

**शौर्यातिशयेनेष्ट इति–शूरजनेश्वरः ॥**

**त्रयाणां लोकानामन्तर्यामितया आत्मेति–त्रिलोकात्मा । त्रयो लोका अस्मात्परमार्थतो न भिद्यन्त इति वा–त्रिलोकात्मा ॥**

## विवृतिः

पदव्याख्यानानन्तरं द्रविडपुस्तकेषु शूरकुलोद्भवत्वात् शौरिः; वीरः शूरः; शूरजनानां वासवादीनामित्यादिभाष्यं दृश्यते। तत्तु केरलानां श्लोकपाठानुसारीति बोध्यम्।)

त्र्यवयवो लोकस्त्रिलोकः। [1] लोकत्रयसमुदायो लोकशब्दार्थः। अतो न त्रिलोकीति रूपापत्तिः। त्रिलोकस्यात्मा–अन्तर्यामीत्याह–**त्रयाणामिति**। यद्वा त्रिषु लोकेषु आत्मा–अन्तर्यामी अस्य स्वरूपभूत इति त्रिलोकात्मा, वैयधिकरण्येन त्रिपदो बहुव्रीहिरित्यभिप्रेत्याह–**त्रयाणामिति**। त्रयो लोकाः–आत्मानः स्वाध्यस्तत्वेन स्वाभिन्नाः स्वसत्तातिरिक्तसत्ताशून्या अस्येति सामानाधिकरण्येन त्रिपदो बहुव्रीहिरित्यर्थान्तरमाह–**त्रय इति**। अथ वा त्रयो लोकाः––जना देवासुरमनुष्यरूपा आत्मानः––स्वरूपा अस्येत्यर्थान्तरमाह–**त्रय इति** ॥

ईशनं–ईशः, भावे घञ्। त्रिषु लोकेष्वीशनं–तत्तत्कर्माणि प्राणिनां प्रवर्तनं अस्येति वैयधिकरण्येन [2] त्रिपदो बहुव्रीहिरित्यभिप्रेत्य

---

[1] त्रयसमुदायः–**पा.** [2] त्र्यवयवो ब–**पा.**

## स्तोत्रम्

# त्रिलोकेशः केशवः

### भाष्यम्

**त्रयो लोकाः [1] तदाज्ञप्ताः स्वेषु स्वेषु [2] कर्मसु वर्तन्त इति– त्रिलोकेशः । केशसंज्ञिताः सूर्यादिसङ्क्रान्ता अंशवः, तद्वत्तया– केशवः ।**

### विवृतिः

त्रिलोकेश इति नाम व्याचष्टे–**त्रयो लोकास्तदाज्ञप्ता इति ।** नन्वत्र त्रयो लोकाः त्रिलोक इति[3] समासोऽस्तु ; [4] नैवं भवति ; "दिक्सङ्ख्ये संज्ञायाम्" (पा. सू. २-१-५०) इति नियमात् । नापि त्रित्वयुक्ता लोका इति उत्तरपदलोपी शाकपार्थिवादिसमासः, लोकशब्दस्य तत्समुदायवाचित्वमाश्रित्य त्र्यवयवो लोकस्त्रिलोक इति वा शाकपार्थिवादिसमासः । स हि विचार्यमाणः पूर्वपदलक्षणामात्राधिककर्मधारय एव पर्यवस्यतीति आकरे स्फुटम् । एवं सति "दिक्सङ्ख्ये" (पा. सू. २-१-५०) इति नियमादेव तस्यापि व्यावृत्तिसिद्धेः । तस्मादुक्तरीत्यैव समास इति बोध्यम् ॥

सूर्यादिसङ्क्रान्ता अंशवः केशाः–केशवत्सूक्ष्मत्वात्केशसंज्ञिताः, तद्वान् केशवः सूर्यादिरूपः, तदन्तर्यामी वा । "केशाद्वोऽन्यतरस्याम्" (पा. सू. ५-२-१०५) इति वप्रत्यय इत्यभिप्रेत्य "केशवः पुरुषोत्तमः" (वि. स. १६) इत्यत्रत्येन केशवनाम्ना अपौनरुक्त्याय पूर्वोक्तनिर्वचनान्निर्वचनान्तरमाह—**केशसंज्ञिता इति ।** उक्तनिरुक्ति-

---

[1] तदाज्ञया स्वेषु कर्मसु–**पा.** [2] वर्त्मसु–**पा.** [3] समासस्तु–**पा.** [4] नैव–**पा.**

भाष्यम्

अंशवो ये प्रकाशन्ते ममैते केशसंज्ञिताः।
सर्वज्ञाः केशवं [1] तस्मान्मामाहुर्द्विजसत्तमाः ॥
तेन केशवनामाहं ख्यातो लोके युगे युगे।
(शान्ति. ३५०-४८, ४९)

इति महाभारते। ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः। तद्वत्तया वा केशवः। "त्रयः केशिनः" (ऋ. सं. १-१६४-४४)

विवृतिः

भारतानुसारिणीति भारतवचनं पठति—अंशव इति। यद्वा केशान्-अंशून्, वाति-गच्छति प्राप्नोति धर्मित्वेनेति केशवः। "वा गति-गन्धनयोः" अस्मात् "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्यये केशव इति रूपं बोध्यम्। अस्मिन् पक्षे भाष्ये अंशवोऽस्य सन्तीति पाठे केशसंज्ञिताः सूर्यादिसङ्क्रान्ता अंशवः तद्वत्तया केशव इति पाठे च न मत्वर्थीयवप्रत्ययस्य विग्रहप्रदर्शनम्, किन्तु केशान् वाति-गच्छतीति व्युत्पत्तिसिद्धार्थकथनमिति द्रष्टव्यम्। केश-शब्देन शक्तिरुच्यते। "त्रयः केशिनः" (ऋ. सं. १-१६४-४४) इति श्रुतौ "मत्केशो वसुधातले" (वि. पु. ५-१-६१) इति विष्णु-पुराणे च केशशब्दस्य तत्र प्रयोगात्। एवं च ब्रह्मविष्णुशिवाख्याः केशाः शक्तयोऽस्य मूलकारणस्य सन्ति सृष्ट्यादिकार्यार्थमिति केशवः परमात्मा। पूर्ववत् वप्रत्ययः। केशान्-ब्रह्मविष्णु[2]शिवाख्यशक्तीर्वा वाति-गच्छति प्राप्नोति सृष्ट्याद्यर्थमिति वा व्युत्पत्तिमभिप्रेत्य केशव-नाम्नोऽर्थान्तरमाह—ब्रह्मेत्यादिना। केशशब्दस्य शक्तिपरत्वे श्रुति-स्मृतिप्रयोगावुदाहरति—त्रय इत्यादि। कः-ब्रह्मा, ईशः-रुद्रः, तौ

[1] तस्मान्मां प्राहुर्द्वि—पा. [2] शिवाख्याः शक्तीर्वाति—पा

## स्तोत्रम्

# केशिहा हरिः ॥ ८२ ॥

### भाष्यम्

इति श्रुतेः । "मत्केशौ वसुधातले" (वि. पु. ५-१-६१) इत्यादौ केशशब्दः शक्तिपर्यायत्वेन प्रयुक्तः।

को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवांशसम्भूतौ तस्मात्केशवनामवान् ॥

(२७९-४७)

इति हरिवंशे । [1]केशिनामानमसुरं हतवानिति–केशिहा । सहेतुक[2]संसारं हरतीति–हरिः ॥ ८२ ॥

### विवृतिः

वेति–जनयति स्मेति केशवः । "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" इत्यस्माड्डप्रत्यय इत्यभिप्रेत्य निर्वचनान्तरं दर्शयितुमेतन्निर्वचनपरं हरिवंशवचनं पठति—**क इतीति**। केशिनामानं दैत्यं हतवानिति केशिहा ।

केशी चापि महावीर्यो दानवो हयविग्रहः ।
निहतो वासुदेवेन देवैरपि दुरासदः ॥

इति हरिवंशोक्तेरित्याह—**केशिनामानमिति**। सहेतुकं संसारं हरतिनाशयतीति हरिः । हरतेर्नाशनार्थात् "अच इः" (उणा. सू. ५७८) इत्प्रत्ययः । "सर्वधातुभ्य इन्" (उणा. सू. ५६७) इति इन्प्रत्ययो वेति हरिनाम निर्वक्ति—**सहेतुकेति** ॥ ८२ ॥

---

[1] केशिनं दैत्यं हत–**पा.** [2] संसारहरणाद्धरिः–**पा.**

### स्तोत्रम्

## कामदेवः कामपालः कामी कान्तः

### भाष्यम्

**धर्मादिपुरुषार्थचतुष्टयं वाञ्छद्भिः काम्यत इति कामः, [1]स चासौ देवश्चेति–कामदेवः। कामिनां–अधिकृतानां कामान् पालयतीति—कामपालः। [2]पूर्णकाम[3]स्वभावत्वात्–कामी[4]। अभिरूपतमं देहं [5]वहन्–कान्तः। *द्विपरार्धान्ते कस्य–ब्रह्मणोऽप्यन्तोऽस्मादिति वा–कान्तः।**

### विवृतिः

काम्यते–चतुर्विधपुरुषार्थार्थिभिरिष्यते तत्तत्पुरुषार्थदातृत्वेनेति कामः। दीव्यति–प्रकाशत इति देवश्चिद्रूपः। कामश्चासौ देवश्च कामदेव इत्याह—**धर्मादीति**। स्वाश्रितानां कामान्–काम्यमानानर्थान् पालयतीति कामपाल इत्याह–**कामिनामिति**। अतिशयिताः कामाः काम्यमानार्थाः अस्य सन्तीति कामी। [6]अतिशायने मत्त्वर्थीय इनिः। अतिशयश्च कामानां पूर्णत्वमिति पूर्णतालाभ इत्याह—**पूर्णकामस्वभावत्वादिति**। पूर्णाः–समग्राः, कामाः–काम्यमानार्थाः स्वभावभूता अयत्नसाध्या यस्य स तथेत्यर्थः। सर्वातिशायिसौन्दर्यशालिविग्रहं वहन् कान्त इत्याह—**अभिरूपतममिति**। मनोज्ञतममित्यर्थः। कं–ब्रह्माणं अन्तयति–नाशयति द्विपरार्धावसान इति कान्त इत्यपि बोध्यम्॥

---

* इदं व्याख्यानान्तरं केषुचित्कोशेषु नोपलभ्यते।

[1] कामश्चासौ–**पा.** [2] पूर्णकामत्वात्–**पा.** [3] स्वरूपत्वात्–**पा.** [4] कामाः स्यास्तीति कामी। "सोऽकामयत" इति श्रुतेः।–**पा.** [5] वहतीति **पा.** [6] अतिशयनार्थे–**पा.**

स्तोत्रम्

## कृतागमः ।

## अनिर्देश्यवपुर्विष्णुः

भाष्यम्

**कृतः आगमः श्रुतिस्मृत्यादिलक्षणो येन सः—कृतागमः । *"श्रुतिस्मृती ममैवाज्ञे" इति भगवद्वचनात् । †"वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्" (वि. स. श्लो. १३४) इत्यत्रैव वक्ष्यति ॥**

**इदं तदीदृशं वेति निर्देष्टुं यन्न शक्यते [1]गुणाद्यतीतत्वात्; तदेव रूपमस्येति-अनिर्देश्यवपुः । रोदसी व्याप्य कान्तिरभ्यधिका स्थिता अस्येति-[2]विष्णुः ।**

विवृतिः

कृतः-निष्पादितः आगमश्रुत्यादिर्येन स कृतागम इत्याह—**कृत इति** । आदिशब्देनेतिहासपुराणादि गृह्यते । इतिहासादिकर्तॄणामपि तद्विभूतित्वात्तत्कृतत्वमुपपद्यत इति भावः ॥

[3]निर्विशेषसच्चित्सुखमात्रलक्षणे वस्तुनि धर्माणामभावादिदं तदित्यादिसाधारणशब्दैः, द्रव्यं शुक्लः पाचक इत्यादिविशेषशब्दैश्च न निर्देष्टुं शक्यत इति अनिर्देश्यं वपुः—सच्चिदानन्दलक्षणं स्वरूपमस्येत्यनिर्देश्यवपुरित्याह—**इदं तदिति** । विच्छयति—दीप्यत इति विष्णुः । "विच्छ दीप्तौ" इति चौरादिकस्येदं रूपमित्यभिप्रेत्याह—**रोदसी व्याप्येति** । "कान्तिरभ्यधिका स्थिता" (शान्ति.

---

* अत्र "श्रुतिस्स्मृतिर्ममैवाज्ञा" इत्यपि पाठः । † वेदा इत्यादि वक्ष्यतीत्यन्तं कुत्रचित्कोशेषु नोपलभ्यते ।

[1] गुणादिहीनं तद्रूपमस्येति-**पा.** [2] विष्णुः । "जयात्पृथिव्याः" इति श्रुतेः-**पा.**
[3] निर्विशेषे सच्चित्सुख-**पा.**

स्तोत्रम्

# वीरः

भाष्यम्

[1]व्याप्ते मे रोदसी पार्थ ! कान्तिरभ्यधिका स्थिता ।
[2]क्रमणाच्चाप्यहं पार्थ ! विष्णुरित्यभिसंज्ञितः ॥
(शान्ति. ३५०-४३)

इति महाभारते । गत्यादिमत्त्वात्—वीरः । "वी गतिप्रजनकान्त्य-

विवृतिः

३५०-४३ ) इति मोक्षधर्मवचने विष्णुनामनिर्वचनपरे अधिकशब्दं विवृणोति—रोदसी व्याप्येति । "विश्वं विष्णुः" (वि. स. १४) इत्यत्र "व्याप्ते मे रोदसी पार्थ ! कान्तिश्चाभ्यधिका स्थिता" (शान्ति. ३५०-४३) इति मोक्षधर्मोक्तनिरुक्तौ "व्याप्ते मे रोदसी पार्थ !" इत्यंशो व्याख्यातः । इदानीं तु "कान्तिश्चाभ्यधिका स्थिता" इत्यंशमनुसृत्य व्याख्यायत इति बोध्यम् । तथा च यस्य विश्वरूपधरस्य विष्णोरधिका द्यावापृथिव्यौ व्याप्य वर्तमाना कान्तिरस्ति स विष्णुरित्यर्थः ॥

अजति–गच्छति भक्तानां हृदयं, क्षिपत्यस्त्राणि देवासुरसङ्ग्रामे असुरान् प्रतीति वीरः । "अज गतिक्षेपणयोः" इत्यतः "स्फायितञ्चि" (उणा. सू. १७०) इत्यादिना अजे रक्प्रत्ययो वीभावश्च । यद्वा "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" इति धातोः बाहुलकात् रक्प्रत्यये वीर इति रूपम् । अस्मिन् पक्षे वेति–गच्छति प्रजनयति दीप्यते अस्यति खादति वेत्यर्थ इत्यभिप्रेत्याह—गत्यादिमत्त्वादिति । द्वितीयव्याख्याने धातुं पठति —वी गतीति ।

---

[1] व्याप्य मे–**पा.** [2] क्रमणाद्वाप्यहं–**पा.**

स्तोत्रम्

## अनन्तो धनञ्जयः ॥ ८३ ॥

भाष्यम्

सनखादनेषु" इति धातुपाठात्। व्यापित्वान्नित्यत्वात्सर्वात्मत्वाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नः–अनन्तः। "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. २–१) इति श्रुतेः।

गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः।
नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः॥
(वि. पु. २-५-२४)

इति विष्णुपुराणवचनाद्वा–अनन्तः। यद्दिग्विजये प्रभूतं धनमजयत्तेन–धनञ्जयः—अर्जुनः। "पाण्डवानां धनञ्जयः" (भ. गी. १०-३७) इति भगवद्वचनात् ॥ ८३ ॥

विवृतिः

एवञ्च "वीरः शक्तिमतां श्रेष्ठः" (वि. स. ५६) "कालनेमिनिहा वीरः" (वि. स. ८२) इत्याभ्यामपौनरुक्त्यं दर्शितमिति बोध्यम्। अन्तः–परिच्छेदोऽभावः देशान्तरकालान्तरवस्त्वन्तरनिष्ठः संसर्गाभावोऽन्योन्याभावश्च न विद्यते यस्य सोऽनन्त इत्याह—**देशत इति**। दिग्विजये प्रभूतं धनमार्जयत्–प्राप्तवानिति धनञ्जयः। "संज्ञायां भृतॄवृजि" (पा. सू. ३-२-४६) इत्यादिना खच्। "अरुर्द्विषत्" (पा. सू. ६-३-६७) इत्यादिना मुम्। धनञ्जयः–अर्जुनः, सोऽपि तद्विभूतिरित्याह—**यद्दिग्विजय इति**। तस्य तद्विभूतित्वे गीतां पठति—**पाण्डवानामिति** ॥ ८३ ॥

## स्तोत्रम्

# ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा

## भाष्यम्

"तपो वेदाश्च विप्राश्च [1]ज्ञानं च ब्रह्मसंज्ञितम्" तेभ्यो हितत्वात्[2]–ब्रह्मण्यः। तपआदीनां कर्तृत्वात्–ब्रह्मकृत्। ब्रह्मात्मना सर्वं सृजतीति–ब्रह्मा॥

## विवृतिः

ब्रह्मणे–तपसे वेदाय ब्राह्मणजातये ज्ञानाय च हितः, "खलयव" (पा. सू. ५-१-७) इत्यादिना हितार्थे यत्प्रत्यय इत्यभिप्रेत्य ब्रह्मेति प्रकृत्यर्थप्रदर्शनपूर्वकं ब्रह्मण्यनाम व्युत्पादयति—**तप इत्यादिना**। बदरिकाश्रमे नरनारायणरूपेण तपश्चरणद्वारा तपसः प्रवर्तनात्, असुरेण हृतानां वेदानामाहरणात्, ब्राह्मणजातेर्गुप्त्यर्थमवतरणात्, "तज्ज्ञानं ब्रह्मसंज्ञितम्" (वि. पु. ६-७-५३) इति विष्णुपुराणोक्तस्य ज्ञानस्य गीतासूपदेशाच्च तत्तद्धितत्वं बोध्यम्। तपो वेदान् ब्राह्मणांश्च ब्रह्मशब्दितान् करोति–सृजतीति ब्रह्मकृत्। "स प्राणमसृजत। तपो मन्त्राः कर्म लोका लोकेषु च नाम च।" (प्रश्न. उ. ६-४) "अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" (बृह. उ. २-४-१०) "स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणां" (तै. सं. ७-१-१) इत्यादिश्रुतिभ्य इत्यभिप्रेत्याह तप। इति। चराचरप्रपञ्चस्रष्टृविरिञ्चिरूपेणावस्थितो ब्रह्मेत्याह–**ब्रह्मात्मनेति**॥

---

[1] सत्यं च–**पा**, यज्ञाश्च–**पा.** [2] तद्वेदितृत्वाद्वा–**पा.**

स्तोत्रम्

## ब्रह्म ब्रह्मविवर्धनः ।

भाष्यम्

**बृहत्वाद्बृंहणत्वाच्च सत्यादिलक्षणं–ब्रह्म । "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. २–१) इति श्रुतेः ।**

**प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।**
**वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥**

**(वि. पु. ६.७-५३)**

**इति विष्णुपुराणे । तपआदीनां विवर्धनात्–ब्रह्मविवर्धनः ॥**

विवृतिः

बृंहति–वर्धते निरतिशयमहत्त्वलक्षणवृद्धिमान् भवतीति ब्रह्म । "बृहि वृद्धौ" इत्यस्मात् "बृंहेर्नोऽच्च" (उणा. सू. ५९५) इति मनिन्, नुमो नकारस्य अकारादेशश्चेत्यभिप्रेत्य ब्रह्मनाम निर्वक्ति— **बृहत्त्वादिति** । बृंहयति–वर्धयति, देहादीन् जीवरूपेणेति बृहेरन्तर्भावितण्यर्थात्पूर्ववन्मनिन्निति निर्वचनान्तरमाह—**बृंहणत्वाच्चेति** । उक्तस्य ब्रह्मणः स्वरूपलक्षणमाह—**सत्यादीति** । सत्यादीनां स्वरूपलक्षणत्वे देशकालवस्त्वपरिच्छेदलक्षणबृहत्त्वे च श्रुतिमाह—**सत्यमिति** । उक्तार्थे विष्णुपुराणवचनं पठति— **प्रत्यस्तमितेति** । प्रत्यस्तमितभेदं–सजातीयादिभेदत्रयरहितं, सत्तामात्रं–सत्स्वरूपं, जात्यादीनां प्रवृत्तिनिमित्तानामभावाद्वचसामगोचरं आत्मसंवेद्यं–स्वानुभूत्येकमानं यदीदृशं ज्ञानं तद्ब्रह्मसंज्ञितमित्यर्थः । अत्र सत्तामात्रशब्देन ज्ञानशब्देन च श्रुत्युक्तसत्यज्ञानरूपत्वं दर्शितम् । प्रत्यस्तमितभेदमित्यनेन अनन्तत्वमिति बोध्यम् । ब्रह्म–तपआदिकं विवर्धयतीति ब्रह्मविवर्धनः । नन्द्यादित्वात्कर्तरि ल्युरित्याह—**तप आदीनामिति** ॥

## स्तोत्रम्

# ब्रह्मविद्ब्राह्मणो ब्रह्मी

### भाष्यम्

**वेदं वेदार्थं च [1]यथावद्वेत्तीति–ब्रह्मवित् । [2]ब्राह्मणात्मना समस्तानां [3]वेदानां प्रवचनं कुर्वन् ब्रह्मणः वेदस्यायमिति–ब्राह्मणः । ब्रह्मसंज्ञितास्तच्छेषभूताः सन्त्यस्येति–ब्रह्मी ॥**

### विवृतिः

ब्रह्मशब्देनाजहल्लक्षणया वेदतदर्थौ गृह्येते । तथा च ब्रह्म–वेदं वेदार्थं च वेत्तीति ब्रह्मविदित्याह —**वेदमिति** । ब्रह्मणः–वेदस्यायमिति विग्रहे "तस्येदम्" (पा. सू. ४-३-२०) इति सम्बन्धसामान्ये अणि "अन्" (पा. सू. ६-४-१६७) इति प्रकृतिभावः । सम्बन्धसामान्यं च ब्रह्मशब्दितवेदेन प्रवक्तृत्वरूपं पर्यवसन्नमित्यभिप्रेत्य ब्राह्मणनाम व्याचष्टे—**वेदस्यायमिति** । सम्बन्धसामान्यस्य विशेषपर्यवसानं दर्शयति—**ब्राह्मणात्मना समस्तानामित्यादि । प्रवचनं कुर्वन्निति ।** ब्राह्मणरूपेण स्थित्वा समस्तानामधिकृतानां प्रवचनं–अध्यापनं कुर्वन्नित्यर्थः । ब्राह्मणस्यैव प्रवचनेऽधिकारः । न क्षत्रियादेरिति दर्शयति —**ब्राह्मणात्मनेति** । ब्रह्मशब्दोक्ताः तपोवेदब्राह्मणजात्यादयः शेषत्वेनास्य शेषिणः सन्तीति ब्रह्मी । ब्रह्मशब्दितानां तपोवेदादीनां ब्रह्मज्ञानार्थत्वेन तच्छेषत्वम् । "तमेतं वेदानुवचनेन" (बृह. उ. ४-४-२२) इत्यादिश्रुतेः, व्रीह्यादित्वान्मत्वर्थीय इनिरित्यभिप्रेत्याह — **ब्रह्मसंज्ञिता इति ॥**

ब्रह्मशब्दार्थभूतान् वेदान् स्वात्मभूतान् प्रलये स्वात्मनि प्रलीनान् सृष्ट्यादौ हिरण्यगर्भोपदेशार्थं जानाति–अनुसन्धत्त इति

---

[1] यथावद्वेत्ति विन्दते वेति–**पा.** [2] ब्रह्मात्मना–**पा.** [3] लोकानां–**पा.**

## स्तोत्रम्

# ब्रह्मज्ञो ब्राह्मणप्रियः ॥८४॥

### भाष्यम्

ब्रह्म—वेदान् [1] स्वात्मभूतान् जानातीति—ब्रह्मज्ञः । ब्राह्मणानां प्रियः—ब्राह्मणप्रियः । ब्राह्मणाः प्रिया अस्येति वा ।

घ्नन्तं शपन्तं परुषं वदन्तं
यो ब्राह्मणं न प्रणमे[2]द्यथाहम् ।
स पापकृद्ब्रह्मदवाग्निदग्धो
वध्यश्च दण्ड्यश्च न चास्मदीयः ॥

इति भगवद्वचनात् ।

यं देवं देवकीदेवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो [3] गुप्त्यै दीप्तमग्निमिवारणिः ॥

इति च महाभारते ॥ ८४ ॥

### विवृतिः

ब्रह्मज्ञ इत्याह—ब्रह्म-वेदान् स्वात्मभूतानिति । स्वानुभूतानिति पाठे—पूर्वसर्गे स्वानुभूतान् उत्तरसर्गादौ जानाति-अनुसन्धत्त इति ब्रह्मज्ञ इत्यर्थः ॥

ब्राह्मणानां प्रियः, तद्रक्षार्थमवतरणात् ; ब्राह्मणाः प्रिया अस्येति वा ब्राह्मणप्रिय इत्याह—ब्राह्मणानामिति । ब्राह्मणप्रियत्वे स्मृती उदाहरति—घ्नन्तमित्यादि । उक्तविशेषण विशिष्टमपि ब्राह्मणं यथा अहं-हरिः प्रणमामि तथा अस्मदीयो यः कश्चित् न प्रणमेच्चेत् स मे वध्यो दण्ड्यश्च, नास्मदीय इत्यर्थः । भौमस्य ब्रह्मणः—[4] भूलोकस्थब्राह्मणजातेः गुप्त्यै—रक्षणाय दीप्तमग्निमरणिरिव यं जनयामासेति तदर्थः ॥ ८४ ॥

---

[1] स्वानुभूतान्-पा. [2] यथार्थम्-पा. [3] गुप्तौ-पा. [4] भूलोकस्य-पा. ?

## स्तोत्रम्

# महाक्रमो महाकर्मा महातेजाः

## भाष्यम्

महान्तः क्रमाः–पादविक्षेपा अस्येति–महाक्रमः। "शं नो विष्णुरुरुक्रमः" (तै. उ. १-१) इति श्रुतेः। महत् जगदुत्पत्त्यादिकर्मास्येति–महाकर्मा। यदीयेन [1]तेजसा तेजस्विनो भास्करादयः तत्तेजो[2] महदस्येति–महातेजाः। "येन सूर्यस्तपति तेजसेद्धः" (तै. ब्रा. ३-१२-९) इति श्रुतेः। [3]"यदादित्यगतं तेजः" (भ. गी. १५-१२) इति भगवद्वचनाच्च।

## विवृतिः

महान्तः–विस्तीर्णाः क्रमाः–पादविन्यासा यस्य स महाक्रमः। त्रिविक्रमावतारे विस्तीर्णपादोपेतत्वादित्याह––**महान्त इति**। तत्र श्रुतिमाह––**शं न इति**। पादयोरभिमानी **विष्णुः**। स च **उरुक्रमः**–त्रिविक्रमः। विस्तीर्णपादोपेतत्वात्। सोऽस्माकं **शं**–सुखहेतुर्भवत्विति श्रुत्यर्थः। महत्–जगदुत्पत्त्यादिविषयकत्वात्प्रकृष्टं, कर्म–व्यापारः ईक्षणसङ्कल्पकृतिरूपोऽस्येति महाकर्मेत्याह––**महदिति**। महत्त्वमुपपादयति––**जगदुत्पत्त्यादीति**। तद्विषयकेत्यर्थः। महत्–प्रकृष्टं सर्वप्रकाशानामपि सूर्यादीनां [4]प्रकाशरूपं तेजः–चैतन्यलक्षणमस्येति महातेजा इत्याह––**यदीयेनेति**। तत्र भगवद्वचनमाह––**यदिति**। सूर्यचन्द्रादिगतं यत्तेजः चैतन्यलक्षणं सत्त्वाधिक्यात्स्फुटतरमभिव्यज्यमानं तन्मामकं [5]विद्धीत्यर्थः। "क्रौर्यशौर्यादिभिर्धर्मैर्महाद्भिः समलङ्कृत इति

---

[1] महता तेजसा–**पा.** [2] जोऽस्येति–**पा.** [3] तत्तेजो विद्धि मामकम्–**पा.**
[4] प्रकाशप्रदं–**पा.** [5] विद्यादित्यर्थः–**पा.**

## स्तोत्रम्

# महोरगः ।

# महाक्रतुः

### भाष्यम्

**क्रौर्यशौर्यादिभिर्धर्मैर्महद्भिः समलङ्कृत इति वा–महातेजाः । महांश्चासावुरगश्चेति–महोरगः । "सर्पाणामस्मि वासुकिः" (भ. गी. १०-२८) इति भगवद्वचनात् ॥**

**महांश्चासौ क्रतुश्चेति–महाक्रतुः । "यथाश्वमेधः क्रतु-**

### विवृतिः

वा महातेजाः" इति व्याख्यानान्तरं क्वचिद्दृश्यते । तस्यायमर्थः–तेजश्शब्देन क्रौर्यशौर्यादयो गुणा उच्यन्ते । तत्र क्रौर्य–दुष्टान् प्रति कठिनत्वं निर्दयत्वमसौम्यत्वं वा । शौर्य–बलवत्तरानपि प्रहर्तुं प्रवृत्तिः । आदिशब्देन पराभिभवसामर्थ्यं परानभिभाव्यत्वादिरूपं प्रागल्भ्यं गृह्यते । तथा च महान्ति–प्रकृष्टानि तेजांसि–क्रौर्यादयो धर्मा अस्येति महातेजा इति । महांश्चासावुरगश्च महोरगः–वासुकिः सर्पराजः । स च भगवद्विभूतिरित्याह––[1] **महांश्चासाविति** । तस्य तद्विभूतित्वे गीतामुदाहरति––**सर्पाणामिति** ॥

महांश्चासौ क्रतुश्च महाक्रतुः–अश्वमेधः । महत्त्वं चास्य [2] क्रतुराट्त्वात् । स च भगवद्विभूतिरिति स्तूयते भगवानित्याह––**महानिति** । तस्य क्रतुराट्त्वे मनुवचनमुदाहरति––**यथेति** । सोऽपि–अश्वमेधोऽपि, स एव–विष्णुरेवेत्युत्कृष्टक्रतुरूपेण स्तूयत इत्यर्थः । यज्वा-

---

[1] महानिति –**पा.**   [2] क्रतुशब्दात्–**पा.**

स्तोत्रम्

## महायज्वा महायज्ञो महाहविः ॥ ८५ ॥

भाष्यम्

राट्" (मनु. ११-२६०) इति मनुवचनात्। सोऽपि स एवेति स्तुतिः। महांश्चासौ यज्वा चेति लोकसङ्ग्रहार्थं यज्ञान् निर्वर्तयन्-महायज्वा। महांश्चासौ यज्ञश्चेति जपयज्ञः[1]–महायज्ञः। "यज्ञानां जपयज्ञोऽस्मि" (भ. गी. १०-२८) इति भगवद्वचनात्। महच्च तद्धविश्च–[2]ब्रह्मात्मनि सर्वं जगत्तदात्मतया हूयत इति–

विवृतिः

विधिनेष्टवान्। महांश्चासौ यज्वा च महायज्वा। महत्त्वं चास्याप्तकामतया, स्वप्रयोजनाभावेऽपि केवलं लोकानुग्रहार्थं यज्ञानामनुष्ठानादित्याह––महानिति। महांश्चासौ यज्ञश्च महायज्ञः। स च जपयज्ञः। तस्य च महत्त्वं ऋत्विगाद्यनपेक्षणात् हिंसाराहित्यात्पुरोडाशादिद्रव्यानपेक्षणाच्चेत्याह––महानिति। तन्महत्त्वे गीतां पठति––यज्ञानामिति॥

हूयते–उपसंह्रियते सर्वं जगदत्रेति–प्रलये सर्वस्य जगतो ब्रह्मण्युपसंहारात् जुहोतेरधिकरणे * औणादिक इसिप्रत्ययः। यद्वा हूयते–प्रविलाप्यतेऽत्रेति चिन्मात्रे मनोनिधानार्थं योगिभिः स्थूलसूक्ष्मकारणक्रमेण दृश्यस्य प्रत्यगभिन्ने ब्रह्मणि प्रविलापनाद्ब्रह्मणो हविष्ट्वम्। महच्च तत् हविश्च महाहविरित्यभिप्रेत्याह––महदिति। "अहं क्रतुरहं

---

* "अर्चिशुचिहु" (उणा. सू. २६५) इत्यादिना इसिप्रत्ययः।

[1] पञ्चमहायज्ञो जपयज्ञो वा–**पा.** [2] महाहविः ब्रह्मात्मनि–**पा.**

## स्तोत्रम्

## स्तव्यः

### भाष्यम्

महाहविः । महाक्रतुरित्यादयो बहुव्रीहयो वा ॥ ८५ ॥
सर्वैः स्तूयते, न स्तोता कस्यचिदसाविति–स्तव्यः ।

### विवृतिः

यज्ञः" (भ. गी. ९-१६) इति भगवद्वचनमनुसृत्य कर्मधारयतया महाक्रतुरित्यादिनामानि व्याख्याय बहुव्रीहिसमासमाश्रित्यापि व्याख्येय इत्याह––**महाक्रतुरित्यादय इति**। महान् क्रतुः श्रौतो यस्य रामाद्याविर्भावेषु, महान् क्रतुर्यस्य शेषभूत इति वा महाक्रतुः। महान्तो यज्वानो मूर्तयोऽस्य महायज्वा।

"भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः।"

इति स्मृतेः। यद्वा महान्तो यज्वानो रामकृष्णाद्यवताररूपा अस्येति महायज्वा। महान्तो यज्ञाः स्मार्तजपरूपा यस्य स महायज्ञः। महान्ति हवींषि आज्यपुरोडाशपशुसोमादिरूपाण्यस्य इन्द्रादिदेवतात्मकस्य यजमानरूपस्य वेति महाहविरित्येवं बहुव्रीहयो व्याख्येया इत्यर्थः ॥ ८५ ॥

स्तोतुमर्हः स्तव्यः। "अर्हे कृत्यतृचश्च" (पा. सू. ३-३-१६९) इत्यर्हार्थे यत्। सर्वेषां प्राणिनां कथञ्चित् स्तुत्यर्हत्वमस्त्येवेति न स्तव्यशब्देन [1]स्तुतिसिद्धिरित्याशङ्क्य स्तव्यनामनिर्देशसामर्थ्यात्सर्वस्तुत्यत्वं स्वयमन्यस्यास्तोतृत्वं च सिद्ध्यतीत्यभिप्रेत्याह—**सर्वैरिति**। प्रियः स्तवो यस्य सः स्तवप्रियः। "वा प्रियस्य"

---

[1] स्तुतिरित्या–**पा.**

स्तोत्रम

## स्तवप्रियः स्तोत्रं [1]स्तुतिः स्तोता रणप्रियः ।

भाष्यम्

**अत एव–स्तवप्रियः । येन स्तूयते तत्–स्तोत्रम्, गुणसङ्कीर्तनात्मकं तद्धरिरेव । [2]स्तुतिः–स्तवनक्रियापि हरिरेव[3] । स्तोता अपि स एव; सर्वात्मकत्वात् । [4]प्रियो रणो यस्य, यतः पञ्चमहायुधानि धत्ते सततं लोकरक्षणार्थं, अतो–*रणप्रियः ॥**

विवृतिः

(वा १४२०)" इति प्रियशब्दस्य परनिपातः । स्तुत्यर्हत्वादेव स्तवप्रियत्वमिति पूर्वनामार्थं हेतुं कृत्वाह—**अत एवेति** । स्तूयते येन तत् स्तोत्रम् । "ष्टुञ् स्तुतौ" अस्मात् "दाम्नीशसयुयुज" (पा. सू. ३-२-१२८) इत्यादिना करणे ष्ट्रन्प्रत्ययः । "तितुत्र" (पा. सू ७-२-९) इति नेट् । स्तोत्रं स्तुतिकरणमपि स एवेत्याह—**येनेति** । स्तवनं स्तुतिः गुणाभिधानक्रिया, सा विष्णुरेवेत्याह—**स्तुतिरिति** । स्तोता–देवव्रतादिसामभिरन्यैश्च मन्त्रैः स्तुतिकर्ता यः सोऽपि स एवेत्याह—**स्तोतापीति** । एवं च स्तोत्रस्तुतिस्तोतृरूपेण विष्णुः स्तूयत इति दर्शितम् । † प्रियं रणमस्य रणप्रियः । रणप्रियत्वे लिङ्गं फलं च दर्शयन् व्याचष्टे—**प्रिय इति** । **पञ्चमहायुधानीति** । शङ्खचक्रगदाखड्गशार्ङ्गरूपाणीति ॥

---

*"वा प्रियस्य" (वा. १४२०) इति प्रियशब्दस्य पूर्वनिपातविकल्पनात् रणप्रिय इत्युक्तिः । † "अस्त्रियां समरानीकरणाः" (नाम २–८–१०६) इति नामलिङ्गानुशासनानुसारेण अत्र रणशब्दस्य नपुंसकलिङ्गत्वमाश्रित्य प्रियं रणमित्युक्तिः ।

[1] स्तुतः–**पा.** [2] स्तुतः–स्तवनक्रियाविषयः । स्तुतिरिति पाठे स्तुतिः–**पा.** [3] स्तुत इति पाठे स्तवनक्रियाविषयोऽपि स मव–**पा.** [4] प्रियं रणं यस्य–**पा.**

## स्तोत्रम्

**पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः॥ ८६ ॥**

## भाष्यम्

[1]**सकलैः कामैः सकलाभिः शक्तिभिश्च सम्पन्न इति–पूर्णः। न केवलं [2]पूर्ण एव। पूरयिता च सर्वेषां सम्पद्भिः। [3]स्मृतिमात्रेण कल्मषाणि क्षपयतीति–पुण्यः। पुण्या कीर्तिरस्य, यतः पुण्यमावहत्यस्य कीर्तिः नृणामिति–पुण्यकीर्तिः। आन्तरैर्बाह्यैर्व्याधिभिः कर्मजैर्न पीड्यत इति–अनामयः॥ ८६ ॥**

## विवृतिः

गन्धमाल्यगीतवादित्रादिभिः [4]सर्वैर्दिव्यैः कामैः तत्कार्यानुकूलशक्तिभिश्च पूरितः पूर्णः। पूरयतेर्ण्यन्तात् क्तप्रत्ययः। "वा दान्तशान्तपूर्ण" (पा. सू. ७-२-२७) इत्यादिना निपातनात्साधुत्वमित्यभिप्रेत्याह––**सकलैरिति**। न केवलं स्वयं पूर्णः। स्वभक्तानामपि सर्वसम्पद्भिः पूरणात्पूरयितेति पूरयितृनाम व्याचष्टे––**न केवलमिति**। पुण्यः–पावनः। "शिवं पुण्यं च पावनं" इत्यभिधानकोशात्। पावनत्वं च स्मरणमात्रेण सर्वपाप्मक्षपणादित्याह–**स्मृतिमात्रेणेति**। कीर्तिः– कीर्तनं माहात्म्यकथनं पुण्यं–पुण्यावहमस्येत्याह––**पुण्येति**। उपपादयति––**यत इति**। आमयः–व्याधिरान्तरो बाह्यश्च नास्त्यस्येत्यनामय इत्याह–**आन्तरैरिति**॥ ८६ ॥

---

[1] सर्वैः कामैः–**पा.** [2] सम्पद्भिः पूर्ण एव–**पा.** [3] सर्वेषामुपासकानां स्मरणेन क–**पा.** [4] सर्वैः का–**पा.**

स्तोत्रम्

## मनोजवस्तीर्थकरः

भाष्यम्

मनसो जवः—वेग इव वेगोऽस्य सर्वगतत्वादिति—मनोजवः। चतुर्दशविद्यानां [1] बाह्यविद्यासमयानां च प्रणेता [2] प्रवक्ता चेति—तीर्थकरः। हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चाय सर्गादौ सर्वाः [3] श्रुतीरन्याश्च विद्या [4] उपादिशत्, वेदबाह्या

विवृतिः

मनसो जव इव जवोऽस्य मनोजवः। अश्व[5]मुखादिवत्समासः। आत्मनः क्रियाभावेन जवाभावात् जवपूर्वकसम्बन्धो जवशब्देन लक्ष्यते। तथा च मनसः सम्बन्ध इव सम्बन्धोऽस्येति लभ्यते। मनसो यथा क्रियापूर्वकः सम्बन्धो ध्रुवादिभिर्विषयैः तद्वद्व्यापकत्वादात्मनोऽपि [6] तत्सम्बन्धोऽस्तीति मनोजव इत्यनेन सर्वगत्वं लभ्यत इत्यभिप्रेत्याह—**मनस इति**। तीर्थानि—शास्त्राण्यास्तिकानां नास्तिकानां च सम्बन्धीनि करोति—निर्मिमीते उपदिशति चेति तीर्थकरः। "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु" इत्यभिधानकोशादित्यभिप्रेत्याह—**चतुर्दशेति**।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥

इति [7] पुराणोक्ता इत्यर्थः। **बाह्यविद्यासमयानामिति**। बौद्धार्हतादितन्त्राणामित्यर्थः। प्रणेता—कर्ता, प्रवक्ता—उपदेष्टा। उक्तमर्थं व्यक्तीकरोति—**हयग्रीवरूपेणेति**। **अन्या इति**। श्रुतिव्यतिरिक्ता इत्यर्थः।

---

[1] बाह्यविद्यानां च—**पा.** [2] प्रवर्तकश्चेति—**पा.** [3] श्रुतीस्सर्वाश्च—**पा.**
[4] उपदिशन्—**पा.** [5] मुख्यादि—**पा.** [6] तैः सम्ब—**पा.** [7] पुराणोक्तया—**पा.**

स्तोत्रम्

## वसुरेताः

भाष्यम्

विद्याः सुरवैरिणां वञ्चनाय चोपदिदेशेति पौराणिकाः कथयन्ति। वसु–सुवर्णं रेतोऽस्येति–वसुरेताः।

[1] "देवः पूर्वमपः सृष्ट्वा तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमं ब्रह्मणः कारणं परम्॥"

इति व्यासवचनात्। वसु–धनं प्रकर्षेण ददाति, साक्षाद्धना-

विवृतिः

उक्तार्थे पुराणं प्रमाणमित्याह—इति पौराणिका इति। वसु–हिरण्यम्। "हिरण्यं द्रविणं द्युम्नं रुक्ममृक्थ्यं धनं वसु" इत्यभिधानात्। रेतः–कार्यम्। "अथातो रेतसः सृष्टिः" (ऐ. उ. १-३-१) इत्यादौ रेतश्शब्दस्य भाष्ये कार्यपरतया व्याख्यातत्वात्। तथा च वसु–हिरण्यं तन्मयमण्डं रेतः–कार्यमस्येति वसुरेता इत्यभिप्रेत्य उक्तार्थपरां स्मृतिं पठति—देव इति। देवः–परमात्मा, पूर्वं–सर्गादौ, अपः–अपञ्चीकृतभूतानि, सृष्ट्वा तास्वप्सु–अपञ्चीकृतभूतात्मिकासु, वीर्यं-हिरण्यगर्भोऽहमिति वासनावासितकर्तृत्वाद्यवच्छिन्नचैतन्यं, अवासृजत्-प्रकटतामनयत्, तत्पूर्वोपस्थितजलरूपमपञ्चीकृतमण्डमभवत्, तद्रूपेण परिणनाम। तच्चाण्डं ब्रह्मणः–विराजः कारणं, तत्राभिमानित्वेन विराजो जातत्वादित्यर्थः॥

वसु प्रददातीति वसुप्रदः। प्रोपसृष्टाद्ददातेः कर्मण्युपपदे "प्रे दाज्ञः" (पा. सू. ३-२-६) इति कप्रत्ययः। अमात्यादीनां धनाध्यक्षतां प्रापयन्राजेव परमेश्वर एव साक्षाद्धनदः। इतरस्तु कुबेरस्तमामाराध्य धनदपदं लब्धवानिति असाक्षाद्धनद इत्यभिप्रेत्याह—वस्विति। धर्मार्थकाममोक्षेषु यत् प्रकृष्टं फलं तद्वसु–मोक्षाख्यं तस्य प्रदानाद्वसुप्रद इत्यपौनरुक्त्यं दर्शयन् द्वितीयवसुप्रदनाम निर्वक्ति—

[1] अप एव ससर्जादौ तासु–पा.

स्तोत्रम्

# वसुप्रदः ।

## वसुप्रदः

भाष्यम्

ध्यक्षोऽयं, इतरस्तु तत्प्रसादाद्धनाध्यक्ष इति–वसुप्रदः ॥

**वसु–प्रकृष्टं मोक्षाख्यं फलं भक्तेभ्यः प्रददातीति द्वितीयो वसुप्रदः। "विज्ञानानन्दं ब्रह्म [1]रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः" (बृह. उ. ३-९-२८) इति श्रुतेः। सुरारीणां वसूनि प्रकर्षेण खण्डयन् वा–वसुप्रदः ॥**

विवृतिः

**वस्विति। द्वितीय इति।** प्रसिद्धो यः कुबेराख्यः अस्थिरवसुप्रदः, तदपेक्षया नित्यनिरतिशयमोक्षाख्यवसुप्रदोऽयं द्वितीय इति स्तूयत इत्यर्थः। यद्वा द्वितीयः प्रथमवसुप्रदशब्दार्थव्यतिरिक्तः वसुप्रदशब्दार्थः। अतो न पौनरुक्त्यमित्यर्थः। मोक्षप्रद इत्यत्र श्रुतिमाह—**विज्ञानमिति। विज्ञानं**–कूटस्थचैतन्यं, **आनन्दं**–निरतिशयसुखरूपं,**ब्रह्म**–देशादिपरिच्छेदशून्यं, **सद्रूपेण** सर्वानुगतं महत् सर्वजगत्कारणम्। किञ्च **रातिः**–षष्ठ्याः सुः आदेशः, **रा**तेः–धनस्य गवाश्वहिरण्यादिकस्य,**दातुः**– पुरुषस्य, **परायणं**–प्रकृष्टाश्रयः, तथा **तिष्ठमानस्य**–निरस्तसमस्ताविद्यतया ऐकात्म्येन [2]ब्रह्मण्यवतिष्ठमानस्य, **तद्विदः**–ब्रह्मापरोक्षानुभववतो योगिनः **परायण**मिति श्रुत्यर्थः। अत्र तिष्ठमानस्य तद्विद परायणमित्यनेन मोक्षाख्यवसुप्रदत्वमुक्तम्। मोक्षप्रदत्वेन तत्परायणत्वादिति बोध्यम्। वसूनि सुरारीणां धनानि, तेषां प्रकर्षेण दानात्–खण्डनाद्वसुप्रदः। "दो अवखण्डने" अस्मात्प्रपूर्वात्कप्रत्यये रूपम्। अतः स्पष्टमपौनरुक्त्यमित्यभिप्रेत्य अस्यैव नाम्नो निर्वचनान्तरमाह—**सुरारीणामिति ॥**

---

[1] रातेर्दातुः–**पा.** [2] ब्रह्मण्येव तिष्ठ–**पा.**

### स्तोत्रम्

# वासुदेवो वसुर्वसुमनाः

### भाष्यम्

वसुदेवस्यापत्यं—वासुदेवः। वसन्ति सर्वभूतानि तत्र, तेषु वाऽयमपि वसतीति—वसुः[1]। अविशेषेण सर्वेषु विषयेषु वसतीति वसु, [2]तादृशं मनोऽस्येति—वसुमनाः।

### विवृतिः

वसुदेवस्यापत्यम्, "ऋष्यन्धक" (पा. सू. ४-१-११४) इत्यादिना अण्प्रत्यय इत्याह—वसुदेवस्येति। वसन्ति भूतान्यत्र वसत्ययं भूतेषु [3]जीवरूपेणान्तर्यामिरूपेण वेति वसुः। वसेरधिकरणे कर्तरि वा औणादिक उप्रत्यत्य इत्याह—वसन्तीति। अविशेषेण यौगपद्येन साम्येन वा रागद्वेषराहित्यलक्षणेन सर्वेषु विषयेषु वसनात् वसु—वर्तमानं मनोऽस्येति वसुमना इत्याह—अविशेषेणेति। "वसुर्वसुमनाः सत्यः" (वि. स. २५) "महेन्द्रो वसुदो वसुः" (वि. स. ४२) "वसुर्वसुमना हविः" (वि. स. ८७) इत्येतेषु भाष्येषु वसुमनोनाम्नोर्वसुनाम्नां च पूर्वेणोत्तरस्यापौनरुक्त्यं अर्थभेदादिति बोध्यम्। "ब्रह्मार्पणं ब्रह्म हविः" (भ. गी. ४-२४) इत्यादिना हविषि ब्रह्मदृष्टिविधानादोङ्कारादिवद्धविषो ब्रह्मप्रतीकत्वा-

---

[1] छादयत्यात्मनः स्वरूपं माययेति—वसुः—पा. वस्ते आच्छादयत्यात्मनः स्वरूपं माययेति वा—वसुः—पा. [2] तन्मनोऽस्येति—पा. [3] जीवरूपेण वेति—पा.

स्तोत्रम्

## हविः ॥ ८७ ॥

## सद्गतिः सत्कृतिः

भाष्यम्

"ब्रह्मार्पणं ब्रह्म हविः" (भ. गी. ४-२४) इति भगवद्वचनात् हविः ॥ ८७ ॥

"अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" (तै. उ. २-६) इति श्रुतेः ब्रह्मास्तीति ये विदुस्ते सन्तः, तैः प्राप्यत इति सद्गतिः । सती गतिः—बुद्धिः समुत्कृष्टा अस्येति वा—सद्गतिः । सती कृतिः [1]जगद्रक्षणादिलक्षणा अस्य यस्मात् तेन —सत्कृतिः । इति नाम्नां सप्तमं शतकं विवृतम् ॥

इति सप्तमशतकभाष्यम्

---

विवृतिः

हविर्नामकं ब्रह्मेत्याशयेनाह—हविरिति । यद्वा हविर्बाधाधिष्ठानभूतं ब्रह्म हविःपदेन लक्ष्यत इति हविरिति व्याचष्टे—हविरिति । तत्र गीतावचनमुदाहरति—ब्रह्मेति । हविर्बुद्धया गृह्यमाणं यत् तत ब्रह्मैव । तद्व्यतिरेकेण तस्याभावं पश्यति ब्रह्मविदित्यर्थः ॥ ८७ ॥

गम्यत इति गतिः, सतां—अस्ति ब्रह्मेति विदुषां गतिः—प्राप्यं स्थानं सद्गतिरिति श्रुतिमुखेन सच्छब्दार्थं दर्शयन्व्याचष्टे—अस्तीति । सती—समुत्कृष्टा, सर्वविषयकत्वात् यथार्थत्वाच्च गतिः—अवगतिर्बुद्धि रस्येति सद्गतिरित्यर्थान्तरमाह—सतीति । सती—जगद्रक्षणार्थत्वे नोत्तमा कृतिः—व्यापारोऽस्येति सत्कृतिरित्याह—सतीति ॥

इति सप्तमशतकभा[2]ष्यविवृतिः

---

[1] जगदुत्पत्यादि—पा. [2] ष्यं व्याख्यातम्—पा.

स्तोत्रम्

# सत्ता सद्भूतिः

## अथाष्टमशतकभाष्यम्

**सजातीयविजातीयस्वगतभेदरहिता अनुभूतिः–सत्ता। "एकमेवाद्वितीयम्" (छा. ६-२-१) इति श्रुतेः। [1]सन्नेव परमात्मा चिदात्मकः [2]अबाधात् भासमानत्वाच्च[3]—सद्भूतिः;**

## अथाष्टमशतकभाष्यविवृतिः

सतां भावः सत्ता। सद्विशेषेष्वनुगतं स्वरूपं, तच्च सद्रूपं ब्रह्मैव, तच्च सजातीयविजातीयस्वगतभेदशून्यं, "सदेव सोम्य" (छा. उ. ६-२-१) इत्यादिश्रुतौ सदुद्देशेनैकमेवाद्वितीयमितिशब्दैः तद्विधानादिति मत्वा व्याचष्टे—**सजातीयेति**। तत्र श्रुतिमुदाहरति **एकमिति**। सद्भूतिरित्यत्राबाध्यमानोऽर्थः सच्छब्देनोच्यते। भूतिशब्देन चानुभूतिः। सती चासौ भूतिश्च सद्भूतिः "पुंवत्कर्मधारय" (पा. सू. ६-३-४२) इति पुंवद्भाव इत्यभिप्रेत्याह—**सन्नेवेति**। चिदात्मक इत्यनेन भूतिशब्दो नामगतो विवृतः। सन्नेवेत्येवशब्देन कर्मधारयो दर्शितः। यः परमात्मा सन् स एव भूतिश्चिदात्मक इति योजना। सद्रूपत्वमुपपादयति—**अबाधादिति**। चिद्रूपत्वमुपपादयति- **भासमानत्वाच्चेति**। प्रपञ्चस्याबाध्यत्वं [4]*धुनीते—

---

* 'धुनीते' अयं क्र्यादिः। 'धुनोति' अयं स्वादिः।

[1] स एव– **पा.** [2] बहुधा भास–**पा.** [3] स्यात् स–**दा.** [4] धुनोति–**पा.**

स्तोत्रम्

# *[1] सत्परायणम् ।

भाष्यम्

**नान्यः, [2]प्रतीतेः बाध्यमानत्वाच्च न सन्नाप्यसन् । [3]श्रौतो यौक्तिको वा बाधः प्रपञ्चस्य विवक्षितः। सतां–तत्त्वविदां परं–प्रकृष्टमयनमिति–सत्परायणम् ॥**

विवृतिः

**नान्य** इति । किंरूपस्तर्हि प्रपञ्च इत्याशङ्क्य सदसद्विलक्षणतया अनिर्वचनीय इत्याह—**न सन्नाप्यसन्निति** । सदसद्विलक्षणतया अनिर्वचनीय इत्यर्थः । असद्वैलक्षण्ये हेतुमाह—**प्रतीतेरिति** । यद्यसन् शशशृङ्गवन्न प्रतीयेत । प्रतीयते चायमतो नासन्नित्यर्थः । सद्वैलक्षण्ये हेतुमाह--**बाध्यमानत्वादिति** । यदि सन् स्यात् न बाध्येत ब्रह्मवत् । [4]बाध्यते चायं प्रपञ्चः । अतो न सन्नित्यर्थः--**श्रौतो यौक्तिको वेति** । "नेह नानास्ति किञ्चन" (कठ. उ. ४-११ बृह. उ. ४-४-१९) इत्यादिश्रुतयः । तत्प्रभवो बाधः श्रौतः । प्रपञ्चो मिथ्या, दृश्यत्वात्, शुक्तिरूप्यवदित्यादयो युक्तयः । तत्प्रभवो यौक्तिकः । **विवक्षित इति** । अन्यस्य [5]प्रत्यक्षरूपस्य परं प्रत्यनुपन्यसनीयत्वादिति भावः । सतां "अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" (तै. उ. २-६) इति श्रुत्युक्तानां तत्त्वविदां परमयनं–प्रकृष्ट[6]प्राप्यस्थानं तत्प्राप्तस्यापुनरावृत्तेरिति परायणमित्याह–**सतामिति** ॥

---

* "सत्परायणः" इति पुल्लिङ्गपाठे "सन्तः परायणं अस्य" इति बहुव्रीहिराश्रयणीयः ।

[1] सत्परायणः–**पा.** [2] नानात्वप्रतीतेः–**पा.** [3] शास्त्रीयो यौ–**पा.** [4] बाध्यते चायमतो–**पा.** [5] स्वप्रत्यक्षस्य–**पा.** [6] प्राप्यं स्थानं–**पा.**

स्तोत्रम्

## शूरसेनो यदुश्रेष्ठः सन्निवासः

भाष्यम्

हनूमत्प्रमुखाः सैनिकाः शौर्यशालिनो यस्यां सेनायां सा शूरा सेना यस्य सः--शूरसेनः। यदूनां प्रधानत्वात्—यदुश्रेष्ठः। सतां विदुषामाश्रयः—सन्निवासः। सु-शोभनाः यामुनाः-यमुनासम्बन्धिनः [1] देवकीवसुदेवनन्दयशोदाबलभद्र-

विवृतिः

शूराः-हनूमत्प्रमुखा अस्यां सन्तीति शूरा, अर्शआद्यच् मत्वर्थीयः ; तादृशी हनुमत्प्रमुखशूरोपेता सेना यस्य श्रीरामरूपेणाविर्भूतस्य स शूरसेन इत्याह—हनूमदिति। यदुशब्दस्तद्वंशेषु लक्षणया वर्तते। यदूनां श्रेष्ठः प्रधानः, "वृष्णीनां वासुदेवोऽस्मि" (भ. गी. १०-३७) इति स्मृतेरित्याह—यदूनामिति। मिथ्याभूतदेहेन्द्रियाद्यात्मत्वदर्शिनामसत्तुल्यतया सत्यज्ञानानन्दात्मकं ब्रह्माहमस्मीति पश्यन्तः सन्त इत्युच्यन्ते। तेषां स्वयोगक्षेमयोरप्रयतमानानां योगक्षेमनिर्वाहकत्वेनाश्रयः सन्निवासः। "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" (भ. गी. ९-२२) इति भगवद्वचनादित्याह--सतामिति। सु-शोभनाः यामुनाः-यमुनातीरवासिनः [2] श्रीदामादिगोपालाः गोपीजनाश्च परिवेष्टारः परिवारभूताः यस्य सः सुयामुनः गोपवेषधरो हरिरित्याह--शोभना इति। शोभनाः

---

[1] परिवेष्टारोऽस्येति-**पा.** [2] श्रीरामादि-**पा.**

### स्तोत्रम्

## सुयामुनः ॥ ८८ ॥

### भाष्यम्

**सुभद्रादयः [1]परिवेष्टारोऽस्येति—सुयामुनः । [2]गोपवेषधरा यामुनाः परिवेष्टारः पद्मासनादयो लोकपालाः शोभना अस्येति वा—[3]सुयामुनः ॥ ८८ ॥**

### विवृतिः

यामुनाः पद्मासनादयो गोपवेषधराः परिवेष्टारः परिवारा यस्य गोपवेषस्य सः सुयामुनः । तथा च विष्णुपुराणम्—

"मनुष्यलीलां भगवन्! भजता भवता सुराः ।
विडम्बयन्तस्त्वल्लीलां सर्वे एव समासते ॥
अवतार्य भवान् पूर्वं गोकुले तु [4]सुराङ्गनाः ।
क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वत !" ॥

(वि. पु. ५-७-३९-४०) इति ॥

मनुष्यलीलां भजता हेतुभूतेन गोपवेषधराः सुरा एते त्वल्लीलां विडम्बयन्तोऽनु[5]कुर्वन्तस्त्वया सह क्रीडन्तो वर्तन्ते । तथा सुराङ्गनाश्च भवानेवावतारितवान् । अतोऽस्मदर्थं जातान्नोपेक्षस्वेति श्लोकार्थः । एतदभिप्रेत्यार्थान्तरमाह—**गोपवेषधरा इति ॥ ८८ ॥**

---

[1] सुदामादिगोपालाः गोपीजनाद्या ये परि—**पा.** [2] यामुनाः परिवेष्टारः—**पा.** [3] सुयामुनः गोपवेषधरः—**पा.** [4] वराङ्गनाः—**पा.** [5] अनुकुर्वन्तो हि त्वया—**पा.**

## स्तोत्रम्

# भूतावासो वासुदेवः

## भाष्यम्

भूतान्यत्राभिमुख्येन वसन्तीति भूतावासः। "वसन्ति [1]त्वयि भूतानि भूतावासस्ततो [2]भवान्" (हरि. २७५-५२) इति हरिवंशे। जगदाच्छादयति माययेति वासुः, स एव देव इति-वासुदेवः। "छादयामि [3]जगद्विश्वं भूत्वा सूर्य इवांशुभिः"

## विवृतिः

आकार आभिमुख्यार्थः। आभिमुख्यं चाधिष्ठानचैतन्यदृश्यत्वम्। तथाचाभिमुख्येनाधिष्ठानभूतचैतन्यदृश्यतया वसन्त्यत्र चिदात्मनीत्यावासः। भूतानामावासो भूतावास इत्याह-भूतानीति। उक्तनिरुक्तौ हरिवंशवचनं पठति-वसन्तीति। वस्ते-आच्छादयति स्वमायया आवृणोति जगदिति वासुः। "वस आच्छादने" इति धातोरौणादिक उप्रत्ययः। "अन्येषामपि दृश्यते" (पा. सू. ३-२-७८) इति वसुशब्दे अकारस्य दीर्घः। बाहुलकादुण्प्रत्ययो वा। दीव्यति-प्रकाशत इति देवः। वासुश्चासौ देवश्च वासुदेव इति निर्वचनमभिप्रेत्याह—जगदिति। आच्छादयतीति। वासुशब्दान्तर्गतस्य "वस आच्छादने" इति धातोरर्थवर्णनमेतत्। उक्तनिरुक्तौ मोक्षधर्मवचनं पठति—छादयामीति। भूत्वा-विभूत्या, स्वशक्त्या मायया, विश्वं-जगत्, छादयामि-आच्छादयामि आवृणोमि। अनेन वासुशब्दो व्याख्यातः। सूर्य इवांशुभिः द्योतमानः। अनेन देवशब्दो व्याख्यातः। "वासुदेवो बृहद्भानुः"

[1] तत्र-पा. [2] हरिः-पा. [3] जगत्सर्वं-पा.

## स्तोत्रम्

# सर्वासुनिलयः

## भाष्यम्

(भार-मोक्ष. ३५०-४१) इति भगवद्वचनात् । सर्व एवासवः-[1]प्राणा [2]जीवात्मके यस्मि[3]न्नव्यये निलीयन्ते स-सर्वासुनिलयः ।

## विवृतिः

(वि. स. ४९) इत्यत्र "वस निवासे" वस आच्छादने इति धातुद्वयाभिधेये वसनाच्छादने समुचिते विवक्षिते । "भूतावासो वासुदेवः" (वि-स. ८९) इत्यत्राच्छादनमात्रं विवक्षितम् । अत एव भाष्ये "भूतावासो वासुदेवः" (वि-स. ८९) इत्यत्र "छादयामि जगद्विश्वं" इति पूर्वार्धमात्रं पठितम् । "वसुप्रदो वासुदेवः" (वि-स. ८७) इति स्थलान्तरेऽपि वसुदेवस्यापत्यामिति अर्थ उक्तः । अतोऽर्थ-भेदात्रयाणां वासुदेवनाम्नामपौनरुक्त्यमिति भावः । नितरां लीयन्ते-आमोक्षं संश्लिष्यन्तेऽत्रेति निलयः । "पुंसि संज्ञायां घः प्रायेण" (पा-सू. ३-३-११८) इति निपूर्वात् लीयतेर्घप्रत्ययः । सर्वासूनां-सर्व-प्राणानां निलयः-आश्रयो जीवरूप इत्याह—सर्व एवेति । सर्व एवासवो-मुख्याः प्राणाः जीवात्मके यस्मिन्नव्यये निलीयन्त इतीत्ययमर्थः ॥

अव्यये-अविनाशिनि जीवात्मके-जीवभावं प्राप्ते सर्व एवासवः-मुख्याः प्राणा नितरां-मोक्षपर्यन्तं लीयन्ते-संश्लिष्यन्ते यस्मिन्, प्राणानां जीव[4]परतन्त्रत्वात् स सर्वासुनिलय इति । जीवात्मका इति प्रथमान्तपाठे

---

[1] मुख्यप्राणाः-पा. [2] जीवात्मकाः-य. पा. [3] न्नाश्रये-पा. [4] परत्वात्-पा.

## स्तोत्रम्

# अनलः ।

# दर्पहा

## भाष्यम्

[1]अलं-पर्याप्तिः शक्तिसम्पदां नास्य विद्यत इति–अनलः ॥

धर्मविरुद्धे पथि तिष्ठतां दर्पं हन्तीति–दर्पहा । धर्म-

## विवृतिः

जीवात्मकाः–जीवोपाधिभूताः सर्वे प्राणाः यस्मिन्नव्यये परमात्मनि लीयन्ते–प्रलयादौ लयं गच्छन्ति स सर्वासुनिलय इत्यर्थः । अलनं–अलः, "अल भूषणपर्याप्तिशक्तिवारणेषु" [2]अस्माद्भावे घञ् । संज्ञापूर्वकत्वान्न वृद्धिः । "घञर्थे कविधानम् ।" (वा. २२०४) इति वा कप्रत्ययः । अलः–पर्याप्तिः शक्तिसम्पदां परिच्छित्तिः इयत्ता, सा न विद्यतेऽस्येत्यनल इत्याह—**अलमिति** । अत्र भाष्ये अलं शब्दो न समासघटकतयोपन्यस्तः, तथा सति समासस्य मकारान्तताश्रवणप्रसङ्गात् । किन्तु समासान्तर्गतस्य अलशब्दस्य अलंशब्देनार्थवर्णनमात्रं क्रियत इति बोध्यम् । **शक्तीति** । शक्तयः सम्पदश्च, शक्तीनां सम्पदो वा शक्तिसम्पदः तासामित्यर्थः ॥

"दृप हर्षमोहनयोः" इति धातोः घञि निष्पन्नो दर्पशब्दः–यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो धर्मविशेषः तद्वाची । धर्मविरुद्धे पथि वर्तमानानां लोकानामुक्तरूपं दर्पं हर्षं वा अधर्माचरणविषयकं हन्तीति दर्पहेत्याह—**धर्मेति** । दर्पं ददातीति गर्वपदरहिते पाठे धार्मिकाणां धर्मानुष्ठानविषयकं दर्पं–हर्षं ददातीति दर्पद इत्याह—**धर्मवर्त्मनीति** । गर्वपद-

---

[1] यस्यानलमपर्याप्ताः शक्तिसम्पद इति–अनलः पा. [2] तस्मात्–पा.

## स्तोत्रम्

# दर्पदः

### भाष्यम्

**धर्मवर्त्मनि वर्तमानानां [1]दर्पं ददातीति–दर्पदः। स्वात्मामृत-**

### विवृतिः

युक्तपाठे धर्मवर्त्मनि वर्तमानानां दर्पं–गर्वं दातीति दकाराभ्यासरहित-पाठश्चेत्साधु। अस्मिन् पक्षे धार्मिकाणां दर्पं–गर्वं दाति–लुनाति "अहं धार्मिकः" इति दर्पस्यासुरसम्पद्रूपत्वादित्यर्थः। दृप्यति–मोदते [2]आत्मानन्दानुभवेनेति दृप्तः। दृपेः हर्षार्थात् "गत्यर्थाकर्मक" (पा-सू. ३-४-७२) इत्यादिना कर्तरि क्त इत्याह—**स्वात्मेति**। [3]स्वात्मा-आनन्दात्मा स एवामृतरसवद्रम्यतरः, तस्यास्वादनात् अनुभवादित्यर्थः। निरुपाधिकत्वात्परमात्मा दुःखेन धार्यते–ध्रियते चित्ते स्थिरीक्रियते योगिभिरिति दुर्धरः। [4]धरतेर्दुष्पूर्वात्कर्मणि खल्प्रत्ययः। भाष्ये धार्यत इत्यत्र णिज[5]र्थोऽविवक्षितः। तद्विवक्षायां च प्रयोज्यकर्मणि लकारापत्तौ धार्यते परमात्मेति प्रयोगो न स्यात्। कृद्वृत्तिघटकत्वं च धरतेरेव, न धारयतेः। तथा सति वृद्धिः श्रूयेत। एवञ्च ध्रियत इत्यस्यार्थे धार्यत इति भाष्यमिति बोध्यम्। अत्र "सुभुजो दुर्धरः" (वि-स. ४२) इत्यत्रत्येन दुर्धरनाम्ना अपौनरुक्त्यम्। तत्र सगुणः परमेश्वरो विवक्षितः। अत्र तु निर्विशेष इत्यर्थभेदात्। अत एव भाष्येऽत्र *निरुपाधिकत्वादिति हेतूपन्यासः कृतः। सगुणोऽपि ध्यातव्यः,

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥

---

*सर्वोपाधिविनिर्मुक्तत्वादित्यस्यार्थानुवादोऽयम्।

[1] दर्पं गर्वं द–**पा.** [2] आत्मानुभवानन्देन–**पा.** [3] स्वात्मानन्दाभ्यास एवामृतरसवदमृतरसः तस्या–**पा.** [4] दुःपूर्वा–**पा.** [5] न विवक्षितः–**पा.**

स्तोत्रम्

## दृप्तो दुर्धरः

भाष्यम्

**रसास्वादनान्नित्यं प्रमुदितः–दृप्तः। न शक्या धारणा यस्य [1]प्रणिधानादिषु सर्वोपाधिविनिर्मुक्तत्वात्, तथापि तत्प्रसादतः कैश्चिद्दुःखेन धार्यते हृदये जन्मान्तरसहस्रेषु भावनायोगात् तस्मात् दुर्धरः।**

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ (भ. गी. १२-५)**

विवृतिः

इत्यभियुक्तोक्तेरित्यत आह—**न शक्येति**। यद्यपि यस्य निरुपाधिकस्य ब्रह्मणः प्रणिधानादिषु–ध्यानादिषु कर्तव्येषु विजातीयप्रत्यय[2]विच्छिन्न-प्रत्यय[3]रूपा धारणापि सहसा न शक्या सर्वेषाम्। तथापि जन्मान्तर-सहस्रकृतभावनायोगाद्भगवत्प्रसादे सति ततः कैश्चिद्दुःखेन धार्यत इति यस्मात्तस्माद्दुर्धर इति योजना। यद्वा सगुणस्य परमेश्वरस्य प्रणिधाना-दिना तत्प्रसादात्सकलप्रतिबन्धकक्षयमपेक्ष्य जन्मान्तरसहस्रानुष्ठितयोग-जन्यवासनोद्बोधात्सर्वोपाधिविनिर्मुक्तोऽपि कैश्चिद्दुःखेन धार्यते–साक्षात्का-ररूपफलपर्यन्तधारणादिविषयीक्रियत इति योजना। तत्र विजातीयप्रत्य-यविच्छिन्नप्रत्ययरूपा धारणा। अविच्छिन्नं ध्यानं ध्येयध्यानध्यातृस्फूर्ति-मत्। ध्येयमात्रस्फूर्तिमान् समाधिः। स एव दीर्घकालव्यापी सन् सम्प्रज्ञा-ताख्यो योग इत्युच्यते। ध्येयस्फूर्तिशून्योऽसम्प्रज्ञातसमाधिरिति भेदः॥

निर्विशेषस्य दुर्धरत्वे भगवद्वचनं पठति—**क्लेश इति**। यद्यपि मत्कर्मादिपराणामधिक एव क्लेशः। अधिकतरस्त्वक्षरात्मदर्शिनां–-परमात्मदर्शिनां देहाभिमानत्यागनिमित्तः। अव्यक्तासक्तचेतसां—

[1] प्राणप्रणिधानादिषु–**पा.** [2] विभिन्न–**पा.** [3] रूपधारणापि–**पा.**

स्तोत्रम्

## अथापराजितः ॥ ८९ ॥
## विश्वमूर्तिर्महामूर्तिः

भाष्यम्

इति भगवद्वचनात्। न आन्तरै रागादिभिर्बाह्यैरपि [1]दानवादिभिः शत्रुभिः पराजित इति–अपराजितः ॥ ८९ ॥

विश्वं मूर्तिरस्य सर्वात्मकत्वादिति—[2]विश्वमूर्तिः। [3]शेष पर्यङ्कशायिनो[4]ऽस्य महती मूर्तिरिति--महामूर्तिः। दीप्ता

विवृतिः

अव्यक्ते आसक्तं चेतो येषां ते अव्यक्तासक्तचेतसः तेषां अव्यक्ता हि–यस्मात् या गतिः अक्षरात्मिका *दुःखं सा देहवद्भिः–देहाभिमानवद्भिः अवाप्यते, अतः क्लेशोऽधिकतर इत्यर्थः। आन्तरैः कामक्रोधादिभिः बाह्यैश्च हिरण्यकशिपुप्रभृतिभिः शत्रुभिः पराजितो नेत्यपराजित इत्याह–नान्तरैरिति ॥ ८९ ॥

विश्वं---चराचरात्मकं जगत् मूर्तिः–शरीरमस्य, सर्वप्राण्यात्मकत्वात् विश्वमूर्तिरित्याह–**विश्वमिति**। महती–अतिप्रमाणा मूर्तिः-शरीरमस्या अनिरुद्धमूर्तेः, [5]अतिविपुलशेषाङ्कपर्यङ्कशायित्वात्, "चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा" (मा-पु. ४-५०) इति पुराणवचनादिति महामूर्तिरित्याह—**महतीति**। दीप्तः–दीप्तम्, भावे क्तः, दीप्तश्चात्र ज्ञानम्, सा मूर्तिः स्वरूपमस्येति वा; दीप्तेः "गत्यर्थाकर्मक" (पा सू. ३·४-७२) इत्यादिना कर्तरि निष्ठा,

---

* दुःखं—दुःखं यथा तथा, दुःखेन कृच्छ्रेणेति यावत्।

[1] शत्रुभिः–**पा.** [2] विश्वमूर्तिः। सर्वात्मकत्वात्–**पा.** [3] शेषाङ्कपर्यङ्क–**पा.** [4] ऽनिरुद्धस्य–**पा.** [5] अतिविमल–**पा**

स्तोत्रम्

## दीप्तमूर्तिरमूर्तिमान् ।

भाष्यम्

**ज्ञानमयी मूर्तिः यस्येति, स्वेच्छया गृहीता तैजसी मूर्तिः दीप्ता अस्येति वा—दीप्तमूर्तिः। कर्मनिबन्धना मूर्तिरस्य न विद्यत इति—अमूर्तिमान् ।**

**अवतारेषु स्वेच्छया लोकानामुपकारिणीः बह्वीर्मूर्तीर्भजत**

विवृतिः

दीप्ता—भास्वररूपलक्षणदीप्तिविशिष्टा मूर्तिः—तनूरस्येति वा दीप्तमूर्तिः। "सत्यं ज्ञानमनन्तं ब्रह्म।" (तै. उ. २-१)

"दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।

यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः॥" (भ-गी. ११-१२)

इति क्रमेण चोभयस्मिन्नर्थे श्रुतेः स्मृतेश्चेत्यभिप्रेत्यार्थद्वयपरतया व्याचष्टे—**ज्ञानमयीति** ॥

अमूर्तिमानित्यत्र मूर्तिशब्देन कर्मजन्यमूर्तिरुच्यते । तद्वान् मूर्तिमान् । तद्विलक्षणः अमूर्तिमान् इच्छागृहीतमूर्तिः । यद्वा न मूर्तिरमूर्तिः—कर्मनिबन्धनमूर्त्यभावः, तद्वानमूर्तिमानित्यभिप्रेत्याह—**कर्मेति** ॥

अनेकाः—बह्व्यो मूर्तयः—शरीराणि यस्य रामकृष्णाद्याविर्भावेषु सोऽनेकमूर्तिरित्याह—**अवतारेष्विति**। मूर्तीनां कर्मजन्यत्वं वारयति—**स्वेच्छयेति** । आप्तकामत्वान्मूर्तीनां स्वभोगार्थत्वाभावेऽपि लोकोपकारः [1]अवतारे प्रयोजनमित्याह—**लोकानामिति** । यद्यप्यनेका मूर्तयः

---

[1] प्रयोजन—**पा.**

## स्तोत्रम्

## अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९० ॥

### भाष्यम्

इति–अनेकमूर्तिः । यद्यप्यनेकमूर्तित्वमस्य, तथाप्ययमीदृश एवेति न व्यज्यत इति–अव्यक्तः । नानाविकल्पजा मूर्तयः [1]संविदाकृतेः सन्तीति–शतमूर्तिः । विश्वादिमूर्तित्वं यतः अत एव–शताननः ॥ ९० ॥

### विवृतिः

सन्त्यस्य । तथापि मूर्तिमानेवायमिति व्यक्तः—स्पष्टो नेत्यव्यक्तः । "न सन्दृशे तिष्ठति रूपमस्य" (कठ-उ. ६-९) इत्यादिश्रुतेः ।

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ! ।
सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि ॥"

(भार-शान्ति. ३४७ ४४)

इति स्मृतेश्चेत्याह—यद्यपीति । शतं–असङ्ख्याता मूर्तयश्च-राचरात्मिकाः नानाविधपूर्वपूर्वभ्रमजन्या यस्मिन् परमात्मसंविदा-कृतावधिष्ठाने अध्यस्ताः स शतमूर्तिरित्याह—नानेति । शतं–असङ्ख्यातान्याननानि यस्य विराडात्मनः स शताननः । "सर्वानन-शिरोग्रीवः" (श्वे-उ. ३-११) इति श्रुतेरित्याह—विश्वादीति । यतो विश्वमूर्तित्वं आदिशब्दादनेकमूर्तित्वं शतमूर्तित्वं च अतः शतानन इत्यर्थः ॥ ९० ॥

---

[1] अविद्याकृताः स. पा.

## स्तोत्रम्

# एको नैकः

### भाष्यम्

**परमार्थतः सजातीयविजातीयस्वगत[1]भेद[2]विनिर्मुक्तत्वात्—एकः। "एकमेवाद्वितीयम्" (छा. उ. ६-२-१) इति श्रुतेः। मायया बहुरूपत्वान्नैकः। "इन्द्रो मायाभिः पुरुरूप ईयते" (बृह. उ. २-४-१९) इति श्रुतेः। सोमो यत्राभिषूयते**

### विवृतिः

एकशब्दः केवलवचनः, "एके मुख्यान्यकेवलाः" (नाम. ३-३-१६) इत्यभिधानकोशात्। केवलत्वं च सजातीयादिभेदशून्यत्वम्। न चानुभूयमाने सजातीयादिभेदे कथं केवलत्वमिति वाच्यम्। सजातीयादिभेदस्यापारमार्थिकत्वेन पारमार्थिकाद्वैतविरोधाभावादित्याह—**परमार्थत इति**।

अविद्यया अनेकत्वान्नैकः। प्रतिषेधार्थस्य नशब्दस्यैकशब्देन *"सुप्सुपा" इति समासः। नचैकत्वानेकत्वयोर्विरोधः; मायिकत्वादनेकत्वस्य विरोधाभावादित्यभिप्रेत्याह—**माययेति**। मायिकानेकत्वे श्रुतिमाह—**इन्द्र इति**। **इन्द्रः**—परमेश्वरः, **मायाभिः**—मायाशक्तिभिः, **पुरुरूपः**—बहुरूपः, **ईयते**—ज्ञायत इत्यर्थः॥

सोमाख्यो लताविशेषः सूयते—खण्ड्यते रसार्थं यत्र यागे सोऽध्वरः सवः। "षुञ् अभिषवे" अस्मात् "पुंसि संज्ञायां घः" (पा. सू. ३-३-११८) इति घप्रत्ययः। सोमयागात्मकः सव इत्याह—**सोम इति**। कशब्दः सुखवाचकः, "सुखशीर्षजलेषु

---

* "सह सुपा" (पा. सू. २-१-४) इति सूत्रार्थानुवादोऽयम्.

[1] नानात्ववि–**पा.**    [2] विमुक्तत्वात्–**पा.**

स्तोत्रम्

## सवः कः किं यत्

भाष्यम्

सोऽध्वरः—सवः। कशब्दः सुखवाचकः। तेन स्तूयत इति—कः। "कं ब्रह्म" (छा. उ. ४-१०-५) इति श्रुतेः। सर्वपुरुषा[1]र्थरूपत्वाद्ब्रह्मैव विचार्यमिति ब्रह्म—किम्। "किं तद्ब्रह्म किमध्यात्मं" (भ. गी. ८-१) इति स्मृतिः। यच्छब्देन स्वतः सिद्धवस्तूद्देशवाचिना ब्रह्म निर्दिश्यत इति ब्रह्म—यत्। "यतो वा इमानि भूतानि जायन्ते" (तै. उ. ३-१) इति श्रुतेः।

विवृतिः

कम्" इत्यभिधानात्। यद्यपि सुखवाचकः कशब्दो नपुंसकलिङ्गः, तथाप्यात्मानं कमिवाचरतीत्यर्थे आचारक्विबन्तात्पचाद्यचि पुंस्त्वमित्यभिप्रेत्याह—**कशब्द इति**। **स्तूयत इति**। सर्वेषां प्राणिनामनुकूलतया वेदनीयं यत्सुखं तत् न ब्रह्मव्यतिरेकेणास्तीति स्तूयत इत्यर्थः। तत्र श्रुतिमाह—**कमिति**। सुखाभिन्नं ब्रह्मेत्यर्थः। किंशब्दो विचार्यार्थकः, विचार्यश्च पुरुषार्थ एव, ब्रह्मणश्च परमपुरुषार्थरूपत्वाद्विचार्यत्वमिति किमिति नाम ब्रह्मेत्याह—**सर्वेति**। अत्र कस्मै नम इति चतुर्थ्यन्तं द्रष्टव्यम्। स्वार्थवृत्तित्वेन संज्ञात्वगौणत्वयोरभावादिति बोध्यम्। यच्छब्द उद्देश्यवाची। उद्देश्यं च सिद्धं वस्त्विति ब्रह्म यदित्युच्यते। सिद्धत्वेनोद्देश्यत्वादित्याह—**यदिति**। यच्छब्दस्योद्देश्यपरत्वे उदाहरणमाह—**यत इति**। यज्जगज्जन्मादिकारणं तद्ब्रह्मेत्यर्थः। अत्रापि यस्मा इति चतुर्थ्यन्तं बोध्यम्। तनोति

[1] र्थरूपत्वात् सर्वज्ञं तदेव ब्रह्म विचा—पा.

स्तोत्रम्

# तत्पदमनुत्तमम्।

भाष्यम्

**तनोतीति ब्रह्म–तत्। "ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" (भ. गी. १७-२३) इति भगवद्वचनात्। पद्यते–गम्यते मुमुक्षुभिरिति पदम्। यस्मादुत्कृष्टं नास्ति तत्–अनुत्तमम्। सविशेषणमिदमेकं नाम––पदमनुत्तममिति।**

विवृतिः

विस्तृणाति [1]स्वात्मानमेव जगद्रूपेणेति तन्नामकं ब्रह्म। "तनु विस्तारे" इत्यस्मात् "श्रृदृभसोऽदिः" (उणा. सू. १२७) इत्यधिकारे "त्यजितनियजिभ्यो डित्" (उणा. सू. १२९) इत्यदिप्रत्ययो डित्। डित्वाट्टिलोपः। यद्वा तनोतेः कर्तरि क्विप्। *गमादीनां क्वावित्यनुनासिकलोपे तुगागम इत्यभिप्रेत्य तदितिनाम व्याचष्टे—**तनोतीति**। अत्र व्याख्याद्वये क्रमेण तदे नमः तते नम इति चतुर्थ्यन्तं रूढिपरित्यागेन योगाश्रयणादिति बोध्यम। तदिति ब्रह्मनामेत्यत्र [2]गीतावचनमुदाहरति—**ओं तत्सदिति**। पद्यत इति पदं–स्थानम्। "पुंसि संज्ञायां घः" (पा. सू. ३-३-११८) इति घप्रत्ययः। न विद्यते [3]उत्तमं यस्मात् पदादित्यनुत्तमम्। तत्प्राप्तानां पुनरावृत्त्यभावात्। इदं च सविशेषणमेकं नाम। नच विशेषणस्य पूर्वप्रयोगः, [4]आर्षे नाम्नि "अग्नये दात्रे, इन्द्राय प्रदात्रे"(तै. सं. २-२-८) इत्यादाविव पाठक्रमत्यागायोगादित्यभिप्रेत्य व्याचष्टे–**पद्यत इति**॥

---

* अत्र "गमः क्वौ" (पा. सू. ६-४-४०) "गमादीनामिति वक्तव्यम्" (वा -४०७३) इति सूत्रवार्तिके द्रष्टव्ये.

[1] आत्मानमेव–**पा.** [2] गीतासु–**पा.** [3] उत्तमं पदं यस्मात्–**पा.**
[4] आर्षेनाम्नि–**पा.**

## स्तोत्रम्

# लोकबन्धुर्लोकनाथः

### भाष्यम्

आधारभूतेऽस्मिन् सकला लोका बध्यन्त इति [1]लोकानां बन्धुः—लोकबन्धुः। लोकानां जनक[2]त्वाज्जनकोपमो बन्धुर्नास्तीति वा। लोकानां बन्धुकृत्यं हिताहितोपदेशं श्रुतिस्मृतिलक्षणं कृतवानिति वा—लोकबन्धुः। लोकैर्नाथ्यते—याच्यते, [3]लोकानुपतपति, [4]लोकेभ्य आशास्ते, [5]लोका-

### विवृतिः

बध्यन्तेऽत्र परमात्मनि सर्वे लोकाः सप्राणिवर्गा इति बन्धुः, "बन्ध बन्धने" "शृस्वृस्निहि" (उणा. सू. १०) इत्यादिना अधिकरणे उप्रत्ययः। लोकानां बन्धुः लोकबन्धुः। "यस्मिन् लोका निहिता लोकिनश्च" (मुण्ड. २-२-२) इति श्रुतेरित्याह—**आधारभूत इति**। "आ(धा) तृबान्धवयोर्बन्धुः" इत्यभिधानकोशाद्बान्धववाची बन्धुशब्दः। लोकानां-जनानां जनक इति हरिर्मुख्यो बन्धुः। न जनकसदृशोऽन्यो बन्धुरस्तीति बन्धुशब्दस्य रूढ्यर्थं गृहीत्वार्थान्तरमाह—**लोकानामिति**। बन्धुरिव बन्धुरिति गौणोऽयं बन्धुशब्दः, गुणश्च हिताहितोपदेशकर्तृत्वम, लोकानां बन्धुः—हिताहितोपदेष्टेति गौणमर्थमादाय व्याचष्टे—**बन्धुकृत्यमिति**। लोकान्नाथते—याचते सन्मार्गं पुत्राणां पितेति, लोकानुपतपति अन्तकाले सङ्कर्षणादिरूपेणेति, लोकनाशास्ते उत्पादयेयमिति, ईष्टे वा लोकनाथः। "कर्मण्यण्" (पा. सू. ३-२-१) इति नाथतेश्चतुरोऽर्थान् गृहीत्वा व्याचष्टे—**लोकैरिति**। नाथ्यते

---

[1] लोकबन्धुः–पा. [2] त्वादन्यो बन्धु–पा. [3] तानुप–पा. [4] तेभ्य पा.
[5] तेषामीष्टे–पा.

स्तोत्रम्

## माधवो भक्तवत्सलः ॥ ९१ ॥

## सुवर्णवर्णः

भाष्यम्

**नामीष्ट इति वा लोकनाथः[1] । मधुकुले जातत्वात्—माधवः । [2]भक्तानां स्नेहीति—भक्तवत्सलः ॥ ९१ ॥**

**[3]सुवर्णस्येव वर्णोऽस्येति--सुवर्णवर्णः । "यदा पश्यः**

विवृतिः

याच्यते पुरुषार्थमिति नाथः । कर्मणि घञ् । लोकानां नाथो लोकनाथः । लोकैः पुरुषार्थान् याच्यमान इत्यर्थ इत्यभिप्रेत्य व्युत्पत्त्यन्तरमाह लोकैरिति । मधुर्नाम यादवविशेषः । तद्वंश्यत्वान्माधव इत्याह--**मधुकुल इति** । वत्सलः स्निग्धः । "स्निग्धस्तु वत्सलः" (नाम. ३-१-१४) इति कोशात् । भक्तानां वत्सलो भक्तवत्सलः ।

> स्नेहपूर्णेन मनसा यन्नः स्मरसि केशव ! ।
> अपत्यानीव कूर्माणां तेन जीवामहे वयम् ॥

इति स्मृतेरित्यभिप्रेत्याह--**भक्तानामिति** ॥ ९१ ॥

सुवर्णस्य वर्ण इव वर्णोऽस्य सुवर्णवर्णः । अश्वमुखादिवत्समासः । स्वयंज्योतिःस्वरूप इत्याह--**सुवर्णस्येति** । तत्र श्रुतिमाह--**यदेति** । यदा—यस्मिन् काले, पश्यतीति **पश्यः**—

---

[1] नाथृनाधृयाच्ञोपतापैश्वर्याशीष्षु" इति धातुपाठात्–**पा.** [2] भक्तस्नेहित्वात्–भग. पा. [3] सुवर्णस्य वर्ण इव–**पा.**

## स्तोत्रम्
# हेमाङ्गः

## भाष्यम्

**पश्यते रुक्मवर्णम्" (मुण्ड. उ. ३-१-३) इति श्रुतेः। हेमेवाङ्गं-वपुरस्येति—हेमाङ्गः। "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" (छा. उ. १-६-६) इति श्रुतेः। वराणि-शोभनान्यङ्गान्यस्येति—**

## विवृतिः

विद्वान् साधकः, **पश्यते**—पश्यति, **रुक्मवर्णं**—स्वयंज्योतिस्स्वरूपं रुक्मस्येव वा ज्योतिरस्याविनाशि, तदा परमं साम्यमुपैतीति श्रुत्यर्थः। हेमवत् शोभमानमङ्गं—वपुरस्येति हेमाङ्गः। हेममयमङ्गमस्येति पाठे—हेममयं—ज्योतिर्मयमङ्गमस्येत्यर्थ इत्यभिप्रेत्याह—**हेमेवेति**। तत्र श्रुतिमाह—**य इति**। **अन्तरादित्ये**—आदित्यस्यान्तः—मध्ये हिरण्मयः—हिरण्मय इव, लुप्तोपमोत्र हिरण्मयशब्दः, तद्वत्प्रकाशमानः पुरुषः पुरि शयनात्, पूरयति वा स्वेनात्मना जगदिति, **दृश्यते** निवृत्तचक्षुर्भिः—समाहितचेतोभिः ब्रह्मचर्यादिसाधनापेक्षैरित्यर्थः। वराणि—श्रेष्ठानि सुन्दराणि वा शास्त्रोक्तलक्षणलक्षितानि अङ्गानि—अवयवा अस्येति वराङ्ग इत्याह—**वराणीति**। चन्दनानि—आह्लादकराणि च तान्यङ्गदानि—केयूराणि च चन्दनाङ्गदानि, तान्यस्य सन्तीति चन्दनाङ्गदी। मत्वर्थीय इनिः। नच "न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः" इति नैतादृशस्थले मत्वर्थीय इति वाच्यम्। *" कोकप्रीतिचकोरपारण-

---

* अत्रैवं सम्पूर्णश्लोकः—

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः॥ इति॥

स्तोत्रम्

## वराङ्गश्चन्दनाङ्गदी ।
## वीरहा विषमः शून्यः

भाष्यम्

वराङ्गः । चन्दनैः––आह्लादनैरङ्गदैः–केयूरैर्भूषित इति––चन्दनाङ्गदी ॥

धर्मत्राणाय[1] वीरान्–असुरमुख्यान् हन्तीति––वीरहा । समो नास्य विद्यते [2]सर्वविलक्षणत्वादिति––विषमः । "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" (भ. गी. ११-४३) इति भगवद्वचनात् । सर्वविशेषरहितत्वात् शून्यवत्–शून्यः ।

विवृतिः

पटुज्योतिष्मती लोचने" (अनर्घ. १-१) इत्यादिप्रयोगदर्शनादित्यभिप्रेत्याह—चन्दनैरिति ॥

युद्धकर्मण्युत्साहवन्तो वीराः । तान् हिरण्यकशिपुप्रभृतीन् हन्तीति वीरहेत्याह—वीरानिति । विगतः समः–सदृशोऽस्येति विषमः । "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वे. उ. ६-८) इति श्रुतेः । अत्र "सुविनिर्दुर्भ्यः सुपि सूतिसमाः" (पा. सू. ८-३ ८८) इति षत्वमित्याह––समो नास्येति । तत्र भगवद्वचनमाह––न त्वदिति । "शून्यं बिन्दौ च निर्जने" इति नामनिधानात् शून्यशब्दो निर्जनवाची । सर्वविशेषप्रत्यस्तमयात् शून्यमिव शून्यमित्याह––शून्येति । गुणं दर्शयति––सर्वेति । "घृ क्षरणे"

---

[1] यासुरवीरान् हिरण्यकशिपुप्रभृतीन् रागादींश्च ह–पा.    [2] विषमः सर्वलोकविलक्षणत्वात्–पा.

स्तोत्रम्

# [1] घृताशीरचलश्चलः ॥ ९२ ॥

भाष्यम्

घृताः–विगलिताः आशिषः–प्रार्थनाः अस्येति–[2] घृताशीः । न स्वरूपात् न सामर्थ्यान्न च ज्ञानादिकाद्गुणात् चलनं विद्यतेऽस्येति––[3]अचलः । [4] वायुरूपेण चलतीति––चलः ॥ ९२ ॥

अनात्मवस्तुष्वात्माभिमानो नास्त्यस्य स्वच्छसंवेदना-

विवृतिः

अस्मात् "गत्यर्थ" (पा. सू. ३-४-७२) इत्यादिना कर्तरि क्तः । घृताः–च्युताः गलिताः आशिषः–विषयप्रार्थनाः अस्मादाप्तकामत्वादिति घृताशीरित्याह––घृता इति । स्वरूपात् सामर्थ्यात् ज्ञानादिगुणाच्च न चलतीति अचलः । स्वरूपस्य चलनं–नाशः, सामर्थ्यस्य सर्वकार्यानुकूलशक्तिरूपस्य सर्वविषयकज्ञानादिरूपगुणस्य चलनं–केनचित्प्रतिबन्धः, तदभावादचल इत्यभिप्रेत्याह—न स्वरूपादिति । चलति वायुरूपेणेति चलः । "चेष्टां करोति श्वसनस्वरूपी" इति विष्णुपुराणादित्याह––वायुरूपेणेति ॥ ९२ ॥

अनात्मवस्तुषु आत्माभिमानो मानः । सोऽस्यास्तीति मानी । स नेत्यमानी, अविद्यानावृतसंवित्स्वरूपस्य बिम्बरूपस्येश्वरस्य।विद्यावरणप्रयुक्तमानादेरभावादित्याह––अनात्मेति । स्वच्छसंवेदनाकृतेरिति । अविद्यानावृतबिम्बचित्स्वरूपस्येत्यर्थः । मायया–आवरणविक्षेपशक्तिमत्या करणेन सर्वेषां प्राणिनां स्वस्वरूपावरणपूर्वकं मानं–आत्माभिमान-

---

[1] घृताचीर–पा. [2] घृताशीः । घृ क्षरणदीप्त्योरिति धातुपाठात्–पा. [3] अचलः कीर्तितोऽच्युतः–पा. [4] गजेन्द्रादिमोक्षार्थं स्वस्थानाद्गतवानिति––चलः–पा.

स्तोत्रम्

# अमानी मानदो मान्यो लोकस्वामी

भाष्यम्

कृतेरिति—अमानी। स्वमायया सर्वेषामनात्मसु मानं—आत्माभिमानं ददातीति, भक्तानां मानं—सत्कारं–ददातीति वा अधर्मिष्ठानां मानं—सत्कारं द्यति–खण्डयतीति, [1] तत्त्वविदामनात्मसु मानं—आत्माभिमानं द्यति—खण्डयतीति वा—मानदः। सर्वैर्माननीयः—पूजनीयः सर्वेश्वरत्वादिति—मान्यः। चतुर्दशानां लोकानामीश्वरत्वात्—लोकस्वामी।

विवृतिः

लक्षणं अप्रबुद्धानां ददातीति, मानः—सत्कारः, तं भक्तेभ्यो ददातीति, मानं–सत्कारमधर्मिष्ठानां द्यति–खण्डयतीति, मानः–अनात्मस्वात्माभिमानः, तं तत्त्वविदां द्यति–खण्डयतीति वा मानद इत्यर्थचतुष्टयपरत्वेन व्याचष्टे—स्वमाययेत्यादिना। "मान पूजायाम्" अस्मात् चुरादिण्यन्तादर्हार्थे यत्प्रत्ययः। मान्यः–पूजार्हः। सर्वेश्वरतया सर्वेषां तत्तत्पूजानुसारेण फलदातृत्वादित्याह–पूजनीय इति। लोकाः–सप्त पातालादीनि, भूलोकादीनि च सप्त, तेषां चतुर्दशानां लोकानां स्वामी–अधिपतिः "एष लोकाधिपतिः" (कौ. उ. ३–९) इति श्रुतेरित्याह—चतुरिति। धृदित्यनेन भावे क्विबन्तेन धृतिरुच्यते। तेषु लोकेषु धृत्–धृतिः तदपतनानुकूलप्रयत्नविशेषोऽस्येति त्रिलोकधृत्। "सप्तमी विशेषणे बहुव्रीहौ" (पा. सू. २–२–३५) इति ज्ञापकाद्व्यधिकरणबहुव्रीहिरनेकपदः। समाहारद्विगौ तु ङीप्प्रसङ्गा-

---

[1] तेषामहङ्कारं खण्डयतीति वा, अधर्मिष्ठानां सत्कारं मानं खण्डयतीति वा–पा.

स्तोत्रम्

# [1] त्रिलोकधृत् ।

# सुमेधा मेधजः

भाष्यम्

त्रीन् लोकान् धारयतीति —[2] त्रिलोकधृत् ॥

शोभना मेधा-प्रज्ञास्येति—सुमेधाः । "नित्यमसिच् प्रजामेधयोः" (५-४-१२२) इति समासान्तोऽसिच्[3] प्रत्ययः, मेधे

विवृतिः

दित्याह—त्रीनिति । भाष्यं तु पर्यवसितार्थकथनपरम् । विग्रह-स्तूक्तरीत्येति बोध्यम् ॥

सु-शोभना स्वाभाविकी अविपरिलुप्ता मेधा प्रज्ञास्वरूपभूता अस्येति सुमेधाः । "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृह. उ. ४-३-२३) इति श्रुतेरित्याह—शोभनेति । समासान्तप्रत्ययविधायकं सूत्रं पठति—नित्यमिति । नञ्दुस्सुभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद्बहुव्रीहेर्नित्यमसिच्प्रत्ययः स्यादिति सूत्रार्थः ।

मेधे-अध्वरे अश्वमेधरूपे निमित्ते जातो मेधजः-श्रीरामरूपः—

पुत्रार्थं हयमेधेन यक्ष्यामीति मतिर्मम ।

तदहं यष्टुमिच्छामि हयमेधेन कर्मणा ॥ (वा-रा-बाल-१२-९) इति वाल्मीकिवचनादित्याह—मेध इति । यजमानरूपो वा मेधजः । दीक्षाभिरध्वरे यजमानस्य जननात्, "पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति" इत्यादिश्रुतेरित्याह—मेध

---

[1] त्रिलोकधृक्-पा. [2] त्रिलोकधृक्—पा. [3] ऽसिच्,-पा.

स्तोत्रम्

## धन्यः सत्यमेधा धराधरः ॥ ९३ ॥

भाष्यम्

**अध्वरे जायत इति—मेधजः । कृतार्थः—धन्यः । सत्या—अवितथा मेधा अस्येति—सत्यमेधाः । अंशैरशेषैः शेषाद्यैरशेषां धरां धारयन्—धराधरः ॥ ९३ ॥**

विवृतिः

**इति ।** "धनगणं लब्धा" (पा. सू. ४-४-८४) इत्यनेन यत्प्रत्यये धन्यः—कृतार्थः,[1] अवाप्तसमस्तकामत्वात् । धन्यत्वं च भगवतो धन्योपाख्याने प्रसिद्धमित्याह—**कृतार्थ इति ।** "मेधृ सङ्गमे" सङ्गच्छते अस्यां सर्वमिति "गुरोश्च हलः (पा. सू. ३-३-१०३) इत्यप्रत्यये टापि मेधेति रूपम् । मेधा—अनेकग्रन्थधारणशक्तिः, अस्याः सत्यत्वमवितथत्वं च यत्किञ्चित्प्रतिबन्धप्रयुक्तकार्यानुत्पादकत्वाभावरूपम् । तथा च सत्या—अवितथा यत्किञ्चित्प्रतिबन्धकप्रयुक्तफलानुत्पादकत्वरहिता मेधा—अनेकग्रन्थधारणशक्तिः यस्य स सत्यमेधाः, चतुर्णां वेदानां साङ्गानां अनेकशाखाभेदभिन्नानां धारणादित्याह—**सत्येति ।** अत्र "नित्यमसिच् प्रजामेधयोः" (पा. सू. ५-४-१२२) इति सूत्रे अस्वरितत्वादेवान्यतरस्यांग्रहणाननुवृत्तौ नित्यग्रहणमन्यतो विधानार्थमिति वृत्तिकृद्व्याख्यानादल्पमेधा इतिवत्सत्यमेधा इत्यत्राप्यसिच्प्रत्ययो बोध्यः । धरतीति धरः, पचाद्यच् । कृत्स्नाया धरायाः—पृथिव्या धरो धराधर इत्याह—**अंशैरिति । शेषाद्यैरिति ।** आद्यशब्देन दिग्गजादीनां ग्रहणम् ॥ ९३ ॥

---

[1] अवाप्तसर्वकाम—**पा.**

स्तोत्रम्

## तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।

भाष्यम्

[1]तेजसां—अम्भसां सर्वदा आदित्यरूपेण वर्षणात्—[2]तेजोवृषः । द्युतिं—अङ्गगतां[3]कान्तिं धारयन्—द्युतिधरः । सर्वशस्त्रभृतां श्रेष्ठः—सर्वशस्त्रभृतां वरः ।

विवृतिः

वर्षतीति वृषः । इगुपधलक्षणः कः । तेजश्शब्दोऽत्राम्भोवाची । *छन्दोनिघण्टौ "शुक्रं तेजस्स्वधा वारि जलं जलाषम् (निरुक्त. नि. १–१२) इति उदकनामसु पाठात् । तथा च तेजसां–अम्भसां वृषः–वर्षणकर्ता तेजोवृषः । आदित्यरूपेणाम्भसां [4]वर्षणात् ।

"तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च" (भ. गी. ९–१९) इति भगवद्वचनादित्याह—तेजसामिति । आदित्यरूपेणेति ।

आदत्ते रश्मिभिर्यत्तु क्षितिसंस्थं जलं रविः ।
समुत्सृजति भूतानां पुष्ट्यर्थं सस्यवृद्धये ॥ इति ॥
आदित्याज्जायते वृष्टिः (मनु. ३–७६) ।

इति च स्मृतेः आदित्यस्य वृष्टिप्रदत्वमित्यर्थः । द्युतिः–अङ्गगता कान्तिः, तस्या धरो द्युतिधर इत्याह—द्युतिमिति । सर्वेषां शस्त्रभृतां वरः–श्रेष्ठः श्रीरामरूपः "रामः शस्त्रभृतामहम्" (भ. गी. १०–३१) इति भगवद्वचनादित्याह—सर्वेति ।

---

* छन्दोनिघण्टुरिति यास्ककृतनिरुक्तान्तर्गतवेदानिघण्टुः (निघण्टुसमाम्नायः) उच्यते । तत्रोदकनामसु पञ्चनवतेराशतं शुक्रादिजलाषान्तनामानि पठितानि ।

[1] तेजसा–भासा सर्वदा–पा. [2] तेजोवृषः । तेजांसि–अम्भांसि आदाय आदित्यरूपेण वर्षतीति वा–पा. [3] कान्तिं धारयतीति सतां कीर्तिं वा धारयन्–पा. [4] तर्पणात्—पा.

स्तोत्रम्

# प्रग्रहो निग्रहः

## भाष्यम्

भक्तैरुपहृतं पत्रपुष्पादिकं प्रगृह्णातीति—प्रग्रहः। धावतो विषयारण्ये दुर्दान्तेन्द्रियवाजिनः तत्प्रसादेन रश्मिनेव बध्नातीति वा प्रग्रहवत्—प्रग्रहः। "रश्मौ च" (पा–सू. ३–३–५३) इति पाणिनिवचनात्प्रग्रहशब्दस्य साधुत्वम्।

## विवृतिः

[1]भक्तार्पितं पत्रपुष्पादिकं प्रकर्षेण गृह्णातीति प्रग्रहः। "ग्रह उपादाने" अस्मात् प्रपूर्वात्पचाद्यच्। "पत्रं पुष्पं फलं तोयं" (भ. गी. ९–२६) इत्यादिभगवद्वचनादित्याह—**भक्तैरिति**। प्रगृह्यत इति प्रग्रहः। विभाषेति प्रेति चानुवर्तमाने "रश्मौ च" (पा. सू. ३–३–५३) प्रपूर्वात् ग्रहेः घञ्वा रश्मौ वाच्ये इति विकल्पात् घञ भावपक्षे "ग्रहवृदृनिश्चिगमश्च" (पा. सू. ३–३–५८) इत्यप्प्रत्यये प्रग्रहः।

"तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च (नाम. ३–३–२३८) इत्यमरः। अत्राश्वादीनां रश्मिः प्रग्रहशब्देनोच्यते। प्रग्रह इव प्रग्रहः। प्रग्रहः–रश्मिः यथा दुर्दान्तानश्वान्नियच्छति, एवं भक्तानां यानि दुर्दान्तेन्द्रियाणि तानि नियच्छतीति गौण्या वृत्त्या अर्थान्तरमाह—**प्रग्रहवत्प्रग्रह इति**। गुणयोगं दर्शयति—**धावत इति**। विषयारण्ये धावत इन्द्रियवाजिनो रश्मिसादृश्येन भगवत्प्रसादेन बध्नाति भक्त इति यतः ततः परमेश्वरस्य स्वप्रसादद्वारा

---

[1] भक्त्यार्पितं—**पा.**

स्तोत्रम्

## व्यग्रो नैकशृङ्गः

भाष्यम्

[1]स्ववशेन सर्वं निगृह्णातीति—निग्रहः। विगतमग्रं—अन्तो विनाशोऽस्येति—व्यग्रः। भक्तानामभीष्टदानेषु व्यग्र इति वा। चतुश्शृङ्गः—नैकशृङ्गः। "चत्वारि शृङ्गा" (याज्ञिक्यु–१२)

विवृतिः

भक्तेन्द्रियवाजिनियमनहेतुत्वं प्रग्रहसादृश्यमित्यर्थः। सर्वाणि भूतानि निगृह्णातीति निग्रहः, पचाद्याजित्याह—**स्ववशेनेति**। "वशः शक्तिप्रभुत्वयोः" इत्यभिधानकोशात्स्वशक्त्येत्यर्थः। *षट्सु भावविकरेषु अन्तिमो विकारोऽग्रमित्युच्यते, विगतमग्रं-नाशोऽस्य व्यग्रः, अविनाशीत्याह—**विगतमिति**। भक्तानामभीष्टदाने व्यग्रः–व्यासक्त इत्यर्थान्तरमाह—**भक्तानामिति**। नैकानि–अनेकानि चतुष्षट्सङ्ख्याविशिष्टानि शृङ्गाणि यस्य यज्ञपुरुषस्येति नैकशृङ्ग इत्याह—**चतुश्शृङ्ग इति**। तत्र श्रुतिमाह—**चत्वारीति**। अनेन मन्त्रेण यज्ञपुरुषः प्रतिपाद्यते। "महो देव इत्येष हि महान् देवो यद्यज्ञः" (निरु. १३–७) इति निरुक्तात्। चत्वारो वेदा एव यज्ञपुरुषस्य चत्वारि शृङ्गाणि, "चत्वारि शृङ्गेति वेदा वा एत उक्ताः" (निरुक्तं १३-७) इत्यत एव निरुक्तादित्यर्थः। अग्रे अजायतेत्यग्रजः। "सप्तम्यां जनेर्डः" (पा-सू-३-२-९७) निगदेन मन्त्रेणाग्रजो निगदाग्रजः। "कर्तृकरणे कृता

---

* षड्भावविकाराः एतद्ग्रन्थस्य २१०तमपुटे टिप्पण्यामुपपादिताः॥

[1] स्वभावेन स्ववशे सर्वं–पा.

## विवृतिः

बहुलम्" (पा. सू. २-१-३२) इति समासः। पृषोदरादित्वान्नि-शब्दस्य लोपः। "[1]वृषाकपिः कपिः" इतिवन्नैरुक्त (प्रति) प्रक्रियया वा रामाविर्भावस्य निगदाधीनत्वात् भरतादिभ्योऽग्रिमत्वाच्च। तथा च रामायणम्--

इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात्।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः॥
(वा. रा. बाल. १५-२) इति।

यो मन्त्रस्तपसा लब्धो विविधैश्च परिश्रमैः।
(वा. रा. अयो. ५१-११)

इति च। यद्वा निगदेन—मन्त्रेण तत्पूर्वकाश्वमेधादिकर्मणा पूर्वजन्मानुष्ठितेन करणेन अग्रे—चराचरसृष्टेः पूर्वं हिरण्यगर्भरूपेण जातत्वान्निगदाग्रजो गदाग्रजः। पूर्ववन्निशब्दस्य लोपः। अथवा सृष्टिकाले अग्रे--[2] इतरसृष्टेः पूर्वं परमेश्वरेण निगदशब्दितवेदशब्दपूर्वकं सृष्टत्वाद्गदाग्रजो हिरण्यगर्भः। "शब्द इति चेन्नातः प्रभवात्" (ब्र. सू. १-३-२८) इति * न्यायात्।

† यस्य विश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्। (ऋ. सं. सा. भा. श्लो.२)

---

* इन्द्रादीनां विग्रहवत्त्वाङ्गीकारेऽनित्यविग्रहवद्देवादेर्नित्यवेदार्थत्वाङ्गीकारात् नित्यवेदशब्दस्यार्थेन सह नित्यसम्बन्धासम्भवेन नित्यानित्यसंयोगविरोधः स्यादिति चेत्—न; अत एव वैदिकशब्दात् देवादिजगदुत्पत्तेरुच्यमानत्वात्। तथाहि--"एत इति वै प्रजापतिर्देवानसृजत" इत्यादिश्रुतिः देवादिसृष्टेः वेदशब्दमूलकत्वमवगमयति। स्मृतिरपि "वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः" (मनु १-२१) इत्यादिका जगत्सृष्टेर्वेदमूलकत्वं स्मारयति। तथा च देवादिव्यक्त्युत्पत्तावपि तन्निष्ठनित्याकृतेर्वेदार्थत्वात्तत्सम्बन्धो न विरुद्ध इति न्यायार्थः. † श्लोकोऽयं सायणमाधवाचार्याणां ग्रन्थेषु सर्वत्र प्रारम्भे दृश्यते।

[1] वृषाकपिरिति—पा. [2] वा सृष्टेः—पा.

स्तोत्रम्

## गदाग्रजः ॥ ९४ ॥
## चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहः

भाष्यम्

इति [1] मन्त्रवर्णात्। निगदेन मन्त्रेणाग्रे जायत इति निशब्दलोपं कृत्वा—गदाग्रजः। यद्वा गदो नाम श्रीवासुदे[2]वावरजः, तस्मादग्रे जायत इति—गदाग्रजः॥९४॥

चतस्रो मूर्तयो विराट्सूत्राव्याकृततुरीयात्मानोऽस्येति—चतुर्मूर्तिः। सिता रक्ता पीता कृष्णा चेति चतस्रो मूर्तयोऽस्येति वा। चत्वारो बाहवोऽस्येति—चतुर्बाहुः इति नाम वासुदेवे रूढम्॥

"शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुषः" (ऐत. आ. ३-२-९) इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषाः—व्यूहा अस्येति—चतुर्व्यूहः॥

विवृतिः

इत्यभियुक्तोक्तेश्चेत्यभिप्रेत्याह—**निगदेनेति** ॥ ९४ ॥

चतस्रो मूर्तयः—औपाधिकरूपाणि विराड्हिरण्यगर्भाव्याकृततुरीयात्मानोऽस्येति चतुर्मूर्तिरित्याह—**चतस्र इति**। चत्वारो बाहवः शङ्खचक्रादिधारिणो लोकहितकरा अस्येति चतुर्बाहुरित्याह—**चत्वार इति**। **वासुदेवे रूढमिति**। अन्येषामपि बाहुचतुष्टयसत्त्वादतिप्रसङ्गवारणाय नारायणे रूढमित्यर्थः॥

चत्वारो व्यूहाः—विभागाः शरीरपुरुष-छन्दःपुरुष-वेदपुरुष-महापुरुषरूपा अस्येति चतुर्व्यूह इत्याह—**शरीरेति**। **बह्वृचोपनिषदुक्ता**

---

[1] श्रुतेः—**पा.** [2] वस्यावरजः—**पा.**

## विवृतिः

**इति ।** तथा च बह्वृचानामारण्यके श्रूयते-"चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा, तस्य योऽयमशरीरः प्रज्ञात्मा स रसः, छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसो वेदपुरुष इति यमवोचाम येन वेदान् वेद ऋग्वेदं यजुर्वेदं सामवेदं, [1]तस्यैतस्य ब्रह्मा रसः, तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्, महापुरुष इति यमवोचाम, संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि तस्यैतस्यासावादित्यो रसः, सयश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्" (ए. आ. ३-अ. २-म. ९) इत्युपासनानन्तरं विधत्ते—**चत्वार इति ॥**

*"बध्वस्य पुत्रो महर्षिर्वक्ष्यमाणाश्चत्वार उपासनीया इति मन्यते। तान् पुरुषान् [2]दर्शयति-शरीरपुरुष इत्यादि । तत्र प्रथमं शरीरपुरुषं विवृणोति श्रुतिः शरीरपुरुष इत्यादिना स रस इत्यन्तेन। बाध्वनामका वयं महर्षयो यं ध्यातव्यं देवं शरीरपुरुषनाम्ना कथितवन्तः तं स्पष्टीकुर्म इति शेषः। देह एवायं दैहिकः, स चाहं मनुष्य इति† प्रत्ययवेद्यत्वादात्मना सदृशो योऽस्त्ययमेव स पूर्वोक्तः शरीरपुरुषः । तस्य च देहरूपस्य पुरुषस्य स्वामिनोऽन्तर्वर्तनमानो योऽयमशरीरः—शरीररहितः प्रज्ञात्मा चिद्रूपपुरुषः सोऽयं रसः—शरीरपुरुषस्य सारः, तदुभयं ध्यायेदिति तात्पर्यार्थः। द्वितीयं विवृणोति—छन्दःपुरुष इत्यादिना । "अग्निमळि" (ऋ. सं. १-१-१) इत्यत्र श्रूयमाणानामकारगकारनकारादीनामक्षराणां

---

* बध्यस्येत्यारभ्य शोभन्त इत्यन्तं सायणभाष्यसङ्ग्रहः । † "प्रत्ययवेद्यत्वादात्मा, तादृशो योऽस्ति ममेव" इत्यारण्यकभाष्यम्—**पा.**

[1] तस्य ब्रह्मा—**पा.** [2] निर्दिशति—**पा.**

विवृतिः

समाम्नायः—सम्यक् पाठो योऽस्ति स एव छन्दःपुरुषशब्देन विवक्षितः। तस्यैतस्य छन्दःपुरुषस्य रसः—सारोऽयमकारो वेदितव्यः। तथा च पूर्वत्राम्नातं "अकारो वै सर्वा वाक्। सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी— नानारूपा भवति" (ए. उ. ३-६-७) इति। तृतीयं विवृणोति—वेदपुरुष इतीति। लोके कश्चित पुमान् येन मनसा सावधानेन वेदान् जानाति, "अग्निर्मीळे" (ऋ. स. १-१-१) इत्यादिरयं ऋग्वेदः, तेन हौत्रं कर्तव्यम्। "इषेत्वा" (तै. सं. १-१-१) इत्यादिर्यजुर्वेदः, तेनाध्वर्यवं कर्तव्यम्, "अग्न आयाहि" (साम. सं. १-१-१) इति सामवेदः, तेनौद्गात्रं कर्तव्यमित्येवमृग्वेदादि-ज्ञानकारणं मानसं यदवधानं सोऽयं वेदपुरुषत्वेनोच्यते। तस्यैतस्य ब्रह्मा रसः—हिरण्यगर्भोपास्त्या तद्रूपत्वं मन्यमानः पुरुषः सारभूतः। अत्र प्रसङ्गात् होत्रध्वर्यूद्गातृव्यतिरिक्तस्य ब्रह्माख्यस्य चतुर्थस्य ऋत्विजः कश्चिद्विशेषं विधत्ते तस्मादिति। यस्माद्वेदत्रयाभिधानरूपस्य वेद-पुरुषस्य हिरण्यगर्भोपासको ब्रह्मा रसः, तस्माद्ब्रह्मनामसाम्याद्यागेऽपि ब्रह्माणमृत्विजं ब्रह्मिष्ठं—भूयिष्ठमतिशयेन वेदत्रयगतं कुर्वीत। यो ब्रह्मा यज्ञस्य सम्बन्धिन उल्बणं—तीव्रं गुणं दोषं वा द्रष्टुं समर्थः तादृशं कुर्वीत। चतुर्थं विवृणोति महापुरुष इतीति। योऽयं संवत्सरः कालात्मा अन्यानि भूतानि कानिचिदल्पायुष्काणि (तानि) प्राणि शरीराणि ऐक्या प्रध्वंसयन्—स्वस्वकारणेन सहैक्यं यथा प्रतिपद्यन्ते तथा विनाशयन्, अन्यानि भावयन्—पुनरन्यानि कानिचि (द्भूतानि) त् नूतनशरीराण्युत्पादयन् वर्तते सोऽयं कालात्मा महापुरुषशब्देन विवक्षितः। तस्यैतस्य महापुरुषस्यासौ मण्डले दृश्यमन आदित्यो रसः—सारः। यथा लोके वृक्षः स्वनिष्ठेन रसेन पूर्णः शोभते, एव-मेते शरीरपुरुषादयो यथोक्तै रसैः पूर्णाः शोभन्ते" इति भाष्योदाहृत-

स्तोत्रम्

## चतुर्गतिः ।

## चतुरात्मा

भाष्यम्

**आश्रमाणां वर्णानां चतुर्णां यथोक्तकारिणां गतिः—चतुर्गतिः ॥**

**रागद्वेषादिरहितत्वात् चतुर आत्मा-मनोऽस्येति, मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणचतुष्टयात्मकत्वाद्वा—चतुरात्मा। धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयं भवति-उत्पद्यतेऽस्मादिति—**

विवृतिः

बह्वृचोपनिषद्वाक्यार्थः। अनेन व्याख्यानेन पूर्वेण चतुर्व्यूहनाम्ना अपौनरुक्त्यं दर्शितम् ॥

चत्वार आश्रमाः-आश्रमिणो ब्रह्मचार्यादयः, वर्णाः-ब्राह्मणादयश्च, तेषां चतुर्णां तत्तद्वर्णाश्रमविहितधर्मानुष्ठानफलप्रदातृत्वेन गतिः-आश्रयः चतुर्गतिरित्याह—**आश्रमाणामिति**।

चतुरः-निपुण आत्मा मनो यस्य स चतुरात्मा, एतदेव हि आत्मनः-मनसो नैपुण्यं यद्रागद्वेषादिराहित्यम्। यद्वा मनोबुद्ध्यहङ्कारचित्तचतुष्टयमात्मा अहमित्यभिमानविषय उपाधिरस्य जीवरूपेणावस्थितस्येति चतुरात्मेत्यर्थद्वयपरतया व्याचष्टे--**रागद्वेषेत्यादिना**। अनेन "चतुरात्मा चतुर्व्यूहः" (वि. स. २८) इत्यत्रत्येन चतुरात्मशब्देनापौनरुक्त्यं दर्शितम् ॥

भावयति—उद्भावयतीति भावः। पचाद्यच्। चतुर्णां धर्मार्थकाममोक्षाणां भावः-उत्पादकः चतुर्भाव इत्याह—**धर्मेति**। चतुर्णां

## स्तोत्रम्

# चतुर्भावश्चतुर्वेदविदेकपात् ॥ १५ ॥

## भाष्यम्

**चतुर्भावः। यथावद्वेत्ति चतुर्णां वेदानामर्थमिति—चतुर्वेदवित्। एकः पादोऽस्येति—एकपात्। "पादोऽस्य विश्वा भूतानि"**

## विवृतिः

वेदानां समाहारः चतुर्वेदं, "तद्धितार्थोत्तरपदसमाहारे च" (पा. सू. २-१-५१) इति समाहारद्विगुः। नच "अकारान्तोत्तरपदो द्विगुः स्त्रियाम्" (वा. १५५६) इति ङीप्प्रसङ्गः। * "पात्रादेर्न" (वा. १५५९) इति निषेधात। अत्र वेदशब्दस्तदर्थपरः। चतुर्वेदं-चतुर्णां वेदानामर्थं कर्मब्रह्मरूपं वेत्तीति चतुर्वेदविदित्याह—**यथावदिति**। संशयविपर्ययरहिततयेत्यर्थः। यद्वा यथावत्पूर्वोत्तर-मीमांसाभ्यामुपकृत्येत्यर्थः। तदुक्तम्—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥" इति

कृत्स्नभूतात्मक एकः पादः तुरीयांशोऽस्येत्येकपात्, "सङ्ख्यासुपूर्वस्य" (पा. सू. ५-४-१४०) इति पादान्तस्य बहुव्रीहेरन्तलोप इत्याह—**एक इति**। तत्र श्रुतिमाह—**पाद इति**। अस्य परमात्मनः सर्वाणि भूतानि पादः—चतुर्थांश इत्यर्थः। यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म।" (तै. उ. २-१) इत्याम्नातस्य परब्रह्मण इयत्ताभावादंशचतुष्टयं न निरूपयितुं शक्यम्, तथापि जगदिदं

---

* "पात्रादिभ्यः प्रतिषेधो वक्तव्यः" (वा. १५५१) इति वार्तिकस्यार्थानुवादोऽयम्।

### स्तोत्रम्

## समावर्तो(ऽ)निवृत्तात्मा

### भाष्यम्

(तै. आ. ३-१२) इति श्रुतेः। "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।" (भ. गी. १०-४२) इति [1]भगवद्वचनाच्च ॥९५॥

**संसारचक्रस्य सम्यगावर्तक इति—समावर्तः। सर्वत्र [2]वर्तमानत्वात् [3]अनिवृत्तः कुतोऽपीति-अनिवृत्तात्मा। निवृत्त आत्मा-मनो विषयेभ्योऽस्येति वा—निवृत्तात्मा ॥**

### विवृतिः

ब्रह्मस्वरूपमपेक्ष्य अल्पमिति विवक्षित्वा पादत्वोपन्यासः। उक्तार्थे स्मृतिमप्याह—**विष्टभ्येति**। **एकांशेन**—एकपादेन सर्वप्रपञ्चोपादानशक्त्युपाधिकेन पादेन **कृत्स्नं जगदवष्टभ्य** विधृत्य **स्थितोऽ**स्मीत्यर्थः ॥९५॥

जननमरणादिरूपसंसारचक्रं अज्ञजीवान् प्रति सम्यगावर्तयन् समावर्तः। समाङ्पूर्वात् वृतेर्ण्यन्तात्पचाद्यजित्याह—**संसारेति**। कुतोऽपि—कस्माचिदपि देशात् कालाद्वा न निवृत्तः अनिवृतो विभुत्वान्नित्यत्वाच्च, स चासावात्मा चेत्यनिवृत्तात्मेत्यकारप्रश्लेषमाश्रित्याह—**सर्वत्रेति**। देशे कालेचेत्यर्थः। विषयेभ्यो निवृत्त आत्मा मनो यस्य स निवृत्तात्मा, आत्मकामत्वादित्यकारप्रश्लेषमकृत्वा व्याचष्ट—**निवृत्त इति**। "आवर्तनो निवृत्तात्मा" (वि. स. ३८) "अनिवर्ती निवृत्तात्मा" (वि. स. ७७) "समावृत्तो निवृतात्मा" (वि. स. ९६) इति त्रिषु प्रदेशेषु पूर्वेणोत्तरस्यापौनरुक्त्यमर्थभेदादिति बोध्यम् ॥

---

[1] स्मृतेश्च-**पा.** [2] वर्तमानत्वान्न निवर्तते आत्मा-**पा.** [3] न निवृत्तः-**पा.**

स्तोत्रम्

## दुर्जयो दुरतिक्रमः ।

भाष्यम्

जेतुं न शक्यत इति–दुर्जयः । भयहेतुत्वादस्याज्ञां सूर्यादयो नातिक्रामन्तीति—दुरतिक्रमः ।

"भयादस्याग्निस्तपति भयात्तपति सूर्यः ।

भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" (कठ. ६-३) इति मन्त्रवर्णात् । "महद्भयं वज्रमुद्यतम्" (कठ. ६-२) इति च ॥

विवृतिः

दुःखेन जेतव्यो दुर्जयः । "जि अभिभवे" इत्यस्मात् "ईषद्दुस्सुषु" (पा. सू. ३-३-१२६) इत्यादिना खल्प्रत्ययः । [1]केनापि जेतुमशक्य इत्यर्थः । सर्वथाऽ[2]लभ्ये दुर्लभ इति प्रयोगदर्शनादित्यभिप्रेत्याह—**जेतुमिति** । दुःखेन अतिक्रमणीयो दुरतिक्रमः, अनतिक्रमणीय इत्यर्थः, पूर्ववदित्याह—**अस्याज्ञामिति** । आज्ञानतिक्रमणे हेतुमाह—**भयेति** । तत्र श्रुतिमाह—**भयादिति** । अस्येश्वरस्य भयादग्निसूर्यौ तपतः । इन्द्रादयस्तु धावन्ति स्वस्वकार्येषु । मृत्युः पञ्चमः निर्दिष्टानपेक्ष्येत्येर्थः ।

---

[1] न केनापि जेतुं शक्य इत्यर्थः–**पा.** [2] अलभ्यो दु–**पा.**

## स्तोत्रम्

# दुर्लभो दुर्गमो दुर्गः

### भाष्यम्

**दुर्लभया भक्त्या [1]लभ्यत इति—दुर्लभः ।**

**"जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः ।**

**नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥**

**इति व्यासवचनात् । "भक्त्या लभ्यस्त्वनन्यया" (भ. गी. ८-१२) इति भगवद्वचनाच्च । दुःखेन गम्यते-ज्ञायत इति-दुर्गमः । अन्तरायप्रतिहतैर्दुःखादवाप्यत इति—दुर्गः ।**

### विवृतिः

साधनीभूताया भक्तेर्दौर्लभ्यात् परमात्मापि दुर्लभः—दुष्प्राप इत्याह—**दुर्लभयेति** । भक्तिदौर्लभ्ये स्मृतीं चाह—**जन्मान्तरेति** । दुःखेन गम्यते–ज्ञायत इति दुर्गमः । श्रवणादीनां दुर्लभत्वात् । "श्रवणायापि बहुभिर्यो न लभ्यः" (कठ. १-२-७) इति श्रुतेरित्याह—**दुःखेनेति** । जातेऽपि ज्ञाने असम्भावनाद्यन्तरायवशात्तन्नाज्ञान-निवृत्तिक्षममिति अन्तरायक्षयमपेक्ष्य दुःखेन गम्यते–प्राप्यत इति दुर्गः । दुष्पूर्वाद्गमेः "अन्यत्रापि दृश्यते" (वा. २०१८) इति कर्मणि डः । [2]अस्मिन् सूत्रे अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचिदिति व्याख्यानादित्यभिप्रेत्याह—**अन्तरायेति** । निर्विशेषत्वादात्मा दुःखेनावास्यते—स्थाप्यते चित्ते योगिभिरिति दुरावासः । [3]आवसतेर्ण्यन्तात् दुरुपपदात्कर्माणि खल्प्रत्यय इत्याह—

---

[1] लभ्यत्वात् दु—**पा.** [2] तस्मिन्—**पा.** [3] आवासयतेर्ण्य—**पा.**

स्तोत्रम्

## दुरावासो दुरारिहा ॥ ९६ ॥

## शुभाङ्गः

भाष्यम्

**दुःखेनावास्यते चित्ते योगिभिः समाधाविति—दुरावासः । दुरारिणः- दुर्गामिनो दानवादयः, तान् हन्तीति–दुरारिहा ॥९६॥**

**शोभनैरङ्गैः–अवयवैः ध्येयत्वात्—शुभाङ्गः । लोकानां**

विवृतिः

**दुःखेनेति ।** दुररणं दुर्गमनं दुश्चरणं शीलमेतेषामिति दुरारिणः—दानवाः, "ऋ गतौ" इत्यस्मात् अर्तेर्दुष्पूर्वात् "सुप्यजातौ णिनिस्ताच्छील्ये" (पा. सू. ३-२-७८) इति णिनिः । तान् हन्तीति दुरारिहा इति व्याचष्टे—**दुरारिण इति** ॥ ९६ ॥

शुभानि–शोभनानि "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः" (छा. उ. १-६-६) इत्यादिश्रुत्युक्तानि [1]ध्यानार्थान्यङ्गान्यस्येति, "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः" (छ. उ. ५-१८-२) इति श्रुत्युक्तानि वा अङ्गान्यस्येति शुभाङ्ग इत्याह—**शोभनैरिति** । सारङ्गः–भृङ्गः ।

"सारङ्गश्चातके भृङ्गे कुरङ्गेऽरिमतङ्गजे"

इत्यभिधानकोशात् । सारङ्ग इव सारङ्ग इति गौणः सारङ्गशब्दः । लोकानां सारङ्गो लोकसारङ्गः । सारग्राहित्वमत्र गुणः । यथा सारङ्गः–भृङ्गः पुष्पाणां सारं–मकरन्दं गृह्णात्येवं परमेश्वरोऽपि लोकानां–भक्तजनानां पत्रपुष्पफलाद्यर्पणरूपं सारं गृह्णातीति लोकसारङ्गः । "सारं माधवसेवनम्" ।

"संसारे किं सारं ? कंसारेश्चरणकमलपरिभजनम्" ।

इति प्रसिद्धेरित्याभिप्रेत्याह—**लोकानामिति** । लोकानां सारो लोक-

---

[1] ध्यानाद्यङ्गा—**पा.**

## स्तोत्रम्

# लोकसारङ्गः

### भाष्यम्

**सारं सारङ्गवत्–भृङ्गवद्गृह्णातीति—लोकसारङ्गः। "प्रजापति-र्लोकानभ्यतपत् (छा. उ. २-२३-२)" इति श्रुतेः, लोकसारः–प्रणवः। तेन प्रतिपत्तव्य इति वा। पृषोदरादित्वात्साधुत्वम्।**

### विवृतिः

सारः–प्रणवः। "प्रजापतिर्लोकानभ्यतपत्" (छा. उ. २-२३-२) इति छान्दोग्योपनिषदि त्रयीव्याहृतिद्वारा प्रणवस्य लोकसारत्वप्रतिपादनात्। तेन गम्यते–ज्ञायत इति लोकसारङ्गः। गमेः "अन्यत्रापि दृश्यत इति वक्तव्यम्" (वा. २०१८) इति कर्मणि डः। पृषोदरादित्वान्नुमागमः। यद्वा *"गमेः सुपि वाच्यः" (वा. २००९) इति खच्प्रत्ययः। स च बहुलग्रहणात्कर्मणि। यद्वा लोकसारं-प्रणवं गच्छति प्रतिपाद्यत्वेनेति कर्मण्युपपदे कर्तरि खच्प्रत्ययः। "खच्च डिद्वा वक्तव्यः" (वा. २०११) इति डित्वात् टिलोपे मुमागम इत्यभिप्रेत्य निर्वचनान्तरमाह--**लोकसार इति। प्रतिपत्तव्य इति।** प्रणवेन [1]व्यतिहारेण प्रतिपत्तिप्रकारो नृसिंहोत्तरतापिन्यां प्रतिपादितः "अजत्वा[2]दमरत्वादजरत्वात्" (नृसिंह–उत्तर -७) इत्यादिना।

अकारोकारवर्णाभ्यां सातत्योत्कर्षधर्मिणम्।
[3]प्रत्यञ्चं संस्म[4]रेदर्थं ब्रह्म चैक्यं तथोमिति ॥

इति श्लोकोक्तरीत्या वा द्रष्टव्यः। **पृषोदरादित्वादिति।** डप्रत्ययान्तो लोकसारङ्ग इति व्याख्यानपक्षे वर्णागमार्थं पृषोदरादित्वं कल्पनीयमिति भावः। प्रणवस्य लोकसारत्वे श्रुतिमाह––**प्रजापतिरिति।**

---

* "खच्प्रकरणे गमेः सुप्युपसंख्यानम्" (वा. २००९) इति वार्तिकस्यार्थानुवादोऽयम्।

[1] व्यतिकरेण–**पा.** [2] दक्षर–**पा.** [3] प्रपञ्चं–**पा.** [4] रेन्मार्ग–**पा.**

स्तोत्रम्

## सुतन्तुस्तन्तुवर्धनः ।
## इन्द्रकर्मा

भाष्यम्

**शोभनस्तन्तुः—विस्तीर्णः प्रपञ्चोऽस्येति—सुतन्तुः । तमेव तन्तुं वर्धयतीति छेदयतीति वा—तन्तुवर्धनः ॥**

**इन्द्रस्य कर्मेव कर्मास्येति—इन्द्रकर्मा । [1]ऐश्वर्यकर्मेत्यर्थः ।**

विवृतिः

"प्रजापतिर्लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्, तामभ्यतपत्, तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवस्स्वरिति" (छा. उ. २-२३-२)। "तान्यभ्यतपत्, तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत्"(छा. उ. २-२३-३) इति श्रुतिर्बोध्या। उत्पत्तिकाले तन्यते—विस्तीर्यते प्रलये [2]स्वलीनः प्रपञ्चः परमात्मनेति तन्तुः। "तनु विस्तारे" अस्मात् "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" (उणा.सू. ६९) इति कर्मणि तुन्प्रत्ययः। सु—शोभनः तन्तुः—तन्यमानप्रपञ्चो ब्रह्मादिरूपोऽस्य जगन्मूलकारणस्येति सुतन्तुरित्याह—**शोभन** इति। तन्तुं-प्रपञ्चं वर्धयति स्थितिकाले, छेदयति संहारकाल इति तन्तुवर्धनः। "वर्ध छेदनपूरणयोः" इति धातोर्ल्युट्प्रत्यये रूपम्। उक्तधातोरर्थद्वयं विवक्षित्वा व्याचष्टे—**तमेवेति**। तन्तुमेवेत्यर्थः ॥

इन्द्रस्य कर्मेव कर्म ईशनरूपमस्य इन्द्रकर्मेत्याह—**इन्द्रस्येति**। कर्मेवेत्येवकारपाठे दुष्टनिग्रहादिरूपं यदिन्द्रस्य कर्म तदस्यैव कर्म, राज्ञ इव भटानां कर्मेत्यर्थः। सम्पिण्डितमर्थमाह—**ऐश्वर्येति**।

---

[1] ऐश्वर्यं कर्मेत्यर्थः—**पा.**  [2] लीनप्रपञ्चः—**पा.**

स्तोत्रम्

## महाकर्मा कृतकर्मा कृतागमः ॥ ९७ ॥

भाष्यम्

महान्ति वियदादीनि भूतानि कर्माणि -कार्याण्यस्येति—महाकर्मा । कृतमेव सर्वं कृतार्थत्वात्, न कर्तव्यं किञ्चिदपि कर्मास्य विद्यत इति—कृतकर्मा । धर्मात्मकं कर्म कृतवानिति वा । कृतो वेदात्मक आगमो येनेति—कृतागमः । "अस्य महतो भूतस्य निश्वसितमेतत्" (बृह. उ. ४-४-१०) इत्यादिश्रुतेः ॥ ९७ ॥

उत्कृष्टं भवं–जन्म स्वेच्छया भजतीति, उद्गतं–अपगतं

विवृतिः

महान्ति–उत्कृष्टान्यन्येषां मनसाप्यचिन्त्यरचनारूपाणि क्रियन्त इति कर्माणि–कार्याणि वियदादिरूपाण्यस्य महाकर्मेत्याह–**महान्तीति** । कृतमेव सर्वं कर्म कार्यम्, नतु अशक्त्या किञ्चिदवशेषितं येन सर्वशक्तत्वात् स कृतकर्मेत्याह––**कृतमिति** । कृतं–अनुष्ठितं धर्मात्मकं कर्मानेन लोकसङ्ग्रहार्थमित्यर्थान्तरमाह–**धर्मात्मकमिति** । कृतः–निःश्वासन्यायेन प्रयत्नमन्तरेण निर्मितः ऋग्वेदादिरूपः आगमोऽनेनेति कृतागम इत्याह––**कृत इति** । तत्र श्रुतिमाह––**अस्येति** ॥ ९७ ॥

उत्–दुष्टनिग्रहशिष्टपरिपालनार्थत्वेनोत्कृष्टः भवः–जन्म शरीरग्रहणमस्य रामकृष्णादिरूपेणावतीर्णस्य विष्णोरिति उद्भव इत्याह––**उत्कृष्टमिति** । जीवानामिव भगवज्जन्मनः कर्मादिजन्यत्वं वारयति––**स्वेच्छयेति** । उद्गतः अपगतो वा भवः–जन्म वस्तुतोऽस्मादिति—**उद्भवः** । उभयत्र बहुव्रीहिरित्यर्थान्तरमाह—**उद्गतमिति** । ब्रह्मणो

स्तोत्रम्

## उद्भवः सुन्दरः सुन्दः

भाष्यम्

**जन्मास्य सर्वकारणत्वादिति वा—उद्भवः। विश्वातिशायिसौभाग्यशालित्वात्—सुन्दरः। सुष्ठु उनत्तीति—सुन्दः "उन्दी क्लेदने"**

विवृतिः

जन्माभावे हेतुमाह—**सर्वकारणत्वादिति।** सर्वकार्यं प्रति कारणत्वादित्यर्थः ॥

अयं भावः—सद्रूपं ब्रह्म न जायते। तत्कारणस्य दुर्निरूपत्वात्। तथाहि—किं तत्कारणम्? अकार्यं कार्यं वा? अकार्यमपि सद्वा? असद्वा? नाद्यः। यदि कार्यं सत् तस्यैव नो ब्रह्मत्वान्नेतरः। "कथमसतः सज्जायेत" (छा. उ. ६-२-२) इति निषेधात्। नापि वियदादिकं कार्यमेव ब्रह्मणः कारणमिति द्वितीयः कल्पः। वियदादीनां सतो जायमानत्वेन तत्कारणत्वायोगात्। ब्रह्मणश्च कार्यमात्रं प्रति कारणत्वश्रवणादिति। इदञ्च "असम्भवस्तु सतोऽनुपपत्तेः" (ब्र. सू. २-३-९) इत्यत्र स्पष्टं निरूपितम् ॥

[1]जगन्मण्डनभूताया अपि मङ्गलदेवताया मनः सुष्ठु उनत्ति—द्रवीकरोति स्वकीयसौन्दर्यातिशयेनेति सुन्दरः। सुपूर्वात् "उन्दी क्लेदने" इत्यस्माद्बाहुलकादरप्रत्ययः। शकन्ध्वादित्वात्पररूपम्। योगार्थस्यानाश्रयणेनाविर्भावेषु विश्वातिशायिसौन्दर्यशालित्वात् सुन्दरो वेत्याभिप्रेत्याह—**विश्वातिशायीति।** सुष्ठु उनत्ति—आर्द्रीकरोति भक्तजनविषयककरुणारसेन स्वान्तरङ्गमिति सुन्दः, "उन्दी क्लेदने" इत्यस्माद्धातोः पचाद्यच्। पूर्ववत्पररूपमित्यभिप्रेत्याह—**सुष्ठ्विति।**

---

[1] जगन्मङ्गलभू—पा. जगन्मण्डलभू—पा.

स्तोत्रम्

## रत्ननाभः सुलोचनः ।
## अर्कः

भाष्यम्

इत्यस्माद्धातोः पचाद्यच्, आर्द्रीभावस्य वाचकः, करुणाकर इत्यर्थः। पृषोदरादित्वात्पररूपत्वम्। रत्नशब्देन शोभा लक्ष्यते। रत्नवत्सुन्दरा नाभिरस्येति––रत्ननाभः। शोभनं लोचनं–नयनं ज्ञानं वा अस्येति––सुलोचनः॥

ब्रह्मादिभिः पूज्यतमैरपि अर्चनीयत्वात्–अर्कः।

विवृतिः

वाचक इत्यनन्तरमुन्दीधातुरिति शेषः। **पृषोदरादित्वादिति**। शकन्ध्वादित्वादित्यपि बोध्यम्। रत्नवच्छोभमाना नाभिरस्य रत्ननाभः।

"नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्।
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे॥"

इति स्त्रियामपि नाभिशब्द इत्याह––**रत्नशब्देनेति**। "लोचनं नयनं नेत्रम्" (नाम. २-६-९३) इति कोशात् नयनवाची लोचनशब्दः। "लोचृ दर्शने" इत्यस्मात् भावे ल्युटि ज्ञानवाची च। तथाच सु-शोभने शतपत्रपत्रसदृशे लोचने अस्य सुलोचनः। सु-शोभनं संसारदुःखनिवर्तकत्वाल्लोचनं–ज्ञानमस्य सुलोचन इत्यर्थद्वयमभिप्रेत्याह–**शोभनमिति**॥

ब्रह्मादिभिरर्च्यत इत्यर्कः। "अर्च पूजायाम्" कर्मणि घञ्। "चजोः" (पा. सू. ७-३-५२) इति कुत्वमित्याह––**ब्रह्मादिभिरिति**। सनोति–ददातीति सनः। "षणु दाने" अस्मा-

स्तोत्रम्

## वाजसनः शृङ्गी जयन्तः

भाष्यम्

**वाजं–अन्नमर्थिनां सनोति–ददातीति–वाजसनः। प्रलयाम्भसि शृङ्गवान् मत्स्यविशेषरूपः–शृङ्गी। मत्वर्थीयोऽतिशायने इनिप्रत्ययः। अरीनतिशयेन जयति, जयहेतुर्वा—जयन्तः॥**

विवृतिः

त्पचाद्यच्। वाजस्य–अन्नस्य सनः–दाता वाजसन इत्याह–**वाजमिति**। शृङ्गमतिशयितमस्यास्तीति शृङ्गी। मत्स्यविशेषरूपेणावतीर्णो भगवानित्याह—**प्रलयाम्भसीति**। **मत्वर्थीयोऽतिशायन इति**। अतिशयितं शृङ्गमस्येति विग्रहे—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने" इति प्रकृत्यर्थविशेषणतयाऽतिशयविवक्षायां "अत इनिठनौ" (पा. सू. ५-२-११५) इति मत्वर्थीय इनिप्रत्ययो भवतीत्यर्थः।

काले यथोक्ते सञ्जाते वासुदेवमुखोद्गते।
शृङ्गी प्रादुर्बभूवाथ मत्स्यरूपी जनार्दनः॥
[1]अनन्तो रज्जुरूपेण मनोः पार्श्व[2]मुपागमत्।
[3]भूतसन्तानमाकृष्य योगेनारोप्य धर्मवित्॥
भुजङ्गरज्वा मत्स्यस्य शृङ्गे नावमयोजयत्।

(मत्स्य. पु. २-१७-१९) इति मत्स्यपुराणे॥

जयत्यसुरानिति जयन्त्यनेनार्जुनादय इति वा विग्रहे जिधातोः कर्तरि करणे वा "तॄभूवहिवसि" (उणा. सू. ४०८) इत्यादिना झच्प्रत्यये "झोऽन्तः" (पा. सू. ७-१-३) इत्यन्तादेश इत्यभिप्रेत्याह—**जयतीति**। **जयहेतुरिति**। अर्जुनादीनां जयसाधनत्वेनेत्यर्थः।

---

[1] भुजङ्गो–पा. [2] मुपागतम्–**पा.** ? [3] भूतान् सर्वान् समाकृष्य–**पा.** ?

स्तोत्रम्

# सर्वविज्जयी ॥ ९८ ॥

भाष्यम्

सर्वविषयं ज्ञानमस्येति—सर्ववित्। आभ्यन्तरान् रागादीन् बाह्यान् हिरण्याक्षादींश्च [1]दुर्जयान् जेतुं शीलमस्येति—जयी। तच्छीलाधिकारे "जिदृक्षि" (पा. सू. ३-२-१५७) इत्यादिपाणिनीयवचनादिनिप्रत्ययः। सर्वविच्चासौ [2]जयी चेति—सर्वविज्जयी इत्येकं नाम ॥ ९८ ॥

विवृतिः

सर्वं वेत्तीति सर्ववित् सर्वविषयकज्ञानवान्। "यः सर्वज्ञः सर्ववित्" (मु. उ. १-१-९) इति श्रुतिप्रसिद्धमिदं नाम। नच "सर्वविद्भानुः" (वि. स. २७) इत्यत्रत्येन पौनरुक्त्यम्। सामान्यतः सर्वं वेत्ति विशेषतः सर्वं वेत्तीति सामान्यविशेषान्यतरविषयत्वेनान्यतरस्य पौनरुक्त्याभावात्। सर्वविच्चासौ भानुश्चेत्येकं नाम, सर्वविच्चासौ जयीत्येकं नाम, इत्युभयत्र क्वचित्पाठः। तस्मिन् पक्षे समासरूपैकनामत्वेन पौनरुक्त्याभाव इत्याह—सर्वेति। आन्तरान् बाह्यांश्च शत्रून् कामक्रोधादीन् हिरण्यकशिपुप्रभृतींश्च जेतुं शीलमस्य, "जि अभिभवे" अस्मात् "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (पा. सू. ३-२-१३४) इत्यर्थाधिकारे "प्रजोरिनिः" (पा. सू. ३-२-१५६) इत्यतः इनिरित्यनुवर्तमाने "जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च" (पा. सू. ३-२-१५७) इतीनिप्रत्यय इत्याह—आभ्यन्तरानिति ॥९८॥

---

[1] जेतुं—**पा.** [2] जयी चेत्येकं नाम—**पा.**

## स्तोत्रम्

# सुवर्णबिन्दुः

## भाष्यम्

**बिन्दवः-अवयवाः सुवर्णसदृशा अस्येति—सुवर्णबिन्दुः। "आप्रणखात् सर्व एव सुवर्णः" (छा. १-६-६) इति श्रुतेः;**

## विवृतिः

बिन्दवः—अवयवाः। "बिन्दुर्लवेऽप्यवयवे" इत्यभिधानकोशात्, सुवर्णवच्छोभमाना बिन्दवः—अवयवा अस्येति सुवर्णबिन्दुरित्याह—**बिन्दव इति**। यत्तु कैश्चिन्नामव्याख्यातृभिः—"सुवर्णाः सुवर्णसदृशा बिन्दवः" इति भाष्यपाठं गृहीत्वा 'सुवर्णा इति पुल्लिङ्गप्रयोगोऽनुपपन्नो भाष्ये, तस्य "स्वर्णं सुवर्णं कनकम्" (नाम. २-९-९४) इत्यमरकोशान्नपुंसकत्वावगमात्। नच सुवर्णशब्दस्य सदृशलक्षणायां न पूर्वलिङ्गतेति वाच्यम्, 'सदृशलक्षणायामपि पूर्वलिङ्गानपायात्। लिङ्गस्य शब्दधर्मत्वात्' इत्यनुपपत्तिमुद्भाव्य 'शोभनो वर्णो येषां ते सुवर्णा इति शोभनवर्णत्वेनैव सुवर्णसादृश्यलाभात्' इति समाहितं,—तदसम्यगिव। तादृशपाठस्य बहुषु पुस्तकेष्वदर्शनात्। "बिन्दवः—अवयवाः सुवर्णसदृशा अस्य" इत्येव दर्शनात्। यच्च लाक्षणिकानां न पूर्वलिङ्गापगम इति तदपि न, लाक्षणिकानां तन्नियमासिद्धेः। गङ्गायां घोष इत्यादौ क्वचित्तत्सद्भावेऽपि गुणवचनानां मत्वर्थलक्षणायां सर्वेषां पुंयोगलक्षणायां च तादृशनियमाभावात्। नच पुंयोगस्थले न प्रकृतेर्लक्षणा, किन्तु स्त्रीप्रत्यय एव प्रकृत्यर्थसम्बन्धिनीं स्त्रियमाहेति वाच्यम्। तथा सति "तस्येदम्" (पा. सू. ४-३-१२०) इति तद्धितेनाप्राप्ते आरभ्यमाणेन ङीपा तस्य बाधात्। तदापि प्राप्नोतीति तद्धितान्तरूपा-

भाष्यम्

**शोभनो वर्णः-अक्षरं बिन्दुश्च यस्मिन् मन्त्रे तन्मन्त्रात्मा वा-सुवर्णबिन्दुः। इति नाम्नामष्टमं शतकं विवृतम् ॥**

इत्यष्टमशतकभाष्यम्

---

विवृतिः

सिद्धिप्रसङ्गात् । अतः प्रकृतिरेव यदा तत्साहचर्यात्तत्सम्बन्धिन्यां स्त्रियां लक्षणया प्रवर्तते तदा स्त्रीलिङ्गायास्तस्यास्स्त्र्यधिकारविहितस्वार्थिको [1] ङीषिति सिद्धान्तः । स्पष्टं चैतत्प्रतिपादितं पुंयोगसूत्रे (पा. सू. ४-१-४८) महाभाष्ये–"* अतस्मिंस्तच्छब्दश्चतुर्धा भवति । तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्याच्च" इत्यादि । तेजोमयावयवत्वे श्रुतिमाह—**आप्रणखादिति** । प्रणखं–[2] नखाग्रं, नखाग्रेण सह तावत्सर्वोऽप्यवयवस्तेजोमय इत्यर्थः । (सु)वर्ण ओकाराख्यः स्वरः, बिन्दुः—अनुस्वारः, [3] तावुभौ शोभनौ यस्मिन्मन्त्रे ओङ्काररूपे तन्मन्त्ररूपः परमात्मा । "ओमिति ब्रह्म" (तै. उ. १-८-१) "तत्ते पदं सङ्ग्रहेण ब्रवीम्योम्" (कठ. उ. १-२-१५) इत्यादिश्रुतेः "प्रणवः सर्ववेदेषु" (भ. गी. ७-८) इति स्मृतेश्चेत्यभिप्रेत्याह—**शोभन इति** ॥

इत्यष्टमशतकभा[4]ष्यविवृतिः

---

* अयं महाभाष्यार्थानुवादः ।

[1] ङीबिति–**पा.** [2] पादाग्रं- **पा.** [3] तौ शोभनौ–**पा.** [4] ष्यं व्याख्यातम्–**पा.**

स्तोत्रम्

# अक्षोभ्यः सर्ववागीश्वरेश्वरः ।

# महाह्रदः

## अथ नवमशतकभाष्यम्

[1]रागादिभिः शब्दादिविषयैश्च त्रिदशारिभिश्च न क्षोभ्यत इति—अक्षोभ्यः। सर्वेषां वागीश्वराणां—ब्रह्मादीनामपीश्वरः—सर्ववागीश्वरेश्वरः ॥

अवगाह्य [2]सदानन्दं विश्रम्य सुखमासते योगिन इति

## अथ नवमशतकभाष्यविवृतिः

रागादिभिः शब्दादिभिर्विषयैर्दानवादिभिश्च न क्षोभ्यते-क्षोभं-विक्षेपं [3]व्यथां न प्राप्यत इत्यक्षोभ्यः। "क्षुभ सञ्चलने" अस्माद्धेतुमण्ण्यन्तात् "अचो यत्" (पा. सू. ३-१-९७) इति यत्प्रत्यय इत्याह—रागेति। वाचः—ऋग्वेदादिरूपाया ईश्वराः, सर्वे च ते वागीश्वराश्च सर्ववागीश्वराः ब्रह्मादयः सर्वविद्याविशारदाः, तेषामीश्वरः सर्ववागीश्वरेश्वरः। ब्रह्मादीनामपि विद्योपदेष्टृत्वात्परमेश्वरस्य, "यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे. उ. ६-१८) इति श्रुतेरित्याह—सर्वेषामिति ॥

अगाधजलो जलाशयो ह्रदः। महांश्चासौ ह्रदश्च महाह्रदः। महाह्रद इव महाह्रदः। महाह्रद इति गौणमिदं नाम। यथा ग्रीष्मे चण्डांशुकरतप्ता महाह्रदेऽवगाह्य तापरहिताः सुखमासते तथा संसारार्कसन्तप्ताः परमानन्दसिन्धौ परमात्मनि "अहं ब्रह्मास्मि" इति साक्षात्काररूपमवगाहनं कृत्वा संसारतापरहिताः सुखमासत इति गुणयोगादित्याह—अवगाह्येति ॥

---

[1] रागद्वेषादिभिः—पा. [2] तदानन्दं—पा. [3] व्यवधानं—पा.

## स्तोत्रम्

# महागर्तः

### भाष्यम्

**महाह्रद [1]इव—महाह्रदः । महागर्तवदस्य माया महती दुरत्ययेति—महागर्तः । "मम माया दुरत्यया" (भ. गी. ७-१४) इति भगवद्वचनात् । [2]अथवा गर्तशब्दो रथपर्यायो नैरुक्तैरुक्तः, तस्मान्महारथः—महागर्तः । महारथत्वमस्य**

### विवृतिः

गर्तः—अवटः, गर्तवद्गर्तो माया, [3]दुरत्ययत्वात् । महान् गर्तः-माया अस्येति महागर्त इत्याह—**महागर्तवदस्येति** । गर्तशब्दस्य मायायां गौणत्वे गुणमाह—**दुरत्ययेति** । ज्ञानं विनेति शेषः । दुरत्ययत्वे गीतां पठति—**ममेति** । गर्तशब्दो रथपर्यायः । महागर्तः—महारथः—द्रोणभीष्मादिः, तद्रूपः । तेषां तद्विभूतित्वात् । "यद्यद्विभूतिमत्सत्त्वम्" (भ गी. १०-४१) इति भगवद्वचनादित्याह—**अथवेति** । गर्तशब्दस्य रथपर्यायत्वे मानमाह—**नैरुक्तैरिति** । **तस्मादिति** । *नैरुक्तवचनादित्यर्थः । **महारथत्वस्येति** ।

एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणस्स महारथ इति स्मृतः ॥

---

* "रथोऽपि गर्त उच्यते गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् ।" (निरुक्त. ३-५) इति निरुक्तवचनमत्रानुसन्धेयम् ।

[1] इवेति—पा. [2] यद्वा—पा. [3] दुरत्यया—पा.

स्तोत्रम्

महाभूतः [1]महानिधिः ॥ ९९ ॥

कुमुदः

भाष्यम्

प्रसिद्धं भारतादिषु। कालत्रयानवच्छिन्नस्वरूपत्वात्–महाभूतः। सर्वभूतान्यस्मिन्निधीयन्त इति निधिः। महांश्चासौ निधिश्चेति—महानिधिः ॥ ९९ ॥

कुं—धरणीं भारावतरणं कुर्वन् मोदयतीति—कुमुदः।

विवृतिः

अमितान्योधयेद्यस्तु सम्प्रोक्तोऽतिरथस्तु सः।
रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथो मतः॥

इति महारथादीनां लक्षणं द्रष्टव्यम्। भूतः–सिद्धोऽर्थः। स च महान्–प्रकृष्ट इति महाभूतः। प्रकर्षश्च भूतस्य–सिद्धस्य वस्तुनः कालत्रयानवच्छेद एवेत्याह—कालत्रयेति। सर्वं निधीयतेऽत्रेति निधिः। "उपसर्गे घोः किः" (पा. सू. ३-३-९२) इति किप्रत्ययः। महांश्चासौ निधिश्चेति महानिधिः। महत्त्वं चास्य सर्वभूतनिधानाधिकरणत्वादपरिच्छिन्नत्वाद्वेत्याह—सर्वेति ॥ ९९ ॥

कुः–पृथिवी, तां मोदयतीति, "मुद हर्षे" अस्मात् "इगुपध" (पा. सू. ३-१-१३५) इत्यादिना कः। मोदहेतुत्वं च पृथिव्याः तद्भारावतरणेनेत्याह—कुमिति। ननु मुदेरकर्मकत्वात्कथं

[1] महाधनः–पा.

## स्तोत्रम्

## कुन्दरः

### भाष्यम्

मुदिरत्रान्तर्भावितणिजर्थः। कुन्दपुष्पतुल्यानि [1]शुद्धानि फलानि राति–ददाति इति—कुन्दरः। कुन्दपुष्पतुल्यानि शुद्धानि फलानि लाति–आदत्ते [2]इति वा–कुन्दरः। [3]रलयोर्वृत्त्येकत्वस्मरणात्। कुं––धरां दारयामास हिरण्याक्षजिघांसया

### विवृतिः

कर्मयोगोऽत आह—मुदिरिति। लक्षणया धातोर्णिजर्थे वृत्तिरित्यर्थः। [4]कुन्दानि–बकुलानि तद्वत् स्वच्छानि शोभनानि फलानि राति–ददाति पुण्यकर्तृभ्य इति कुन्दरः। कुन्दशब्दे उपपदे "रा दाने" इत्यस्मात् "आतोऽनुपसर्गे" (पा. सू. ३-२-३) इति कप्रत्यय इत्याह—कुन्देति। कुन्दानि तत्सदृशानि कर्मफलानि मुमुक्षुभिः परमेश्वरे अर्पितानि राति–लाति आदत्त इति रलयोरभेदात् रातेर्लाधात्वर्थ-[5]वर्तित्वमित्यर्थान्तरमाह—कुन्देति। कुं–पृथिवीं दारयति स्मेति विग्रहे भगन्दर इत्यादाविव बाहुलकाद्दारयतेः खच्। यद्वा कुं–दारयतीति कुशब्दे कर्मण्युपपदे "कर्मण्यण्" (पा. सू. ३-२-१) इत्यणप्रत्ययः। णिलोपस्य स्थानिवत्त्वान्न वृद्धिः। पृषोदरादित्वात्साधुत्वम्। हिरण्याक्षजिघांसया वराहरूपेण कोः–भुवो दारणात्कुन्दर इति तृतीयं निर्वचनमाह—कुमिति। कुन्दपुष्पवद्धावल्य-

---

[1] शुभ्राणि धर्मानुबन्धीनि फलानि–पा. [2] इति दलयोर्वृत्त्येकत्वस्मरणात् कुन्दरः–पा. [3] रा ला दाने इति रलयोः–पा. [4] कुन्दानीव कुन्दानि तद्वत्स्वच्छानि–पा. [5] वृत्तित्व–पा.

## स्तोत्रम्

# कुन्दः

### भाष्यम्

वाराहं रूपमास्थायेति वा--कुन्दरः। कुन्दोपमसुन्दराङ्गत्वात्स्वच्छतया स्फटिकनिर्मलः—कुन्दः। कुं–पृथ्वीं कश्यपा[1]यादादिति [2]वा-कुन्दः।

"सर्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान्।
तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः॥
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम्।
(हरि. ४२-१२१).

### विवृतिः

गुणयोगात्कुन्दः, बलभद्रनृसिंहादिरूप इति गौण्या वृत्त्या व्याचष्टे—कुन्देति। अत्र कुन्दशब्दस्य पुष्पपरतया नपुंसकत्वेऽपि गौणतायां पूर्वलिङ्गनियमाभावस्योक्तत्वात्पुंस्त्वं बोध्यम्॥

कुं–पृथिवीं कश्यपाय ददातीति कुन्दः। "डुदाञ् दाने" "आतोऽनुपसर्गे कः" (पा. सू. ३-२-३) इति कप्रत्ययः, पृषोदरादित्वाद्वर्णागम इति योगार्थमभिप्रेत्यार्थान्तरमाह—कुमिति। जामदग्न्यरूपेण कश्यपाय वसुन्धरां दत्तवानित्यत्र हरिवंशवचनमाह—सर्वेति। पृथ्वीवाचकेन कुशब्देन तदीश्वरा लक्ष्यन्ते। तान् पृथ्वीश्वरान् क्षत्रियान् द्यति–खण्डयति भार्गवरूपेणेति कुन्दः।

---

[1] य प्रददाविति कुन्दो वा–पा. [2] कुन्दो वा–पा.

## स्तोत्रम्

# पर्जन्यः

### भाष्यम्

इति हरिवंशे । कुं-पृथ्वीं द्यति-खण्डयतीति वा-कुन्दः । कुशब्देन पृथ्वीश्वरा लक्ष्यन्ते ।

निःक्षत्रियां यश्च चकार मेदिनी-
मनेकशो बाहुवनं तथाच्छिनत् ।
यः कार्तवीर्यस्य स भार्गवोत्तमो
ममास्तु माङ्गल्यविवृद्धये हरिः ॥ (वि. ध. ४३-३७)

इति विष्णुधर्मे ॥

पर्जन्यवदाध्यात्मिकादितापत्रयं शमयतीति, सर्वान् कामानभिवर्षतीति वा—पर्जन्यः । स्मृतिमात्रेण पुनातीति—

### विवृतिः

पृषोदरादित्वाद्वर्णागम इत्यर्थान्तरमाह—कुमिति । तत्र विष्णुधर्मवचनमाह—निःक्षत्रियामिति ॥

पर्जन्यवत् पर्जन्यः, आध्यात्मिकादितापत्रयशामकत्वगुणयोगात् कामवर्षणगुणयोगाद्वा गौण्या पर्जन्यनाम व्याचष्टे—पर्जन्यवदिति । स्मृतिमात्रेण लोकान् पुनातीति *पवनः । "पूञ् पवने" "बहुलमन्यत्रापि" (उणा. २३३) इत्यौणादिको युच्प्रत्यय इत्याह—स्मृतीति । इलति-प्रेरयतीति इलः । "इल प्रेरणे" इगुपधलक्षणः कः । इलः-प्रेरको न भवतीत्यनिलः । "न कर्तृत्वं

---

* पावन इति पाठे पवन एव पावन इति स्वार्थेऽण् वा, पावयतीति णिजन्ताल्युर्वा बोध्यः ।

## स्तोत्रम्

## [1]पवनः

### भाष्यम्

[2]पवनः । इलति–प्रेरणं करोतीति इलः, तद्राहितत्वात्–अनिलः । इलति–स्वपिति इत्यज्ञ इलः, तद्विपरीतः अनिलः । नित्यप्रबुद्धस्वरूप[3]त्वादिति वा । अथवा निलतेर्गहनार्थात्

### विवृतिः

न कर्माणि लोकस्य सृजति प्रभुः" (भ. गी. ५-१४) इत्यादिभगवद्वचनादित्याह —इलतीति । तद्राहितत्वादिति । तद्भिन्नत्वादित्यर्थः । इलति–स्वपितीति इलः, "इल स्वप्ने" पूर्ववत् कः । अन्यथाग्रहणरूपस्वप्नवान् जीवः इलः । "तस्य त्रय आवसथाः त्रयः स्वप्नाः" (ऐ. आ. ३-१२) इति श्रुतेः । तद्विलक्षणोऽनिलः विपरीतग्रहणरहितः । *उपाधेः प्रतिबिम्बपक्षपातित्वेन बिम्बस्वरूपे परमेश्वरे तदयोगादित्याह—इलतीति । तद्विपरीत इति । सुप्तविपरीत इत्यर्थः । अस्यानिल इत्यनेनान्वयः । नित्येति । नित्यं यत् प्रबुद्धं–स्वरूपानवबोधरूपनिद्राविधुरं बिम्बचैतन्यं तद्रूपत्वादित्यर्थः । निलति–दुर्ज्ञेयो भवतीति निलः । "णिल गहने" इगुपधलक्षणः कः, निलः–दुर्ज्ञेयः, स नेत्यनिलः । भक्तानां सुविज्ञेयत्वात् । यद्वा णिलधात्वर्थभूतं गहनं–दुःखं, "गहनं वनदुःखयोः" (हैमः) इत्यभिधानात् । तथा च निलः–दुःखी, स नेत्यनिल [4]इत्यभिप्रेत्यार्थान्तरमाह—अथवेति ।

---

* उपाधिधर्माणां प्रतिबिम्ब एव सङ्क्रामकत्वं उपाधेः प्रतिबिम्बपक्षपातः । स्पष्टं चेदं जलाद्युपाधौ ।

[1] पावनः–**पा.** [2] पावनः–**पा.** [3] त्वादनिलो वा–**पा.** [4] इत्यर्थान्तरमाह–**पा.**

## स्तोत्रम्

# अनिलः ।

# अमृताशः

### भाष्यम्

**कप्रत्यया[1]न्तात् अगहनः—अनिलः । भक्तेभ्यः सुलभः ॥**

**[2] स्वरूपामृतमश्नातीति—अमृताशः । मथितममृतं सुरान् पाययित्वा स्वयं [3] चाश्नातीति वा—अमृताशः । अमृता [4] अविनश्वरफलत्वादाशा–वाञ्छा अस्येति वा ॥**

### विवृतिः

कप्रत्ययान्तादित्येतदनन्तरं नञ्पूर्वपदान्निष्पन्नं रूपमनिल इतीति शेषः । नामार्थं विवृणोति—**अगहन इति** । एवञ्चानिलनाम्नो निर्वचनत्रयं वर्णितमिति बोध्यम् । [5] अमृतवदमृतं–स्वरूपानन्दः, तमश्नाति–अनुभवतीत्यमृताशः, कर्मण्यणित्याह—**स्वरूपेति** । क्षीरोदमथनादुद्गतममृतं देवानाशयित्वा द्वादशादित्यान्तर्गतो भूत्वा स्वयमप्यश्नाति स्मेत्यर्थान्तरमाह—**मथितमिति** । अमृता–अविनश्वरा आशा—वाञ्छा अस्येत्यमृताश इति बहुव्रीहिमाश्रित्यार्थन्तरमाह—**अमृतेति** । नन्विच्छायाः कथमविनाशित्वमित्याशङ्क्य तत्फलस्य अविनाशित्वाद्गौणमविनाशित्वमित्याह—**अविनश्वरेति** । 'अयं मुक्तो भवतु' इतीश्वरकर्तृका मुमुक्षुविषयिणी इच्छा, मुमुक्षुनिष्ठा ब्रह्मविषयिणी

---

[1] न्तान्निल इति रूपम् । अ–**पा.** [2] स्वात्मामृत–**पा.** स्वात्मानन्दामृत–**पा.** [3] चापिबदिति–**पा.** [4] अनश्वरः–**पा.** [5] अमृतवदमृतः–**पा.**

## स्तोत्रम्

# अमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १००॥

## भाष्यम्

मृतं–मरणं, तद्रहितं वपुरस्येति—अमृतवपुः। सर्वं जानातीति—सर्वज्ञः। "यः सर्वज्ञः सर्ववित्" (मुण्ड. १-९) इति श्रुतेः। "सर्वतोऽक्षिशिरोमुखम्" (भ. गी. १३-१३) इति भगवद्वचनात्—सर्वतोमुखः ॥ १०० ॥

## विवृतिः

जिज्ञासारूपा वा वाञ्छा बोध्या। तथाचाविनश्वरफलकमुमुक्षुविषयक-वाञ्छाश्रय ईश्वर इति प्रथमपक्षे; अविनश्वरफलकमुमुक्षुकर्तृकाजिज्ञासा-रूपवाञ्छाविषय ईश्वर इति द्वितीयपक्षे चार्थः। यद्वा ईश्वरप्रीत्याशया कर्मानुष्ठानमाशा। सा अमृता—अविनश्वरफला अस्येत्यर्थो बोध्यः ॥

मृतं–मरणं विनाशः। भावे क्तः। तद्वर्जितममृतं वपुः–चित्स्वरूप-मस्येत्याह—**मृतमिति**। सर्वं जानाति सर्वविषयावच्छिन्नचैतन्यलक्षणज्ञा-नवानिति सर्वज्ञ इत्याह—**सर्वमिति**। सर्वज्ञ इति श्रुतिसिद्धं नामेत्याह—**य इति**। सामान्यतो विशेषतश्च सर्वं जानाति वेत्ति चेति श्रुत्यर्थः। सर्वतः—सर्वाणि, सार्वविभक्तिकस्तसिः। मुखान्यस्य विराडात्मनः सर्वतः–सर्वेषु देहेषु मुखान्यस्येति वा सर्वतोमुख इति भगवद्गीतोदाहरणपूर्वकमाह—**सर्वतोऽक्षीति**। अक्षीणि च शिरांसि च मुखानि च अक्षिशिरोमुखम्। प्राण्यङ्गत्वादेकवद्भावः। सर्वमक्षिशिरोमुख[1]मस्येत्यर्थः ॥ १०० ॥

---

[1] मस्येति गीतासु प्रसिद्धार्थकं सर्वतोमुखमित्यर्थः—**पा.**

## स्तोत्रम्

# सुलभः

### भाष्यम्

पत्रपुष्पफलादिभिः भक्तिमात्रसमर्पितैः सुखेन लभ्यत इति–सुलभः ।

"पत्रेषु पुष्पेषु फलेषु तोयेष्व-
क्रीतलभ्येषु सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे
[1]मुक्त्यै कथं न क्रियते प्रयत्नः ॥"

इति महाभारते । [2]शोभनं [3]व्रतयति–भुङ्क्ते भोजनान्निवर्तत

### विवृतिः

मुमुक्षुभिः सुखेन प्राप्यत इति सुलभ इति सौलभ्यं दर्शयन्नाह—पत्रेति । भक्तिमात्रेति । तदेकतात्पर्येत्यर्थः । सौलभ्ये प्रमाणमाह—पत्रेष्विति । अयं श्लोकः केषुचित्पुस्तकेषु न दृश्यते । सु-शोभनं व्रतयति-भुङ्क्ते सुदामादिभिर्दत्तं पृथुकादीति, सुष्ठु व्रतयति-भोजनान्निवर्तते नरनारायणरूपेण तपश्चरन्निति वा सुव्रतः । "व्रतात् भोजनतन्निवृत्त्योः" (वा. ५०६०) इति णिजन्तात्पचाद्यच्प्रत्यय इत्यर्थद्वयमभिप्रेत्याह—*[शोभनमिति । सिद्धिरणिमादिरूपा, सा अतिशयिता अस्यास्तीति सिद्धः । सिद्धिशब्दादतिशायने मत्वर्थीय

---

*[ ] एकस्यां मातृकायां एतच्चिह्नान्तर्गतो ग्रन्थो नास्ति ।

[1] मुक्तौ–पा. [2] शोभनं व्रतं नियतो भुङ्क्ते । भोज–पा. [3] व्रतं नियतो
भु पा.

## स्तोत्रम्

## सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।

## भाष्यम्

**इति वा–सुव्रतः । अनन्याधीनसिद्धित्वात्–सिद्धः । सुरशत्रव एवास्य शत्रवः, तान् जयतीति–शत्रुजित् । सुरशत्रूणां तापनात्–शत्रुतापनः ॥**

## विवृतिः

अच्प्रत्ययः । सिद्धेरतिशयश्च योगाद्यनपेक्षत्वमित्याह]—**अनन्येति** । सिद्धिः-मोक्षो ज्ञानं वा, तदुभयमप्यस्य स्वतस्सिद्धमिति वा सिद्ध इत्याह—**अनन्येति** । शत्रून्-सुरशत्रून् जयति-अभिभवत्याहव इति शत्रुजिदित्याह—**सुरशत्रव इति** । शत्रूणां-सुरशत्रूणां तापनः शत्रुतापनः । नन्द्यादित्वात्कर्तरि ल्युरित्याह—**तापनादिति** । "न मे द्वेष्योऽस्ति न प्रियः" (भ. गी. ९-२९) इति भगवद्वचनात् "शत्रुजिच्छत्रुतापनः" इति नामद्वयेऽपि भगवतो द्वेष्यप्रिययोरभावात्सुरशत्रव एवास्य शत्रव इति "तापनात्सुरशत्रूणाम्" इति च शत्रुत्वं दैत्यादिनिष्ठं सुरप्रतियोगिकमित्युक्तं भाष्ये । न चैवं सुरशत्रूणां जये तापने च [1]परमेश्वरस्य वैषम्यनैर्घृण्यापत्तिरिति वाच्यम् । सुरैरनुष्ठितानां स्वर्गादिहेतुभूतानां कर्मणां असुरकृतदुष्कर्मणां च (फलस्य) "फलमत उपपत्तेः" (ब्र.सू. ३-२-३८) इति *न्यायेन परमेश्वरप्रदातृत्वावगमात्

---

* सर्वस्यापि जन्तोः क्षणिकात् कर्मणः फलासम्भवात् ईश्वरस्यैव फलदातृत्वमुपपद्यत इति न्यायाशयः ।

[1] परस्य–पा.

## स्तोत्रम्

# न्यग्रोधः

### भाष्यम्

**न्यक्–अर्वाक् रोहति–सर्वेषामुपरि वर्तत इति–न्यग्रोधः। पृषोदरादित्वात् हकारस्य धकारादेशः। सर्वाणि भूतानि**

### विवृतिः

सुरशत्रुजयादिकं विना तदयोगात्। अत एव शारीरकसूत्रम्—* "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" (ब्र. सू. २-१-३४) इति॥

स्वेनापरिच्छिन्नस्वरूपेण सर्वेषां ब्रह्मादीनामुपरि वर्तमानोऽपि अल्पाविद्याशक्तिपरिच्छिन्नस्वरूपेण न्यक् रोहति-अर्वाग्भूतप्रपञ्चरूपेण जायत इति न्यग्रोधः। पचाद्यच्। हकारस्य पृषोदरादित्वाद्धकार इत्यभिप्रेत्याह—**न्यगिति**। रुणद्धीति रोधः, रुधेः पचाद्यच्, न्यक्कृत्य रोधो न्यग्रोधः, शाकपार्थिवादिवत्समासः, न्यक्कारोऽत्र देहयोगः, भूतानि न्यक्कृत्य देहेन संयोज्य ज्ञानैश्वर्यादीनां रोध आवारकस्तिरोभावयिता न्यग्रोधः, "देहयोगाद्वा सोऽपि" (ब्र. सू. ३-४-३) इति शारीरकसूत्रादित्यभिप्रेत्य व्याख्यानान्तरमाह—**सर्वाणीति**। अम्बरादुद्गतः, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा.

---

* परमेश्वरः तत्तत्प्राणिकर्मानुगुणमेव कांश्चित्तिर्यगादीनत्यन्तदुःखिनः, कांश्चिन्मनुष्यादीन् सुखदुःखसाधारणान्, कांश्चिद्देवादीनत्यन्तसुखिनश्चोत्पादयति। सर्वान् संहरति च। अतो न तस्य वैषम्यनैर्घृण्ये सम्भवतः। नैतावता तस्य परमेश्वरत्वं हीयते। यथा भृत्यादिसेवानुगुण्येन फलदाता राजा राजैव दृश्यते, एवं परमेश्वरोऽपीत्युपपन्नमेवास्य परमेश्वरत्वम्। "एष ह्येव साधुकर्म कारयति" (कौ. उ. ३-८) इत्याद्या श्रुतिरपि परमेश्वरस्य प्राणिकर्मसापेक्षत्वं दर्शयति इति सूत्रार्थः॥

स्तोत्रम्

# उदुम्बरः

भाष्यम्

**न्यक्कृत्य निजमायां वृणोति–निरुणद्धीति वा। अम्बरादुद्गतः कारणत्वेनेति–उदुम्बरः। पृषोदरादित्वादेवाकारस्योकारादेशः। यद्वा [1]ऊर्क्–अन्नम्, तेन तदात्मना विश्वं पोषयन्–उदुम्बरः। [2]*"ऊर्ग्वा अन्नमुदुम्बरः" (तै. ब्रा. १-२-७, १-३-८) इति श्रुतेः। न्यग्रोधोदुम्बर इत्यत्र[3] विसर्गलोपे [4]सन्धिरार्षः।**

विवृतिः

१३३९) इति समासः, पृषोदरादित्वादकारस्योत्वम्, अम्बरादुद्गतत्वं च अम्बरं प्रति कारणत्वात्। कारणं हि कार्यादुद्गतं - उत्कृष्ट[5]त्वेनागतं भवति, नित्यत्वात्सूक्ष्मत्वाद्व्यापकत्वादित्यभिप्रेत्याह-- **अम्बरादिति**। यद्वा अम्बरपदमुपलक्षणं कार्यप्रपञ्चमात्रस्य। तस्मादुद्गतः--तदसंस्पृष्टः, विवर्तोपादानत्वेन तत्सत्तादशायामपि तदसंस्पर्शात्। न हि रज्जुः कल्पितसर्पादिना स्पृश्यत इत्यभिप्रेत्याह—**अम्बरादिति**। उद्गतं- उद्भूतमम्बरं यस्मादित्यपि बोध्यम्। यद्वा उदुम्बरः–अन्नम्, तेन रूपेण विश्वस्य पोषणादित्यर्थान्तरमाह—**ऊर्क्--अन्नमिति**। ऊर्गिति उदुम्बरनाम्नो व्याख्यानम्। उदुम्बरस्यान्नत्वे श्रुतिं पठति—**ऊर्ग्वा अन्नमिति**। श्वो न स्थास्यतीत्यश्वत्थः, पृषोदरादित्वात्पूर्वोत्तर-

---

* "ऊर्ग्वा उदुम्बरः। ऊर्गन्नम्" (तै. सं ५-४-९) इति श्रुतिरप्यत्रानुसन्धेया।

[1] उदुम्बरमन्नाद्यम्–**पा.** [2] ऊर्ग्वा अन्नाद्यमुदुम्बरम्–**पा.** [3] सन्धिरार्षः–**पा.** [4] कृते सन्धि–**पा.** [5] त्वेनावगतं–**पा.**

## स्तोत्रम्

# अश्वत्थः

### भाष्यम्

[1]श्वो न [2]स्थास्यतीति–अश्वत्थः। पृषोदरादित्वादेव सकारस्य तकारादेशः। अश्वत्थ इव तिष्ठतीति वा–अश्वत्थः। "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद्ब्रह्म" (कठ. उ. ६-१) इति श्रुतेः।

"ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम्।"

(भ. गी. १५-१)

### विवृतिः

[3]पदान्ताद्योः सकारयोः तकारौ, "सुपि स्थः" (पा. सू. ३-२-४) इति कप्रत्ययः, अस्थिररूपत्वादश्वत्थः संसारवृक्षः, तद्रूपेण परस्यैवावस्थानादित्यभिप्रेत्याह—श्व इति। संसारस्याश्वत्थत्वरूपणपरां श्रुतिं स्मृतिं च पठति—[4]ऊर्ध्वेत्यादि। ऊर्ध्वं--संसारमण्डलस्योपरि अवस्थितं "तद्विष्णोः परमं पदम्" (कठ. उ. १-३-९) इति प्रागुपन्यस्तं निरस्तसमस्तोपाधिकं ब्रह्म मूलं कारणं यस्य स तथोक्तः। अव्यक्तादिस्थावरान्तसंसारवृक्षः स्वर्गनरक[5]तिर्यक्प्रेतादिभिः शाखाभिः अवाक्छाखः-अर्वाचीनशाखः स एव सनातनः–अनादिः. अस्थिरत्वात् श्वो न तिष्ठतीत्यश्वत्थः, अस्य संसारवृक्षस्य यन्मूलकारणं तदेव शुक्रं–शुद्धं संसारदोषासंस्पृष्टं, तदेव ब्रह्म अमृतं–अविनाशिस्वभावं कथ्यते।

---

[1] श्वोऽपि न–**पा.** [2] स्थातेति–**पा.** [3] पदान्तयोः–**पा.** [4] ऊर्ध्वमूलेत्यादि–**पा.**
[5] तिर्यक्प्रेतपिशाचादिभिः–**पा.**

स्तोत्रम्

## चाणूरान्ध्रनिषूदनः ॥ १०१ ॥

## सहस्रार्चिः सप्तजिह्वः

भाष्यम्

इति स्मृतेश्च। चाणूरनामानमसुरं निषूदितवानिति–चाणूरान्ध्रनिषूदनः ॥ १०१ ॥

सहस्राणि–अनन्तानि अर्चींषि यस्य सः–सहस्रार्चिः। "दिवि सूर्यसहस्रस्य*" (भ. गी. ११-१२) इत्यादिगीतावचनात्। सप्त जिह्वा [1]अस्य सन्तीति–सप्तजिह्वः [2]अग्निरूपी।

विवृतिः

तत्कार्यभूतस्तु संसारवृक्षो वाचारम्भणमात्रत्वाद्गन्धर्वनगरादिवन्मिथ्याभूत इत्यर्थः। स्मृतेरप्ययमेवार्थः। चाणूरनामानमान्ध्रजातिं निषूदितवानिति चाणूरान्ध्रनिषूदनः। सूदयतेर्निपूर्वान्नन्द्यादित्वाल्ल्युरित्याह—चाणूरेति ॥ १०१ ॥

सहस्रशब्दोऽनन्तवचनः। "विश्वं शतं सहस्रं च सर्वमक्षयवाचकम्" इति महाभारतवचनात्। सहस्राणि–अनन्तान्यर्चींषि–भासोऽस्य विश्वरूपधरस्य विष्णोरिति सहस्रार्चिरित्याह—सहस्राणीति। तत्र गीतामुदाहरति—दिवीति। सप्त कालीकराल्याद्या आहुतिग्रसनार्था जिह्वा अस्य सप्तजिह्वोऽग्निस्वरूप इत्याह—[3]सप्तेति।

---

* अत्र कचित्पुस्तके "भासस्तस्य महात्मनः" इत्यन्तं श्लोको दृश्यते।

[1] अस्येति–पा. [2] अग्निः–पा. [3] सप्त जिह्वा इति–पा.

स्तोत्रम्

## सप्तैधाः सप्तवाहनः ।

भाष्यम्

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुपी च देवी
लेलायमाना इति सप्त जिह्वाः ॥ (मु. उ. १-२-४)

[1]इति श्रुतेः । सप्त एधांसि–दीप्तयोऽस्येति–सप्तैधाः अग्निः ; "सप्त ते अग्ने समिधः सप्तजिह्वाः" (तै. सं. १-५-३) इति मन्त्रवर्णात् । सप्त अश्वा [2]वाहनान्यस्येति–सप्तवाहनः । सप्त-नामैकोऽश्वो वाहनमस्येति वा—सप्तवाहन आदित्यः । "एकोऽश्वो वहति सप्तनामा" (तै. आ. ३-११, ऋ. सं. १-१६४-२) इति श्रुतेः ॥

विवृतिः

सप्तजिह्व इत्यत्र मुण्डकवचनमुदाहरति—**कालीति** । "इन्धी दीप्तौ" इति धातोर्निष्पन्न एधश्शब्दो दीप्तिवचनः, सप्त एधांसि–दीप्तयोऽस्य सप्तैधा अग्निस्वरूप इत्याह—**सप्तेति** । सप्तैधस्त्वे मन्त्रमुदा-हरति—**सप्त त इति** । मन्त्रे समिध इत्यस्य दीप्त इत्यर्थः । सप्तनामक एकोऽश्वो वाहनमस्य सप्तवाहन आदित्यरूप इत्याह—**सप्तनामेति** । तत्र मन्त्रमुदाहरति—**एक इति** । मन्त्रे—वहन्त्यादित्यरथं सप्ताश्वाः,

---

[1] इति मुण्डके श्रूयते–**पा.** इति मन्त्रवर्णात्–**पा.** [2] सप्तनामैकोऽश्वो वा वाहनमस्येति–सप्तवाहनः–**पा.**

भाष्यम्

[1]मूर्तिः--घनरूपं धारणसमर्थं चराचरलक्षणम्। "ताभ्योऽभितप्ताभ्यो मूर्तिरजायत" (ऐत. उ. ३-२) इति श्रुतेः। तद्रहित

विवृतिः

सप्तनामैको वा अश्वो वाहनमस्येति सप्तवाहन इत्यपि पाठः। तत्र अश्वानां सप्तसङ्ख्यावत्त्वे विष्णुपुराणम्—

"हयाश्च सप्त छन्दांसि तेषां नामानि मे शृणु।
गायत्री च बृहत्युष्णिग्जगती त्रिष्टुबेव च॥
अनुष्टुप्पङ्क्तिरेतानि छन्दांसि हरयो हरेः।" (वि. पु. २-८-५)

इति।

"सप्ताश्वरूपाश्छन्दांसि वहन्ते [2]वातरंहसः।"

(मत्स्यपु. १२५-४६)

इति मत्स्यपुराणं च बोध्यम्॥

मूर्तिशब्देन कठिनापरपर्यायं घनरूपं गृह्यते। तच्चान्नरूपं चराचरभेदभिन्नं। "या वै सा मूर्तिरजायतान्नं वै तत्" (ऐ. उ. ३-२) इति श्रुतेः। मार्जारादिभोज्यं मूषकादि चरम्, मनुष्यादिभोज्यं व्रीहियवादिकमचरम्, तदुभयात्मकं मूर्तिशब्दितमन्नं नास्त्यस्याभोक्तुः परमेश्वरस्येत्यमूर्तिः। "अनश्नन्नन्योऽभिचाकशीति" (मु. उ. ३-१-१) इति श्रुतेरित्यभिप्रेत्य मूर्तिनाम व्याचष्टे—**मूर्तिर्घनरूपमिति**। अमूर्तानामपि वायुचन्द्रकिरणादीनां सर्पचकोरादीन् प्रत्यन्नत्वमस्तीति तत्सङ्ग्रहार्थमुक्तं भाष्ये—**धारणसमर्थमिति**। अमूर्तं वा मूर्तं वा प्राणिनां देहधारणसमर्थमन्नमात्रमत्र मूर्तिशब्देन गृह्यत इत्यर्थः। चरं—मूषकादि। अचरं—व्रीहियवादि। उक्तार्थे श्रुतिमाह—**ताभ्य इति**।

---

[1] घनरूपधारणासमर्थचराचरलक्षणं—मूर्तिः-**पा.** [2] वाहरंहसः—**पा.** वायुरंहसः-**पा.**

स्तोत्रम्

# अमूर्तिः

भाष्यम्

इति–अमूर्तिः। अथवा देहसंस्थानलक्षणा मूर्छिताङ्गावयवा मूर्तिः, तद्रहित इति–अमूर्तिः। अघं–दुःखं पापं [1] च द्वयमस्य

विवृतिः

'अभितप्ताभ्य एतेभ्यो भूतेभ्यो मनुष्यादीनामन्नभूता व्रीह्यादयो जायन्ताम्, मार्जारादीनामन्नभूतानि मूषकादीनि जायन्ताम्' इत्येवं परमेश्वरसङ्कल्पविषयीकृताभ्यः अद्भ्यः–अबुपलक्षितपञ्चभूतेभ्यः उपादानभूतेभ्यः मूर्तिः–घनरूपं देहधारणसमर्थं चराचरलक्षणमन्नं, अजायत–उत्पन्नमिति श्रुत्यर्थः। मूर्तिः–शरीरं पुण्यापुण्यात्मककर्मजन्यं, तदस्य नेत्यमूर्तिरिति प्रतियोगिभूतमूर्तिशब्दार्थकथनपूर्वकममूर्तिनाम्नोऽर्थान्तरमाह–**अथवेति**। **देहेति**। देहसंस्थानं देहहेतुरवयवसन्निवेशविशेषः। तेन लक्ष्यते 'मनुष्योऽहं' 'गौरयं' इत्यादिरूपेण व्यज्यत इति देहसंस्थानलक्षणेत्यर्थः। **मूर्छिताङ्गावयवेति**। मूर्च्छितानि–स्थूलीभूतानि अङ्गानि तदवयवाः–प्रत्यङ्गानि च यस्याः सा, तथा अवयवानां परस्परानुप्रवेशाद्धि स्थूलीभावः। पटादेर्हि तन्त्वाद्यवयवा इतरेतरानुप्रविष्टा दृश्यन्ते, तन्त्वाद्यवस्थातः स्थूलाश्च। तथा च य एतादृशो मूर्तिशब्दार्थो देहः, तद्रहितोऽमूर्तिरित्यर्थः॥

"अंहो दुःखव्यसनेष्वघम्" (नाम. ३-३-२७) इत्यमरकोशादघं–दुःखं पापं च, तदुभयं न मिलितमस्येत्यनघः। "शुद्धमपापविद्धम्" (ईश. उ. ८) "शोकान्तरम्" (बृह. उ. ४-३-२१) इत्यादिश्रुतेरित्याह—**अघमिति**। अघशब्देन दुःखं पापं चेति मिलितमत्र

---

[1] चास्य–**पा.**

## स्तोत्रम्

# अनघोऽचिन्त्यः

## भाष्यम्

**न विद्यत इति--अनघः। प्रमात्रादिसाक्षित्वेन सर्वप्रमाणागोचरत्वात्--अचिन्त्यः। अयमीदृश इति [1] विश्वप्रपश्चविलक्षणत्वेन चिन्तयितुमशक्यत्वाद्वा--अचिन्त्यः। असन्मार्गवर्तिनां भयं**

## विवृतिः

प्रतिषिध्यते। "अनघो विजयो जेता" (वि. स. २९) इत्यत्र तु केवलं पापमिति न पौनरुक्त्यमिति बोध्यम्। चिन्तयितुं–विचारयितुं प्रत्ययसन्ततिविषयीकर्तुं वा अशक्योऽचिन्त्यः। प्रमाणगोचरीभूतं हि वस्तु चिन्त्यते। प्रमातृप्रमाणप्रमेयाणां साक्षित्वान्न प्रमाणगोचर आत्मा। न हि साक्षी साक्ष्येण गृह्यते। यतः [2] प्रमाणागोचरोऽतो न चिन्तयितुं शक्यत इत्यभिप्रेत्याह—**प्रमात्रादीति**। निर्विशेषचिन्मात्रतया अयमीदृश इति चिन्तयितुं न शक्यत इत्यर्थान्तरमाह—**अयमिति। विश्वप्रपञ्चेति**। सर्वविशेषराहित्येनेत्यर्थः। असन्मार्गवर्तिनां नरकादिरूपं भय करोतीति भयकृदित्याह—**भयमिति**। भक्तानां भयं कृन्तति कृणोतीति वा भयकृदित्यपि पाठः। तत्र "कृती [3] छेदने" "कृञ् हिंसायाम्" इत्याभ्यां क्विप्रत्ययः। कृञस्तुगागमो विशेष इति बोध्यम्॥

नाशयतीति नाशनः, भयानां नाशनो भयनाशनः। ल्युः। वर्णाश्रमाचाररूपपरमेश्वराराधनवतां पुरुषाणां संसारादिभयनाशनादित्य-

---

[1] प्रपञ्च—पा. [2] प्रमाणगो—पा? [3] भेदने—पा?

## स्तोत्रम्

# भयकृद्भयनाशनः ॥ १०२ ॥

# अणुः

### भाष्यम्

करोतीति--भयकृत्। भक्तानां भयं [1] कृन्ततीति वा--भयकृत्। वर्णाश्रमाचारवतां भयं नाशयतीति–भयनाशनः।

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
विष्णुराराध्यते [2] पन्था नान्यस्तत्तोष[3]कारकः ॥
(वि. पु. ३-८-९)

[4] इति पराशरवचनात् ॥ १०२ ॥

सौक्ष्म्यातिशयशालित्वात्—[5] अणुः। "एषोऽणुरात्मा चेतसा वेदितव्यः" (मु. उ. ३-१-९) [6] इति श्रुतेः।

### विवृतिः

भिप्रेत्य वर्णाश्रमाचाराणां परमेश्वराराधनत्वे विष्णुपुराणवचनोदाहरण-पूर्वकं व्याचष्टे—वर्णाश्रमेति ॥ १०२ ॥

पृथिव्याद्याकाशान्तानां भूतानां पूर्वपूर्वमपेक्ष्य उत्तरोत्त[7]रस्य सौक्ष्म्यातिशयान्मूलकारणस्य सर्वातिशायिसौक्ष्म्यवत्तया अणुरिवाणुरिति सौक्ष्म्यगुणयोगाद्गौणतया व्याचष्टे—सौक्ष्म्येति। तत्र श्रुतिमाह—एष इति। अणुः–सूक्ष्मः, चेतसा श्रवणादिसंस्कृतेनेति श्रुत्यर्थः। बर्हति–वर्धते देशकालवस्त्वपरिच्छेदलक्षणां वृद्धिं प्राप्नोति, बृंहयति

---

[1] कृन्तति कृणोतीति वा–पा. [2] वन्द्यो नान्यः–पा. [3] कारणम्-पा. [4] इति विष्णुपुराणे। तैराराधितत्वात्तेषां भयं नाशयतीति वा–भयनाशनः–पा. [5] अणुर्ब्रह्म–पा. [6] इति मन्त्रवर्णात्–पा. [7] रसौक्ष्म्य–पा.

## स्तोत्रम्

# बृहत्

### भाष्यम्

**बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म—बृहत्। "महतो महीयान्" (क. उ. १-२-२०) इति श्रुतेः ॥**

**"अस्थूलम्" (बृह. ३-८-८) इत्यादिना [1] दृश्यत्वप्रति-**

### विवृतिः

प्रपञ्चं वर्धयतीति बृहन्। "बृह वृद्धौ" इत्यस्माद्धातोः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (उणा. सू.२४१) इति निपातनाद्गुणाभावे बृहदिति रूपम्। अत्र अतिप्रत्ययेन हेतुकर्तृसाधारणकर्तृत्वसामान्यं प्रतिपाद्यते। तथाच बृहधात्वर्थवृद्धिं प्रति कर्ता हेतुकर्ता चेत्युभयमपि कर्तृत्वेन रूपेण [2] लक्ष्यत इति वर्धिता वर्धयिता चेति बृहत्पदेनोच्यते। तथाचोक्तं गुहाधिकरणे (ब्र. सू. १-२-११) परिमले—"प्रकृति-प्रत्ययावुभावपि मुख्यावेव। हेतुकर्तृसाधारणकर्तृत्वसामान्यस्य कृदर्थत्वात्। हेतुकर्तृत्वरूपकर्तृत्वविशेषविवक्षायां णिजर्थान्तर्भावे कर्तव्येऽपि कर्तृत्वसामान्यविवक्षायां तदन्तर्भावानपेक्षणात्।" इत्याभिप्रेत्य बृहदिति नाम व्याचष्टे—**बृहत्त्वाद्बृंहणत्वाच्चेति**। वृद्ध्यर्थवृद्धिं प्रति कर्तृत्वाद्धेतुकर्तृत्वाच्चेत्यर्थः ॥

कृशः—सूक्ष्मप्रपञ्चात्मकः; स्थूलः—स्थूलप्रपञ्चात्मकः; तदुभयोपादानकारणतया तत्तादात्म्यादित्यभिप्रेत्य कृशः स्थूल इति नामद्वयं व्याचष्टे—**अस्थूलमित्यादिनेति**। ननु किमर्थमौपचारिकत्वं कल्प्यते? मुख्यमेव कार्श्यं स्थौल्यं च कुतो न स्यादित्यत्राह—[3] **दृश्यत्वप्रतिषेधादिति**। प्रतिषेधकवाक्यं पठति—**अस्थूलमिति**।

---

[1] द्रव्यत्व—**पा.** [2] लभ्यत इति—**पा.** [3] द्रव्यत्व—**पा.**

### स्तोत्रम्

## कृशः स्थूलो गुणभृन्निर्गुणः

### भाष्यम्

षेधात्—कृशः, स्थूलः [1] इत्युपचर्यते, सर्वात्मकत्वात् । सत्त्वरजस्तमसां सृष्टिस्थितिलयकर्मस्वधिष्ठातृत्वात्—गुणभृत् । [2] वस्तुतो गुणाभावात्—निर्गुणः । "साक्षी चेता केवलो निर्गुणश्च" (श्वे. ६·११) इति श्रुतेः ॥

### विवृतिः

नञत्र प्रतिषेधार्थस्तत्पुरुषो बहुव्रीहिर्वा । आद्ये न स्थूलमिति स्थूलपरिमाणतादात्म्यनिषेधः । द्वितीये न विद्यते स्थूलमस्येति सम्बन्धसामान्यनिषेधः । *एवमन्यत्रापि । तथाच दृश्यमात्रप्रतिषेधान्न वास्तवं स्थूलादितादात्म्यमित्यमुख्यं तदित्यर्थः । गुणाः—रजस्सत्त्वं तम इत्येवं प्रसिद्धाः, तान् बिभर्ति—ब्रह्मविष्णुशिवरूपेणाभिमन्यते सृष्टिस्थितिसंहारार्थमिति गुणभृदित्याह—**सृष्टीति** । **अधिष्ठातृत्वादिति** । गुणेषु तादात्म्याभिमानादित्यर्थः । परमार्थतो गुणाभावान्निर्गता गुणा यस्मात्सः निर्गुण इत्याह—**वस्तुत इति** । तत्र श्रुतिमाह—**साक्षीति** ॥

लोके हि गुणान् दोषाभावांश्च निमित्तीकृत्य महानिति व्यवह्रियते । परमेश्वरोऽपि गुणवत्त्वाद्दोषाभाववत्त्वाच्च महानित्युच्यते ।

---

* श्रुतौ अस्थूलपदस्येव अनण्वादिपदानामप्यर्थो बोध्य इत्यर्थः ।

[1] इत्युपपद्यते—**पा.** [2] परमार्थतो गु—**पा.**

## स्तोत्रम्

# महान् ।

### भाष्यम्

[1]शब्दादिगुणरहितत्वात् निरतिशयसूक्ष्मत्वात् नित्यशुद्ध-सर्वगतत्वादिना च [2]प्रतिबन्धकधर्मजातं [3]तर्कतोऽपि यतो वक्तुं न शक्यमत एव—महान् ।

### विवृतिः

तत्र महच्छब्दप्रवृत्तिनिमित्तभूतं दोषाभावमाह—**अत एवेति**। प्रतिबन्धकधर्मजाताभावादेवेत्यर्थः । अतश्शब्दपरामृष्टं प्रतिबन्धकधर्मरूपदोषाभावमाह—**प्रतिबन्धकेति** । प्रतिबन्धकधर्मजातं निरतिशयानन्दावि[4]र्भावनित्यत्वादितिरोधायकं प्रतिबन्धकधर्मसामान्यमविद्याकामकर्मरूपम् । तेन जीवगतनित्यत्वशुद्धत्वादीनां तिरोहितत्वात् । *"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" (ब्र. सू. ३-२-५) इति शारीरकसूत्रात्। तच्च जीव एव, नेश्वरेऽस्ति, प्रमाणाभावात् ; चेतनत्वाज्जीव इव स्यादिति तर्कतोऽपि वक्तुं न शक्यम्। अति[5]गम्भीरे भावे तर्काणामप्रवृत्तेः। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति स्मृतेरित्यर्थः। अनेन जीववैलक्षण्यं दर्शितम्। एवमविद्यादिदोषाभाववत्त्वान्महानित्युक्तम्। गुणदोषाभावान्तराण्याह—**नित्येत्यादि**। नित्यत्वात् शुद्धत्वात् सर्वगतत्वादित्यर्थः । तत्र नित्यत्वं विनाशयोग्यतारूपदोषाभाववत्त्वम्। शुद्धत्वं पाप्मरूपदोषाभाववत्त्वम् । सर्वगतत्वं व्यापित्वम् । स च गुणः । एतानि निरतिशयानि

---

* अस्य जीवस्य तिरोहितमैश्वर्यं परमेश्वराभिध्यानादभिव्यक्तं भवति। यतोऽज्ञातात्तस्मादीश्वरादस्य बन्धो ज्ञाताच्च मोक्षः। "ज्ञात्वा देवं" इत्यादिश्रुतेरिति सूत्रार्थः।

[1] शब्दादिरहितत्वात्—पा. [2] सर्वगतत्वादिप्रतिबन्धक—पा. [3] तर्केणापि—पा. [4] र्भावतिरोभावकं—पा. [5] गभीरे—पा.

## विवृतिः

ब्रह्मणि महच्छब्दप्रवृत्तौ निमित्तानि, तद्वत्त्वान्महानित्यर्थः। गुणान्तरमप्याह—**निरतिशयेति**। निरतिशयसूक्ष्मत्ववत्त्वेन महानित्युच्यत इत्यर्थः। निरतिशयसूक्ष्मत्वतादृशनित्यत्वशुद्धत्वादौ हेतुमाह—**शब्दादीति**। गन्धादीनामेकैकगुणोत्कर्षेण सूक्ष्मत्वमहत्त्वशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति ते गन्धादयः स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति किं तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्यर्थः। अनेन जडवैलक्षण्यं दर्शितम्। यद्वा उत्कृष्टो महानिति व्यवह्रियते लोके। परमेश्वरोऽ[1]प्युत्कर्षवत्त्वान्महानित्युच्यत इत्युत्कर्षान्महच्छब्दप्रवृत्तिनिमित्तभूतानाह—**शब्दादीति**। शब्दादीनां गुणकार्यत्वात्तदभावो दोषाभावरूपोत्कर्षः, तद्वान् महानित्यर्थः। उत्कर्षान्तरमाह—**निरतिशयेति**। निरतिशयसूक्ष्मत्वरूपोत्कर्षवत्त्वान्महानित्यर्थः। निरतिशयनित्यत्वशुद्धत्वसर्वगतत्वरूपोत्कर्षवत्त्वान्महानित्याह—**नित्येत्यादि**। ऐश्वर्यादिप्रतिबन्धकाविद्याकामकर्मरूपधर्माभावरूपोत्कर्षवत्त्वान्महानित्याह —**अत एवेति**। अविद्याकामकर्मरूपप्रतिबन्धकधर्मसामान्याभावादेवेत्यर्थः। प्रतिबन्धकधर्मजाताभावमतश्शब्दपरामृष्टं दर्शयति—**प्रतिबन्धकेति**। अन्यत्पूर्ववत्। केषुचित्पुस्तकेषु नित्यशुद्धसर्वगतत्वादिप्रतिबन्धकधर्मजातं तर्कतोऽपि वक्तुं न शक्यमिति समस्तपाठो दृश्यते। तस्यायमर्थः। नित्यत्वशुद्धत्वसर्वगतत्वनित्यमुक्तत्वाद्यभिव्यक्तिप्रतिबन्धकधर्मजातमविद्यादिकमेव। तेन जीवगतनित्यत्वादीनां तिरोहितत्वात्। तच्च नेश्वरे सम्भवति। चेतनत्वात्स्यादिति तर्कोऽपि न प्रवर्तते यस्मादत एव नित्यत्वादिप्रतिबन्धकाविद्यादिधर्मसामान्याभावरूपोत्कर्षवत्त्वान्महा-

[1] प्युत्कृष्टत्वात्–पा.

विवृतिः

नित्याह—**नित्यशुद्धेत्यादि** । तर्काप्रवृत्तौ हेतुमाह—**निरतिशय-सूक्ष्मत्वादिति** । दुर्ज्ञेयत्वात्तत्र तर्काप्रवृत्तेरित्यर्थः । निरतिशय-सूक्ष्मत्वे हेतुमाह **शब्दादीति** । निरतिशयसूक्ष्मत्वसाधकतयोपपादितोऽयं हेतुरधस्तात् । अथ वा उत्कृष्टो महानिति व्यवह्रियते । उत्कृष्टत्वं च स्थावरादिब्रह्मान्तेषु प्राणिषु यस्य यमपेक्ष्य नित्यशुद्धत्वादि-प्रतिबन्धकस्याविद्याकर्मादेरपचयः स तत्र उत्कृष्टः । परमेश्वरे तु सङ्कोचकप्रमाणाभावात्प्रतिबन्धकमात्राभावः । चेतनत्वाज्जीवस्यादिति तर्कतोऽपि प्रतिबन्धकधर्मजातं वक्तुं न शक्यं यतोऽत एव नित्यत्वादिप्रतिबन्धकधर्मसामान्याभावरूपनिरतिशयोत्कर्षवत्वान्महानि--त्याह—**नित्येति** । निरतिशयसूक्ष्मत्वं तर्काप्रवृत्तौ हेतुः । तत्र च शब्दादिगुणहीनत्वं हेतुरिति [1]पूर्ववद्व्याख्यानं द्रष्टव्यम् । अविद्या-वरणतारतम्याच्चेतनोत्कर्षापकर्षावित्यत्र विष्णुपुराणम्—

" अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
या क्षेत्रज्ञशक्तिः सा वेष्टिता नृप [2]सर्वगा ॥
संसारतापानखिलानवाप्नोत्यति[3]सम्भवान् ।
तथा तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल ! तारतम्येन लक्ष्यते ।
अप्राणवत्सु स्वल्पा सा स्थावरेषु ततोऽधिका ॥
सरीसृपेषु [4]तेभ्योऽन्याऽप्यतिशक्त्या पतत्रिषु ।
पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ॥
पशुभ्यो [5]मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ।
तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ! ॥

---

[1] पूर्वव्याख्यानं—**पा.** [2] सर्वदा—**पा.** [3] सन्ततान्—**पा.** [4] तेभ्योऽपि ह्यतिशक्त्या—**पा.** [5] मनुजाश्चापि शक्त्या—**पा.**

भाष्यम्

**अशब्दोशरीरोऽस्पर्शश्च महाञ्छुचिः" (आप. ध. सू. १-८-७) इत्यापस्तम्बः ॥**

विवृतिः

शक्रस्समस्तदेवेभ्यस्ततश्चा[1]पि प्रजापतिः ॥
हिरण्यगर्भोऽपि ततः पुंसश्शक्त्युपलक्षितः" ॥
(वि. पु. ६-७-६१-६७) इति ॥

व्याप्यव्याप[2]कभेदे हेतुभूतं विष्णोः शक्त्यन्तरमाह—अविद्येति। अविद्येति कर्मेति च संज्ञा यस्याः सा, तया च मायोपलक्ष्यते। हेतुहेतुमतोरविद्याकर्मणोरेकीकृत्योक्तिः संसारलक्षण[3]कार्यैक्यात्। तदेवाह—ययेति। वस्तुतः सर्वगतापि सा क्षेत्रज्ञशक्तिः यया—अविद्यया वेष्टिता सती भेदं प्राप्य कर्मभिः संसार[4]तापान् प्राप्नोतीत्यर्थः। जीवानां न्यूनाधिकभावेऽपि सैव हेतुरित्याह—तयेति। तारतम्यमेवाह—अप्राणवत्स्वित्यादिसार्धै*श्चतुर्भिः। अप्राणवत्स्विति। अप्राणवत्सु—अनभिव्यक्तप्राणेषु, स्वल्पा—[5] अत्यन्तमल्पा, स्थावरेषु ततोऽधिका—स्वल्पतोऽधिका, सरीसृपेषु—क्षुद्रजन्तुषु तेभ्योऽधिका, पतत्रिषु अतिशक्त्या—अधिकशक्त्या लक्ष्यते। शक्र इति। ततः—शक्रादतिशयितः प्रजापतिरिति विष्णुपुराणश्लोकानामर्थः। शब्दादिरहितत्वान्महानित्यत्र आपस्तम्बस्मृतिं पठति—**अशब्द इति**। शब्दस्पर्शग्रहणं रूपरसगन्धानामप्युपलक्षणम्। शब्दादिगुणपञ्चकरहितत्वात् महान्। अशरीरः—लिङ्गशरीररहितः, शुचिः—अविद्यारहित इति स्मृत्यर्थः ॥

---

* विष्णुपुराणे (मुद्रितकोशेषु) "अप्राणवत्सु" इत्यारभ्य "पुंसः शक्त्युपलक्षितः" इत्यन्तभागे तारतम्यप्रतिपादके सार्धश्लोकत्रयमेवोपलभ्यते। अत्रापि भाष्ये तथैव दृश्यते।

[1] तिप्रजापतिः—**पा.** [2] कहेतुभूतं—**पा.** [3] कार्ये स्यात्—**पा.** [4] तापं—**पा.** [5] अल्पतमा—**पा.**

## स्तोत्रम्

# अधृतः

## भाष्यम्

**पृथिव्यादीनां धारकाणामपि धारकत्वान्न केनाचिद्ध्रियत इति — अधृतः। यद्येवमयं केन धार्यत इत्याशङ्क्याह—स्वेनैव**

## विवृतिः

धारकत्वेन प्रसिद्धानामपि पृथिव्यादीनां धारकत्वात्स्वयं केनापि न धृत इत्यधृतनामा हरिरित्याह—**पृथिव्यादीनामिति**। आदि-शब्देनानन्तदिग्गजादयो गृह्यन्ते। ननु यद्यद्धारकं तत्तत्केनचिद्धृतमिति पृथिव्यादिषु दृष्टम्, परमात्मनोऽपि धारकत्वात् केनचिद्धृतत्वं स्यादित्याशङ्क्य तन्त्रादिना स्वधृत इत्यत्र स्वशब्दस्यात्मात्मीयोभयपरतामाश्रित्य स्वधृतनामव्याख्यानेन पूर्वपक्षानुमानस्य बाधसिद्धसाधने दर्शयन् समाधत्ते—**यद्येवमित्यादिना**। एवं—धारकाणामपि धारकत्वे, "एवं च यद्धारकं तत्केनचिद्धृतम्" इति व्याप्तेरस्यापि केनाचिद्धृतत्वं वक्तव्यमित्यर्थः। स्वेन—आत्मनैव धार्यत इति समाधानम्। अयं भावः—किं केनचिद्धृतत्वमात्रमाशङ्क्यते? परमार्थभूतेन केन चिद्धृतत्वं वा? नाद्यः। स्वधृत इत्यत्र स्वशब्देनात्मीयवाचिना स्वाध्यस्ततया स्वीयेन दृश्यमात्रेण धृतत्वादुक्तानुमानस्य सिद्धसाधनता। न द्वितीयः। परमार्थेन केनचिद्धृतमित्यत्रापि ब्रह्मस्वरूपेण परमार्थेन धृतमिति, ब्रह्मव्यतिरिक्तेन परमार्थेन धृतमिति वा? नाद्यः। आधाराधेयभावस्य "अन्योऽह्यन्यस्मिन् प्रतिष्ठितः" इति श्रुत्या स्वभिन्ननिष्ठत्वावगमात्, स्वस्य स्वधृतत्वायोगात्। न द्वितीयः। ब्रह्मव्यतिरिक्तस्य परमार्थस्य कस्यचिदर्थस्याभावात्, तथात्वे ब्रह्मणो भूमत्व

## स्तोत्रम्

# स्वधृतः

### भाष्यम्

**आत्मना धार्यत इति—स्वधृतः। "स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि" (छा. ७-२४-१) इति श्रुतेः। सु शो[1]भनं पद्मो[2]दरतलवत्ताम्रमभिरूपतममस्यास्यमिति —**

### विवृतिः

व्याघातात्, तद्भूतत्वसाधने बाधादित्यनुमानस्य सिद्धसाधनत्वमुच्यत इति व्याख्याने भाष्ये स्वेनेत्यस्य स्वकीयेनेत्यर्थः। बाध उच्यत इति व्याख्याने स्वेनेत्यस्य व्याख्यानमात्मनैवेति। व्यतिरिक्तेन केनचित्परमार्थेन न धृत इत्यर्थः। तथा च बाधो दर्शितः। बाधसिद्धसाधनाभ्यामुक्तानुमानं दुष्टमित्यस्मिन्नर्थे श्रुतिमुदाहरति—**स भगव इति**। सः "यत्र नान्यत् पश्यति" (छा. उ. ७-२४-१) इत्याद्युक्तलक्षणो भूमा हे भगवन् कस्मिन् प्रतिष्ठित इत्युक्तवन्तं **नारदं** प्रत्याह सनत्कुमारः स्वे महिम्नीति। **स्वे**—आत्मीये, **महिम्नि**—महात्म्ये विभूतौ **प्रतिष्ठितो** भूमा; यदि कंचित् प्रतिष्ठां पृच्छसि यदि वा परमार्थमेव पृच्छसि न महिम्न्यपि प्रतिष्ठित इति ब्रूमः—अप्रतिष्ठितोऽनाश्रितो भूमा क्वचिदपीत्यर्थः। एवञ्चाधृतनामार्थ एव स्वधृतनाम्नाप्याशङ्कानिराकरणेन स्पष्टीकृत इति बोध्यम् ॥

शोभनं आस्यं—मुखमस्येति स्वास्य इत्याह—**पद्मेति**। नामान्तर्गतसुशब्दार्थमाह—**अभिरूपतममिति**। मनोज्ञतममित्यर्थः। अभिरूपतमत्वे हेतु[3]गर्भविशेषणं **पद्मेति**। आस्ये भवः आस्यः,

---

[1] सुष्ठु पद्मो-**पा.**　　[2] दरदलवत्ताम्रमास्य-**पा.**　　[3] गर्भितं वि-**पा.**

## स्तोत्रम्

# [1]स्वास्यः

### भाष्यम्

**स्वास्यः। वेदात्मको महान् शब्दराशिः तस्य मुखान्निर्गतः पुरुषार्थोपदेशार्थमिति वा—स्वास्यः[2]। "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (बृह. ४-४-१०) इत्यादि-**

### विवृतिः

शरीरावयवाद्यत्, वेदात्मको महान् शब्दराशिः, स च शोभनः। लोकानामिष्टानिष्टप्राप्तिपरिहारसाधनप्रकाशकत्वात्। एवञ्च सु-शोभनः आस्यः—आस्ये भवो वेदराशिर्यस्य स स्वास्य इत्यर्थान्तरमाह—**वेदात्मक इति।** वेदात्मको महान् शब्दराशिः मुखान्निर्गत इत्येतदास्ये भव आस्य इति तद्धितान्तशब्दस्यैव विवरणम्। पुरुषार्थोपदेशार्थमिति सुशब्दस्य व्याख्यानम्। [3]तस्येति तु बहुव्रीहित्वं दर्शयितुमिति विवेकः। वेदानां परमेश्वरोद्भवत्वे श्रुतिमाह–**अस्येति।** **अस्य**–प्रकृतस्य, **महतः**–अपरिच्छिन्नस्य, **भूतस्य**–नित्यसिद्धस्य परमात्मनो निःश्वसितवन्निः**श्वसितं**–अप्रयत्नसाध्यं, किं तदित्यत आह–**ऋग्वेद इत्यादीति।** इति श्रुत्यर्थः॥

प्रागेव प्रवृत्तो वंशः हिरण्यगर्भादिरूपप्रपञ्चोऽस्येति प्राग्वंशः। अन्येषां वसिष्ठादीनां वंशस्तु न प्राक् प्रवृत्तः। "हिरण्यगर्भं जनयामास पूर्वम्" (श्वे. उ. ३-४) इति श्रुतेरित्यभिप्रेत्याह—

---

[1] स्वास्थ्यः-**पा.** [2] शोभनमास्यमस्येति वा स्वास्यः-**पा.** [3] अस्येति-**पा.**

स्तोत्रम्

# प्राग्वंशो वंशवर्धनः ॥ १०३ ॥

भाष्यम्

**श्रुतेः[1]। अन्यस्य वंशिनो [2]वंशः पाश्चात्यः, अस्य वंशः-प्रपञ्चः[3] प्रागेव, न पाश्चात्य इति—प्राग्वंशः। वंशं-प्रपञ्चं वर्धयन् छेदयन् वा—वंशवर्धनः[4] ॥ १०३ ॥**

विवृतिः

**अन्यस्येति** । अन्यस्य—वसिष्ठादेः, वंशः पाश्चात्यः-पश्चात्प्रवृत्तः । अस्य परमेश्वरस्य वंशः-प्रपञ्चः हिरण्यगर्भादिर्यः स प्रागेव प्रवृत्तो न पश्चात्प्रवृत्त इत्यर्थः । यद्वा प्राक् प्राक्कल्पीयोऽपि वंशः-प्रपञ्चोऽस्यैवेति अपिशब्दार्थमन्तर्भाव्य बहुव्रीहिः । भाष्ये प्रागेवेत्यत्र एवकारो भिन्नक्रमो न पाश्चात्य इत्यनेन सम्बध्यते । तथाचास्य परमेश्वरस्य वंशः प्राक्कल्पीयोऽपि न पाश्चात्य एवेति योजना । एवञ्च सर्वकल्पानुयायिवंशकर्तृत्वमेकस्य परमेश्वरस्यैव, नान्येषां हिरण्यगर्भादीनाम् । तेषां प्रतिकल्पं भेदादित्यर्थः । वंशः-प्रपञ्चः, तं वर्धयति स्थितिकाले, छेदयति प्रलयकाल इति "वर्ध छेदनपूरणयोः" इति धातोः कर्तरिल्युडित्याह—**वंशमिति** ॥ १०३ ॥

---

[1] अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी शुद्धा यतः सर्वाः प्रवृत्तयः ॥ इति स्मृतेः—**पा**.

[2] वंशः मूलपुरुषादर्वाक् इति सूचितः पाश्चात्यश्च—**पा**. [3] सर्ववंशात् प्रागेव—**पा**.

[4] "वृधु छेदनपूरणयोः" इति धातुः—**पा**.

स्तोत्रम्

## भारभृत्कथितः

भाष्यम्

अनन्तादिरूपेण भुवो भारं [1]बिभर्तीति—भारभृत्। वेदादिभिरयमेक एव परत्वेन कथित इति—कथितः। सर्वैः वेदैः कथित इति वा—कथितः। "सर्वे वेदा यत्पदमामनन्ति" (कठ. १-२-१५) "वेदैश्च सर्वैरहमेव वेद्यः" (भ. गी. १५-१५)

"वेदे रामायणे पुण्ये भारते भरतर्षभ!।
[2]आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते॥"
(हरि. भवि. १३२-१५)

विवृतिः

भुवो भारं बिभर्तीति भारभृत् शेषरूप इत्याह—अनन्तेति। वेदादिभिरयमेव परमेश्वरः परत्वेन—श्रेष्ठत्वेन कथ्यते स्मेति कथितः। अथवा सर्वैर्वेदैः कथित इति कथितनाम्नोच्यत इत्यर्थद्वयपरतया कथितनाम व्याचष्टे—वेदादिभिरिति। सर्वैर्वेदैर्विष्णुरेव प्रतिपाद्यत इति द्वितीयव्याख्याने श्रुतिं पठति सर्व इति। सर्वे वेदाः यद्रूपं पदं—पदनीयं आमनन्ति—तात्पर्येण प्रतिपादयन्ति तत्ते पदं ब्रवीमीति तुरीयपादेन सम्बन्धः। सर्वैर्वेदैः प्रतिपाद्यत इत्यत्रैव भगवद्वचनरूपां स्मृतिं पठति—वेदैरिति। ननु वेदैः प्रतिपाद्यमानोऽपि न तात्पर्येणेत्याशङ्क्य तात्पर्यलिङ्गप्रदर्शनपूर्वकं विष्णोरेव तात्पर्यं दर्शयन्तीं स्मृतिं पठति—वेद इति। जातावेकवचनम्। वेदेष्वित्यर्थः। एवं

---

[1] बिभ्रत्-पा. [2] आदौ चान्ते च मध्ये च हरिः स-पा.

भाष्यम्

[1]इति श्रुतिस्मृत्यादिवचनेभ्यः । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ. उ. १–३–९) इत्याद्युक्तम् । किं तदध्वनो विष्णोर्व्यापनशीलस्य परमं पदं [2]सतत्त्वमित्याकाङ्क्षायां इन्द्रियादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्यते, "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यारभ्य "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" (कठ. उ. १-३-१०-११) इत्यन्तेन यः कथितः स [3]कथितः ॥

विवृतिः

*पुराण इत्यत्रापि । आदिमध्यावसानेषु स एव प्रतिपाद्यत इति तात्पर्यलिङ्गप्रदर्शनेन स एव तात्पर्यविषयो वेदादीनामिति [4]स्मृतिर्दर्शयतीत्यर्थः । वेदादिभिः परत्वेन कथित इति प्रथमव्याख्याने विष्णोः परत्ववैशिष्ट्यप्रतिपादिकां श्रुतिं वक्तुं तत्पूर्वश्रुत्युक्तमनुवदति—**सोऽध्वन इति** । "आत्मानं रथिनं विद्धि" (कठ. उ. ३-३) इत्यादिपूर्ववाक्येष्विन्द्रियादिभिरसंयतैः संसारमधिगच्छति । संयतैस्त्वध्वनः—संसारगतेः पारं—अन्तं विष्णुस्वरूपं परमं पदं प्राप्नोतीति, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ. ३-९) इत्यनेनोक्तमित्यर्थः । एवं पूर्वश्रुत्युक्तमनूद्य तदाकाङ्क्षाप्रदर्शनपूर्वकं विष्णोः परत्वेन प्रतिपादकं वाक्यमुदाहृत्य तेन वाक्येन परमात्मा परत्वेन कथित इति कथितनाम्नोच्यत इत्याह—**किं तदिति** । "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यारभ्य "सा काष्ठा सा परा गतिः" (कठ.१-३-१० ११) इत्यन्तेनेन्द्रियादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्यते यः स कथितनाम्नोच्यत इति योजना ।

---

* अत्र रामायणे इति स्यात् ।

[1] इत्यादिवचनेभ्यः–**पा.** [2] विष्णुसतत्त्वमि–**पा.** सत्यमिति–**पा.** [3] कथित इत्युक्तम्–**पा.** [4] स्मृतिं द–**पा.**

विवृतिः

"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादिश्रुतेरयमर्थः। इद्रियेभ्यस्तद्विषयाः वशीकार्यत्वेन पराः—श्रेष्ठाः, वश्येन्द्रियस्यापि विषयसन्निधौ इन्द्रियविजृम्भणात्। तेभ्योऽपि मनः परम्। मनसि [1]विषयध्यानप्रवृत्ते विषयासन्निधानेऽपि रागविजृम्भणात्। तस्मादपि बुद्धिः परा। इदमित्थं कर्तव्यमित्यध्यवसायाभावे मनसोऽकिञ्चित्करत्वात्। ततोऽप्यात्मा परः। बुद्धिप्रवृत्तेरप्यात्माधीनत्वात्। तस्मादप्यव्यक्तशब्दितं शरीरं परम्। तदायत्तत्वात्तत्तदिन्द्रियार्थमनोबुद्धिप्रयुक्तपुरुष[2]व्यापाराणाम्। अतो हितमितमेध्याशनादिभिः शरीरवशीकरणेऽत्यन्तमेव यतितव्यमिति वशीकार्यत्वेन परापरभावो विविच्यत इति। अव्यक्तात्—शरीरात् पुरुषः—परमात्मा परः—श्रेष्ठः। सर्वैरेतैर्वशीकृतैः पुरुषस्यैव [3]प्राप्तव्यत्वात्। पुरुषादपि परस्य प्रसङ्गं वारयति पुरुषादिति। पुरुषात् परं किञ्चिदपि वस्तु नास्त्येव। सा काष्ठा—परत्वस्य पर्यवसानभूमिः। विधेयमपेक्ष्य स्त्रीत्वम्। सैव गन्तॄणां संसारिणां परा—प्रकृष्टा गतिः—गन्तव्यं वस्तु। अन्यास्तु गतयः पुनरावृत्तिमत्त्वादपरा इति श्रुतेरर्थः। वेदादिभिः परत्वेन कथित इत्यत्रादिशब्देन—

"इन्द्रियाणि [4]पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः"॥

(भ. गी. ३-४२)

इति भगवद्वचनं गृह्यते॥

युज्यते जीवो ब्रह्मण्यनेनेति "युजिर् योगे" इत्यस्मात् करणे घञ्। योगो ज्ञानम्, विषयतया तद्वान् योगी। विषयतासम्बन्धे

---

[1] विषयाध्यासप्र—पा. [2] व्यवहाराणाम्—पा. [3] प्राप्यत्वात्—पा.
[4] पराण्याहुरित्यादि भगवद्वचनं—पा.

### भाष्यम्

**योगः—ज्ञानम्, तेनैव[1] गम्यत्वात्—योगी। योगः—**

### विवृतिः

मत्वर्थीय इनिरित्यभिप्रेत्याह—**योग इति**। "युज समाधौ" अस्माद्भावे घञ्। योगः—समाधिः, स च द्विविधः। सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति। तत्र सम्प्रज्ञातसमाधिस्वरूपमुक्तं योगसूत्रकारैः "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" (यो. सू. ३-३) इति। तच्छब्देन पूर्वसूत्रोक्तध्यानं परामृश्यते। तदतिस्वच्छचित्तवृत्तिप्रवाहरूपं विजातीयवृत्त्यनवच्छिन्नं ध्यानमेवार्थरूपेण निर्भासमानं समाधिः। मात्रचोऽर्थमाह—स्वरूपशून्यमिवेति। ध्यान[2]स्वरूपं विज्ञानशून्यं इवशब्देन ध्यानसत्तां द्योतयति; यथा स्वच्छस्फटिकमणिः कुसुमरूपेणैव निर्भासते, न स्वरूपेण, तद्वदित्यर्थः। विजातीयवृत्त्यनवच्छिन्नं ध्यानं ध्येयध्यानध्यातृस्फूर्तिमत्। ध्येयमात्रस्फूर्तिमान् समाधिः। स एव दीर्घकालभावी सन् सम्प्रज्ञाताख्यो योग उच्यते। ध्येयस्फूर्तिशून्योऽसम्प्रज्ञात इति च भेदः। तथाचोक्तलक्षणसमाधिमत्तया योगीत्यर्थान्तरमाह—**योगः समाधिरिति**। यद्वा "योगश्चित्तवृत्तिनिरोधः" (यो. सू. १-२) इति योगसूत्रोक्तलक्षणो योगो द्विविधः। सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति। सम्यक्—संशयविपर्ययानध्यवसायरहितत्वेन प्रज्ञायते—प्रकर्षेण ज्ञायते बोध्यस्वरूपं येन स सम्प्रज्ञातसमाधिः सात्त्विकवृत्तिरूपो भावनाविशेषः। भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनरूपा। अस्मिंश्च सम्प्रज्ञाते समाधौ रजस्तमोवृत्तेर्निरोधात् "योगश्चित्तवृत्तिनिरोधः" (यो.सू. १-२) इति सामान्यलक्षणानुगमः।

---

[1] व गम्यत इति योगी—**पा.**　　[2] स्वरूपवि—**पा.**

### भाष्यम्

[1] **समाधिः, स हि स्वात्मनि सर्वदा समाधत्ते [2] स्वमात्मानम्, तेन**

### विवृतिः

तादृशसात्त्विकवृत्तेर्निरोधादसम्प्रज्ञातसमाधिः। तद्वान् योगीत्यर्थान्तरमाह—**योगः समाधिरिति**। प्रकृत्युपात्तं समाधिस्वरूपमिनिप्रत्ययोपात्तं तद्वत्त्वं च विवृणोति—**स हीति**। तथा च स परमेश्वरः तं स्वमात्मानमद्वैतसच्चित्सुखात्मकं स्वात्मनि—स्वचित्ते समाधत्ते—भावयतीति सम्प्रज्ञातसमाधिपक्षे, स्वात्मनि—स्वचित्ते निरुद्धसर्ववृत्तिके समाधत्ते—स्वमात्मानं योजयतीत्यसम्प्रज्ञातसमाधिपक्षे च भाष्यार्थो द्रष्टव्यः। स हि [3] तं [4] स्वात्मना समाधत्ते। स्वात्मानमित्यपि पाठो दृश्यते। तत्र स हि—परमेश्वरः, तं—स्वात्मानमद्वैतपरमानन्दरूपं, स्वात्मना—स्वचित्तेन, समाधत्ते—भावयतीति सम्प्रज्ञातपक्षे, स्वात्मना निरुद्धसर्ववृत्तिकेन तं स्वात्मानं समाधत्ते—योजयतीत्यसम्प्रज्ञातपक्षे चार्थो बोध्यः। **तेन वेति**। येन उक्तयोगवत्त्वं तेन हेतुना योगीत्युच्यते। वाशब्दो व्याख्यानान्तर[5]प्रदर्शनार्थः। योगिनामीशः—स्वामी, अन्येभ्यो योगिभ्यो योगान्तरायवद्भ्यस्तद्रहितत्वेनोत्कृष्टत्वात् अन्येषां योगिनां तल्लाभस्येश्वरप्रणि[6]धानाधीनत्वाच्च। "ईश्वरप्रणिधानाद्वा" (यो. सू. १-२३) इति योगसूत्रात्। योगान्तरायाश्च योगसूत्रकारेण दर्शिताः "व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" (यो. सू. १-३०) इति। तत्र व्याधिः—वातपित्तश्लेष्मणामन्नरसस्येन्द्रियाणां वा वैषम्यम्। स्त्यानं—चित्तस्य लघुत्वेऽपि कर्मानर्हता। संशयः—प्रसिद्धः।

---

[1] समाधिसहितः-**पा.** [2] स्वात्मानं-**पा.** [3] ते—**पा.** [4] स्वमात्मानं स—**पा.**
[5] प्रदर्शनार्थ इत्यर्थः—**पा.** [6] धानत्वाच्च—**पा.**

## स्तोत्रम्

# योगी योगीशः सर्वकामदः ।

## भाष्यम्

वा—योगी । अन्ये योगिनो [1]योगान्तरायैर्हन्यन्ते—स्वरूपात्प्रमाद्यन्ति। अयं तु तद्रहितत्वात्तेषामीश इति—योगीशः । सर्वान् कामान् [2]ददातीति—सर्वकामदः । "फलमत उपपत्तेः" (ब्र. सू. ३-२-३८) इति [3]व्यासेनाभिहितत्वात् ॥

## विवृतिः

योगाङ्गाननुष्ठानं–प्रमादः । आलस्यं–चित्तस्य गुरुत्वादप्रवृत्तिः । अविरतिः–विषयतृष्णा । भ्रान्तिदर्शनं–एककोटिको विपर्ययः । अलब्धभूमिकत्वं–समाधिभूम्यलाभः । अनवस्थितत्वं नाम चित्तस्यास्थिरत्वम् । पूर्वभूमौ स्थितं हि चित्तमुत्तरभूमिं जयेत् । तस्मादस्थिरत्वं दोष इत्यर्थ इत्यभिप्रेत्य व्याचष्टे —**अन्य इति** ॥

सर्वान् कामान्—काम्यमानान् अर्थान् ददातीति सर्वकामदः । "एष उ एव वामनीरेष हि सर्वाणि वामानि नयति" (छा. ४-१५-३) इति श्रुतेरित्याह—**सर्वानिति**। परमेश्वरस्य कर्मफलदातृत्वे शारीरकसूत्रं पठति—**फलमिति**। अतः—परमेश्वरात् फलं सर्वस्य लोकस्य भवितुमर्हति। क्षणिकात् कर्मणः फलासम्भवेनेश्वरस्यैव फलदातृत्वोपपत्तेरित्यर्थः ॥

---

[1] अन्तरायैः–**पा.** [2] सदा ददातीति–**पा.** [3] भगवता श्रीमद्व्यासे–**पा.** व्यासवचनात्–**पा.**

## स्तोत्रम्

# आश्रमः

### भाष्यम्

[1]आश्रमवत् सर्वेषां [2]संसारारण्ये [3]भ्रमतां विश्रमस्थानत्वात्—आश्रमः। अविवेकिनः [4]सर्वान् सन्तापयतीति—

### विवृतिः

[5]आश्रमवदाश्रमः। यथा अरण्ये चरतामाश्रमः छायादानाद्विश्रमस्थानमेवं संसारारण्ये [6]भ्रमतां प्राणिनां सुषुप्ते मोक्षे च विश्रमस्थानं भवति परमेश्वरः, "सता सोम्य तदा सम्पन्नो भवति" (छा. ६-८-१) इत्यादिश्रुतेरिति गौणतया व्याचष्टे—**आश्रमवदिति**। गुणं दर्शयति—**विश्रमेति**। अविवेकिनः श्रमयति—सन्तापयति जननमरणादिसंसृतिचक्रभ्रामणेनेति **श्रमणः**। "श्रमु तपसि खेदे च" इति णिजन्ताल्ल्युट्।

> अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
> ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।
>
> (शै. पु. वा. सं पू. ५-६३)

इति स्मृतेरित्याह—**अविवेकिन इति**। "क्षै क्षये" इत्यस्मात् "गत्यर्थाकर्मक" (पा. सू. ३-४-७२) इत्यादिना [7]क्तप्रत्यये "क्षायो मः" (पा. सू. ८-२-५३) इति तकारस्य मत्वे क्षाम इति रूपम्। सर्वाः प्रजाः क्षामाः—क्षीणाः करोत्यन्तकाल इति,

---

[1] हितत्वादाश्र—पा. [2] संसाराब्धौ—पा. [3] भ्रमवतां—पा. [4] सन्तापयतीति—पा.
[5] आश्रमदानादाश्रमः—पा. [6] अत्र भ्रमतां—पा. [7] क्तप्रत्ययः। क्षायो—पा?

## स्तोत्रम्

# श्रमणः क्षामः सुपर्णः

## भाष्यम्

**श्रमणः। क्षामाः—क्षीणाः [1]सर्वाः प्रजाः करोतीति क्षामः। "तत्करोति तदाचष्टे" (गणसू. २०४) इति णिचि पचाद्यचि कृते सम्पन्नः क्षाम इति। सु—शोभनानि पर्णानि—छन्दांसि संसारतरुरूपिणोऽस्येति—सुपर्णः। "छन्दांसि यस्य पर्णानि"**

## विवृतिः

"तत्करोति तदाचष्टे" (ग. सू. २०४) इति णिजन्तात्[2]पचाद्यचि णिलोपे च कृते क्षामः सर्वासां प्रजानां प्रलये [3]क्षयकारीत्याह—**क्षामा इति**। अनेन "क्षमः क्षामः समीहनः" (वि. स. ६०) इत्यत्रत्येनापौनरुक्त्यं दर्शितम्॥

पर्णानीव पर्णानि ऋग्यजुस्सामलक्षणानि छन्दांसि यथा वृक्षस्य रक्षणार्थाय पर्णानि एवं वेदाः [4]संसारवृक्षपरिरक्षणार्थाः, धर्माधर्मतद्धेतुफलप्रदर्शनार्थत्वात्। तथा च फलार्थवादबहुलत्वाच्छोभनानि पर्णानि—पर्णसदृशानि छन्दांसि यस्य संसारतरुरूपिणः परमात्मनः स सुपर्ण इत्यभिप्रेत्य "मरीचिर्दमनो हंसः सुपर्णः" (वि. स. ३४) इत्यनेन पौनरुक्त्यं वारयन् व्याचष्टे—**शोभनानीति**। छन्दसां [5]पर्णत्वे भगवद्वचनमाह—**छन्दांसीति**॥

वायुः—प्राणः वहति—धारयति [6]सर्वभूतानि स्थूलशरीराणि, तानि [7]वहन्तं समष्टिव्यष्टिरूपं प्राणं परमात्मा प्रयुङ्क्त इति वहतेः

---

[1] प्रजाः सर्वाः—**पा.** [2] पचाद्यच्—णि. **पा.** [3] क्षयं करोतीत्याह—**पा.** [4] संसारवृक्षोऽपि रक्ष—**पा.** [5] पर्णत्वेन भ—**पा.** [6] भूतस्थानि—**पा.** [7] वहन्ति स· **पा.**

स्तोत्रम्

# वायुवाहनः ॥ १०४ ॥

# धनुर्धरः

भाष्यम्

(भ. गी. १५-१) इति भगवद्वचनात् । वायुर्वहति यद्भीत्या सर्वाणि भूतानि सः—वायुवाहनः । "भीषास्माद्वातः पवते" (तै. उ. २-८) इति श्रुतेः ॥ १०४ ॥

[1] श्रीमान् [2] रामनामा महद्धनुर्धारयामासेति—धनुर्धरः ।

विवृतिः

हेतुमण्ण्यन्तात्कर्तरि [3] ल्युडित्याभिप्रेत्याह—**वायुरिति** । **यद्भीत्येति** । आज्ञातिक्रमे दण्डः पतेदिति भीत्येत्यर्थः । अनेन प्रयोजकव्यापारो णिजर्थो दर्शितः । वायोर्भूतधारकत्वे "तत्प्राण उत्क्रान्तेऽपद्यत तदशीर्यत तत्प्राणे प्रपन्न उदतिष्ठत्" इत्यादिश्रुतिर्बोध्या । वायोर्भूतधारकस्य परमेश्वरो हेतुकर्तेत्यत्र श्रुतिमाह—**भीषेति** । **अस्मात्**—प्रशासितुः परमेश्वरात्, **भीषा**—भयेन, **वातः**—वायुः, **पवते**—अनलसस्सञ्चरतीत्यर्थः । "वरदो वायुवाहनः" (वि. स. ४९) इत्यत्र आवहप्रवहादीन् सप्त [4] वायून् वहतो वाहयतीति व्याख्यातम् । अत्रान्यथा व्यख्यायत इत्यपौनरुक्त्यं बोध्यम् ॥ १०४ ॥

देवब्राह्मणकण्टकरावणकुम्भकर्णादिरक्षोगणसंहरणायावतीर्णो रामनामा भगवान्नारायणः श्रीमत्प्रभावविशेषयुक्तं शैवं वैष्णवं च धनुर्धारयामासेति धनुषो धरो धनुर्धर इत्याह—**रामनामेति** । धनुश्शब्दो

---

[1] श्रीरामरूपेण धनु—**पा.** [2] रामो मह—**पा.** [3] ल्युरित्य—**पा ?** [4] वायून् अनलसः स वहतो—**पा.**

स्तोत्रम्

## धनुर्वेदो दण्डो दमयिता दमः ।

भाष्यम्

**स एव दाशरथिः धनुर्वेदं वेत्तीति—धनुर्वेदः । [1]दमनं दमयतां दण्डः । "दण्डो दमयतामस्मि" (भ. गी. १०-३८) इति भगवद्वचनात् । वैवस्वतनरेन्द्रादिरूपेण प्रजा दमयतीति—दमयिता । दमः [2]दम्येषु दण्डकार्यं फलम्, तच्च स एवेति—दमः ।**

विवृतिः

धनुर्वेदपरः । धनुः—धनुर्वेदं वेत्तीति धनुर्वेदः, "धनुर्वेदे च निष्ठितः" (वा. रा. बा. १-१४) इति रामायणवचनादित्याह—**स एवेति** । दमनं दण्डः । "दम उपशमे" अस्मात् "ञमन्ताड्डः (उणा. १११) इति डः । उत्पथवर्तिनः सन्मार्गे [3]प्रवर्तयतां उत्पथप्रवृत्तौ निग्रहहेतुर्व्यापारो दण्डः । सोऽपि स एवेत्याह—**दमनमिति** । दमयतां —शासितॄणां सम्बन्धि यद्दमनं—शासनरूपो व्यापारः स दण्डोऽपि विष्णुरेवेत्यर्थः । अत्र भगवद्वचनमाह—**दण्ड इति** । **दमयतां** [4]अदान्तान्—उत्पथान् पथि प्रवर्तयतां उत्पथप्रवृत्तौ निग्रहहेतुर्दण्डोऽहमस्मीति स्मृत्यर्थः । वैवस्वतनरेन्द्रादिरूपेण प्रजा दमयतीति दमेर्ण्यन्तात् णिचि मित्त्वे ह्रस्वत्वे तृचि च दमयितेत्याह—**वैवस्वतेति** । आदिशब्देन गुर्वादेर्ग्रहणम् । [5]वैवस्वतादिरूपत्वे "यमः संयमतामहम्," (भ. गी. १०-२९) "नराणां च [6]नराधिपम्" (भ. गी. १०-२७) इत्यादिस्मृतिर्द्रष्टव्या । दमयितृकर्तृकदमनक्रियायाः फलं दमो दान्तिः उत्पथवर्तिनां सन्मार्गप्रवृत्तिरूपा, सापि स एवेत्याह—**दम इति** ॥

---

[1] अदान्तदमनात्—दण्डः—**पा.** [2] दण्डकार्यं—**पा.** [3] प्रवर्तयतोत्पथ—**पा.**
[4] मदान्धान्—**पा.** [5] वैवस्वतदण्डादिरूपत्वे—**पा.** [6] नरेन्द्रोऽहं—**पा.**

## स्तोत्रम्

# अपराजितः सर्वसहः

## भाष्यम्

शत्रुभिः न पराजित इति—अपराजितः[1]। सर्वकर्मसु समर्थ इति–सर्वसहः। सर्वान् शत्रून् सहत इति वा–सर्वसहः। *पृथिव्यादिरूपेण वा–सर्वसहः। सर्वान् स्वेषु स्वेषु कृत्येषु व्यवस्थापयतीति—नियन्ता। [2]नियमः–नियतिस्तस्य न विद्यत

## विवृतिः

शत्रुभिरजितः परोऽन्यो यस्मात्स पराजितः। आहिताग्न्यादेराकृतिगणत्वादजितशब्दस्य परनिपातः। स न भवतीत्यपराजितः। तथा च "दुर्धरोऽथापराजितः" (वि. स. ८९) इत्यत्रत्येनापौनरुक्त्यमित्यभिप्रेत्याह—**शत्रुभिरिति**। सहते–शक्नोतीति सहः, पचाद्यच्, सर्वेषु–कर्मसु जगत्सृष्ट्यादिरूपेषु सहः–समर्थ इति "सप्तमी" इति योगविभागात्समास इत्यभिप्रेत्याह—**सर्वेति**। सहते–अभिभवतीति सहः। सर्वेषां–शत्रूणां सहः–अभिभविता सर्वसहः। "अवेः प्रसहने" (पा. सू. १-३-३३) इति सूत्रे प्रसहनमभिभव इति वृत्तिकारोक्तेरित्यभिप्रेत्यार्थान्तरमाह–**सर्वान् शत्रूनिति**। नियन्ता–नियमनकर्ता ब्रह्मेन्द्रादीनां सर्जनादिरूपेषु [3]स्वेषु स्वेषु कृत्येषु व्यवस्थापक इत्याह—**सर्वानिति**। नियमः–नियतिः, कार्याकार्यविशेषव्यवस्थापनं न विद्यतेऽस्येत्यभिप्रेत्याह [4]**नियम इति**। नियमनाभावे हेतुमाह–

---

* इदं वाक्यं केषुचित् कोशेषु न दृश्यते। अस्य विवृतिरपि नोपलभ्यते॥

[1] परैः शत्रुभिरजित इति वापराजितः–**पा.** [2] नियतिर्नियमनं तस्य–**पा.**
[3] सर्वेषु कृत्येषु–**पा.** [4] नियमो नियतिरिति–**पा.**

स्तोत्रम्

## नियन्ता(ऽ)नियमो(ऽ)यमः ॥ १०५ ॥

भाष्यम्

**इति—अनियमः। सर्वनियन्तुः नियन्त्रन्तराभावात्। नास्य विद्यते यमः—मृत्युरिति—अयमः। अथवा यमनियमौ [1] योगाङ्गे; तद्गम्यत्वात्स एव—नियमो यमः ॥ १०५ ॥**

विवृतिः

**सर्वनियन्तुरिति** । "सर्वस्य वशी सर्वस्येशानः" (बृह. उ. ४-४-२२) "सर्वमिदं प्रशास्ति" (बृह. उ. ५-६-१) इत्यादिश्रुत्या सर्वनियन्तृत्वावगमात्, नियन्त्रन्तरसत्त्वे सर्वनियन्तृत्वाभावात्, अनवस्थाप्रसङ्गात्, यस्य नियन्त्रन्तरं नास्ति तस्यैवेश्वरत्वात्, स्वस्यैव स्वनियाम्यत्वायोगात्, "न तस्येशे कश्चन" (महाना. १-१०) इति श्रुतिविरोधाच्चेत्यर्थः। यमः—मृत्युर्न विद्यतेऽस्य सर्वोपसंहर्तुः, मृत्योरपि मृत्युत्वात् "मृत्युर्यस्योपसेचनम्" (कठ. १-२-२५) इति श्रुतेरनवस्थादिदोषप्रसङ्गाच्चेत्यभिप्रेत्याह—**नास्येति**। "नियन्ता नियमो यमः" (वि. स. १०५) इत्यत्र अनियमोऽयम इत्युभयत्राकारप्रश्लेषोऽस्मिन् व्याख्याने बोध्यः। "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" (यो. सू. २-३०) "शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः" (यो. सू. २-३२) इति योगसूत्रोक्तौ यमनियमौ योगस्य चित्तवृत्तिनिरोधाख्यस्याङ्गभूतौ; ताभ्यां गमकाभ्यां प्रधानभूतयोगद्वारा गम्यं ब्रह्म लक्ष्यते। अथवा यमनियमशब्दयोर्मत्व[2]र्थीयार्श[3]आद्यजन्तत्वमाश्रित्य तदुभयगम्यतया नियमवान् यमवांश्च नियमो यम इत्युच्यते इत्यकारप्रश्लेषमकृत्वार्थान्तरमाह—**अथवेति**।

---

[1] योगाङ्गे नियते उच्येते—**पा.** [2] र्थीयार्शआद्यच्प्रत्ययान्ततामाश्रित्य—**पा.**
[3] आद्यजन्ततामाश्रित्य—**पा.**

स्तोत्रम्

## सत्त्ववान् सात्त्विकः सत्यः

भाष्यम्

[1]शौर्यवीर्यादिकं सत्त्वमस्येति—सत्त्ववान्। [2]सत्त्वे गुणे प्राधान्येन [3]स्थित इति—सात्त्विकः। सत्सु साधुत्वात्—सत्यः।

विवृतिः

"सत्त्वं द्रव्ये गुणे चेति [4]व्यवसायस्वभावयोः।
पिशाचादावात्मभावे बले प्राणेषु जन्तुषु ॥"

इत्यभिधानकोशात् शौर्यवीर्यात्मकं बलं सत्त्वशब्देन गृह्यते। तत्र शौर्य—शूरस्य भावो युद्धे निर्भयप्रवेशसामर्थ्यम्; वीर्य—स्वस्याविकार एव परस्य विकारापादनम्; तदुभयात्मकं सत्त्वमस्मिन्नित्यमस्तीति नित्ययोगे मतुबित्याह—शौर्येति। शौर्यवीर्यादिकमित्यादिशब्देन व्यवसायादिग्रहणम्। सत्त्वं सत्त्वगुणः। तत्र भव इत्यर्थे अध्यात्मादित्वाट्ठक्, सत्त्वमर्हतीति ठञ्वेत्यभिप्रेत्य पर्यवसन्नमर्थमाह—सत्त्व इति। ईश्वरोपाधिभूताया मायायास्त्रैगुण्येऽप्यभिमानसम्बन्धेन विष्णुरूपेण सत्त्वे स्थितः सात्त्विक इत्यर्थः। तथा च भागवतवचनम्—

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै—
युक्तः परः पुरुष [5]एव इहास्य धत्ते।
स्थित्यादयो हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ इति ॥

सत्सु वेदशास्त्रानुसारेण वर्तमानेषु, अस्ति ब्रह्मेति ब्रह्मास्तित्ववित्सु वा साधुः सत्यः, "तत्र साधुः" (पा. सू. ४-४-९८) इति यत्प्रत्यय इत्याह—सत्स्विति। सत्यं—यथाभूतार्थकथनं, धर्मः—

---

[1] ऐश्वर्यवीर्यादिकं—पा. [2] सत्त्वगुणे—पा. [3] वर्तत इति—पा. [4] अवसाय—पा.
[5] एक—पा.

## स्तोत्रम्

# सत्यधर्मपरायणः ।
# अभिप्रायः प्रियार्हः

## भाष्यम्

**सत्ये–यथाभूतार्थकथने धर्मे च चोदनालक्षणे [1] नियत इति — सत्यधर्मपरायणः ॥ [2]**

**अभिप्रयते पुरुषार्थकाङ्क्षिभिः, आभिमुख्येन प्रलयेऽस्मिन् प्रैति जगदिति वा—अभिप्रायः। प्रियाणि–इष्टान्यर्हतीति–प्रियार्हः ।**

## विवृतिः

" चोदनालक्षणोऽर्थो धर्मः " (जै. सू. १-१-२) इत्युक्तलक्षणः, तयोः परायणः तत्परः ; [3] नियत इति यावत् ।

" त्रिषु स्यात्तत्परेऽभीष्टेऽप्याश्रये क्लीं परायणम् "

इत्यभिधानकोशादित्याह–**सत्ये यथेति** ॥

अभिप्रयते–पुरुषार्थकाङ्क्षिभिराकाङ्क्ष्यत इति अभिप्रपूर्वादिणः कर्मणि घञ् । अभि–आभिमुख्येन प्रलये प्रैति–लीयतेऽस्मिन् जगदिति अभिप्रायः । इणः पूर्वोक्तविशेषणादधिकरणे घञित्यर्थद्वयमभिप्रेत्याह–**अभिप्रयत इति** । प्रियाणि–इष्टान्यर्हति–अर्पयितुं योग्यो भवतीति प्रियार्हः, कर्मण्यणित्याह—**प्रियाणीति** । परमेश्वरः

---

[1] प्रकर्षेण नियत इति–**पा.** [2] यद्वा सत्यधर्मौ परमयनमस्येति–**पा.**
[3] नियन्तेति –**पा.**

## स्तोत्रम्

# अर्हः

### भाष्यम्

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ (विष्णुधर्मोत्तरे ५५-३)

इति स्मरणात् । [1]स्वागतासनप्रशंसार्घ्यपाद्यस्तुतिनमस्कारादिभिः [2]पूजासाधनैः पूजनीय इति—अर्हः । न केवलं

### विवृतिः

प्रियवस्तूनामर्ह इत्यत्र [3]विष्णुधर्मोत्तरवचनं पठति—यदिति । लोके यद्यदिष्टतममन्नवस्त्रालङ्कारादिकं, यच्चास्य यजमानस्य गृहे दयितं प्रियं च भवेत्तद्वस्तु तस्यैव वृद्धिमिच्छता पुरुषेण गुणवते—श्रोत्रियाय ब्रह्मनिष्ठाय परमेश्वरोद्देशेन देयमित्यर्थः । यद्वा गुणवते—सर्वज्ञत्वादिगुणविशिष्टाय परमेश्वराय देयं—अर्पणीयमित्यर्थः । अर्ह्यते पूज्यते षोडशभिरुपचारैरित्यर्हः । "अर्ह पूजायां" कर्मणि घञित्याह—पूजेति । पूजाशब्देन गन्धादि[4]नैवेद्यार्पणान्तोपचारा गृह्यन्ते । तत्र प्रशंसाशब्देन अप्रगीताभिः ऋग्भिर्गुणकीर्तनमुच्यते । प्रगीताभिः ऋग्भिर्गुणकीर्तनं तु स्तुतिशब्देनोच्यते । यद्वा स्वकृतैर्ग्रन्थैर्गुणकीर्तनं प्रशंसा । वैदिकैरार्षैश्च गुणकीर्तनं स्तुतिरिति भेदः । नमस्कारादिभिरित्यादिशब्देनावशिष्टानां ग्रहणम् । न केवलं प्रियार्होऽर्हश्च, अपि तु प्रियवस्त्वर्पणेन स्तुत्यादिना च भजनं कुर्वतां भक्तानां तत्फलं प्रियं—सुखं करोतीति प्रियकृदित्याह—न केवलमिति । प्रिय-

---

[1] प्रियपूजाप्रशंसास्तुति-पा. पूजाप्रशंसा—पा. [2] पूजनीय इति-पा.
[3] मार्कण्डेयपुराण—पा. [4] नैवेद्यान्तो—पा.

स्तोत्रम्

## प्रियकृत्प्रीतिवर्धनः ॥ १०६ ॥

## विहायसगतिः

भाष्यम्

प्रियार्ह एव, किन्तु स्तुत्यादिभिर्भजतां प्रियं करोतीति—प्रियकृत्। तेषामेव प्रीतिं [1]वर्धयतीति—प्रीतिवर्धनः ॥ १०६ ॥

† [2]विहायसः–विहायाः गतिः आश्रयोऽस्येति—विहायसगतिः विष्णुपदम्, आदित्यो वा ॥

विवृतिः

कृदेव न केवलम्, अपि तु [3]स्तुत्यादिभिर्भजतां तेषामेव भक्तानां प्रीतिं—सुखं वर्धयतीति [4]प्रीतिवर्धनोऽपि। नन्द्यादित्वाद्वर्धयतेः कर्तरि [5]ल्युरित्याह—तेषामिति ॥ १०६ ॥

शिंशुमाराकृतिज्योतिश्चक्रे "विष्णुर्हृदयम्" (तै. आ. २-१९) इति स्वाध्यायब्राह्मणाद्विष्णोर्ज्योतीरूपेणावस्थानात् विहायसे–आकाशे गतिरस्येति विहायसगतिर्विष्णुः। सर्वलोकप्रसिद्धेरादित्यो वा विहायसगतिरित्याह—विहायस इति। अत्र विहायसशब्द आकाशवाची अकारान्तः। अत एव "विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम्" इत्यमर [कोशः] शेषः। अर्थद्वयेऽपि विशेष्यं दर्शयति विष्णुपदमादित्यो वेति। तत्र विष्णुपदाख्यज्योतिरात्मको

---

† "विदुर्विहायसं व्योम पक्षिणश्च विहायसः" "विहायसोऽपि नाकोऽपि" इति शाश्वतामरौ।

[1] वर्धयन् स–प्रीति–पा. [2] विहायसं विहायः–पा. [3] श्रुत्यादि–पा. [4] प्रियवर्धनोऽपि–पा. [5] ल्युः कर्तरि वर्धयतेरि–पा.

## विवृतिः

[1] विष्णुर्विशेष्यम् । विष्णुपुराणे दर्शितस्थानविशेषो वा विष्णु-पदम् । तदुक्तं विष्णुपुराणे—

ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥
निर्धूत[2]दोषपङ्कानां यतीनां संयतात्मनाम् ।
स्थानं तत्परमं विप्र! पुण्यपापपरिक्षये ॥
अपुण्यपुण्योपरमे क्षीणाशेषार्तिहेतवः ।
यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ॥
धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिणः ।
तत्साष्ट्यर्योत्पन्नयोगर्द्धिस्तद्विष्णोः परमं पदम्* ॥
यस्मिन् प्रतिष्ठितो भास्वा[3]न्मेढीभूतः स्वयम्भुवः ।
ध्रुवे च सर्वज्योतींषि ज्योतिष्ष्वम्भोमुचो द्विज! ॥[4]
मेघेषु सन्तता वृष्टिः[5]वृष्टेश्च परिपोषणम् ।
आप्यायनं च सर्वेषां [6]देवादीनां महामुने! ॥

(वि. पु. २-८-९८-१०५)

---

* एतदनन्तरं " मुद्रितविष्णुपुराणे—

" यत्रोतमेतत्प्रोतं च यद्भूतं सचराचरम् ।
भाव्यं च विश्वं मैत्रेय ! तद्विष्णोः परमं पदम् ॥ १०३ ॥
दिवीव चक्षुराततं योगिनां तन्मयात्मनाम् ।
विवेकज्ञानदृष्टं च तद्विष्णोः परमं पदम् ॥ १०४ ॥

इमौ श्लोकौ दृश्येते ।

[1] विष्णुर्विशेषणम्—पा. [2] दोषशब्दानां—पा. दोषसङ्गानां—पा. [3] न्मेढीभूतः—पा. [4] द्विजः—पा. [5] वृष्टेः सृष्टेश्च पोषणम्—पा. [6] वेदादीनां—पा.

## स्तोत्रम्

# ज्योतिः

### भाष्यम्

**स्वत एव द्योतत इति –ज्योतिः। *[1] " नारायणः परं ज्योतिः" (याज्ञि. १३) इति [2]मन्त्रवर्णात्। शोभना रुचिः–दीप्तिः**

### विवृतिः

इत्यादि। ऊर्ध्वोत्तर[3]मित्यादिश्लोकस्यायमर्थः—ऊर्ध्वं च तदुत्तरं च, सप्तर्षिभ्य उत्तरस्यां दिशि ऊर्ध्वं यत्र ध्रुवस्तिष्ठति ध्रुवस्याश्रयभूतं विष्णुपदाख्यं भूम्याद्यपेक्षया दिव्यं तृतीयं स्थानं तद्धि वैराजस्य हृदयनाडीस्थानम्। अतः स्वच्छत्वात्तत्र विष्णुः प्रकाशत इति तदन्तर्यामिणो विष्णोः स्थानमुच्यत इति॥

द्योतते—प्रकाशते प्रकाशान्तरमनपेक्ष्येति ज्योतिः, " अत्रायं पुरुषः स्वयं ज्योतिः " (बृ. उ. ४-३-९) इति श्रुतेः। " द्युतेरिसिन्नादेश्च जः " (उणा. २६७) इति इसिन्प्रत्ययो दकारस्य जकारश्चेत्याह—**स्वत एवेति**। " रुच दीप्तावभिप्रीतौ च " इति धातोः " इगुपधात्कित् " (उणा. सू. ५५९) इति इनिप्रत्यये रुचिशब्दः। शोभना रुचिः अङ्गगतभास्वररूपलक्षणा दीप्तिरिच्छा वा यस्य स सुरुचिः।

" रुचिर्दीप्तौ च शोभायामभिषङ्गाभिलाषयोः "

इत्यभिधानकोशात्, दीप्तेर्ध्यातृपापक्षयकरत्वात् इच्छायाश्च जगद्रक्षाविषयकत्वात् शोभनत्वमित्यभिप्रेत्याह—**शोभनेति**। मन्त्रादिश्रेषेण हुतं चरुपुरोडाशसोमाज्यादिकं हविर्भुनक्ति—पालयति स्वनामोच्चारणेनेति

---

* इदं श्रुतिवाक्यं केषुचित्कोशेषु न दृश्यते। अस्य विवृत्तिश्च नोपलभ्यते।

[1] " नारायणपरो ज्योतिः "–पा.　[2] श्रुतेः–पा.　[3] मितिश्लो–पा.

स्तोत्रम्

## सुरुचिर्हुतभुग्विभुः ।

## [1] रविर्विरोचनः

भाष्यम्

इच्छा वा अस्येति—सुरुचिः । समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु हुतं भुङ्क्ते भुनक्तीति वा—हुतभुक् । सर्वत्र वर्तमानत्वात्, त्रयाणां लोकानां [2] विभुत्वाद्वा—विभुः ॥

[3] रविः—आदित्यात्मा । विविधं रोचत इति विरोच-

विवृतिः

हुतभुक् । हुतं भुङ्क्ते—अभ्यवहरति इन्द्राद्युद्देशेन दत्तमपि, विष्णोः सर्वात्मकत्वात् । "भुज पालनाभ्यवहारयोः" इति धातोः क्विपि रूपमित्यभिप्रेत्याह—समस्तेति । विभुर्व्यापकः, सर्वत्र वर्तमानत्वात्, त्रयाणां लोकानां स्वामी वा विभुरित्याह—सर्वत्रेति ॥

' ज्योतिषां रविरंशुमान् " (भ. गी. १०-२१) इति भगवद्वच-नादादित्यात्मा रविरित्याह—रविरिति । [3] रसानादत्त इति रविरादि-त्यात्मेति क्वचित्पाठः । तत्र रसशब्दे सलोपः । वीत्यास्यादानमित्यर्थः । "वी गत्यादौ" इति धातोर्वीति रूपम् । पृषोदरादित्वात्साधुत्वम् । पृषोदरादित्वकल्पनामूलं तु " रसानां च तथादानाद्रविरित्यभिधीयते " इति विष्णुधर्मोत्तरवच[4]नम् । विविधं—अनेकप्रकारेण सूर्यचन्द्राग्निग्रह-नक्षत्ररूपेण रोचते—प्रकाशत इति विरोचनः, विपूर्वाद्रोचतेः " अनुदात्ते-तश्च हलादेः " (पा. सू. ३ २-१४९) इति कर्तरि युच्प्रत्यय इत्याह—विविधमिति । सूते—जनयति सर्वं जगदिति, सुवति—कर्मणि लोकं

---

[1] रविर्विलोचनः—पा. [2] प्रभु—पा. [3] रसानादत्त इति रविः—पा. रसमादत्त इति—पा. [4] नमित्यर्थः—पा.

स्तोत्रम्

# सूर्यः सविता रविलोचनः ॥ १०७ ॥

भाष्यम्

[1]नः। सूते सर्वमिति सूर्यः। सूते श्रियमिति वा सूर्यः। सूतेः सुवतेर्वा सूर्यशब्दो निपात्यते, "राजसूयसूर्य" (पा. सू. ३-१-११४) इति पाणिनिवचनात्। सर्वस्य जगतः प्रसविता-सविता।

रसानां च तथादानाद्रविरित्यभिधीयते।
प्रजानां तु प्रसवना[2]त्सवितेति निगद्यते॥

इति विष्णुधर्मोत्तरे। रविर्लोचनं-चक्षुरस्येति—रविलोचनः। "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" (मु. उ. २-१-४) इति [3]श्रुतेः॥ १०७॥

विवृतिः

प्रेरयतीति वा सूतेः सुवतेर्वा "राजसूयसूर्य" (पा-सू. ३-१-११४) इत्यादिना सूर्यशब्दो निपात्यते। सर्वस्य जगतो जनकः सर्वजगतः कर्मणि प्रेरको वा सूर्य इत्याह—सूतेः सुवतेर्वेति। "षूङ् प्राणिगर्भविमोचने" "षू प्रेरणे" इत्यनयोरित्यर्थः। वृत्तिकृतस्तु सरत्याकाश इति सूर्यः, कर्तरि क्यप्, निपातनादूत्वम्। यद्वा "षू प्रेरणे" तुदादिः, सुवति—कर्मणि प्रेरयति लोकमिति क्यपो रुडिति" तत्सूत्रे व्याचख्युः। सुवति—प्रेरयति कर्मणि लोकमिति सविता। "षू प्रेरणे" इत्यस्मात् तृच्प्रत्यय इत्याह—सर्वस्येति। रविः लोचनमस्य विराडात्मन इति रविलोचन इत्याह—रविरिति। तत्र श्रुतिमाह—अग्निरिति॥ १०७॥

---

[1] नः सूर्योऽग्निर्वा-पा. [2] त्सवितेत्यभिधीयते-पा. [3] मन्त्रवर्णात्-पा.

स्तोत्रम्

# अनन्तो हुतभुक्

भाष्यम्

**नित्यत्वात् सर्वगतत्वाद्देशकालवस्तुपरिच्छेदाभावात्— अनन्तः शेषरूपो वा । हुतं भुनक्तीति-हुतभुक् ॥**

विवृतिः

अन्तः — परिच्छेदः देशान्तरकालान्तरवृत्त्यभावप्रतियोगित्वरूपः, स न विद्यतेऽस्येत्यनन्त इत्याह—**नित्यत्वादिति** । कालपरिच्छेदाभावे हेतुः–**नित्यत्वादिति** । देशपरिच्छेदाभावे हेतुः–**सर्वगतत्वादिति** । सर्वगतत्वं सर्वदेशवर्तित्वम् । स च देशपरिच्छेदाभावे हेतुः । "वीरोऽनन्तो धनञ्जयः" (वि-स. ८३) इत्यत्रानन्तशब्देन देशकालवस्तुरूपत्रितयपरिच्छेदशून्यत्वमुक्तम् । अत्र तु देशकालपरिच्छेदाभावमात्रमुच्यत इत्यपौनरुक्त्यं द्रष्टव्यम् । परिच्छे[1]दाभावादनन्त इति क्वचित्पाठः । तत्र गुणानामन्तः–परिच्छेद इयत्ता, तद्रहितोऽनन्त इत्यस्मिन् पक्षे पौनरुक्त्यशङ्कैव नास्ति । तथा च विष्णुपुराणम्—

गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः ।
नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः ॥

(वि-पु. २-५-२४) इति ॥

'अनन्तः शेषरूपो वा' इति क्वचित्पाठः । तत्रापि पौनरुक्त्याभावः स्पष्टः । हुतं–होमः । नपुंसके भावे क्तः । तं भुनक्ति–पालयति — विगुणमपि सगुणं करोति[2] स्वनामोच्चारणेनेति हुतभुक् । "यस्य स्मृत्या च नामोक्त्या" इत्यादिवचनादित्यभिप्रेत्याह—**हुतमिति** । "सुरुचिर्हुतभुक् (वि-स. १०७) इत्यत्र हुतमाज्यादिद्रव्य-

[1] दाभावे तदनन्त–**पा.** [2] स्वनामोच्चारणादिनेति–**पा.**

## स्तोत्रम्

# भोक्ता(ऽ)सुखदः

### भाष्यम्

प्रकृतिं भोग्यामचेतनां [1] भुङ्क्त इति, जगत् पालयतीति वा—भोक्ता। भक्तानां सुखं मोक्षलक्षणं ददातीति—सुखदः। असुखं द्यति—खण्डयतीति वा—असुखदः॥

### विवृतिः

मित्युक्तम्। अत्र तु होम इत्युच्यते इत्यपौनरुक्त्यम्। यद्वा पूर्वत्र पालनाभ्यवहारौ समुच्चितावुच्येते। अत्र तु भुजेः पालनमात्रमर्थः। अस्मिन् पक्षे हुतशब्दस्योभयत्र द्रव्यपरत्वेऽपि न दोषः। प्रकृतेः—मायायाः विविधप्रपञ्चात्मक[2]विलासवत्याः नर्तक्याः प्रभुरिव भोक्ता द्रष्टा परमेश्वरः। सर्वस्य जगतः पालनाद्वा भोक्तेति भुजेरर्थद्वयं गृहीत्वा व्याचष्टे—**प्रकृतिमिति**। "भ्राजिष्णुर्भोजनं भोक्ता" (वि-स. २९) इत्यत्र भोक्ता जीवरूपेणेत्युक्तम्। अत्र तु प्रकारान्तरेणेत्यपौनरुक्त्यं बोध्यम्। भक्तानां मोक्षलक्षणं सुखं ददातीति सुखदः। असुखद इत्यकारप्रश्लेषेण भजतामसुखं—दुखं, द्यति—खण्डयतीत्यसुखदो वेति ददातेः द्यतेश्चार्थौ गृहीत्वा व्याचष्टे—**सुखमिति**।

निरनुबन्धकेन नशब्देन * "सुप्सुपा" (पा. सू. २-१-४) इति समासे नैकशब्दो लक्षणया कृत्वसुजर्थे, नैकं—अनेकवारं धर्मगुप्तये जायत इति नैकजः—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ (भ-गी. ४-७)

---

* "सह सुपा" (पा. सू. २-१-४) इति सूत्रार्थानुवादोऽयम्।

[1] भुङ्क्ते इति भोक्ता—पा. [2] विलासायाः न—पा.

स्तोत्रम्

## नैकजोऽग्रजः ।

भाष्यम्

धर्मगुप्तयेऽसकृज्जायमानत्वात्—नैकजः । अग्रे जायत इति—अग्रजः । "हिरण्यगर्भः समवर्तताग्रे" (तै.सं. ४-१-८) इत्यादिश्रुतेः । अवाप्तसर्वकामत्वादप्राप्तिहेत्वभावान्निर्वेदोऽस्य [1]नास्तीति

विवृतिः

इति भगवद्वचनादित्याह—**धर्मगुप्तय इति** । अग्रे—इतरप्राणिसृष्टेः पूर्वं हिरण्यगर्भरूपेण जननात् अग्रजः । "हिरण्यगर्भः समवर्तताग्रे" (तै-सं. ४-१-८) इति श्रुतेरित्याह—**अग्र इति** ॥

निर्विण्णो विरक्तः । तथा च "ब्राह्मणो निर्वेदमायात्" (मु-उ. १-२-१२) इत्यत्र मुण्डकभाष्यं "निपूर्वो विदिरत्र वैराग्यार्थः" इति । न निर्विण्णोऽनिर्विण्णः—अविरक्तः स्वरूपानन्दानुभव इत्याशयेनाह—**निर्वेदोऽस्येति** । स्वरूपानन्दानु[2]भवेनिर्वेदाभावे हेतुमाह—**अवाप्तेति** । काम्यन्त इति कामाः—विषयानन्दाः पुण्यतारतम्यादन्तःकरणवृत्तौ सर्वेषां प्राणिनां तारतम्येनाभिव्यज्यमानाः, ते सर्वे यस्मात् परमानन्दघनादवाप्ताः स तथा, तस्य भावस्तत्त्वं तस्मात् नित्यानन्दस्वरूपत्वादित्यर्थः । जन्यानन्दे हि क्षयिष्णुत्वसातिशयत्वदोषदर्शनेन विरज्येतापि । न तु स्वरूपानन्दे । उक्तदोषाभावादित्यर्थः । नित्यानन्दस्वरूपस्याप्यज्ञानावृतत्वा[3]दप्राप्तत्वान्निर्वेदो जन्यसुख इव स्यादित्याशङ्क्य अविद्याया जीवं प्रत्यखण्डानन्दावारकत्वेऽपि ईशं प्रति तदभावादित्याह—**अप्राप्तीति** । अप्राप्तिहेतुरावरणं तदभावादित्यर्थः ।

---

[1] न विद्यत इति—**पा.** [2] भवे हेतु—**पा.** [3] दप्राप्यत्वा—**पा.**

स्तोत्रम्

## अनिर्विण्णः सदामर्षी

भाष्यम्

**अनिर्विण्णः । सतः—साधून् आभिमुख्येन मृष्यते—क्षमत इति**

विवृतिः

अप्राप्तिहेत्वभावादित्यर्थः । अवाप्तिहेत्वभावादित्यपि क्वचित्पाठः । तत्रानवाप्तं हि अवाप्यते, स्वरूपानन्दस्य नित्याप्तत्वेनानवाप्त्यभावादित्यर्थः । एतेन "अनिर्विण्णः स्थविष्ठोऽभूः" (वि. स. ६०) इत्यत्रत्येन न पौनरुक्त्यम् । तत्र हि आखिन्नो निर्विण्ण इत्युक्तम्, अत्र तु अविरक्तोऽनिर्विण्ण इत्युच्यत इति व्याख्याभेदात् । यद्वा अनेकसङ्ख्यास्वपि स्त्रीषु नैकस्यामपि निर्विण्ण इत्यानिर्विण्ण इत्याह—**अवाप्तेति**। सर्वेषु दारेषु कामा अवाप्ता येन वासुदेवेन स तथा, तस्य भावस्तत्त्वं तस्मादित्यर्थः । ननु केनचिद्धेतुना कासुचित्कामो न स्यादित्याशङ्क्याह—**अप्राप्तीति** । भगवतस्तत्र कामाभावे हेतुः पूर्वजन्मनि भगवदपरिचरणं, तदभावादित्यर्थः । भक्तानां योगक्षेमवहनादौ निर्विण्णः-शिथिलप्रयत्नो नेत्यनिर्विण्णः, "योगो निर्विण्णचेतसा" (भ. गी. ३-२३) इत्यादौ प्रयत्नशैथिल्ये प्रयोगदर्शनादित्यपि बोध्यम् ॥

सतः—साधून् कृतागसोऽपि आभिमुख्येन मर्षितुं—सोढुं शीलमस्येति सदामर्षी ।

* "न स्मरत्यपकाराणां शतमप्यात्मवत्तया"॥

(वा-रा-अ. १-११)

इति वाल्मीकिवचनादित्याह—**सत इति** । अधितिष्ठन्ति—एनमधिष्ठाय लोकाः प्रवर्तन्त इत्यधिष्ठानम् । अधिकरणे ल्युट् ।

---

* अत्र "कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।" इति पूर्वार्धम् ।

### स्तोत्रम्

## लोकाधिष्ठानमद्भुतः ॥ १०८ ॥

### भाष्यम्

सदामर्षी। तमनाधारमाधारमधिष्ठाय त्रयो लोकास्तिष्ठन्तीति— लोकाधिष्ठानं ब्रह्म। अद्भुतवत्–अद्भुतः।

> "श्रवणायापि बहुभिर्यो न लभ्यः
> शृण्वन्तोऽपि बहवो यं न विद्युः।
> आश्चर्यो वक्ता कुशलोऽस्य लब्धा
> आश्चर्यो ज्ञाता कुशलानुशिष्टः" (कठ. १-२-७)

### विवृतिः

भूरादीनां साधोभुवनानां लोकानामधिष्ठानं लोकाधिष्ठानमित्याह– **तमिति**। अद्भुतं–आश्चर्यमदृष्टमपूर्वं अकस्माद्दृश्यमानं तेन तुल्यतया वर्तमानत्वादद्भुतवदद्भुतमात्मस्वरूपम्। [1]अनेनैव नाम्ना आत्मनो विषयस्य तद्वक्तृश्रोतृद्रष्टॄणां वचन[2]श्रवणदर्शनक्रियाणां च दुर्लभत्वादात्मनो दुर्विज्ञेयत्वं प्रतिपाद्यत इति गौणतया व्याचष्टे–**अद्भुतवदिति**। दुर्विज्ञयत्वे श्रुतिस्मृती दर्शयति–**श्रवणायेति**। **य आत्मा बहुभिः**–अनेकैः **श्रवणाय**—श्रोतुमपि **न लभ्यः, शृण्वन्तोऽपि बहवः**–[3]अनेकेऽन्ये **यं**–आत्मानं [4]**न विद्युः**–न विदुः न विन्दन्ति असंस्कृतात्मानो न विजानीयुः। किञ्च **अस्य** [5]**वक्तापि आश्चर्यः** आश्चर्यवत्–अद्भुतवदनेकेषु कश्चिदेव भवति। श्रुत्वाप्यस्यात्मनः **कुशल** एवानेकेषु **लब्धा** कश्चिदेव भवति। यस्मादाश्चर्यो **ज्ञाता** कश्चिदेव

---

[1] अनेन ना–**पा.** [2] दर्शनश्रवण–**पा.** [3] नैके–**पा.** [4] न विद्युः–न विदन्ति–**पा.**
[5] वक्ता आश्च–**पा.**

## भाष्यम्

**इति श्रुतेः। "आश्चर्यवत्पश्यति कश्चिदेनम्" (भ. गी. २-२९) इति भगवद्वचनाच्च। स्वरूपशक्तिव्यापारकार्यैरद्भुतत्वाद्वा—अद्भुतः ॥ १०८ ॥**

## विवृतिः

**कुशलानुशिष्टः**—कुशलेन—निपुणेन आचार्येणानुशिष्टः सन् इति श्रुत्यर्थः। कश्चिदेनमात्मानं शास्त्राचार्योप[1]देशाभ्यां पश्यन् **आश्चर्यवत्पश्यति**—सर्वगतस्य नित्यज्ञानानन्द[2]स्वरूपस्यात्मनः अलौकिकत्वादैन्द्रजालिकवदघटमानं पश्यन्निव विस्मयेन पश्यति। असम्भावनाभिभूतत्वात्। तथाश्चर्यवदेवान्यो वदति, शृणोति च अन्यः, कश्चिद्विपरीतभावनाभिभूतः पुनः श्रुत्वापि नैव [3]वेद, चशब्दा[4]दुक्तं श्रुत्वापि न सम्यग्वेद इति गीतावचनार्थः। उक्तनाम्नोऽर्थान्तरमाह—**स्वरूपेति**। निर्विकारमपि सविकारमिव अद्वितीयमपि सद्वितीयमिव जीवाभिन्नमपि तद्भिन्नमिवेत्या[5]विद्यकसम्भावितविचित्रानेकाकारप्रतीतिविषयत्वात्स्वरूपमलौकिकम्, [6]अघटमानघटनापटीयस्त्वान्मायाख्या शक्तिरपि तादृशी, व्यापारोऽपीक्षणसङ्कल्पादिः विचित्रप्रपञ्चहेतुत्वाल्लौकिकस्रष्टृव्यापारविलक्षण एव, कार्यमपि वियदादिप्रपञ्चोऽन्येषां मनसाप्यचिन्त्यरचनारूप एव। तथा चेदृशैरघटमानैः स्वरूपशक्तिव्यापारकार्यैः ज्ञाप्यं यदद्भुतत्वं तद्विशिष्ट इति। स्वरूपशक्तिव्यापारकार्यैरद्भुतत्वादद्भुत इति पाठे तु अघटमानैः स्वरूपशक्तिव्यापारकार्यैर्विशिष्टतया अद्भुतत्वादद्भुतनामको हरिरित्यर्थो बोध्यः ॥ १०८ ॥

---

[1] देशगम्यं प—**पा.** [2] स्वभावस्य—**पा.** [3] वेदश—**पा.** [4] दुक्त्वा श्रु—**पा.**
[5] विद्याकामस—**पा.** [6] अघटनघटनाप—**पा.**

स्तोत्रम्

## सनात्सनातनतमः

भाष्यम्

सनात् इति निपातश्चिरार्थवचनः। कालश्च पर[1]स्यैव [2]विकल्पना कापि।

परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज!।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम्॥

(वि. पु. १-२-१५)

इति विष्णुपुराणे। सर्वकारणत्वाद्विरिश्चयादीनामपि [3]सनातनानामतिशयेन सनातनत्वात्–सनातनतमः। बडबानलस्य

विवृतिः

कालस्य परमेश्वरविभूतित्वात् चिरार्थकसनाच्छब्देन कालरूपी स एवोच्यत इत्याह—सनादिति। कालस्य परमेश्वरविभूतित्वे विष्णुपुराणवचनमाह—परस्येति। पुरुषः—क्षेत्रज्ञः, स च प्रथमं रूपम्। व्यक्ताव्यक्ते–प्रकृतिप्राकृते पुरुषापेक्षया अन्ये द्वे रूपे। उक्तत्रयापेक्षया परं अन्यद्रूपं काल इत्यर्थः। सनातनाः–चिरन्तनाः पूर्वभाविनो हिरण्यगर्भादयः। भौतिकान् प्रति कारणत्वादतिशयेन सनातनः–पूर्वभावी सनातनतम इत्याह—सर्वेति। कपिलवर्णत्वात् बडबानलः कपिलः, लोकोपकाराय तद्रूपेण स्थित्वा समुद्रस्य मर्यादारक्षणान्नारायणः कपिल इत्याह—बडवेति॥

---

[1] स्यैवेति कल्पना–पा. [2] विकल्पना।–पा. [3] सनातनानां सना–पा.

स्तोत्रम्

## कपिलः कपिरप्ययः ।

भाष्यम्

कपिलो वर्ण [1]इति तद्रूपी—कपिलः । कं–जलं रश्मिभिः पिबन्–कपिः सूर्यः, कपिः वराहो वा, "कपि[2]र्वराहः श्रेष्ठश्च" इति वचनात् । प्रलयेऽस्मिन्नपियन्ति जगन्तीति—अप्ययः । इति नाम्नां नवमं शतकं विवृतम् ॥

इति नवमशतकभाष्यम्

---

विवृतिः

कं–जलं रश्मिभिः पिबतीति पिबतेर्बाहुलकात्कर्तरि किप्रत्यये कपिरादित्यरूप इत्याह—**कमिति** । कात्–जलात् भूमिमुद्धृत्य रक्षितवान् [3]वराहमूर्तिर्वा कपिरित्यर्थान्तरमाह—**वराहो वेति** । कपिर्वराह इत्यत्र [4]स्मृतिं पठति—**कपिरिति** । अपियन्ति–लीयन्ते जगन्त्यस्मिन्नित्यप्ययः । अपिपूर्वस्येणोऽधिकरणेऽच्प्रत्यय इत्याह—**प्रलय इति** ॥

इति नवमशतक[5]भाष्यविवृतिः

---

[1] इव त–**पा.** [2] र्वराहश्चेत्युक्तत्वात्–**पा.** [3] वराहमूर्तिरेव–**पा.**
[4] श्रुतिं–**पा.** [5] भाष्यं व्याख्यातम्–**पा.**

स्तोत्रम्

# स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्

## अथ दशमशतकभाष्यम्

**भक्तानां स्वस्ति–मङ्गलं ददातीति—स्वस्तिदः। तदेव करोतीति–स्वस्तिकृत्। मङ्गलस्वरूपमात्मीयं परमानन्द-लक्षणं–स्वस्ति। तदेव भुङ्क्त इति—स्वस्तिभुक्। भक्तानां मङ्गलं स्वस्ति भुनक्तीति वा स्वस्तिभुक्। स्वस्तिरूपेण**

## अथ दशमशतकभाष्यविवृतिः

स्वस्ति–मङ्गलं, तच्च समीहितस्य साधनं ज्ञापकं च, तद्ददाति–प्रापयतीति स्वस्तिद इत्याह––**भक्तानामिति**। स्वस्ति-मङ्गलं पूर्वोक्तलक्षणं करोति–उत्पादयतीति स्वस्तिकृदित्याह—**तदेवेति**। स्वरूपभूतो यः परमानन्दस्तल्लक्षणं मङ्गलं स्वस्तिशब्देनोच्यते। तद्रूपत्वात्स्वस्तीत्याह––**मङ्गलेति**। स्वस्ति–परमानन्दलक्षणं मङ्गलं भुङ्क्ते–अनुभवति, भक्तानां मङ्गलं स्वस्ति, तद्भुनक्ति पालयतीति वा स्वस्तिभुगिति भुजेर्धातोरर्थद्वयमादाय व्याचष्टे—**तदेवेत्यादिना**। सार्वभौमादिहिरण्यगर्भान्तेषु प्राणिषु पुण्योत्कर्षतारत[1]म्यप्रयुक्तान्तःकरण-वृत्युत्कर्षतारतम्यात् स्वस्तिरूपेण–आनन्दरूपेण दक्षते–वर्धते ब्रह्मेति स्वस्तिदक्षिणः। "दक्ष वृद्धौ" इति धातोः "द्रुदक्षिभ्यामिनन्" (उणा. सू. २०८) इतीनन् प्रत्यय इत्याभिप्रेत्याह—**स्वस्तिरूपेणेति**। दक्षिणशब्दः सामर्थ्यवचनः, स्वस्तिशब्दितस्य मङ्गलस्य दक्षिणः–दातुं

---

[1] म्यान्तःकरण–**पा.**

स्तोत्रम्

## स्वस्तिदक्षिणः ॥१०९॥

भाष्यम्

दक्षते–वर्धते, स्वस्ति दातुं समर्थ इति वा—**स्वस्तिदक्षिणः**। अथवा दक्षिणशब्द आशुकारिणि वर्तते। शीघ्रं स्वस्ति दातुं अयमेव समर्थ इति।

स्मरणादेव देवस्य सिद्ध्यन्ति सर्वसिद्धयः ॥
स्मृते सकलकल्याणभाजनं यत्र जायते।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥
स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरम्।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥

इत्यादिवचनेभ्यः ॥ १०९ ॥

विवृतिः

समर्थ इत्यर्थान्तरमाह--**स्वस्ति दातुमिति**। दक्षिणः—शीघ्रकारी, "दक्ष वृद्धौ शीघ्रार्थे च" इति धातोः स्वस्तिशब्दितस्य कल्याणस्य इष्टप्राप्त्यनिष्टपरिहारोभयात्मकस्य दक्षिणः शीघ्रकारीति तृतीयं व्याख्यानं दर्शयति--**दक्षिणशब्द** इति। स्वस्तिदाने शीघ्रकारित्वमेव दर्शयति--**स्मरणादेवेति**। स्मृतिमात्रेणेष्टप्राप्तिलक्षणं कल्याणं प्रयच्छतीत्यत्र स्मृतिमाह--**स्मृते सकलेति**। अनिष्टपरिहारलक्षणं मङ्गलं प्रयच्छतीत्यत्र [1] स्मृत्यन्तरमाह--**स्मरणादेवेति** ॥ ॥ १०९ ॥

---

[1] श्रुत्यन्तर–**पा.**

स्तोत्रम्

# अरौद्रः कुण्डली चक्री

भाष्यम्

**कर्म रौद्रम् , रागश्च रौद्रः, कोपश्च रौद्रः, रौद्रत्रयं अस्य नास्ति, अवाप्तसर्वकामत्वेन रागद्वेषादेरभावादिति—अरौद्रः। शेषरूपभाक्—कुण्डली। सहस्रांशुमण्डलोपमकुण्डलधरणाद्वा, *(साङ्ख्ययोगात्मके कुण्डले मकराकारे अस्य स्त इति वा कुण्डली।) समस्तलोकरक्षार्थं मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रं धत्त इति–चक्री।**

**चलस्वरूपमत्यन्तं जवेनान्तरितानलम्।**
**चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम्॥**
**(वि. पु. १-२२-७१)**

विवृतिः

रौद्रशब्देन कष्टं कर्म रागः कोपश्चोच्यते। प्रथमतो विषये रागः, तत्प्रतिघाते कोपः, ततश्च कष्टं कर्मेति। अनवाप्तकामस्येदं रौद्रत्रयं भवति। परमेश्वरस्य तु अवाप्तसर्वकामत्वेन रागद्वेषादेरभावादरौद्र इत्याह—**कर्म रौद्रमिति।** तत्र हेतुमाह—**अवाप्तेति।** क्रूरकर्मणो रागद्वेषयोश्च कामानवाप्तिनिबन्धनत्वादिति भावः। कुण्डलावस्थामापन्नः शेषः कुण्डली, तद्रूप इत्याह—**शेषेति।** कुण्डले–कर्णाभरणे शब्दादिविषयात्मके [1]मकरकुण्डले अस्य स्त इत्यर्थान्तरमाह—**सहस्रेति।** मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्यास्तीति चक्रीत्याह—**समस्तेति।** दुष्टसंहारद्वारेति शेषः॥

---

* अस्य भनुरङ्कितभागस्य विवृतिर्न दृश्यते।

[1] मकरमण्डले–**पा.** [2] तद्वयमिति वि–**पा.**

स्तोत्रम्

## विक्रम्यूर्जितशासनः ।

भाष्यम्

इति विष्णुपुराणवचनात् । विक्रमः—पादविक्षेपः शौर्यं वा, [1]द्वयं चाशेषपुरुषेभ्यो विलक्षणमस्येति—विक्रमी । श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येति—ऊर्जितशासनः ।

[2]श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥

विवृतिः

विक्रमः—पादन्यासः शौर्यं वा, विक्रमशब्दस्य य एकैकोऽर्थो लौकिकप्रयोगे प्रसिद्धः, [2]तद्द्वयमितरविलक्षणमस्यास्तीति अतिशायने मत्वर्थीय इनिः, ततश्चेतरवैलक्षण्यलाभः, उभयविवक्षया श्रुतिप्रकर्षलाभश्च, विक्रमी वामनमूर्तिरित्याह—**विक्रम इति**। "ईश्वरो विक्रमी" (वि. स. २२) इत्यत्रत्येन विक्रमीनाम्ना पौनरुक्त्यं नास्ति। अर्थद्वयस्य समुच्चित्यविवक्षितत्वादिति बोध्यम् ॥

ऊर्जितं—बलवद्दुरतिक्रमं श्रुतिस्मृतिलक्षणं शासनमस्येत्यूर्जितशासनः। *श्रुतिस्मृती ममैवाज्ञे" इति स्मृतेरित्याह—**श्रुतीति**। वाचकशब्दमतीत्य गच्छतीति शब्दातिगः। शब्दप्रवृत्तिनिमित्तानां जात्यादीनां निर्विशेषब्रह्मण्यभावेन शक्त्या शब्दानां तत्राप्रवृत्तेरित्याह—

* "श्रुतिः स्मृतिर्ममैवाज्ञा" इत्यपि पाठो दृश्यते.

[1] अशेष—**पा.** [2] श्रुतिस्स्मृतिर्ममैवाज्ञा यस्ता—**पा.**

स्तोत्रम्

## शब्दातिगः शब्दसहः

भाष्यम्

इति भगवद्वचनात्। शब्दप्रवृत्तिहेतूनां जात्यादीनामसम्भवात् शब्देन वक्तुमशक्यत्वात्—शब्दातिगः। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै उ. २-४)

"न शब्दगोचरो यस्य योगिध्येयं परं पदम्"

(वि. पु. १-१७-२२)

इत्यादिश्रुतिस्मृतिभ्यः। सर्वे वेदाः तात्पर्येण तमेव वदन्तीति—शब्दसहः। "सर्वे वेदा यत्पदमामनन्ति"

विवृतिः

शब्देति। शब्देन शक्त्या प्रतिपादयितुमशक्यत्वे हेतुमाह—**शब्दप्रवृत्तीति**। उक्तार्थे श्रुतिं पुराणवचनं च पठति **यत इत्यादि**। **न शब्दगोचर इति**। शक्त्या न शब्दप्रतिपाद्य इत्यर्थः। **यस्येति**। यद्रूपं परमित्यर्थः। सहते—क्षमते लक्षणया शब्दप्रतिपाद्यत्वमिति सहः, पचाद्यच्। शब्दस्य सहः शब्दसहः, तात्पर्येण लक्षणया तद्बोध्यत्वादित्याह—**तमेवेति**। वेदप्रतिपाद्यत्वे श्रुतिस्मृती दर्शयति—**सर्व इति**। उपनिषद्रूपा इत्यर्थः। यद्वा कर्मकाण्डस्यापि कर्मा[1]नुष्ठानेन चित्तशुद्धिद्वारा ब्रह्मण्येव तात्पर्यमिति सर्ववेदप्रतिपाद्यतासिद्धिरित्यर्थः। इममेवार्थं दर्शयति—**सर्वे वेदास्तात्पर्येणेति**। चण्डांशुकिरण-

---

[1] नुष्ठानचित्त–पा.

स्तोत्रम्

# शिशिरः शर्वरीकरः ॥ ११० ॥

भाष्यम्

(कठ. उ. २–१५) इति श्रुतेः "वेदैश्च सर्वैरहमेव वेद्यः" (भ. गी. १५–१५) इति स्मृतेश्च। [1]तापत्रयाभितप्तानां विश्रमस्थानत्वात्—शिशिरः। संसारिणामात्मा शर्वरीव शर्वरी, ज्ञानिनां पुनः संसारः शर्वरी, तामुभयेषां करोतीति—शर्वरीकरः।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

विवृतिः

तप्तानां जनानां तापोपशमनार्थो देशविशेषः शिशिरः। स इव तापत्र[2]यार्कतप्तानां प्राणिनां श्रमापनयनस्थानत्वाच्छिशिर इति गौणतया व्याचष्ट—**तापत्रयेति**। परमार्थतत्त्वातिरिक्ते द्वैतप्रपञ्चे प्रवृत्तबुद्धीनां परमार्थतत्त्वमात्मस्वरूपमप्रकाशरूपत्वाच्छर्वरीव शर्वरी, परमार्थतत्त्वमनुभवतां निवृत्ताविद्यानां सन्न्यासिनां द्वैतावस्था शर्वरीव शर्वरी, तान् प्रत्यप्रकाशरूपत्वात्। तामुभयरूपां शर्वरीं उभयेषां [3]अज्ञानिनां विदुषां च करोतीति शर्वरीकरः। "कृञो हेतुताच्छील्यानुलोम्येषु" (पा–सू–३–२–२०) इति करोतेष्टप्रत्यय इत्याह—**संसारिणामिति**। [4]अज्ञानिनामित्यर्थः। **ज्ञानिनामिति**। परमार्थतत्त्वमनुभवतामित्यर्थः। **संसार इति**। द्वैतप्रपञ्च इत्यर्थः। अद्वैतात्मनो द्वैतप्रपञ्चस्य च पुरुषभेदेन शर्वरीत्वे भगवद्वचनमाह—**या निशेति**। परमार्थतत्त्वं सर्वभूतानां अज्ञानिनां निशेव निशा, तान् प्रत्यप्रकाशरूप-

---

[1] संसारताप–**पा.** [2] यार्तितप्ता–**पा.** [3] अज्ञानां–**पा.**
[4] अज्ञानामि–**पा.**

स्तोत्रम्

## अक्रूरः

भाष्यम्

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

(भ. गी. २-६९)

इति भगवद्वचनात् ॥ ११० ॥

क्रौर्यं नाम मनोधर्मः प्रकोपजः आन्तरः सन्तापः साभिनिवेशः । अवाप्त[1]समस्तकामत्वात् कामाभावादेव कोपाभावः, तस्मात् क्रौर्यमस्य [2]नास्तीति—अक्रूरः ।

विवृतिः

त्वात् । तस्यां परमार्थतत्त्वलक्षणायां सर्वभूतानां निशावदुक्तायामवस्थायां जागर्ति— अज्ञा[3]ननिशायाः प्रबुद्धः सन् सावधानो वर्तते, संयमी–इन्द्रियसंयमवान् स्थितप्रज्ञः । यस्यां द्वैतावस्थालक्षणायां [4]अविद्यानिशायां वस्तुतः प्रसुप्तान्येव भूतानि जाग्रति— स्वप्नवद्व्यवहरन्ति, सा निशा न प्रकाशते ह्यात्मतत्त्वमपरोक्षतया पश्यतो मुनेः–स्थितप्रज्ञस्येत्यर्थः । आत्मा संसारश्च संसारिज्ञानिनोरप्रकाशनाच्छर्वरी । [5]तामुभयोः कुर्वन् श्रीहरिः शर्वरीकर इति निष्कृष्टार्थः ॥ ॥ ११० ॥

क्रौर्यं नाम [6]कोपजा मनोवृत्तिः, तद्वान् क्रूरः, स नेत्यक्रूरः । यद्वा क्रूरेति भावप्रधानो निर्देशः । न विद्यते क्रौर्यमस्येत्यक्रूर इति बहुव्रीहिरित्याह—**क्रौर्यमिति** । तत्र हेतुमाह **अवाप्तेति** ।

---

[1] सर्वका–**पा.** [2] न विद्यत इति–**पा.** [3] ननिद्रायाः–**पा.** [4] अविद्यानिद्रायां–**पा.** [5] तां तयोः–**पा.** [6] कोपजम–**पा.**

## स्तोत्रम्

# पेशलो दक्षः

### भाष्यम्

**कर्मणा मनसा वाचा वपुषा च शोभनत्वात्–पेशलः। प्रवृद्धः शक्तः शीघ्रकारी च [1]दक्षः, त्रयं चैतत्परस्मिन्नियतमिति—दक्षः।**

### विवृतिः

विषयकामनायां जातायां कुतश्चिन्निमित्तात्तद्विषयप्रतिघाते कोपो भवति। कोपाच्च क्रौर्यम्, " कामात्क्रोधोऽभिजायते। क्रोधाद्भवति सम्मोहः " (भ. गी. २–६२–६३) इति भगवद्वचनात्। अवाप्तसर्वकामत्वाद्भगवतः कामाभावे कोपाभावात्तत्प्रयुक्तं क्रौर्यं नास्तीत्यर्थः॥

पेशलः–शोभनः " चारौ दक्षे च पेशलः " इत्यभिधानकोशात्। तथा च पेशलानि–शोभनानि [2]कर्ममनोवाग्वपूंषि अस्येति मत्वर्थीयोऽर्शआद्यच्। पेशलकर्ममनो[3]वाग्बुद्धिवपुर्युक्तत्वात् पेशल इत्याह—**कर्मेति**। कर्मणा मनसेत्यादितृतीया धान्येन धनवानित्यादाविवाभेदे। कर्मादिरूपशोभनवत्त्वादित्यर्थः। यद्वा इत्थंभूतलक्षणे तृतीया। कर्मादिज्ञाप्यशोभनत्ववत्त्वात्पेशलनामेत्यर्थः। " दक्ष वृद्धौ शीघ्रार्थे च " इति धातोरच्प्रत्ययान्तो दक्षशब्दः प्रवृद्धः शक्तः शीघ्रकारीत्येतानर्था[4]नाह। प्रवृद्धादिशब्दप्रवृत्तिनिमित्तभूतं प्रवृद्धत्वशक्तत्वशीघ्रकारित्वरूपं [5]तत्त्रयं नित्यं यस्मिन् वर्तते स दक्ष इत्याह—**प्रवृद्ध इति**। देशकालवस्तुपरिच्छेदाभावलक्षणवृद्धिमानित्यर्थः। **शक्त इति**। जगज्जन्मादिकर्मसु शक्त इत्यर्थः। **शीघ्रकारीति**। भक्तानामिष्टप्राप्त्यनिष्टपरिहाररूपफलदाने शीघ्रकारीत्यर्थः। अत्र " उग्रः संवत्सरो

---

[1] दक्ष एवार्थः–**पा.**     [2] कर्मवाङ्मनोवपूंषि–**पा.**     [3] वाग्वपुर्युक्त–**पा.**
[4] नाह शब्दादिति। शब्दप्रवृत्ति–**पा.**     [5] तत्रितयं–**पा.**

स्तोत्रम्

## दक्षिणः

भाष्यम्

**दक्षिणशब्दस्यापि दक्ष एवार्थः। [1]शब्दभेदान्न पौनरुक्त्यम्। अथ वा दक्षते–गच्छति, हिनस्तीति वा—दक्षिणः। "दक्ष गतिहिंसनयोः" इति धातुपाठात्॥**

विवृतिः

दक्षः" (वि. स. ५८) इत्यत्रत्येन न पौनरुक्त्यम्, त्रयं चैतादिति भाष्येण प्रवृद्धत्वाद्यर्थत्रयं समुचितं दक्षनामार्थ इति सूचितत्वादिति बोध्यम्। "दक्ष वृद्धौ शीघ्रार्थे च" इति *धातोरिनन्प्रत्यये निष्पन्नो दक्षिणशब्दोऽपि दक्षशब्दसमानार्थः, जगद्रूपेण वर्धमानत्वात्सृष्ट्यादिकर्मणि शक्तत्वाद्भक्तानां फलदाने शीघ्रकारित्वाच्च दक्षिणः। न च दक्ष[2]शब्देन दक्षिणशब्दे पौनरुक्त्यम्। अर्थैक्येऽपि दक्षदक्षिणशब्दयोर्भेदादित्याह—**दक्षिणशब्दस्यापीति**। उपेन्द्रात्मना दुष्टान् दैत्यान् हन्तुं इन्द्रजयाय रणं दक्षते–गच्छति तान् हिनस्तीति वा दक्षिणः। "दक्ष गतिहिंसनयोः" इति धातोरिनन्प्रत्ययान्तो [3]दक्षिणशब्द इत्यर्थभेदमाश्रित्यापि व्याचष्टे—**अथ वेति**॥

क्षामिणः–क्षमाशीला मुनयः। "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" (पा.सू. ३-२-१३४) इत्यधिकारे "क्षमूष् सहने" इत्यस्मात् "शमित्यष्टाभ्यो घिनुण्" (पा. सू. ३-२-१४१) इति ताच्छील्यादौ घिनुणि "नोदात्तोपदेशस्य" (पा. सू. ७-३-३४) इति वृद्धिनिषेधः।

---

* अत्र "द्रुदक्षिभ्यामिनन्" (उणा. सू. २०८) इत्युणादिसूत्रेणेनन्प्रत्ययो बोध्यः।

[1] पुनरुक्तिदोषो नास्ति। शब्दभेदात्–पा. [2] शब्देन पौनरुक्त्यम्–पा.
[3] दक्षिण इत्यर्थे–पा.

## स्तोत्रम्

# क्षमिणां वरः ।

## भाष्यम्

**क्षमावतां योगिनां पृथिव्यादीनां भारधारकाणां च श्रेष्ठ इति—क्षमिणां वरः । "क्षमया पृथिवीसमः" (वा. रा. १-१-१८) इति वाल्मीकिवचनात् । ब्रह्माण्डमखिलं वहन् पृथिवीव भारेण नार्दित इति पृथिव्या अपि वरो वा । क्षमिणः—शक्ताः । अयं तु सर्वशक्तिमत्त्वात्सकलाः क्रियाः कर्तुं क्षमत इति वा—क्षमिणां वरः ॥**

## विवृतिः

क्षमिणः—योगिनः, पृथिव्यादयश्च, शीतोष्णादिद्वन्द्वसहनात् भारादिसहनाच्च, तेषां वरः श्रेष्ठः । निर्धारणे षष्ठीत्यभिप्रेत्याह—**क्षमावतामिति** । क्षमिणां—योगिनां श्रेष्ठ [1] इत्यर्थे रामायणवचनमुदाहरति—**क्षमयेति** । सर्वदा क्षमावत्याः पृथिव्या उपमानोक्त्या योगिनामपि कदाचिदक्षमासम्भावनान्नित्यं क्षमावतः परमेश्वरस्य योगिभ्यः श्रेष्ठत्वं दर्शितम् । पृथिव्यादिभ्यः क्षमावद्भ्यः श्रेष्ठत्वमुपपादयति—**ब्रह्माण्डमिति** । पृथिव्यादिकं हि जगदेकदेशं वहदपि क्लेशेन जगदेकदेशधारणं क्षमते । परमेश्वरस्तु पृथिव्यादिसहितं ब्रह्माण्डं वहन्नपि न पीडित इति तेभ्यः श्रेष्ठत्वमित्यर्थः । धातूनामनेकार्थत्वात् क्षमशब्दस्य शक्ते प्रयोगाद्वा क्षमतिः शक्त्यर्थः । तस्मात् पूर्ववद्धिनुणि क्षमिणः । यद्वा "क्षितिक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु" (नाम ३-३-१४२) इत्यमरकोशात् क्षमशब्दाच्छक्तवचनाद्भावप्रधानान्मत्वर्थीय इनिप्रत्यये क्षमिणः कार्यैकदेशशक्तिमन्तो ब्रह्मादयः, तेषां मध्ये सर्वकार्यशक्तत्वाच्छ्रेष्ठः परमेश्वर इत्यर्थान्तरमाह—**क्षमिण इति** ॥

---

[1] इत्यत्र रा—**पा.**

## स्तोत्रम्

# विद्वत्तमः

### भाष्यम्

निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति, [1] नेतरेषामिति–[2] विद्वत्तमः। वीतं–विगतं भयं सांसारिकं संसारलक्षणं

### विवृतिः

विद्वांसः–ज्ञानिनः, अयमेषामतिशयेन विद्वान् विद्वत्तमः, मनुष्यादिहिरण्यगर्भान्तेषु प्राणिषु बह्वल्पविषयत्वेन सातिशयत्वेन च ज्ञानोत्कर्षतारतम्यं वर्तते। तद्यत्र समाप्यते स विद्वत्तम इत्याह— **निरस्तेति**। निरस्तातिशयमित्यादिना निरतिशयवैशद्यं सर्वगोचरत्वं च स एवार्थो विवृतः। निरस्तातिशयमिति [3] सर्वदा सर्वगोचरमिति च विशेषणद्वयव्यावर्त्यमाह —**नेतरेषामिति**। अन्येषां योगिनां सर्वविषयकज्ञानवत्त्वेऽपि समाधिकाल एव भावात्। सूक्ष्मवस्तुविषये च ज्ञाने वैशद्यारव्यातिशयसद्भावेन निरतिशयत्वाभावात्तेषां सर्वज्ञतायाः परमेश्वराधीनत्वाच्च न [4] निरतिशयं सर्वदा सर्वगो[5]चरं ज्ञानमित्यर्थः। "ञिभी भये" इत्यस्मात् अच्प्रकरणे "भयादीनामुपसङ्ख्यानम्" (वा. २१९६) इति भावेऽच्प्रत्ययः। बिभेत्यनेनेति विग्रहे "एरच्" (पा. सू. ३-३-५६) इति सूत्रेण करणेऽच्प्रत्ययो वा। तथा च वीतं–[6] विगतं भयं सांसारिकं राजचोरादिप्रयुक्तभीतिः, भयहेतुः जननमरणादिरूपः संसारो वा अस्य नेति वीतभय इति क्रमेण भावार्थं करणार्थं च भयशब्दमुपादाय व्याचष्टे—**विगतमिति**। अन्य-

---

[1] नैवेतरेषां–**पा.** [2] विद्वत्तमो हरिः–**पा.** [3] सर्वत्र–**पा.** [4] निरस्तातिशयं–**पा.** [5] चरज्ञान–**पा.** [6] गतं–**पा.**

स्तोत्रम्

## वीतभयः पुण्यश्रवणकीर्तनः ॥१११॥

भाष्यम्

वा अस्येति–वीतभयः। सर्वेश्वरत्वान्नित्यमुक्तत्वाच्च। पुण्यं–पुण्यकरं श्रवणं कीर्तनं चास्येति–पुण्यश्रवणकीर्तनः।

"य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्।
नाशुभं प्राप्नुयात् किञ्चित्सोऽमुत्रेह च मानवः॥"
(वि. स. १२२)

इति श्रवणादिफलवचनात्॥ १११॥

विवृतिः

प्रयुक्ता [1]भीतिरस्य नेत्यत्र हेतुमाह—सर्वेति। भीतिहेतुभूताना[2]मपि नियन्ता न तेभ्यो बिभेतीत्यर्थः। भयहेतुः संसारो नेत्यत्र हेतुमाह—नित्येति। श्रवणं–सगुणस्य वा निर्गुणस्य वा शब्देन ज्ञानं, तादृशविष्णुप्रतिपादकशब्दस्य श्रोत्रेण ग्रहणं च। कीर्तनं तु [3]सगुणस्य निर्गुणस्य वा बोधकशब्दस्योङ्कारादेरुच्चारणात्मकम्। तद्द्वयं पुण्यं–पुण्यकरं शुभकरं यस्य सः पुण्यश्रवणकीर्तन इत्याह––पुण्यमिति। श्रवणकीर्तनयोः पुण्यकरत्वे फलग्रन्थस्थं श्लोकमुदाहरति—य इति॥ ॥ १११॥

---

[2] भीतिर्नेत्यत्र–पा. [2] मपि नियन्तॄणामपि नियन्ता–पा. [3] सगुणस्य वा नि–पा.

## स्तोत्रम्

# उत्तारणो दुष्कृतिहा

## भाष्यम्

**संसारसागरादुत्तारयतीति—उत्तारणः। '[1] दुष्कृतीः पापसंज्ञिताः हन्तीति—[2] दुष्कृतिहा। [3] स्मरणादि कुर्वतां सर्वेषां पुण्यं करोतीति, सर्वेषां श्रुतिस्मृतिलक्षणया वाचा पुण्यमा-**

## विवृतिः

संसारसागराद्भक्तजनमुत्तारयतीत्युत्तारणः। बाहुलकात्कर्तरि [4] ल्युडित्यभिप्रेत्याह—**संसारेति**। दुष्कृतयः-पापानि, तानि हन्ति-नाशयति स्मरणकीर्तनादिनेति दुष्कृतिहेत्याह—**दुष्कृतीरिति**। पुण्यं करोति स्मरणादि कुर्वतामिति, पुण्यमाचष्टे श्रुतिस्मृतिलक्षणया वाचा वेति विग्रहे पुण्यशब्दात् "तत्करोति तदाचष्टे" (गण. सू. २०४) इति णिजन्तात्पचाद्यचि टिलोपे च पुण्य इति रूपमित्यभिप्रेत्याह—**स्मरणादीति**। स्मरणं नाम विष्णुतत्प्रतिपादकशब्दयोरनुभवानन्तरं सगुणनिर्गुणान्यतरात्मकस्य विष्णोः शब्दान्यकरणेन ज्ञानम्, शब्दजन्यतज्ज्ञानस्य श्रावणत्वात्। प्रतिपादकशब्दस्य श्रोत्रान्यकरणेन ज्ञानं च स्मरणम्। श्रोत्रेण तज्ज्ञानस्य श्रावणत्वात्। आदिपदेन * श्रवणकीर्तनादिग्रहः। [5] श्रवणादिपराणां भक्तानां पुण्योत्पादकः,

---

* "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥" (श्रीभा.—७-५-३३.)

इति श्रवणादिरूपा नवविधा भक्तिः श्रीमद्भागवते प्रह्लादेन निरूपिता अत्रानुसन्धेया।

[1] दुष्कृतिं पापसंहतिं ह—**पा.** [2] दुष्कृतिनः—पापकारिणः, तान् हन्तीति वा—दुष्कृतिहा—**पा.** [3] इतिहासपुराणादिश्रवणं कुर्वतां पुण्यं—**पा.** [4] ल्युडित्याह—**पा.** [5] स्मरणादि—**पा.**

स्तोत्रम्

पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः

भाष्यम्

चष्ट इति वा—पुण्यः । भाविनोऽनर्थस्य सूचकान् दुःस्वप्नान् [1]नाशयति ध्यातः स्तुतः कीर्तितः पूजितश्चेति–दुःस्वप्ननाशनः ।

विविधाः संसारिणां गतीः मुक्तिप्रदानेन हन्तीति—वीरहा । सत्त्वं गुणमधिष्ठाय जगत्त्रयं [2]रक्षन्—रक्षणः ।

विवृतिः

[3]श्रुतिस्मृतिलक्षणया वाचा प्रवृत्तिलक्षणस्य निवृत्तिलक्षणस्य च पुण्यस्याधिकारिभेदेना[4]ख्याता वा पुण्य इति पक्षद्वये नामार्थः ॥

दुःस्वप्नान् " पुरुषं कृष्णं कृष्णदन्तं पश्यति " (ऐत.उ. ३-२-७) इत्यादिश्रुत्युक्तान् स्वप्नाध्यायोक्तानन्यांश्च ध्यानपूजादिना नाशयतीति दुःस्वप्ननाशन इत्याह—**भाविन इति** ॥

ईरणानि ईराः । " ईर गतौ " इत्यतो भावे घञ् । विविधाश्च ते ईराश्च वीराः नानायोनिप्राप्तिरूपाः । तान् हन्ति ज्ञानप्रदानेनेति वीरहेत्याह—**संसारिणामिति** । अतो व्याख्याभेदात् " वीरहा विषमः शून्यः " (वि. स. ९२) इत्यत्रत्यनापौनरुक्त्यं बोध्यम् । सत्त्वोपाधिकः सन् रक्षति–पालयतीति " रक्ष पालने " इत्यस्मात् ल्युडित्याह—**सत्त्वमिति** । अस्तेर्लटः शतृप्रत्यये सदिति रूपम् ।

---

[1] नाशयतीति दुःस्वप्ननाशनः–**पा.** [2] रक्षतीति–**पा.** [3] पुण्यश्रुति–**पा.**
[4] ख्यानाद्वा पु–**पा.**

स्तोत्रम्

## सन्तो जीवनः पर्यवस्थितः ॥११२॥

भाष्यम्

**नन्द्यादित्वात्कर्तरि ल्युः। सन्मार्गवर्तिनः सन्तः; तद्रूपेण विद्याविनयवृद्धये स एव वर्तत इति—सन्तः। सर्वाः प्रजाः प्राणरूपेण जीवयन्—जीवनः। परितः-सर्वतो विश्वं व्याप्यावस्थित इति—पर्यवस्थितः ॥ ११२ ॥**

विवृतिः

सन्तः-सन्मार्गवार्तिनः, ते च हरेरेव विभूतयो विद्याविनयवृद्धिप्रयोजना **इत्याह—सन्मार्गेति।** सद्भ्यो नम इति चतुर्थ्यन्तम्। "नमो वृक्षेभ्यो हरिकेशेभ्यः (तै. सं. ४-५-८) इतिवत्। सर्वाः प्रजाः प्राणरूपेण जीवयतीति जीवनः; ल्युट्; औणादिको युज्वा। "कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" (प्रश्न. उ. ६-३) इति श्रुत्या प्राणाख्यविभूत्यात्मना प्रजा जीवयन् जीवन **इत्याह—सर्वा इति।** परि-[1]परितः-सर्वतो विश्वं व्याप्य अवस्थितः पर्यवस्थितः। "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (तै.आ. १०-११) इति श्रुतेरित्याह—**परित इति।** अस्यैव विवरणं—**विश्वं व्याप्येति** ॥ ११२ ॥

---

[1] परितो विश्वं—**पा.**

## स्तोत्रम्

# अनन्तरूपोऽनन्तश्रीः

### भाष्यम्

[1] **अनन्तानि रूपाण्यस्य विश्वप्रपञ्चरूपेण स्थितस्येति— अनन्तरूपः । अनन्ता—अपरिमिता श्रीः—परा शक्तिरस्येति— अनन्तश्रीः । "परास्य शक्तिर्विविधैव श्रूयते" (श्वे. ६-८)**

### विवृतिः

अनन्तानि—अनेकानि रूपाण्यस्य विराडात्मन इत्यनन्तरूपः । "अचिन्त्यमव्यक्तमनन्तरूपम्" (कैवल्यउ. ६) "पश्यामि त्वां सर्वतोऽनन्तरूपम्" (भ. गी. ११-१६) इति श्रुतिस्मृतिसिद्धं नाम व्याचष्टे—**अनन्तानीति** । श्रयति—आश्रयति पारतन्त्र्याच्चिदात्मानमिति श्रीः—मायाशक्तिः, "क्विब्वचिप्रच्छि" (उणा. २२५) इत्यादिना श्रिञः क्विब्दीर्घौ । सा अनेककार्यात्मना अनन्ता—अनेका, ज्ञानं विना नाशाभावान्नित्या वा अस्येत्यनन्तश्रीरित्याह—**अपरिमितेति** । **परेति** । कार्य[2]मात्रं प्रति प्रकृतित्वेन व्यापिकेत्यर्थः । यद्वा श्रीशब्दो विभूतिवाची ।

"लक्ष्मीसरस्वतीधात्रीत्रिवर्गसम्पद्विभूतिशोभासु ।
उपकरणवेषरचनाविधासु च श्रीरिति प्रथिता" ॥

इति कोशान्मायाशक्तेरपि परमात्मनो [3]विभूतिविशेषत्वाद्विभूतिवाचिना श्रीशब्देन ग्रहणम् । तादृशशक्तिमत्त्वे श्रुतिं पठति—**परेति** । **अस्य**—देवस्य, **परा**—मूलप्रकृतित्वेन व्यापिनी, **विविधा**—अनन्तकार्यकरणप्रकृतित्वात्तद्रूपेण नानाविधा, **श्रूयते** श्रुतिस्मृत्या-[4]दिभिरित्यर्थः । जितः—अभिभूतः अनुत्पन्न एव मन्युः—क्रोधो यस्य स जितमन्युः । भृगुपादघातेनापि क्रोधानुत्पत्तेरित्याह—

---

[1] अनन्तादिरूपेण विश्व—**पा.** [2] मात्रप्रकृति—**पा.** [3] विभूतिवाचिना—**पा.** [4] दिष्विरत्यर्थः—**पा.**

स्तोत्रम्

## जितमन्युर्भयापहः ।

## चतुरश्रः

भाष्यम्

**इति श्रुतेः । मन्युः–क्रोधो जितो येन सः–जितमन्युः । भयं संसारजं पुंसामपघ्नन्–भयापहः ।**

**न्यायसमवेतः–चतुरश्रः पुंसां कर्मानुरूपं फलं प्रयच्छ-**

विवृतिः

**मन्युरिति ।** भयं संसारजं भक्तानां अपघ्नन्तीति "अन्येभ्योऽपि दृश्यन्ते" (उणा. सू. ५५५) इति डः । "आशिषि हनः" (पा. सू. ३-२-४९) इति सूत्रेण वा डः । भयमपवध्यादिति भयापह इत्यभिप्रेत्य व्याचष्टे—**भयमिति ।** "आङि श्रीहनिभ्यां ह्रस्वश्च" (उणा. सू. ५७७) इति सूत्रेण श्रिञ इण् स्यात् । स च डित् । आङो ह्रस्वश्चेत्यर्थेन अश्रिशब्दनिष्पत्तिः । "कोणस्तु स्त्रियः पाल्यश्रि-कोटयः" (नाम. २-८-९४) इत्यमरः । तथा च अश्रिशब्दः कोण-वचनः । चतस्रः अश्रयः–कोणाः अस्येति चतुरश्रः । "सुप्रात-सुश्व" (पा. सू. ५-४-१२०) इत्यादिना समासान्तोऽच्प्रत्ययो निपात्यते । लोके चतुरश्रशब्दः 'सर्वं चतुरश्रम्' इत्यादौ न्यायादनपेते प्रयुज्यत इत्यभिप्रेत्याह—**न्यायेति ।** न्यायो [1] यथोचितादभ्रंशः । "अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम्" (नाम. २-८-२५) इत्यमरः । तत्समवेतः–तत्सम्बद्धः, निर्दुष्ट इति यावत् । एतदे-वोपपादयति—**पुंसामिति ।** *प्राणिनां यदि कर्माननुरूपं कर्मा-

---

* "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" (ब्र. सू. २-१-३४) इति वैयासिकाधिकरणसिद्धान्तोऽत्रानुसन्धेयः ।

[1] यथोदिता–**पा.**

स्तोत्रम्

## गभीरात्मा विदिशः

भाष्यम्

**तीति । आत्मा-स्वरूपं चित्तं वा गभीरं-परिच्छेत्तुमशक्य-मस्येति —गभीरात्मा । विविधानि फलानि अधिकारिभ्यो**

विवृतिः

ननपेक्ष्य वा फलं प्रयच्छेत् तदा वैषम्यनैर्घृण्यादिदोषदुष्टः स्यात् । येन यादृशं कर्म कृतं, पुण्यं पापं वा, तस्मै तदनुरूपं फलं प्रयच्छन् न्यायसमवेतः परमेश्वर इत्यर्थः । यदि चतुरस्र इति दन्त्यपाठस्तदा दन्त्यगर्भेणास्रशब्देन कोणवाचिना विग्रहे बहुव्रीहिसमासे [1]साधुः । न च तादृशशब्दे विप्रतिपत्तिः ।

[2] "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि"

इति मेदिनीकोशात् । अर्थस्तु पूर्ववत् ॥

गभीरः-निश्चेतुमशक्यः दुर्ज्ञेय आत्मा-स्वरूपं चित्तं वा अस्येति गभीरात्मेत्याह—**आत्मेति** । विविधानि फलान्यधिकारिभ्यः श्रद्धाभक्तियुक्तेभ्यो हिरण्यगर्भादिभ्यः [3]कर्मोपासनाज्ञानपरेभ्यो विशेषेण-अतिशयेन दिशति-ददातीति विपूर्वात् "दिश अतिसर्जने" [4]इति धातोः "इगुपध" (पा. सू. ३-१-१३५) इत्यादिना कप्रत्यय इत्याभिप्रे[5]त्याह— **विविधानीति** । अत्र वीत्युपसर्गस्य तन्त्रावृत्त्या-दिना अर्थद्वयमित्यभिप्रेत्य विविधानि विशेषेणेति चोक्तम् । विशब्दो

---

[1] साधु-**पा.** [2] अस्रं-**पा.** [3] कर्मोपासनापरे-**पा.** [4] इत्यस्मात् इगु-**पा.**
[5] त्य व्याचष्टे वि-**पा.**

स्तोत्रम्

# व्यादिशो दिशः ॥ ११३ ॥

# अनादिः

भाष्यम्

**विशेषेण [1] दिशतीति—विदिशः । विविधामाज्ञां शक्रादीनां कुर्वन्—व्यादिशः । समस्तानां कर्मणां फलानि दिशन् वेदात्मना—दिशः ॥ ११३ ॥**

**आदिः—कारणमस्य न विद्यत इति—अनादिः । सर्व-**

विवृतिः

विविधवचनः । विविधमादिशति आदेशं—आज्ञां करोति शक्रादीनां राजेव भृत्यानामिति व्याङ्पूर्वात् "दिश अतिसर्जने" इत्यस्मात्पूर्ववदिगुपधलक्षणः क इत्याह—**विविधामिति** । दिशति—उपदिशति कर्मणां फलानि वेदात्मकः सन्निति दिशः, पूर्ववत् कप्रत्यय इत्याह—**समस्तानामिति** । विहितानां प्रतिषिद्धानां चेत्यर्थः ॥ ११३ ॥

आदिः—नियतपूर्ववर्ति कारणमस्य न विद्यते, अजन्यत्वादित्यनादिरित्याह—**आदिरिति** । कारणराहित्ये हेतुमाह—**सर्वेति** । श्रुतिस्मृतिभ्यां सर्वकारणत्वावगमादित्यर्थः । सर्वकारणस्यापि कारणवत्त्वे किं स्वयमेव स्वस्य कारणं? अन्यद्वा? नाद्यः एकस्यैव पौर्वापर्याभावेन स्वत एव स्वस्योत्पत्त्ययोगात् । न द्वितीयः । कारणान्तरस्वीकारे तस्यापि कारणान्तरमस्ति न वा? सत्त्वे अनवस्था । असत्त्वे [2] तदेव सर्वकारणत्वेन नो ब्रह्मेति भावः ।

---

[1] दिशन्—पा. [2] तस्यैव सर्व—पा.

स्तोत्रम्

# भूर्भुवो लक्ष्मीः

भाष्यम्

**कारणत्वात्। [1] भूः—आधारः, भुवः—सर्वभूताश्रयत्वेन प्रसिद्धाया भूम्याः, भुवोऽपि भूरिति—भूर्भुवः। अथ वा न केवलमसौ भूः भुवः, लक्ष्मीः शोभा चेति—भुवो लक्ष्मीः। अथ वा भूः—**

विवृतिः

भूशब्देन पृथिवीवाचिना आधारो लक्ष्यते। यद्वा "भूः स्थानमात्रे कथिता धरण्यामपि योषिति" इत्यभिधानकोशात् स्थानवचनो भूशब्दः। भुव इति षष्ठ्यन्तेन भूमिरुच्यते। तथा च सर्वभूताश्रयत्वेन प्रसिद्धाया भूमेरपि भूः—आधारस्थानं वेति भूर्भुव इति नाम व्याचष्टे—**भूराधार इति।** "भूर्भुवो लक्ष्मीः" इत्यत्र मध्यस्थस्य भुव इति शब्दस्य षष्ठ्यन्तस्य पूर्वोत्तरान्वयं देहलीदीपन्यायेनाभिप्रेत्य पूर्वान्वयित्वेन व्याख्यायोत्तरान्वयित्वेनापि व्याचष्टे—**अथ वा न केवलमसौ भूर्भुव इति।** न केवलमसौ भुवः—भूम्या आधार एव, अपि तु भुवः—भूम्या लक्ष्मीः—शोभा च।

"शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति गद्यते।"

इति लक्ष्मीशब्दः शोभावचनः। एवञ्च कार्यरूपां पृथिवीं प्रति ब्रह्मण उपादानत्वात्तद्भानरूपत्वेन तच्छोभात्वम्। "तस्य भासा सर्वमिदं विभाति" (मु. २-२-१०) इति श्रुतेः। रामकृष्णाद्यवतारात्मना वा पृथिव्याः शोभात्वमिति भुवो लक्ष्मीरिति नामार्थः। यद्वा भूश्च भुवश्च लक्ष्मीश्चेति समासात्मकं एकं नामेत्यभिप्रेत्य कल्पान्तरमाह—**अथ वेति।** लक्ष्मीरात्मविद्येत्युक्तम्। तत्र विष्णुपुराणगत-

[1] भूतानामाधारो भूर्भुवः—**पा.**

### स्तोत्रम्

## सुवीरो रुचिराङ्गदः ।

### भाष्यम्

भूलोकः, भुवः–भुवर्लोकः, लक्ष्मीः–आत्मविद्या, "आत्मविद्या च देवि त्वम्" (वि. पु. १-९-१२०) इति श्रीस्तुतौ । भूम्यन्तरिक्षयोः शोभेति वा–भूर्भुवो लक्ष्मीः । शोभना विविधा ईराः–गतयो [1]यस्य सः–सुवीरः । शोभनं विविधं [2]ईर्ते इति वा–सुवीरः । रुचिरे–कल्याणे अङ्गदे यस्येति–रुचिराङ्गदः ॥

### विवृतिः

लक्ष्मीस्तवस्थं वचनमाह–आत्मेति । "विमुक्तिफलदायिनी" इत्युत्तरपादो द्रष्टव्यः । तथा च भूलोकभुवर्लोकब्रह्मविद्यारूपत्रितयात्मक इत्यर्थः । द्वन्द्वगर्भषष्ठीतत्पुरुषमभिप्रेत्य पक्षान्तरमाह–भूम्यन्तरिक्षयोरिति । चन्द्रसूर्याग्न्यात्मना भूर्भुवर्लोकयोः शोभेत्यर्थः ॥

ईरणानि ईराः । "ईर गतौ" भावे घञ् । ईराः–विविधाः श्रवणमनननिदिध्यासनसाक्षात्काररूपा गतयः–ज्ञानानि । गत्यर्थानां ज्ञानार्थत्वात् । तानि श्रेयस्साधनत्वेन शोभना अस्येति सुवीरनाम व्याचष्टे–शोभना इति । यद्वा सु–शोभनाः योगिहृदय-सूर्यमण्डल-क्षीरपारावारादिरूपा विविधा ईराः–गतयः स्थानान्यस्येत्यर्थः । शोभनं–भुवनहितकरं विविधं मत्स्यकूर्मवराहाद्यनेकरूपं ईर्ते–गच्छतीति सुवीरः । "इगुपध" (पा. सू. ३-१-१३५) इत्यादिना क इत्यर्थान्तरमाह–शोभनमिति । रुचिरे–शोभने अङ्गदे–केयूरे अस्येत्याह–रुचिरे इति ।

---

[1] यस्येति सु–पा. [2] ईरणमस्येति–पा.

## स्तोत्रम्

# जननो जनजन्मादिर्भीमः

### भाष्यम्

**जन्तून् जनयन्–जननः। ल्युड्विधौ बहुलग्रहणात् कर्तरि [1]ल्युट्प्रत्ययः प्रयोगवचनात्। जनस्य–जनिमतः, जन्म–उद्भवः, तस्यादिः–मूलकारणमिति—जनजन्मादिः। भयहेतुत्वात्–भीमः। "भीमादयोऽपादाने" (पा. सू. ३-४-७४)**

### विवृतिः

जनयति जन्तूनिति जननः। कर्तरि ल्युडित्याह—**जन्तूनिति।** ननु करणाधिकरणयोः ल्युड्विधानात्कथं कर्तरि स इत्यत आह—**ल्युड्विधाविति।** **बहुलग्रहणादिति।** क्वचिदित्यन्यदेवेत्यर्थकादित्यर्थः। कर्तर्यपि ल्युड्भवतीत्यत्र वृद्धप्रयोगं दर्शयति—**प्रयोगवचनादिति।** जन्यत इति जनः। पचाद्यच्। कार्यमात्रम्। तस्य जन्म–जननं उत्पत्तिः, तस्यादिः–कारणमिति जनजन्मादिरित्याह–**जनस्येति।** बिभेत्यस्मादिति भीमः। "भियः षुग्वा" (उणा. १५३) इति मक्प्रत्ययः। विकल्पात् षुगागमाभावः। श्रुतिस्मृतिलक्षणस्वाज्ञोल्लङ्घिनां भयहेतुर्भीम इत्याह—**भयहेतुत्वादिति।** ननु "कर्तरि कृत्" (पा. सू. ३-४-६७) इति [2]कर्त्रर्थकत्वे कथमपादाने मक्प्रत्यय इत्याशङ्क्याह—**"भीमादयोऽपादाने"** इति। अनेन सूत्रेण भीमो भीष्म इत्यादिशब्दानामपादाने मक्प्रत्ययविधानान्न कर्त्रर्थ-

---

[1] ल्युट्। जनस्य-**पा.** [2] कर्त्रर्थकत्वेन–**पा.**

स्तोत्रम्

## भीमपराक्रमः ॥११४॥

## आधारनिलयो(ऽ)धाता

भाष्यम्

इति निपातनात्। "महद्भयं वज्रमुद्यतम्" (कठ. उ. ६-२) इति श्रुतेः। असुरादीनां भयहेतुः पराक्रमोऽस्यावतारेष्विति—भीमपराक्रमः ॥ ११४ ॥

पृथिव्यादीनां पञ्चभूतानामाधाराणामाधारत्वात्—आधारनिलयः। स्वात्मना धृतस्यास्यान्यो धाता नास्तीति—अधाता। "नद्यृतश्च" (पा. सू. ५-४-१५३) इति समासान्त-

विवृतिः

कत्वामिति भावः। आज्ञोल्लङ्घिनां भयहेतुत्वे श्रुतिमाह—**महदिति**। उद्यतं वज्रमिव आज्ञोल्लङ्घिनां महद्भयकारणमित्यर्थः। भीमः—असुरादीनां भयहेतुः पराक्रमः—बलमस्येति भीमपराक्रम इत्याह—**असुरादीनामिति** ॥ ११४ ॥

आधाराणामपि पञ्चभूतानां निलयः—आधार इत्याधारनिलय इत्याह — **पृथिव्यादीनामिति**। न विद्यते धाता स्वान्यो धारकोऽस्येति अधाता। "स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि" (छा. उ. ७-२४-१) इति श्रुतेः स्वमहिमप्रतिष्ठितत्वादित्याह—**स्वात्मनेति**। ननु "नद्यृतश्च" (पा. सू. ५-४-१५३) इति सूत्रेण नद्यन्तादृकारान्ताच्च बहुव्रीहेः समासान्तस्य कप्रत्ययस्य विधानात्कप्रत्ययेन भाव्यं द्विमातृक इत्यादिवदत आह—**नद्यृतश्चेति**। समासान्तविधिरनित्य इत्यत्र प्रमाणं तु—अंश्वादिगणे राजन्शब्दपाठः। स हि "प्रतेरंश्वादयस्तत्पुरुषे" (पा. सू, ६-२-१९३) इत्यन्तोदात्तार्थः। "राजाहस्सखिभ्यष्टच्" (पा. सू. ५-४-९१) इति टचो नित्यत्वे

## स्तोत्रम्

# पुष्पहासः प्रजागरः ।

## भाष्यम्

**विधिरनित्य इति कप्रत्ययाभावः । संहारसमये सर्वाः प्रजा धयति–पिबतीति वा–धाता । "धेट् पाने" इति धातुः । मुकुलात्मना स्थितानां पुष्पाणां हासवत् प्रपञ्चरूपेण विकासोऽस्येति–पुष्पहासः । नित्यप्रबुद्धस्वरूपत्वात् प्रकर्षेण जागर्तीति–प्रजागरः ॥**

## विवृतिः

किं तेनेति, "नद्यृतश्च" (पा. सू. ५-४-१५३) इति कप्रत्ययाभावः, समासान्तविधेरनित्यत्वाद्धेतोरिति योजना । "अनादिनिधनो धाता" (वि. स. १८) इत्यनेनापौनरुक्त्यायाकारं प्रश्लिष्याधातेति नाम व्याख्यातम् । इदानीमकारप्रश्लेषं विनैव शब्दैक्येऽपि अर्थभेदात्पौनरुक्त्यं परिहरन् व्याचष्टे—**संहारेति** । "धेट् पाने" [1]इत्यस्माद्धातोर्द्वितीयव्याख्याने धातेति रूपं बोध्यम् । **पिबतीति** । संहरतीत्यर्थः । हासवद्धासः पुष्पाणां मुकुलात्मना स्थितानां हासः–विकास इव प्रपञ्चरूपेण हासः–विकासो विस्तारोऽव्याकृतात्मना स्थितस्यास्येति पुष्पहासः । पुष्पाणां हास इव हासोऽस्येति विग्रहे— "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपश्च" (वा. १३५८) इति अश्वमुखादिवद्बहुव्रीहिरिति व्याचष्टे—**मुकुलात्मनेति** । प्रकृष्टः जागरोऽविद्यावरणरूपनिद्राक्षयोऽस्येति प्रजागर इति बहुव्रीहिः । प्रकर्षेण जागर्ति–नित्यमविद्यानिद्रायाः प्रबुद्धो वर्तत इति वा प्रजागरः । "जागृ निद्राक्षये" इत्यस्मात्पचाद्यजिति व्याचष्टे–**नित्यप्रबुद्धस्वरूपत्वादिति** । नित्यमविद्यावरणरूपनिद्रारहितबोधरूपत्वादित्यर्थः ॥

---

[1] इत्यस्य धातो–**पा.**

स्तोत्रम्

## ऊर्ध्वगः सत्पथाचारः

भाष्यम्

**सर्वेषामुपरि तिष्ठन्–ऊर्ध्वगः। सतां पन्थानः–कर्माणि सत्पथाः। तानाचरत्येष इति–सत्पथाचारः। मृतान् परीक्षित्प्र-**

विवृतिः

संसारमण्डलान्तर्वर्तिभ्यो जीवेभ्य ऊर्ध्वं–उपरि गच्छतीत्यूर्ध्वगः। "त्रिपादस्यामृतं दिवि" (छा. उ. ३-१२-५) "अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छा. उ. ३-१३-७) इत्यादिश्रुतिभ्यः। "अन्यत्रापि दृश्यत इति वक्तव्यम्" (वा. २०१८) इति गमेर्डप्रत्यय इत्याह—**सर्वेषामिति**। सतां–साधूनां वैदिकानां ये पन्थानः–अभ्युदयनिःश्रेयसप्राप्त्युपायभूता धर्माः, तानाचरति—अनुतिष्ठति लोकसङ्ग्रहार्थमिति सत्पथाचारः।

"उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।"

(भ. गी. ३-२४)

इत्यादिभगवद्वचनात्। अत्राङ्पूर्वाच्चरतेः सत्पथोपपदात् "कर्मण्यण्" (पा. सू. ३-२-१) इत्यण्प्रत्यय इत्याह–**सतामिति**। सतां पन्थान इति विग्रहे "ऋक्पूरब्धूः" (पा. सू. ५-४-७४) इत्यादिना अप्रत्ययः समासान्तः। अकारान्तः पथिन्शब्दपर्यायः पथशब्दोऽप्यस्ति। तदन्तस्तत्पुरुषो वा बोध्यः। द्रौण्यस्त्रविप्लुष्टगर्भस्थपरीक्षितो गतासोः प्राणान् ददातीति प्राणद इत्याह—**मृतानिति**। परीक्षित्प्रभृतीनिति भाष्ये प्रभृतिशब्देन *ब्राह्मणपुत्रस्य मृतवानराणां च ग्रहणम्। एवं च "ईशानः प्राणदः प्राणः" (वि. स. २१) इत्यादिषु चतुर्ष्वपि प्राणदनामसु सम्बन्धभेदादर्थभेदाद्वा अपौनरुक्त्यं द्रष्टव्यम्॥

---

* ब्राह्मणपुत्रः–सान्दीपनिसुतः.

## स्तोत्रम्

# प्राणदः प्रणवः पणः ॥ ११५ ॥

### भाष्यम्

भृतीन् जीवयन्–प्राणदः। प्रणवो नाम परमात्मनो वाचक ओङ्कारः, तदभेदोपचारेणायं–प्रणवः। पणतिर्व्यवहारार्थः। तं कुर्वन्–पणः। "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" (तै. आ. ३-१२) इति श्रुतेः। पुण्यानि सर्वाणि कर्माणि [1]पणं सङ्गृह्याधिकारिभ्यस्तत्फलं प्रयच्छतीति वा लक्षणया–पणः ॥ ११५ ॥

### विवृतिः

प्रणवो नाम परमात्मनो वाचक ओङ्कारः। "तस्य वाचकः प्रणवः" (यो. सू. १-२७) इति पतञ्जलिसूत्रात्। तथा च वाचकशब्दो वाच्येऽभेदोपचारात्प्रयुक्त इत्याह—**प्रणव इति**। अनेन "प्राणदः प्रणवः पृथुः" (वि. स. ५७) इत्यत्रत्येन प्रणवनाम्ना अपौनरुक्त्य-मिति द्रष्टव्यम्। पणते–व्यवहरति जीवरूपेणेति पणः, "पण व्यवहारे" इत्यस्मात्पचाद्यजित्याह—**पणतीति**। तत्र श्रुतिमाह—**सर्वाणीति**। **सर्वाणि रूपाणि**–शरीराणि, **विचित्य**–सृष्ट्वा, तेषां **नामानि** च **कृत्वा** प्रविश्य प्रतिबिम्बभावेन **अभिवदन्**–ब्राह्मणोऽहं पश्यामि शृणोमीत्यादि-व्यवहारं कुर्वन्, **यदास्ते**–य आस्ते तं विद्वानमृतो भवतीति श्रुत्यर्थः। पणतेरभिवदनादिव्यवहारोऽर्थ इति व्याख्याय पणते पण इतीश्वरीय-क्रयविक्रयव्यवहारार्थत्वेनापि व्याचष्टे—**पुण्यानीति**। यथा वणिक् पणं–मूल्यं गृहीत्वा क्रेतृभ्यस्तण्डुलादि प्रयच्छति तथा ईश्वरोऽप्यधि-कारिभिर्जीवैः कृतानि पुण्यानि स्वार्पितानि पणत्वेन गृहीत्वा तत्फलं प्रयच्छतीति विक्रयरूपव्यवहारं कुर्वन्निवेति विक्रेतृशब्दाल्लक्षणया पण इत्युच्यत इत्यर्थः ॥ ११५ ॥

---

[1] फलैः स–**पा.**

## स्तोत्रम्

# प्रमाणं

### भाष्यम्

**प्रमितिः–संवित्स्वयंप्रभा --प्रमाणम् । "प्रज्ञानं ब्रह्म" (ऐ. उ. ५-३) इति श्रुतेः ।**

**ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।**
**तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥**

**(वि. पु. १-२-६)**

**इति विष्णुपुराणे ।**

**प्राणाः–इन्द्रियाणि यत्र जीवे निलीयन्ते, तत्परतन्त्रत्वात्,**

### विवृतिः

प्रमितिः प्रमाणम् । "माङ् माने" इत्यस्माद्भावे ल्युट् । स्वप्रकाशज्ञानस्वरूपं ब्रह्म प्रमाणवृत्त्यभिव्यक्तं सत् प्रमाणमित्याह—**प्रमितिरिति** । ब्रह्मणो ज्ञानस्वरूपत्वे श्रुतिस्मृती पठति—**प्रज्ञानमित्यादि** । **अर्थस्वरूपेण** – दृश्यस्वरूपेण, **भ्रान्तिदर्शनतः**—द्रष्टृजीवभ्रान्तिरूपेण ज्ञानेन स्थितमिति विष्णुपुराणवचनार्थः ॥

निलीयन्ते संश्लिष्यन्तेऽत्रेति निलयः, "लीङ् श्लेषणे" इत्यस्मात् "एरच्" (पा. सू. ३-३-५६) इत्यच् "पुंसि संज्ञायां घः प्रायेण" (पा. सू. ३-३-११८) इति घो वा, प्राणानामेकादशानां निलयः प्राणनिलयो जीवरूप इति व्याचष्टे--**प्राणा इति** । **तत्परतन्त्रत्वादिति** । [1] जीवाधीनत्वात्प्राणानामित्यर्थः । इन्द्रियाणि प्राणा इति

---

[1] जीवाधारत्वात्–**पा.**

स्तोत्रम्

## प्राणनिलयः [1]प्राणभृत्

भाष्यम्

**देहस्य धारकाः प्राणापानादयो वा तस्मिन् निलीयन्ते, प्राणितीति प्राणो जीवः परे पुंसि निलीयत इति वा, प्राणान् जीवांश्च [2]संहरतीति वा—प्राणनिलयः ॥**

**पोषयन्नन्नरूपेण प्राणान्–प्राणभृत् । प्राणिनो जीवयन्**

विवृतिः

व्याख्याय पञ्चवृत्तिकं प्राणं गृहीत्वा व्याचष्टे—**देहस्येति** । देहधारकाणां प्राणापानादीनां निलयः–आश्रयो जीवरूपेणेत्यर्थः । प्राणितीति प्राणो जीवः, स लीयते–लयं प्राप्नोति सुषुप्तौ मोक्षे च परमात्मनीति जीवं प्राणशब्दार्थमादाय कल्पान्तरमाह—**प्राणितीति** । यद्वा प्रतिबिम्बभूतो जीवो बिम्बभूते परमात्मनि तादात्म्येन वर्तत इत्यर्थः । नितरां लयः–नाशो यस्मात्संहर्तुः स निलयः । प्राणानामेकादशानां प्राणापानादीनां जीवानां च निलयः–स्वात्मन्युपसंहर्ता, यद्वा नितरां लयो निलयः–नाशः तं करोतीति "तत्करोति तदाचष्टे" (ग. सू. २०४) इति णिजन्तात्पचाद्यच् । निलयः–लयकृत्, प्राणानां जीवानां च लयकृत् प्राणनिलय इति प्राणानां जीवानां च समुच्चयमर्थं गृहीत्वा व्याख्यानान्तरमाह—**प्राणानिति** ॥

प्राणान् बिभर्ति पोषयत्यन्नरूपेणेति प्राणभृदित्याह–**पोषयन्निति**। प्राणन्तीति प्राणाः–जीवाः, तान् जीवयतीति प्राणजीवनः । प्राणाख्यैः पवनैर्देहं संयोजयन् प्राणशरीरसंयोगरूपजीवनप्रयोजको भवतीत्यभिप्रेत्याह—**प्राणिन इति** । जीवनहेतुत्वे श्रुतिमाह—

---

[1] प्राणधृक्–**पा.** [2] संहरंस्तेषामाश्रय इति वा प्रा–**पा.** संहरन्निति वा प्रा–**पा.**

स्तोत्रम्

## प्राणजीवनः ।

भाष्यम्

**प्राणाख्यैः पवनैः—प्राणजीवनः ।**

**"न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ॥**

**(कठ. उ. ५-५)**

**इति मन्त्रवर्णात् ।**

विवृतिः

**न प्राणेनेति ।** अत्र भाष्यम्—"न प्राणेन नापानेन चक्षुरादिना वा मर्त्यः—मनुष्यो देहवान् कश्चन—कोऽपि जीवति । न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेनासंहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टं गृहादीनां लोके । तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हति । अत इतरेण तु-इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति—प्राणान् धारयन्ति । यस्मिन्—संहतविलक्षणे आत्मनि सति परस्मिन्नेतौ—प्राणापानौ चक्षुरादिभिः सह संहतावुपाश्रितौ यस्यासंहतस्यार्थे प्राणापानादिः स्वव्यापारं कुर्वन् वर्तते संहतः सन् स ततोऽन्यः [1]सिद्ध इत्यभिप्रायः" (शां. भा. क. उ. ५-५) इति । सर्वस्मिन् दृश्ये बाध्यमानेऽपि तद्बाधाधिष्ठानत्वेन स्वयमबाध्यमानमनारोपितं स्वरूपं तत्त्वमित्यभिप्रेत्य पर्यायशब्दैस्तत्त्वनाम

---

[1] स्थित इ-पा.

## स्तोत्रम्

# तत्त्वं तत्त्वविदेकात्मा

### भाष्यम्

**तत्त्वममृतं सत्यं परमार्थसतत्त्वमित्येते एकार्थवाचिनः। परमार्थसतो ब्रह्मणो वाचकः शब्दः तत्त्वम्। तत्त्वं—स्वरूपं यथावद्वेत्तीति—तत्त्ववित्। एकश्चासावात्मा चेति—एकात्मा, "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्" (ऐ. उ. १-१) इति श्रुतेः।**

### विवृतिः

व्याचष्टे—**तत्त्वममृतमित्यादिना**। तत्त्वं—स्वरूपं वेत्ति—सकलसंसारधर्मविलक्षणः सच्चित्सुखरूपोऽहमस्मीति जानातीति तत्त्ववित्। "सत्सूद्विष" (पा. सू. ३-२-६१) इत्यादिना विदेः क्विबिति व्याचष्टे—**तत्त्वं स्वरूपमिति**। एकः—केवलः अद्वितीयः। "**एके** मुख्यान्यकेवलाः" (नाम. ३-३-१६) इत्यभिधानकोशात्। एकोऽद्वितीयश्चासावात्मा चेत्येकात्मा, जीवेश्वरभेदस्य जीवानां परस्परभेदस्य जडतद्भेदस्य च मिथ्यात्वादित्यभिप्रेत्य व्याचष्टे—**एकश्चेति**। ऐकात्म्ये श्रुतिं पठति—**आत्मा वा इति**। अत्रैकशब्देन स्वगतो भेदो व्यावर्त्यते। वृक्षवन्नानात्मको न भवति। किन्त्वेकात्मक इति एवशब्देनात्मान्तरव्यावृत्तिः। योऽयमेकः [1]स एव, न त्वन्यः कश्चित्तादृश इति। नान्यदित्यादिना विजातीयभेदो निषिध्यते। **अन्यत्**—प्रकृतादात्मनो विलक्षणं, **किञ्चन**—किञ्चिदपि, न **मिषत्**—नासीदिति श्रुत्यर्थः।

---

[1] कश्चित्तादृश इति नान्यदि—**पा.**

भाष्यम्

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति [1] गीयते ॥
(लिङ्ग. पु. ७०-९६)

इति स्मृतेश्च ।

विवृतिः

अत्र नामगतैकशब्देन त्रिविधभेदो निरस्यत इति बोध्यम् । आत्मशब्दनिर्वचनपरस्मृतिवशादप्यखण्डैकरसवस्तुसिद्धिरित्याभिप्रेत्य तन्निर्वचनपरां * मनुस्मृतिं पठति—यच्चेति । उपक्रम एव व्याख्यातोऽयं श्लोकः । [2] अयमर्थः—द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्चेति । व्यवहारोऽपि त्रिविधः । जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं [3] जीव उपाधिविलये सति परमानन्दरूपं ब्रह्म प्राप्नोति । तथा च कैवल्योपनिषदि—

"सुषुप्तिकाले सकले विलीने
तमोऽभिभूतः सुखरूपमेति ।" (कैव. १३)

इति । तस्मादाप्नोतीत्यात्मेति स्मर्यमाणप्रथमनिर्वचनं द्रष्टव्यम् । स्वप्नावस्थायामयं जीवो जागरस्थपदार्थवासनाः सर्वा आदत्त इत्यात्मेति

---

* श्लोकोऽयं मनुस्मृतौ नोपलभ्यते ।

[1] कीर्त्यते—पा. [2] यद्वा "आप्लृ व्याप्तौ" इति धात्वर्थानुसारेण व्यापक आत्मशब्दार्थः । यद्यस्मादादत्ते संहरति स्वात्मन्येव सर्वं जगदिति समस्तजगदुपादानत्वं लक्ष्यते । विषयानत्तीत्यात्मेति व्युत्पत्त्यास्य चैतन्याभासेनोपलभ्यत्वमाप्लृशब्दार्थः । येन कारणेनास्यात्मनः सन्ततो निरन्तरो भावः ; कल्पितस्याधिष्ठानसत्तामन्तरेण सत्त्वाभावात् । यथा रज्ज्वामध्यस्ते सर्पे रज्ज्वात्मत्वं तथा कल्पितं सर्वं येन स्वरूपवत्स आत्मेत्यर्थः । एतेनैकात्मनामगतात्मशब्देन स्पष्टीक्रियत इति मन्तव्यम्—पा. [3] जीवाख्यामुपाधिविलये—पा.

### विवृतिः

द्वितीयं निर्वचनम्। तथा च वाजसनेयिनः पठन्ति—"स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं निहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" (बृह. उ. ४-३-९) इति जागरावस्थायां चक्षुरादीन्द्रियैर्बाह्यान् रूपादिविषयानत्ति-भुङ्क्ते। तथा च कैवल्योपनिषत्—

"स्त्रियन्नपानादिविचित्रभोगैः
स एव जाग्रत्परितृप्तिमेति।" (कैव. उ. १२)

इति। ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यम्। सोपाधिकस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम्॥

अथ केवलस्य निर्वचनत्रयमुच्यते—यद्यस्मात्कारणादस्यात्मनो भावः—स्वभावविशेषः सन्ततः—परिच्छेदरहितः। तथा च "सत्यं ज्ञानमनन्तम्" (तै. उ. २-१) इत्यत्र श्रुतौ देशकालवस्तुपरिच्छेद-रहितत्वमनन्तत्वमित्यभिहितम्। तस्मादतति—सातत्येन गच्छतीत्यात्मेति चतुर्थं निर्वचनं द्रष्टव्यम्। एवं सत्यत्र तत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसं तत्त्वमात्मशब्दप्रवृत्तिनिमित्तम्। यदि धातु-प्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य स्वरूपवाचकत्वमुच्यते तदाप्ययमस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन सर्वस्वरूपत्वमस्ति। न ह्यारोपितानां सर्पदण्डमालाबलीवर्दमूत्रत्वादीनामधिष्ठानभूतरज्जुमन्तरेण किञ्चिदन्यद्वास्तवं स्वरूपमस्ति। किं बहुना; यद्ययमात्मशब्दो यौगिको यदि वा रूढः, सर्वथापि सन्ततोऽखण्डैकरसः सर्वजगदधिष्ठा-नत्वेन तदीयवास्तवस्वरूपभूतः पदार्थः आत्मशब्देनात्र विवक्षितः। एतेनैकात्मनामगतात्मशब्दोऽपि व्याख्यायत इति बोध्यम्। एवञ्चात्म-शब्दार्थभूतमखण्डैकरसं वस्तु एकात्मनामगतैकशब्देन स्पष्टीक्रियत इति मन्तव्यम्॥

## स्तोत्रम्

# जन्ममृत्युजरातिगः ॥ ११६ ॥

## भाष्यम्

"जायते अस्ति *वर्धते विपरिणमते अपक्षीयते नश्यति" (निरु. १-१-२) इति षड्भावविकारानतीत्य गच्छतीति— जन्ममृत्युजरातिगः ।

## विवृतिः

जन्मादित्रयग्रहणमुपलक्षणमन्येषामपि भावविकाराणां यास्कपठितानाम् । तथा च जन्मादीन् षड्भावविकारानतीत्य गच्छतीति, "अन्यत्रापि दृश्यत इति वक्तव्यम्" (वा. २०१८) इति गमेर्ड इति जन्ममृत्युजरातिगनामार्थ इत्यभिप्रेत्य जन्मादिविक्रियाप्रतिपादकं निरुक्तवचनं पठति—जायत इत्यादि । "षड्भावविकारा भवन्तीति वार्ष्यायणिः जायते अस्ति † वर्धते विपरिणमते अपक्षीयते [1]विनश्यतीति" (निरु. १-१-२) इति निरुक्तवचनम् । तत्र जायत इति जन्मलक्षणविक्रिया नात्मनः । यो ह्यभूत्वा भवति स जन्माख्यविक्रियावान् । आत्मनस्तु प्रागपि सत्त्वान्न जन्मलक्षणविक्रियावत्त्वम् । जन्माभावादेव तत्पूर्वकास्तित्वलक्षणविक्रियाभावः । अवयवानामुपचयावस्थां यः प्राप्नोति स वर्धत इति व्यवह्रियते । आत्मा तु तदभावान्न वर्धते । पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणामः । आत्मा तु निरवयवत्वान्न विपरिणमते । अपक्षीयत इत्यपचयावस्था । सा चात्मनः

---

* निरुक्ते वर्धतेः पूर्वं विपरिणमतेः पाठो दृश्यते । † निरुक्ते अस्तेः पाठानन्तरं विपरिणमतेः पाठो दृश्यते ।

[1] विनश्यतीति वार्ष्यायणिः—पा.

भाष्यम्

"न जायते म्रियते वा [1] विपश्चित्
नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे" ॥ (कठ. उ. २-१८)

इति मन्त्रवर्णात् ॥ ११६ ॥

विवृतिः

कूटस्थत्वान्निर्गुणत्वाच्च न स्वरूपतो गुणतो वा सम्भवति । प्राक् सत उत्तरकालसत्त्वाभावाद्विनश्यतीति व्यवह्रियते [2] घटादिर्लोके । आत्मा तूत्तरकालेऽपि सत्त्वान्न विनाशलक्षणविक्रियावानित्यर्थः । निर्विकारत्वे श्रुतिमाह—**न जायत इति ।** जननमरणयोराद्यन्तविकारयोरात्मनि प्रतिषेधात्तन्मध्यवर्तिनो विकारा अपि तत्र न सन्तीत्यर्थात्प्रतिपादितं भवति । स च सर्वविकाररहित आत्मा विपश्चिन्मेधावी, अपरिलुप्तज्ञानस्वभावात् । किञ्च नायमात्मा कुतश्चित्कारणात् द्वैतवदुत्पद्यते । तथाविधस्य वस्त्वन्तरस्यैवाभावात् । ननु वियदादिकं वस्तु विद्यत इति तत्राह—**न बभूवेति ।** तस्मादात्मनः कश्चिदर्थान्तरभूतः पदार्थो **न बभूव**—नोत्पन्नः । "आत्मन आकाशः सम्भूतः" (तै. उ. २-१) इति श्रुतिस्तु मायावशादद्वितीये ब्रह्मणि अध्यासप्रतिपादनपरा । तस्मात्कारणाभावात् अयमेवात्मा **अजः**—जननरहितः, अत एव **नित्यः शाश्वतः** ध्रुवः—अपक्षयवर्जितः, **पुराणः**—पूर्वकालेऽपि नवः, निरवयवत्वेन तदुपचयापचययोरभावात्सर्वदा एकरूप एवेत्यर्थः । एवंविध आत्मा स्वाधिष्ठिते **शरीरे** शस्त्रादिभि**र्हन्यमाने**ऽपि **न हन्यते**—न हिंस्यत इति श्रुत्यर्थः ॥ ११६ ॥

---

[1] विपश्चिदित्यादिमन्त्रवर्णात्–पा. [2] जडादिर्लोकः–पा.

## स्तोत्रम्

# भूर्भुवस्स्वस्तरुः

## भाष्यम्

**भूर्भुवस्स्वस्समाख्यानि त्रीणि व्याहृतिरूपाणि शुक्राणि**

## विवृतिः

भूर्भुवःस्वस्तरुरितिनामव्याख्यानायापेक्षितव्याहृतित्रयस्य त्रयीसारत्वे प्रमाणमाह—**भूर्भुवस्स्वरिति** । तथा च व्याहृतीनां त्रयीसारत्वे होमादिना जगत्तरणहेतुत्वे च बह्वृचब्राह्मणम्—"प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति। स तपोऽतप्यत । स तपस्तप्त्वेमाल्लोँकानसृजत। पृथिवीमन्तरिक्षं दिवम्। ताल्लोँकानभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त । अग्निरेव पृथिव्या अजायत। वायुरन्तरिक्षादादित्यो दिवः। तानि ज्योतींष्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त। ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायोस्सामवेद आदित्यात् । तान् वेदानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त। [1]भूरित्येतदृग्वेदादजायत । भुव इति यजुर्वेदास्स्वरिति सामवेदात्।" (ऐ. ब्रा. ५-५-३२) इति व्याहृतिमन्त्रकरणकहोमा अपि बह्वृचब्राह्मणे विहिताः । "यदि यज्ञ ऋक्त आर्तिर्भवति भूरिति [2]गार्हपत्ये जुहुवाथ। यदि यजुष्टो भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु, यदि सामतः स्वरित्याहवनीये, यद्यविज्ञाता [3]सर्वव्यापद्वा भूर्भुवस्स्वरिति सर्वा अनुद्रुत्य आहवनीय एव [4]जुहुवाथ" (ऐ. ब्रा. ५-५-३२) इति च। तथा च भूर्भुवस्स्वरिति व्याहृतिभिः होमादिद्वारा [5]जगत्तरति—वैगुण्यं समादधाति,

---

[1] भूरित्येव ऋ--पा. [2] ब्रह्मा जुहुयात्--पा. [3] सर्वलोपाद्वा—पा. [4] जुहुयात्—पा.
[5] जगद्भवति-पा.

भाष्यम्

**त्रयीसाराणि बह्वृचा आहुः। तैर्होमादिना जगत्त्रयं तरति प्लवते वेति—भूर्भुवस्स्वस्तरुः।**

**"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" (मनु. ३-७६)**

विवृतिः

प्लवते—[1] उत्प्लुत्य गच्छति वेति विग्रहे "तॄ प्लवनतरणयोः" इत्यस्मात् "भृमृशीतॄचरित्सरितनिधनिमिमसिभ्य उः" (उणा. सू. ७) इत्युप्रत्ययः। तथा च भूरादिभिः [2] होमद्वारा तरणकर्तृजगदेव भूर्भुवस्स्वस्तरुः। तद्रूपो भगवानिति व्याचष्टे—**तैर्होमादिनेति। तैरिति।** [3] व्याहृतिमन्त्रैरित्यर्थः। **तरतीति।** व्याहृतिमन्त्रैर्होमादिद्वारा मन्त्रादिश्रेषकृतप्रत्यवायं तरति—नाशयतीत्यर्थः। **प्लवते वेति।** उत्प्लुत्य गच्छति, न प्रत्यवायेन संस्पृश्यत इत्यर्थः। यद्वा तरतिरत्रान्तर्भावितण्यर्थः। तथा च भूर्भुवस्स्वर्मन्त्रैः स्वसृष्टैर्जगत्तारयति हरिरित्यर्थः। अथवा तारयतेर्णिजन्तात् "बहुलमन्यत्रापि संज्ञाच्छन्दसोः" (उणा. सू. १८०) इति णेर्लुकि वृध्द्यभावे तरतेः पूर्ववदुप्रत्यय इति बोध्यम्। होमादिद्वारा व्याहृतीनां जगदुपकारकत्वे मनुवचनं पठति—**अग्नाविति।** आहुत्यपूर्वमेवादित्यं प्राप्य वृष्टिरूपेण परिणमते, वृष्टेश्च व्रीहियवादिरूपमन्नं जायते, ततश्च प्रजा [4] इत्येवमुपकारकत्वमित्यर्थः। यद्वा भूर्भुवस्स्वश्शब्देन लोकत्रयं गृह्यते सप्राणिवर्गम्। भूर्भुवस्स्वश्चासौ तरुश्च—संसारवृक्षश्चेति कर्मधारये भूर्भुवस्स्वस्तरुः। "ऊर्ध्वमूलोऽवाक्शाखः" (कठ. ६-१), "ऊर्ध्व-

---

[1] न निमज्जति वेति—**पा.** [2] होमकर्तृद्वारा—**पा.** [3] व्याहृतिमिरित्यर्थः—**पा.**
[4] इत्येवंरूपमुप—**पा.**

स्तोत्रम्

## तारः

भाष्यम्

**इति मनुवचनात् । अथ वा भूर्भुवस्स्वस्समाख्यलोकत्रय-संसारवृक्षः—भूर्भुवस्स्वस्तरुः । भूर्भुवस्स्वराख्यं लोकत्रयं वृक्षवद्व्याप्य तिष्ठतीति वा—भूर्भुवस्स्वस्तरुः । संसार[1]सागरं तारयन्—तारः प्रणवो वा । सर्वस्य लोकस्य [2]जनक इति—**

विवृतिः

मूलमधश्शाखम्" (भ. गी. १५-१) इति श्रुतिस्मृतिभ्यां सप्राणिवर्गस्य लोकत्रयस्य संसारवृक्षस्य [3]तद्विभूतित्वात्तेन स्तूयते हरिरित्यर्थान्तरमाह—**भूर्भुवस्स्वरिति** । अथवा तरुरिव तरुः, भूर्भुवस्स्वराख्यस्य लोकत्रयस्य संसारवृक्षस्य तरुः भूर्भुवस्स्वस्तरुः । यथा तरुर्न्यग्रोधादिः पादाख्यैकदेशेनाधःप्रदेशं व्याप्य तिष्ठति, एवं परमात्मापि पादैकदेशेन भूर्भुवस्स्वराख्यं लोकत्र[4]यसंसारवृक्षं व्याप्य वर्तत इति भूर्भुवस्स्वस्तरुः । "पादोऽस्य सर्वा भूतानि" (छा. उ. ३-१२-६) इति श्रुतेरित्यभिप्रेत्य कल्पान्तरमाह—**लोकत्रयमिति** । संसारसागरं तारयतीति तारः । तरतेर्ण्यन्तात्पचाद्यजित्याह—**संसारेति** । "सूते सर्वं जनयति, सूयते वा सर्वम्" इति श्रुतेः सूतेः सूयतेर्वा तृचि "स्वरति सूति सूयति" (पा. सू. ७-२-४४) इति इडागमे सवितेति रूपम्, सर्वस्य जनक इत्यर्थ इत्यभिप्रेत्य व्याचष्टे—**सर्वस्य लोकस्येति** । सपितेत्यपि पकारपाठः । तस्मिन् पक्षे स पिता इति भिन्नं पदं समस्तमेकं पदं वा । स पितेति भिन्नपदपक्षे

---

[1] सागराद्-**पा.** [2] जनकत्वात् स-**पा.** [3] तद्विभूतित्वेन-**पा.** [4] यमधःप्रदेशसं-**पा.**

## स्तोत्रम्

# [1]सविता प्रपितामहः ।

## भाष्यम्

**सविता[2]। पितामहस्य–ब्रह्मणोऽपि पितेति—प्रपितामहः ॥**

## विवृतिः

सः–श्रुतिस्मृतिप्रसिद्धः पिता–जनक इति सविशेषणमेकं नाम । तस्मै पित्रे नम इति चतुर्थ्यन्तम् । [3]समस्तमिति पक्षे समानश्चासौ पिता च सपिता, सर्वकार्यसाधारणो जनक इत्यर्थः । "समानस्य छन्दसि" (पा. सू. ६-३-८४) इति सूत्रे "समानस्येति योगो विभज्यते । तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धम्" इति काशिकोक्तेस्तत्र-त्यादिशब्देन सपितेत्यस्यापि परिग्रहणात्समानस्य सभावः । यदा तु सहशब्दस्सदृशवचनोऽस्ति 'सदृशः सख्या ससखि' इत्यत्र, यथा—

"सह साकल्यसादृश्ययौगपद्यसमृद्धिषु ।"

इति विश्वकोशाच्च (तदा) तेनायमस्वपदविग्रहो बहुव्रीहिः समानः पक्षोऽस्येत्यादि, तदा नैतदुपपद्यते । सपक्ष इत्यादिप्रयोगाणा-मन्यथोपपत्तेः, योगविभागे च प्रमाणाभावात्, सह पित्रा सपितेति बहुव्रीहिर्वा बोध्यः । समासान्तविधेरनित्यत्वात् "नद्यृतश्च" (पा. सू. ५-४-१५३) इति कबभावः । "वोपसर्जनस्य" (पा. सू. ६-३-८२) इति सहस्य सादेश इति कश्चिन्नामव्याख्याने स्थितम् ॥

पितुः पितेति विग्रहे "मातृपितृभ्यां पितरि डामहच्" (वा. २७०९) पितामहः । प्रकृष्टः पितामहः, "प्रादयो गताद्यर्थे प्रथमया" (वा. १३३५) इति समासे प्रपितामहः । पितामहस्य–ब्रह्मणोऽपि पितेत्यभिप्रेत्य व्याचष्टे—**पितामहस्येति** ॥

---

[1] स पिता–**पा.** [2] स पिता--**पा.** [3] समस्तपक्षे–**पा.**

## स्तोत्रम्

# यज्ञो यज्ञपतिः

## भाष्यम्

[1]सङ्गन्ता—यज्ञः। यज्ञानां पाता, स्वामी वा—यज्ञपतिः। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"

## विवृतिः

यजति—कर्मफलैः प्राणिनः सङ्गतान् करोतीति, यद्वा यजन्ति—सङ्गच्छन्ते कर्मफलैरनेनेति यज्ञः। "यजयाचयतविच्छप्रच्छरक्षो नङ्" (पा. सू. ३-३-९०) इति सूत्रेण "यज देवपूजासङ्गतिकरणदानेषु" इति धातोः करणे बाहुलकात्कर्तरि वा नङ्। "यज्ञ इज्यो महेज्यः" (वि. स. ९९) इत्यत्रत्येन यज्ञनाम्ना पौनरुक्त्यं परिहरन् व्याचष्टे—सङ्गन्ता यज्ञ इति। यज्ञस्वरूपत्वाद्यज्ञ इति, यज्ञात्मना यज्ञ इति च पाठो दृश्यते। तत्राहवनीयादिरग्नि[2]र्यज्ञशब्दार्थः क्रियारूपो वा।

"यज्ञः स्यादात्मनि मखे नारायणहुताशयोः"

इति कोशात्। एवञ्च आहवनीयाद्यग्निरूपोऽपि विष्णुरेवेति व्याख्येयम्। अन्यथा "यज्ञ इज्यो महेज्यश्च" (वि. स. ९९) इत्यनेन पौनरुक्त्यं स्यादिति। यज्ञानां—अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्युक्तानां स्मार्तानां च पतिः—पालकः, विच्छेदे सति यथापूर्वं तेषां प्रवर्तनात् स्वनामोच्चारणादिना तदीयाङ्गवैकल्यप्रयुक्तवैगुण्यपरिहरणात्, स्वामी वा पतिः, [3]वस्वादिदेवतारूपेण भोक्तृत्वात्तत्फलप्रदातृत्वाच्चेति पतिशब्दस्यार्थद्वयं गृहीत्वा व्याचष्टे—यज्ञानामिति। तत्र भगवद्वचनमाह—अहं हीति। सर्वेषां यज्ञानां भोक्ता अहं वस्वादिरूपेण, प्रभुः—स्वामी तत्फलदाता तदभिमानिनी देवता चेत्यर्थः। दाशरथ्यादि-

---

[1] यज्ञस्वरूपत्वात् यज्ञः—पा. यज्ञात्मना यज्ञः—पा. [2]येजिश्च—पा. [3]विश्वादि—पा.

स्तोत्रम्

## यज्वा यज्ञाङ्गः

भाष्यम्

(भ. गी. ९-२४) इति भगवद्वचनात् । यजमानात्मना तिष्ठन्—यज्वा । यज्ञा अङ्गान्यस्येति वराहमूर्तिः—यज्ञाङ्गः ।

**वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।**
**अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥**

विवृतिः

रूपेणेष्टवान् यज्वा, "भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः" इति स्मरणाद्यज्वस्वरूपो वेत्याह—**यजमानात्मनेति**। यज्ञाद्यङ्गान्यस्येति यज्ञाङ्गो वराहमूर्तिरूप इत्याह—**यज्ञा इति**। यज्ञाङ्गत्वमेव हरिवंशवचनोदाहरणेन स्पष्टीकरोति—**वेदपाद इत्यादिना**। चतुस्सङ्ख्यत्वाद्यज्ञाङ्गत्वाच्च वेदा यज्ञमयस्य तस्य पादत्वेन रूप्यन्ते। यूपो दंष्ट्रा यस्य स तथा। उन्नतत्वसामान्यात्। क्रतवः सयूपाः हस्तौ यस्य स तथा। क्रियाकरणत्वसामान्यात्। क्रतुदन्त इति पाठे हविर्भक्षणार्थत्वात् क्रतवो दन्तत्वेन रूप्यन्त इत्यर्थः। "श्येनचितं चिन्वीत" "कङ्कचितं चिन्वीत" (तै. सं. ५-४-११) इत्यादिश्रुत्युक्तान्यग्निस्थानानि चितयस्तावत् [1]क्रतुस्थानीयाः मुखं यस्य स तथा। हविर्निक्षेपस्थानीयत्वात्। अग्निः—हुताशः जिह्वा यस्य स तथा। साक्षाद्धविर्निक्षेपाधिकरणत्वात्। दर्भा अस्य रोमाणि। स्तरणसामान्यात्। ब्रह्म—परं ब्रह्म ब्राह्मणजातिर्वा शीर्षमस्य। स्वनामस्मृत्यादिद्वारा क्रतुसम्पूर्णतासम्पादकतया अङ्गेषु ब्रह्मणोऽपि शीर्षवत् प्राधान्यात्।

---

[1] क्रतुस्थानाय हविर्निक्षेप -पा.

भाष्यम्

**अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।**
**आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ॥**
**धर्मसत्यमयश्श्रीमान् क्रमविक्रमसत्क्रियः ।**
**प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः ॥**
**उद्गात्रन्त्रो होमलिङ्गो [1]बीजौषधिमहाफलः ।**

विवृतिः

महत् जगद्रक्षाहेतुत्वात्तपः—आलोचनं यस्य स तथा। अहोरात्रे—तमः प्रकाशधर्मके ईक्षणे-दर्शने अस्य। निमेषोन्मेषाभ्यां तयोरपि तमःप्रकाश-धर्मकत्वात्। वेदाङ्गानि श्रुत्योः—श्रवणयोर्भूषणान्यस्य। शोभाहेतुत्वात्। आज्यं नासा—घ्राणेन्द्रियमस्य। गन्धवत्त्वसामान्यात्, गन्धाभि [2]व्यञ्जक-त्वसामान्याद्वा। स्रुवतुण्डः—[3]वराहमुखः। करणत्वसामान्यात्। सामघोष एव स्वनः—नादो यस्य स तथा। धर्मः—[4]पुंसामिष्टं, सत्यं—यथार्थ-वचनं, तन्मयः—तत्प्रधानः। क्रमः—आहवनीयादिकं प्रति होमार्थं गमनं, हुत्वा आगमनं विक्रमः, तौ सत्क्रिये—आदरक्रिये यस्य स तथा। प्रायश्चित्तानि नखा अस्य। मन्त्रादिश्रेषकण्डूरूपदोषनिरासहेतुत्वात्। पशवः-अग्नीषोमीयादयो जानुनी—ऊरुपर्वणी अस्य। पूर्वाङ्गत्वसामान्यात्। उद्गाता—ऋत्विग्विशेषः, आन्त्राणि—मांसविशेषाः अस्य। "आन्त्रं पुरीतत्" (नाम. २-६-६६) इत्यमरः। होमो लिङ्गं—मेढ्रमस्य। आसेचनसामान्यात्। ओषधीनां बीजानि बीजौषधयः "औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति" इत्यादिश्रुतीरिताः

---

[1] फलबीजमहौषधिः—पा. [2] व्यञ्जकता—पा. [3] वराहमुखाकारवत्त्वसामान्यात्—पा.
[4] पुण्यमिष्टं—पा.

भाष्यम्

[1]वाग्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः॥
वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः ॥

विवृतिः

[2] महाफलं वृषणोऽस्य। फलबीजमहौषधिरिति पाठे महौषधीनां बीजा-[3]नीव बीजमहौषधयः, ताः फलं [4] वृषणोऽस्य। प्राण्यात्, अपान्यात् इत्यादिना विहिताः वायुविशेषाः अन्तरात्मानः प्राणादि-वायवोऽस्य। मन्त्राः—ऋगादयः, स्फिचौ—स्फिग्रूपौ, विकृतौ—विकारौ यस्य स मन्त्रस्फिग्विकृतः। "स्त्रियां स्फिचौ कटिप्रोथौ" (नाम. २-६-७५) इत्यमरः। सोमः—सोमरसः शोणितमस्य। द्रवत्वसामान्यात्। वेदिः स्कन्धोऽस्य। उन्नतत्वसामान्यात्। हविषः—चरुपुरोडाशादेः गन्ध एव गन्धो यस्य हविर्गन्धः। हव्यं दैवं, कव्यं पित्र्यं, तदुभयं अतिवेगवच्छब्दितं मनोऽस्येति हव्यकव्यातिवेगवान्। यज्ञपुरुषयो-रन्तरङ्गत्वसामान्यात्। यद्वा हव्यकव्ययोरग्नौ प्रास्तयोरतिवेग एव अतिवेगोऽस्य। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" (मनु. ३-७६) इति स्मृतेः। "प्राचीनवँशं करोति" (तै. सं. ६-१-१) इत्युक्तस्थानविशेषः प्राग्वंशः। स कायः—मध्यभागोऽस्य। अवयवकाष्ठादिसङ्घातरूपत्वसामान्यात्। ज्योतिष्टो-मादिषु यजमानसंस्कारार्थानि कर्माणि दीक्षाः "नवनीतेनाभ्यङ्क्ते"

---

[1] बाह्यान्तरात्मा—पा. [2] महापुरुषलक्षणोऽस्य—पा. महाफलवर्षणोऽस्य—पा.
[3] नि बीज—पा. [4] वर्षणोऽस्य--पा.

भाष्यम्

दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥
नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मेरुशृङ्गमिवोच्छ्रितः ॥

विवृतिः

" आङ्क्ते " (तै. सं. ६-१-१) इत्यादिश्रुतिविहिताः । ताभिरर्चितः—पूजितः, "ऋत्विग्भ्यो दक्षिणां ददाति " इति विहिता दक्षिणा हृदयमस्य यज्ञात्मनः । प्रतिष्ठात्वात् । " कस्मिन् यज्ञः प्रतिष्ठित इति । दक्षिणायामिति ।" "स वा एष आत्मा [1]हृदि " (छा. ८-३-३) इति श्रुतिभ्याम् । महासत्राणि—विश्वसृजामयनादीनि, तन्मयः–तत्सन्धिक इत्यर्थः । तेषां त्रिवृत्पञ्चदशाद्यहस्सन्धिरूपत्वात् । तथा च विष्णुपुराणम्—" प्राग्वंशकायाखिलसत्रसन्धे !" (वि. पु. १-४-३४) इति । उपाकर्म—वेदोपाकरणं स्मार्तं [2]ओष्ठरुचकं—ओष्ठाभरणमस्य, पशूपाकरणं वा । प्रवर्ग्याख्यं कर्म आवर्तभूषणमस्य । आवर्तः–नाभिः । छन्दांसि–गायत्र्यादीनि गतिपथः–गमनमार्गोऽस्य । गुह्योपनिषत्–प्रणवादिरासनमस्य यज्ञवराहमूर्तेः । प्रतिष्ठात्वसामान्यात् । छाया स्वच्छायैव पत्नी, सा सहायोऽस्य । मेरुशृङ्गमिवोच्छ्रित इति । उन्नत इत्यर्थः । मणिशृङ्गमिवोत्थित इति पाठान्तरम् । इति श्लोकानामर्थः ॥

यज्ञादिरूपं नित्यं कर्म द्विधा । संस्कारकं विविदिषाजनकं च । तत्र विहितत्वमात्रबुद्ध्या क्रियमाणं संस्कारकम् । ईश्वरार्पणबुद्ध्या क्रियमाणं विविदिषाजनकम् । " यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् "

---

[1] हृत्–पा. [2] ओष्ठरुचकः-पा.

स्तोत्रम्

## यज्ञवाहनः ॥ ११७ ॥

# यज्ञभृद्यज्ञकृत्

भाष्यम्

**इति हरिवंशे। फलहेतुभूतान् यज्ञान् वाहयतीति–यज्ञवाहनः ॥ ॥ ११७ ॥**

**यज्ञं बिभर्ति पातीति वा–यज्ञभृत्। जगदादौ तदन्ते च यज्ञं करोति, कृन्ततीति वा–यज्ञकृत्। यज्ञानां**

विवृतिः

(भ. गी. ९-२७) इत्यादिगीतावचनात्। तत्र विविदिषाद्वारा ज्ञानरूपफलहेतुभूतान् यज्ञान् वाहयति–प्रापयति स्वानुगृहीतान् मुमुक्षूनिति यज्ञवाहनः। "एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते" (कौषी. ३-८) इति श्रुतेरित्यभिप्रेत्याह—**फलहेत्विति**। वहेरविवक्षित[1]प्रेषांशाद्धेतुमण्ण्यन्ताद्बाहुलकत्वात्कर्तरि ल्युट् ॥ ११७ ॥

यज्ञान् बिभर्ति–पालयतीति, बिभर्तेः पोषणमर्थमादायाह—**यज्ञमिति**। पालनमत्र ऋत्विग्विशेषरूपेण; "[2]एवंविधो वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजो रक्षति" इति श्रुतेरिति बोध्यम्। जगदादौ सम्प्रदायप्रवर्तनार्थं यज्ञं करोतीति, जगदवसाने च यज्ञं कृन्तति–छिनत्ति, प्रलयस्य कर्मफलभोगशून्यत्वादित्यभिप्रेत्याह—**जगदादाविति**। कृञः कृन्ततेर्वा कर्तरि क्विप्। जगदादौ यज्ञं करोतीति जगदन्ते च कृन्ततीति योजना। यज्ञाः–भगवत्समाराधनात्मका अस्याराध्यस्य शेषत्वेन सन्तीति यज्ञी। यज्ञशब्दान्मत्वर्थीय इनिरित्याह—**यज्ञानामिति**। यज्ञादीन् प्रति भगवतः शेषित्वे हेतुगर्भविशेषणं—

---

[1] प्रेषावशाद्धेतुमण्णिजन्ता-**पा.** [2] एवंविद्यो वै-**पा.**

स्तोत्रम्

## यज्ञी यज्ञभुग्यज्ञसाधनः ।
## यज्ञान्तकृत्

भाष्यम्

**तत्समाराधनात्मनां [1]शेषीति–यज्ञी । यज्ञं भुङ्क्ते भुनक्तीति वा–यज्ञभुक् । यज्ञाः साधनं तत्प्राप्ताविति–यज्ञसाधनः ॥**

**यज्ञस्यान्तं — फलप्राप्तिं कुर्वन् — यज्ञान्तकृत् ।**

विवृतिः

**तत्समाराधनेति ।** यज्ञं–तत्समाराधनात्मकं, भुनक्ति–पालयतीति यज्ञभुगित्याह—**यज्ञमिति ।** यज्ञाः साधनं यत्प्राप्तौ स यज्ञसाधनः । "विविदिषन्ति यज्ञेन दानेन" (बृह. उ. ४-४-२२) इत्यादिश्रुतेरित्याह—**यज्ञा इति ॥**

यज्ञस्यान्तः–फलप्राप्तिः, फलेन हि यज्ञसमाप्तिरवगम्यते, अन्तयतीति व्युत्पत्तेः; तच्च परमापूर्वलक्षणं, तत्करोति–उत्पादयति, ओं तत्सदिति स्वनामोच्चारणेनाङ्गवैकल्यप्रयुक्तदोषसमाधानद्वारा यज्ञस्य पूर्णतासम्पादनादित्याह—**यज्ञस्येति ।** यद्वा अचेतनस्य कर्मणोऽपूर्वस्य वा कर्मतारतम्येन प्रतिनियतं फलं दातुं न सामर्थ्यमस्ति । क्रियायामदर्शनात् । तथा च सेवितराजवद्यज्ञादिपूजितेश्वरात्फलसिद्धिः, *"फलमत उपपत्तेः" (ब्र. सू. ३-२-३८) इति न्यायादित्यभिप्रेत्याह—**यज्ञस्येति ।** "इदं विष्णुर्विचक्रमे" (तै. सं. १-२-१३-१)

---

* अतः–अस्मात्परमेश्वरात् कर्मफलं सर्वेषां जन्तूनां भवितुमर्हति, क्षणिकात् कर्मणः फलासम्भवेनेश्वरस्यैव फलदातृत्वोपपत्तेरिति सूत्रार्थः ।

[1] प्रधानं तत्समवायानां शेषीति—**पा.**

### भाष्यम्

**[1]वैष्णव्यृक्शंसनेन पूर्णाहुत्या वा यज्ञसमाप्तिं करोतीति—यज्ञान्तकृत् । यज्ञानां गुह्यं ज्ञानयज्ञः, फलाभिसन्धिरहितो वा**

### विवृतिः

इति वैष्णव्या ऋचा पूर्णाहुतिं कृत्वा यज्ञस्यान्तं–समाप्तिं करोति यजमानरूपेणेति अन्तशब्दस्य समाप्तिमर्थमादाय कल्पान्तरमाह—**वैष्णव्यृगिति । शंसनेनेति** । उच्चारणेनेत्यर्थः । तथा चापस्तम्बसूत्रम्–"वैष्णवीं पूर्णाहुतिमुदवसानीयास्थाने वाजसनेयिनः समामनन्ति" (आ. श्रौ. १३-२५-७) इति, "द्वादशगृहीतेन स्रुचं पूरयित्वा 'इदं विष्णुर्विचक्रमे' इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् जुहोति" (आ. श्रौ. १३-२५-८) इति च । क्रियायज्ञाद्यनेकयज्ञानां मध्ये गुह्यं–रहस्यं यज्ञगुह्यं ज्ञानयज्ञरूपम् । [2]तच्चैकात्म्येन ज्ञानम् ।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥ (मनु. १२-९१)

इति मनुवचनात्, "सर्वभूतेषु येनैकम्" (भ. गी. १८-२०) इति भगवद्वचनाच्च । [3]स एवेतरेभ्यः श्रेयान् । "श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः" (भ. गी. ४-३३) इति भगवद्वचनादित्यभिप्रेत्य यज्ञगुह्यनाम व्याचष्टे—**यज्ञानामिति** । फलाभिसन्धिरहितो यज्ञो यज्ञगुह्यम्, बन्धकत्वाभावात् । तस्य "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" (भ. गी. ३-९) इति भगवद्वचनादित्यभिप्रेत्य कल्पान्तरमाह—**फलेति** । यज्ञ इत्यनन्तरं यज्ञगुह्यमित्यनुषङ्गः । ननु भवतु ज्ञानयज्ञः फलाभिसन्धिरहितो वा यज्ञो यज्ञगुह्यम्, ब्रह्मणि किमायातमित्यत आह—

---

[2] वैष्णव्यन्तेन पूर्णाहुत्या पूर्णं कृत्वा वा यज्ञसमाप्तिं करो–**पा.**　　[2] तच्चैकात्म्यज्ञानम्–**पा.**　　[3] स चेतरेभ्यः–**पा.**

स्तोत्रम्

## यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥

भाष्यम्

**यज्ञः; तदभेदोपचारात् ब्रह्म–यज्ञगुह्यम् ॥**

**अद्यते अत्ति च भूतानीति–अन्नम्। अन्नमत्तीति–अन्नादः। सर्वं जगदन्नादिरूपेण [1]भोक्तृभोग्यात्मकमेवेति दर्शयितुमेवकारः। चशब्दः सर्वनाम्नामेकस्मिन् परस्मिन् पुंसि समुच्चित्य वृत्तिं दर्शयितुम् ॥ ११८ ॥**

विवृतिः

**तदभेदेति। उपचारादिति।** साक्षात् परम्परया वा तद्गम्यत्वादित्यर्थः ॥

अद्यते स्मेत्यन्नम्। अदेरनिट्कात्कर्मणि क्तः। अन्नाद इति निपातनात् "बहुलं छन्दसि" (पा. सू. २-४-३९) इति न जग्ध्यादेशः। "रदाभ्यां" (पा. सू. ८-२-४२) इति निष्ठानत्वम्। अत्तीति वा अन्नम्। "अद्यतेऽत्ति च भूतानि" (तै. उ. २-२) इति श्रौतनिर्वचनानुसारेण कर्तर्यपि क्तप्रत्यय इत्यभिप्रेत्यार्थद्वयपरतया व्याचष्टे–**अद्यत इति।** सर्वैः प्राणिभिः क्षुन्निवारणार्थमद्यते–भक्ष्यत इत्यर्थः। **अत्तीति।** अन्नरसवैषम्योत्पादितरोगादिना अत्ति–संहरतीत्यन्नमित्यर्थः। यद्यदन्नं व्रीहिगोधूमादिनिष्पाद्यं तत्सर्वं ब्रह्मैव, तस्मिन्नन्ने नामरूपभागस्य मिथ्यात्वात्। अधिष्ठानभागस्य सच्चिदानन्दवस्तुनो ब्रह्मरूपत्वादित्यर्थः ॥

अन्नमत्तीत्यन्नादः। अदेः कर्मण्यण्। ब्रह्मक्षत्रियवैश्यशूद्रगवाश्वादिश्चेतनोऽन्नाद इत्याह—**अन्नमिति।** भोक्तृभोग्यात्मना जगद्द्वैविध्यं दर्शयितुमेवकार इत्येवकारतात्पर्यमाह—**सर्वं जगदिति।** एकस्मिन्नेव विष्णौ समुच्चयेन सर्वाणि नामानि वर्तन्त इति दर्शयितुं चशब्द इति चशब्दप्रयोजनमाह—**चशब्द इति** ॥ ११८ ॥

---

[1] अग्नीषोमात्मकमेवेति दर्शयितुमेवकारः–**पा.**

## स्तोत्रम्

# आत्मयोनिः स्वयं जातः

## भाष्यम्

**आत्मैव योनिरुपादानकारणं नान्यदिति–आत्मयोनिः। निमित्तकारणमपि स एवेति दर्शयितुं—स्वयं जात इति। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (ब्र. सू. १-४-२३)**

## विवृतिः

आत्मैव योनिः–उपादानकारणं जगत इत्याह—**आत्मैवेति**। "योनिश्च हि गीयते" (ब्र. सू. १-४-२७) इति सूत्रे "पृथिवी योनिरोषधिवनस्पतीनाम्" (शा.भा.) इति प्रयोगादुपादानवचनो योनि-शब्द इति दर्शितत्वादिति भावः। "स विश्वकृद्विश्वविदात्मयोनिः" (श्वे. ६-१६) इति श्रुतिः। स्वयं–आत्मनैव कर्त्रा जातः–प्रपञ्चरूपे-णोत्पन्नः स्वयं जातः, जगतो निमित्तकारणमपि स एव। "तदात्मानं स्वयमकुरुत" (तै. उ. २-७) इति श्रुतेरित्याह—**निमित्तेति**। ननु लोके निमित्तोपादानयोर्भेददर्शनात्कथमेकस्योभयविधं कारणत्व-मित्याशङ्क्याह—**प्रकृतिश्चेति**। एकविज्ञानेन [1] सर्वविज्ञानप्रतिज्ञया ब्रह्मपरत्वं निर्णीतम्। सा च ब्रह्मण उपादानत्व एव सङ्गच्छते। ब्रह्म च नोपादानं, आकाशादिद्रव्य[2]स्य *चेतनत्वात्। जीववत्। ब्रह्म नोपादानम्, पृथिव्यादे[3]र्निर्गन्धत्वादेरभावादित्युक्तप्रतिज्ञाया गौणत्वात् जीवपरत्वमेवोक्तवाक्यस्येति पूर्वपक्षे प्राप्ते–सिद्धान्तसूत्रं प्रकृतिश्चेत्यादि। ब्रह्म प्रकृतिः–उपादानमेव, प्रतिज्ञायाः "उत तमादेशमप्राक्ष्यः। येना-

---

* चेतनत्वप्रसङ्गादित्यर्थः।

[1] सर्वविज्ञानं प्रतिज्ञाय–पा. [2] स्य तदाम्नानात्–पा. [3] निर्ग्रन्थित्वा–पा.

स्तोत्रम्

## वैखानः

भाष्यम्

**इत्यत्र स्थापितमुभयकारणत्वं हरेः। विशेषेण खननात्— वैखानः। धरणीं विशेषेण खनित्वा पातालवासिनं हिरण्याक्षं**

विवृतिः

श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छा. उ. ६-१-२,३) इत्यादेः, तदुपपादकस्य "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" (छा. उ. १-२-४) इत्यादेः दृष्टान्तस्य चोपरोधान्निमित्तकारण-विषयत्वेन गौणताया असम्भवात्, "यतो वा" (तै. उ. ३-१) "स ईक्षत" (ऐ. उ. १-३) इत्यादिब्रह्मरूपधर्मिग्राहकश्रुतिभिरुपा-दानानिमित्तयोर्बोधनान्मानान्तरेण तस्य निषेद्धुमशक्यत्वात् श्रुति-विषयातिरिक्त एव सामान्यतो दृष्टप्रवृत्तेरिति सूत्रार्थः ॥

वाराहं रूपमास्थाय पातालतलवासिनं हिरण्याक्ष हन्तु धरणीं विशेषेण खनतीति वैखानः। विखननं विखानः, विपूर्वात् खनतेर्भावे घञ्। विखानस्यायं, "तस्येदम्" (पा. सू. ४-३-१२०) इत्यण्। विखानस्य कर्तेति व्युत्पत्तिर्बोध्या। यद्वा विशिष्टः खानः खनन-मनेनेति विखानः; विखान एव वैखानः इति द्रष्टव्या। भाष्यं तु अर्थप्रदर्शनपरं, न विग्रहप्रदर्शकम्। खननस्य प्रयोजनं दर्शय-न्नुक्तमेव व्यक्तीकरोति—**धरणीमित्यादिना**। सामानि "गीतिषु सामाख्या" (जै. सू. २-१-३६) इत्युक्तलक्षणान् मन्त्रविशेषान् गायतीति, यद्वा "सर्वेण समस्तेन साम सर्वदा समस्तेन साम"

स्तोत्रम्

## सामगायनः ।

भाष्यम्

**वाराहं रूपमास्थाय जघानेति पुराणे प्रसिद्धम् । सामानि गायतीति—सामगायनः ॥**

विवृतिः

इति च श्रुत्या सामत्वेनोक्तमादित्यं रावणवधार्थं गायति—स्तौति श्रीरामरूपेणेति, अथवा सामानि समत्वप्रतिपादकान् मन्त्रान् गायति—सामवेदस्वरेण गीतं करोति संसारिणः प्रति स्वकीयसर्वात्मत्वं प्रकटयन् ब्रह्मविद्रूपेणेति सामगायन इत्यभिप्रेत्याह—**सामानीति** । तच्च साम "एतत्साम गायन्नास्ते" इत्युक्त्वा "हा ३ वु हा ३ वु" इत्यारभ्य "सुवर्णज्योतीः" (तै. उ. ३-१०-५, ६) इत्यन्तं बोध्यम् । गायतेः शब्दसामान्यार्थकत्वे तु "अहं मनुरभवं सूर्यश्च" (बृह. उ. १-४-१०) इत्याद्यपि बोध्यम् । रूपसाधनं तु "गस्थकन्" (पा. सू. ३-१-१४६) इत्यतो ग इत्यनुवृत्तौ "ण्युट् च" (पा. सू. ३-३-१४७) इति सूत्रेण ण्युट्प्रत्ययः ; शिल्पिनि कर्तरि, "आतो युक्" (पा. सू. ७-३-३३) इति युगागमश्चेति बोध्यम् । यद्वा सामानि—बृहद्रथन्तरादीनि ऋत्विग्रूपेण गायति, अथवा "वेदानां सामवेदोऽस्मि" (भ.गी. १०-२२) इत्यादिना सामानि स्वविभूतित्वेन गायति—प्रतिपादयतीत्यर्थो बोध्यः ॥

देवक्या नन्दनो देवकीनन्दनः ।

"यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ॥"

स्तोत्रम्

# देवकीनन्दनः स्रष्टा क्षितीशः

भाष्यम्

देवक्याः सुतः—देवकीनन्दनः ।

ज्योतींषि शुक्राणि च यानि लोके
त्रयो लोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥ (अनुशा. १५८–३१)

इति महाभारते । स्रष्टा—सर्वस्य लोकस्य । क्षितेः–भूमेरीशः—क्षितीशो दशरथात्मजः ॥

विवृतिः

इति स्मृतेरित्याह—देवक्या इति । देवकशब्दस्य तदपत्ये लक्षणया वृत्तौ "पुंयोगादाख्यायाम्" (पा. सू. ४-१-४८) इति ङीष् । नहि तत्र दाम्पत्यलक्षण एव पुंयोगः । किन्तु जन्यजनकत्वाद्यपीति नन्देः "नन्दिग्रहि" (पा. सू. ३-१-१३४) इत्यादिना ल्युः । सर्वस्य लोकस्य सर्जनात् स्रष्टा "स इमान् लोकानसृजत" (ऐ. उ. १-२) इत्यादिश्रुतेरित्याह—सर्वस्येति । सृजेस्तृचि "सृजिदृशोः" (पा. सू. ३-१-५८) इत्यम् । "शुभाङ्गः शान्तिदः स्रष्टा" (वि. स. ७३) इत्यत्र भूतानां स्रष्टृत्वमुक्तम् । अत्र लोकानां स्रष्टृत्वमुच्यत इति न पौनरुक्त्यं बोध्यम् ॥

क्षितेरखण्डितताया ईशः–स्वामी क्षितीश इत्याह—दशरथेति । कृष्णावतारे भगवता ययातिवचनमङ्गीकृत्य कंसं हत्वा उग्रसेनाय राज्यं दत्तम्, न तु स्वयमङ्गीकृतमित्यभिप्रेत्योक्तं—दशरथात्मज

स्तोत्रम्

## पापनाशनः ॥ ९९९ ॥

## शङ्खभृत्

भाष्यम्

कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं नाशयन्—पापनाशनः ।

पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति ।
प्राणायामशतेनैव तत्पापं नश्यते नृणाम् ॥
प्राणायामसहस्रेण यत्पापं नश्यते नृणाम् ।
क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति ॥

इति वृद्धशाता[1]तपे ॥ ९९९ ॥

पाञ्चजन्याख्यं भूताद्यहङ्कारात्मकं शङ्खं बिभ्रत्–शङ्खभृत् ।

विवृतिः

**इति** । कीर्तनादिना पापानि नाशयतीति पापनाशनः । नन्द्यादित्वाल्ल्युप्रत्यय इत्याह—**कीर्तित इति** । ध्यानस्य पापनाशकत्वे स्मृतिं पठति—**पक्षोपवासादिति** ॥ ९९९ ॥

शङ्खं–पाञ्चजन्याख्यं बिभर्तीति शङ्खभृदित्याह—**पाञ्चजन्याख्यमिति** । **भूताद्यहङ्कारात्मकमिति** । अहङ्कारस्त्रिविधः । भूतादिः, इन्द्रियादिः, सात्त्विकाहङ्कारश्चेति । तथाच विष्णुपुराणम्—

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत ।"

(वि. पु. १-२-३५-३६) इति ॥

---

[1] तपवचनात्–पा.

## विवृतिः

भूतादिस्तामसः तैजसो राजसः इन्द्रियादिश्च राजसः वैकारिकः सात्त्विकाहङ्कारः; [1]तत्र भूतादिर्योऽहङ्कारः स पाञ्चजन्यरूपेण वर्तत इत्यर्थः। भूषणास्त्रस्वरूपेण जगतो भगवत्यवस्थानं विष्णुपुराणे दर्शितम्—

आत्मानमस्य जगतो [2]निर्लेपमगुणामलम्।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः॥
श्रीवत्ससंस्था[3]नमयमनन्तेन समाश्रितम्।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे॥
भूतादिमिन्द्रियादिं च द्विधाहङ्कारमीश्वरः।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्॥
चलस्वरूपमत्यन्तं जवेनान्तरितानलम्।
चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम्॥
[4]पञ्चरूपा तु या माला वैजयन्ती गदाभृतः।
सा भूतहेतुसङ्घाता भूतमाला च वै द्विज!॥
यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै।
चररूपाण्यशेषाणि तानि धत्ते जनार्दनः॥
बिभर्ति [5]यच्चासिवरमच्युतोऽत्यन्तनिर्मलम्।
विद्यामयं तदज्ञानमवि[6]द्याकोशसंस्थितम्॥
इत्थं पुमान् प्रधानं च बुद्ध्यहङ्कारमेव च।
भूतानि च हृषीकेशे मनस्सर्वेन्द्रियाणि च॥

---

[1] स पाञ्चजन्य–पा. [2] निर्णिक्तम–पा. [3] नधरमनन्तेन–पा. [4] पञ्चस्वरूपा या माला–पा. [5] यच्चामिरतमच्युतो–पा. यच्चातिरत–पा. यच्चासिरत्नम–पा. [6] द्याचर्मसं–पा.

## विवृतिः

विद्याविद्ये च मैत्रेय ! सर्वमेतत्समाश्रितम् ।
अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः ॥
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ॥ इति
(वि. पु. १-२२-६८-७६)

अस्य जगत आत्मानं—पुरुषं शुद्धं क्षेत्रज्ञं कौस्तुभमणिस्वरूपं बिभर्ति । प्रधानं च श्रीवत्ससंस्थानमयं सदैवानन्तेन समाश्रितं तस्मिन्नास्त इत्यन्वयः । श्रीवत्सस्वरूपं च गरुडपुराणे दर्शितम्-

"प्रदक्षिणावर्तविचित्ररोम-
श्रीवत्ससद्बिम्बविभूषिताङ्गम् ।
[1] वीक्षाविचिन्त्यम्" इति ।

बुद्धिर्महत्तत्त्वमपि गदारूपेणास्ते । भूतादिं—तामसं, इन्द्रियादिं—राजसं च द्विधाहङ्कारं यथाक्रमं शङ्खरूपेण शार्ङ्गरूपेण च स्थितं बिभर्ति । चलस्वरूपं अत्यन्तं—अतिशीघ्रं, अत एव जवे[2]नान्तरित अतिक्रान्तोऽनिलो येन तन्मनः सात्त्विकाहङ्कारात्मकं चक्रस्वरूपं धत्ते । पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णा हरेर्या वैजयन्त्याख्या माला सा भूतहेतूनां—पञ्चतन्मात्राणां सङ्घातः—पङ्क्तिः भूतमाला च महाभूतपङ्क्तिश्चेति सूक्ष्मस्थूलमपीत्यर्थः । अविद्यैव ज्ञानावरकः कोशः, तत्र संस्थितम् । उक्तमेव भूषणादिस्वरूपमनुवदन् तद्धारणप्रयोजनमाह इत्थमित्यादिसार्ध [3]द्वाभ्याम् । अस्त्रभूषणसंस्थानस्वरूपमाश्रितं एतत्सर्वं बिभर्तीत्यन्वयः । श्रेयसे—उपासकानां सर्वपुरुषार्थसिद्धय इति विष्णुपुराणश्लोकानामर्थः ॥

---

[1] वीक्ष्य वि—**पा.**　[2] नातिरिक्तोऽति—**पा.**　[3] द्वाभ्यामस्त्रभूषण—**पा.**

स्तोत्रम्

# नन्दकी चक्री

भाष्यम्

**विद्यामयो नन्दकाख्योऽसिरस्येति नन्दकी। मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्यास्तीति, * (संसारचक्रमस्याज्ञया परिवर्तत इति वा) चक्री। इन्द्रियाद्यहङ्कारात्मकं शार्ङ्गं नाम धनुरस्या-**

विवृतिः

विद्यामयो नन्दकाख्योऽसिरस्येति नन्दकी, विद्यामयत्वं च पूर्वोक्तविष्णुपुराणादित्याह—**विद्यामय इति**। सुदर्शनमिति प्रसिद्धं मनस्तत्त्वात्मकं चक्रमस्यास्तीति चक्रीत्याह—**मनस्तत्त्वात्मकमिति**। "चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम्" (वि. पु. १-२२-७१) इति प्रागुदाहृतवचनात् मनस्तत्त्वात्मकं बोध्यम्। नच "अरौद्रः कुण्डली चक्री" (वि. स. ११०) इत्यनेन पौनरुक्त्यमिति वाच्यम्। चक्रं प्रति स्वामित्वमात्रमत्रोक्तम्। अत एव चक्रमस्यास्तीति स्वामित्वसम्बन्धमादाय भाष्ये विग्रहो दर्शितः। पूर्वं तु मनस्तत्त्वात्मकं सुदर्शनं धत्त इति व्याख्यातम्। तथा च चक्रमस्मिन्नस्तीति इनिप्रत्ययार्थमादाय चक्रधारणमर्थः पूर्वस्य, अत्र स्वामित्वमात्रमर्थ इत्यपौनरुक्त्यम्। यद्वा परमेश्वरस्य बहुविधानेकमूर्तिधारित्वेन तत्तन्मूर्त्यायुधानामपि भिन्नभिन्नत्वात्तदभिप्रायेणानेकस्थलेषु चक्राद्यायुध-कथनमित्यतो न पौनरुक्त्यमिति बोध्यम्॥

इन्द्रियाद्यहङ्कारात्मकं शार्ङ्गं नाम धनुरस्येति "धनुषश्च" (पा. सू. ५-४-१३२) "वा सज्ञायाम्" (पा. सू. ५-४-१३३) इति समासान्तोऽनङिति व्याचष्टे—**इन्द्रियादीति**।

---

* अस्य धनुरङ्कितग्रन्थस्य विवृतिर्न दृश्यते।

स्तोत्रम्

# शार्ङ्गधन्वा गदाधरः ।
# रथाङ्गपाणिरक्षोभ्यः

भाष्यम्

स्तीति—शार्ङ्गधन्वा । "धनुषश्च" (पा. सू. ५-४-१३२) इत्यनङ् समासा[1]न्तः । बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां वहन्—गदाधरः ॥

रथाङ्गं—चक्रमस्य पाणौ स्थितमिति—रथाङ्गपाणिः । अत [2]एवाशक्यक्षोभण इति—अक्षोभ्यः । [3]एतावन्त्येवा-

विवृतिः

भूतादिमिन्द्रियादिं च द्विधाहङ्कारमीश्वरः ।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥ (वि. पु. १-२२-७०)

इति प्रागुदाहृतवचनादिन्द्रियाद्यहङ्कारात्मत्वम् । धरतीति धरः । पचाद्यच् । गदायाः कौमोदकीति प्रसिद्धाया धरो गदाधर इत्याह—बुद्धितत्त्वेति । अत्र "बुद्धिरप्यास्ते गदारूपेण माधवे" (वि. पु. १-२२-६९) इति विष्णुपुराणवचनं प्रागुदाहृतम् ॥

रथाङ्गं—चक्रं पाणावस्य । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" (वा. १४२५) इति सप्तम्यन्तस्य परनिपात इत्याह—रथाङ्गमिति । "क्षुभ सञ्चलने" इत्यस्मात् ण्यन्तात् "अचो यत्" (पा. सू. ३-१-९७) इति यत्प्रत्ययः, क्षोभ्यः, न क्षोभ्यः अक्षोभ्यः शत्रुभिरिति व्याचष्टे—अत एवेति । पूर्वोक्तसर्वायुधोपेतत्वादेव शत्रुभिरप्रधर्षणीय इत्यर्थः । प्रहरणानि—प्रहरणक्रियाकरणान्यायुधानि प्रहरणायुधानि, तानि सर्वाण्येव, न त्वेतावन्त्येवेति नियमितानि प्रहरणायुधान्यस्येति सर्वप्रहरणायुध इत्याह—एतावन्तीति । अन्ते

---

[1] न्तः प्रत्ययः—पा. [2] एवाशक्यः क्षोभितुमिति—पा. [3] न केवलमेतावन्त्येवा-युधान्यस्येति नियम्यते—पा.

स्तोत्रम्

# सर्वप्रहरणायुधः ॥ १२० ॥

# सर्वप्रहरणायुध ओं नम इति ।

भाष्यम्

युधान्यस्येति न नियम्यते, अपि तु सर्वाण्येव प्रहरणान्यायुधान्यस्येति—सर्वप्रहरणायुधः । आयुधत्वेनाप्रसिद्धान्यपि करजादीन्यस्यायुधानि भवन्तीति । अन्ते सर्वप्रहरणायुध इति वचनं सत्यसङ्कल्पत्वेन सर्वेश्वरत्वं दर्शयितुम् । "एष सर्वेश्वरः" (बृह. उ. ६-४-२२) इति श्रुतेः । द्विर्वचनं समाप्तिं द्योतयति । ओङ्कारश्च मङ्गलार्थः ।

विवृतिः

सर्वप्रहरणायुधनामोक्तेः प्रयोजनमाह—**आयुधत्वेनेति** । सर्वाण्येव प्रहरणायुधानीत्युक्त्या आयुधत्वेनाप्रसिद्धानि यानि नखादीन्यायुधत्वेन सङ्कल्पयति तान्यप्यस्यायुधानि भवन्ति । सत्यसङ्कल्पत्वात्परमेश्वरस्य । यथा नखादीनि [1]श्रीनृसिंहमूर्तेर्हिरण्यकशिपुहनने । यतः सत्यसङ्कल्पत्वेनानायुधानामप्यायुधत्वसिद्धिरतः सर्वेश्वरत्वप्रदर्शनार्थं अन्ते सर्वप्रहरणायुधनामोक्तिरित्यर्थः । सर्वेश्वरत्वे श्रुतिमाह—**एष इति** । द्विर्वचनस्य प्रयोजनमाह—**द्विर्वचनमिति** । सहस्रनामाख्यस्य मन्त्रस्य समाप्तिद्योतनार्थमित्यर्थः । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" (महाभाष्यं. १-१-१) इति भगवत्पतञ्जलिवचनादन्तेऽपि मङ्गलार्थं ओङ्कारः प्रयुक्त इत्याह—**ओङ्कारश्च मङ्गलार्थ इति** । ओङ्कारस्य मङ्गलप्रयोजनत्वे स्मृतिं

---

[1] नरसिंह—पा.

भाष्यम्

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ [1]तस्मान्माङ्गलिकावुभौ" ॥

(बृहन्नार. पु. पू. ख. ५१-१०) इति वचनात्। अन्ते "नमः" इत्युक्त्या परिचरणं कृतवान्, "भूयिष्ठां ते नमउक्तिं विधेम" (ईश. उ. १८) इति [2] मन्त्रवर्णात्।

धन्यं तदेव लग्नं तन्नक्षत्रं तदेव पुण्यमहः।

विवृतिः

पठति—ओङ्कारश्चेति। पुरा—सृष्टिप्राक्काले सिसृक्षोर्ब्रह्मणो मङ्गलार्थमोङ्काराथशब्दौ कण्ठं भित्त्वा उत्पन्नौ। तस्मादन्येषामपि मङ्गलप्रयोजनौ तावित्यर्थः। मङ्गलशब्दात् "प्रयोजनम्" (पा. सू. ५-१-१०९) इति ठक्प्रत्यये माङ्गलिकाविति रूपम्। एतद्ग्रन्थजपपारायणादीनामर्थसिद्धिं दर्शयितुं [3] नमस्कारलक्षणमपि मङ्गलं कृतवानाचार्य इत्याह—अन्त इति। नमस्कारस्याधिक्ये प्रमाणमाह—भूयिष्ठामिति। हे अग्ने!—अग्रपदप्रापकपरमेश्वर! ते—तुभ्यं, भूयिष्ठां—अभ्यधिकां, नमउक्तिं—नमश्शब्दप्रयोगं, विधेम—अनुतिष्ठेमेत्यर्थः। "यज्ञो वै नमः यो नमसा स्वध्वरः" इत्यादिश्रुतिरप्यत्र बोध्या। नमस्कारप्राशस्त्यपराणि वचनान्तराण्यप्याह—'धन्यं' इत्यादीनि 'प्रणाशमुपयाति नरस्य पापं' इत्यन्तानि। अन्तेऽपि नमस्कारस्य शिष्टैराचरणात् 'यत्र हरिः प्राङ्नमस्क्रियते' इत्यत्र

---

[1] तेन माङ्ग—पा.　[2] श्रुतेः—पा.　[3] नमस्कारात्मकम्—पा.

भाष्यम्

करणस्य च [1]सा सिद्धिर्यत्र हरिः प्राङ्नमस्क्रियते ॥

इति च । प्रागित्युपलक्षणम् । अन्तेऽपि नमस्कारस्य शिष्टैराचरणात् । नमस्कारफलं प्रागेव दर्शितम् ।

एकोऽपि [2]कृष्णे सुकृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥

अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥

लोकत्रयाधिपतिमप्रतिमप्रभाव-
मीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् ।
जन्मान्तरप्रलयकल्पसहस्रजात-
माशु [3]प्रणाशमुपयाति नरस्य पापम् ॥ इति ॥

इति नाम्नां दशमं शतकं विवृतम् ॥ १२० ॥

इति दशमशतकभाष्यम्

---

विवृतिः

प्राक्शब्दः अन्तेऽपि मङ्गलकरणस्योपलक्षणमित्याह—**प्रागित्यादिना** ।
॥ १२० ॥

इतिदशमशतक[4]भाष्यविवृतिः

---

[1] सा शुद्धिः—**पा.** साक्षिसिद्धिः—**पा.** [2] कृष्णस्य कृतः—**पा.** [3] प्रशान्ति—**पा.**
[4] भाष्यं व्याख्यातम्—**पा.**

## उत्तरपीठिका

### स्तोत्रम्

* इतीदं [1]कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१२१॥

### भाष्यम्

"इतीदम्" इत्यनेन नामसहस्रमन्यूना[2]नातिरिक्तमुक्तमिति दर्शयति । दिव्यानां–अप्राकृतानां नाम्नां सहस्रं प्रकीर्तितमिति [3]वदता प्रकारान्तरेणापि सङ्ख्योपपत्तिर्दर्शिता ॥ १२१ ॥

### विवृतिः

"इतीदं कीर्तनीयस्य" इति श्लोकस्य तात्पर्यमाह–इतीदमिति । अशेषेणेत्युक्तिरनातिरेकस्याप्युपलक्षणमित्याह–अन्यूना[4]नतिरिक्तमिति । मूले दिव्यानामित्यनेन प्रकारान्तरेणापि नाम्नां सहस्रमस्ति । अस्य तु स्तवस्य कोऽप्यतिशयोऽस्तीति प्रदर्श्यते । दिव्यानां दिवि—ब्रह्मलोके भवानामित्यर्थः ॥ १२१ ॥

---

* इतः पूर्वं वाविल्लरामस्वामिशास्त्रिप्रकाशितभारतपुस्तके उपलभ्यमानदाक्षिणात्यस्तोत्रपुस्तकेषु च—

"वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥

वासुदेवोऽभिरक्षत्वोन्नम इति ।" इत्यधिकः पाठो दृश्यते ।

[1] कीर्तनं यस्य–पा. [2] नाधिकमु–पा. [3] वदतां–पा. [4] नधिकमि–पा.

### स्तोत्रम्

**य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।**
**नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः॥१२२॥**

### भाष्यम्

**प्रक्रमे " किं जपन्मुच्यते जन्तुः " इति जपशब्दोपादानात् कीर्तयेदित्यनेनापि त्रिविधजपो लक्ष्यते। उच्चोपांशुमानसलक्षणास्त्रिविधो जपः ॥**

**" य इदं शृणुयात् " इत्यादिः स्पष्टार्थः। परलोकं [1]प्राप्तस्यापि ययातिनहुषादिवदशुभप्राप्त्यभावं सूचयितुं " अमुत्र " इत्युक्तम् ॥ १२२ ॥**

### विवृतिः

" किं जपन् मुच्यते जन्तुः " (वि. स. ४) इत्युपक्रमे जपशब्दस्य उच्चोपांशुमानसजपपरत्वात् अत्र कीर्तयेदित्यस्यापि उच्चोपांशुमानसजपपरत्वमिति " य इदं शृणुयात् " (वि. स. १२२) इत्यस्य श्लोकस्य तात्पर्यमाह—**प्रक्रम इति**। एवञ्च कीर्तयेदित्यस्य उच्चोपांशुमानसरूपं जपं कुर्यादित्यर्थः। अमुत्रेत्यस्य तात्पर्यमाह—**परलोकमिति**। **ययातिनहुषादिवदिति**। यथा नहुषस्यागस्त्यादिब्राह्मणावमानप्रयुक्तपापातिरेकात्स्वर्गच्युतिसर्पभावलक्षणाशुभप्राप्तिः, यथा वा ययातेः " मत्तुल्यस्तपसा कोऽपि नास्ति " इति देवमनुष्यगन्धर्वादीनामवमानात्स्वर्गच्युतिः, एवममुत्राशुभप्राप्तिः, इह लोके त्रिशङ्क्वादिवच्चाशुभप्राप्तिर्नेत्यर्थः ॥ १२२ ॥

---

[1] गतस्यापि—**पा.**

स्तोत्रम्

**वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।**

भाष्यम्

[1]वेदान्तानां—उपनिषदां अर्थं ब्रह्म गच्छति—अवगच्छतीति वेदान्तगः ।

"किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात्" (वि. स. ३) इति वचनात् जपकर्मणा साक्षान्मुक्तिशङ्कायां कर्मणां साक्षान्मुक्तिहेतुत्वं नास्ति, अपि तु ज्ञानेनैव मोक्ष इति दर्शयितुं "वेदान्तगो ब्राह्मणः स्यात्" इत्युक्तम् । कर्मणां तु अन्तःकरणशुद्धिद्वारेण मोक्षहेतुत्वम् ।

विवृतिः

अशुभाप्राप्तिं फलमुक्त्वा शुभप्राप्तिमपि दर्शयितुं **वेदान्तग** इत्यादि । तद्व्याचष्टे—**वेदान्तानामिति** । अत्र वेदान्तशब्देन तदर्थो ब्रह्म लक्ष्यते । तद्गच्छति—अवगच्छतीति **वेदान्तगः**—ब्रह्मज्ञः स्यादित्यर्थः । ननु "किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्" (वि. स. ३) इत्युपक्रमे जपरूपकर्मणो मोक्षसाधन[2]त्वमुक्तम् । तच्चानुपपन्नम् । ज्ञानाभावे तदयोगादित्याशङ्क्य कर्मणां न साक्षान्मोक्षसाधनत्वम्, किन्तु ज्ञानस्यैवेति दर्शयितुं "वेदान्तगो ब्राह्मणः स्यात्" इत्युक्तिरिति तात्पर्यमाह—**किं जपन्नित्यादिना** । तर्हि कर्मणां कथमुपयोग इत्याशङ्क्य अन्तःकरणशुद्धिद्वारा ज्ञाने उपयोग इत्याह—**कर्मणां त्विति** । एवं च "किं जपन्मुच्यते" इत्यादेः सत्त्वशुद्धिज्ञानोत्पत्तिद्वारा मुक्तिहेतुत्वमर्थ इति भावः ॥

---

[1] वेदानामर्थं ब्रह्म—पा.　　[2] त्वमात्रमुक्तम्—पा.

### भाष्यम्

**कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।**
**कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥**
**[1] नित्यैर्ज्ञानं समासाद्य नरो बन्धात्प्रमुच्यते ।**
**धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥**
(भ. गी. ५-११)

**कर्मणा बध्यते जन्तुर्विद्ययैव विमुच्यते ।**
**तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥**
(शान्ति. २४१-७)

### विवृतिः

कर्मणां शुद्ध्यादिप्रणाड्या हेतुत्वे ज्ञानस्य [2] साक्षाद्धेतुत्वे च प्रमाणमाह–**कषायेत्यादिना । कर्माणि**–नित्यनैमित्तिकानि, कषायस्य अन्तःकरणदोषस्य, **पक्तिः**—निवृत्तिहेतुः, **ज्ञानं**—ब्रह्मसाक्षात्कारः, तच्च **परमा गतिः**–साक्षान्मोक्षहेतुरित्यर्थः । **कषाये**–अन्तःकरणदोषे, नित्यनैमित्तिकैः **कर्मभिः पक्वे**–निवृत्ते सति, **ततः**–दोषक्षयलक्षणचित्तशुद्धिवशात्, **ज्ञानं**–ब्रह्मसाक्षात्काररूपं **प्रवर्तत** इत्यर्थः । **नित्यैरिति ।** नैमित्तिकैरित्यपि द्रष्टव्यम् । **ज्ञानं समासाद्य**–चित्तशुद्धिद्वारा ज्ञानं प्राप्य, ततो ज्ञानात् संसारलक्षणाद्बन्धात्प्रमुच्यत इत्यर्थः । **धर्मात्सुखं च ज्ञानं चेति । धर्मात्**–नित्यनैमित्तिकरूपात् । अत्र सुखमानुषङ्गिकं बोध्यम् । अत्रान्या अपि स्मृतयो भाष्ये प्रक्षिप्ता व्याख्यायन्ते । **योगिनः**–कर्मिणः, **सङ्गं**–फलासक्तिं, **त्यक्त्वा आत्मशुद्धये**–अन्तःकरणशुद्धये, **कर्म कुर्वन्तीत्यर्थः** । उत्पन्नात्मविद्यस्य कर्मानुष्ठानं निष्फलमित्यत्र स्मृतिमाह—**कर्मणेति ।** संसारस्य पारं तदसंस्पृष्टं ब्रह्म

---

[1] इति ज्ञानं–**पा.** नित्यं ज्ञानं–**पा.** [2] मोक्षहेतुत्वे–**पा.**

भाष्यम्

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
(मनु. १२·९२)

तपसा [1]कल्मषं हन्ति विद्ययामृतमश्नुते ।
(मनु. १२-१०४)

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥
(शान्ति. २०४-८)

इत्यादिस्मृतिभ्यः, "तमेतं वेदानुवचनेन ब्राह्मणा विवि-

विवृतिः

द्रष्टुं शीलं येषां ते पारदर्शिनो यतयः लब्धात्मज्ञानाः सन्तो बन्धात्मकं कर्म न कुर्वन्तीत्यर्थः । चित्तशुद्धौ सत्यां कर्मणां त्याग एवेत्यत्र स्मृतिमाह–**यथोक्तानीति** । श्रुतिस्मृत्युदितानि कर्माणि कृतान्तःकरण–शुद्धीनि **परिहाय**–त्यक्त्वा, आत्मज्ञाने **शमे**–इन्द्रियनिग्रहे **च**, **स्यात्**–भवेत् । **वेदाभ्यासे**–प्रणवाभ्यासे च, **यत्नवान्** स्यादित्यर्थः । **तपसेति** । **तपसा**–स्वाश्रमविहितेन **कर्मणा**, **कल्मषं**–चित्तदोषं **हन्ति** । **विद्यया**–ब्रह्मज्ञानेन, **अमृतं**–मोक्षं, **अश्नुते**–प्राप्नोतीत्यर्थः । **ज्ञानमिति** । नित्य-नैमित्तिकैः कर्मभिः **पापस्य कर्मणः क्षायत् ज्ञानमुत्पद्यते** । **आदर्श-तलप्रख्ये**–आदर्शतलतुल्यतया प्रकाशमाने स्वच्छे, **आत्मनि**–अन्तःकरणे, **आत्मानं**–स्वस्वरूपं, तेनोत्पन्नज्ञानेन **पश्यतीत्यर्थः** । **तमेतमिति** । **वेदानुवचनेनेति** [2]ब्रह्मचारिधर्मा उक्ताः ।

---

[1] किल्बिषं–पा.　[2] ब्रह्मवादिधर्मा–पा.

भाष्यम्

दिषन्ति यज्ञेन दानेन तपसानाशकेन" (बृह. उ. ६-४-२२) "येन केन च यजेत। अपि वा दर्विहोमेनानुपहतमना एव भवति" इत्यादिश्रुतिभ्यश्च ज्ञानादेव मोक्षो भवति। *"ज्ञानादेव तु कैवल्यं प्राप्यते तेन मुच्यते" "ब्रह्मविदाप्नोति परम्" (तै.उ. २-१) "तरति शोकमात्मवित्" (छा. ७-१-३) "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मैव सन् ब्रह्माप्येति" (तै. आ. २-२) "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"

विवृतिः

**यज्ञेन दानेनेति** गृहस्थधर्माः। **तपसेति** वानप्रस्थनैष्ठिकब्रह्मचारिधर्मा उक्ताः। **अनाशकेनेति** सन्न्यासिधर्मा उक्ताः। तैः तमेतं प्रत्यगभिन्नं परमात्मानं विविदिषन्तीत्यर्थः। **येन केनेति**। सर्वानुष्ठानाशक्तौ **येन केन च यजेत। अपि वा दर्विहोमेनेति**। अप्रकृतिविकृति होमो [1]दर्विहोमः। **अनुपहतमना इति**। शुद्धान्तःकरणो भवतीत्यर्थः। ज्ञानादेव मोक्ष इत्यत्र श्रुतीरुदाहरति—**ब्रह्मविदित्यादि**। **तरतीति**। **आत्मवित्**—आत्मसाक्षात्कारवान्, **शोकं**—तदुपलक्षितं संसारं, **तरति**—अतिक्रामति नाशयतीत्यर्थः। **ब्रह्म वेदेति**। स यः कश्चित् ह वै लोके तत्परमं ब्रह्म वेद साक्षा[2]दहमस्मीति स वा नान्यां गतिं गच्छति, किन्तु ब्रह्मैव भवतीत्यर्थः। **ब्रह्मैव सन्निति**। पूर्वमपि **ब्रह्मैव सन्** उत्तरकालेऽपि **ब्रह्मैवाप्येति**—आप्नोति। अविद्याकृतभ्रमनिवृत्तिरेव ब्रह्मप्राप्तिः, न तु स्वर्गादिवदप्राप्तप्राप्तिः सम्भवति। आत्मत्वाद्ब्रह्मणः। मोक्षस्य स्वर्गादिवदनित्यत्वप्रसङ्गाच्चेत्यर्थः। **तमेवेति**। **तमेव**—प्रकृतिप्राकृतैर-

---

* इदं वाक्यं विवृत्यनारूढम्.

[1] दर्वीहोमः—**पा.** [2] दहमेवास्मीति—**पा.**

भाष्यम्

(श्वेता. ३-८) इति। "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" (तै.उ. २-९) "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" (केनो. २-१३)

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥
(श्वे. ६-२०)

विवृतिः

संस्पृष्टं प्रकृतं परमेश्वरमेव, **विदित्वा**—स्वात्मतया अपरोक्षीकृत्य तं विदित्वैव, नाविदित्वेति, **अतिमृत्युमेति—मृत्युं**—जननमरणादिसंसारहेतुभूतं अविद्यातमआख्यं, **अत्येति**—तरति, सम्यज्ज्ञानेन चिन्मात्रतया नाशयतीत्यर्थः पापमत्येतीतिवत्। अस्माज्ज्ञानात् **अन्यः पन्थाः**—उपायो **न विद्यते अयनाय**—मोक्षप्राप्तय इत्यर्थः—**आनन्दमिति**। * ब्रह्मस्वरूपमानन्दं **विद्वान्**—तत्साक्षात्कारवान् साक्षात्कारेणापगताविद्यः सन्, **न बिभेति**—भयं न गच्छति। **कुतश्चन**—कस्मादपि ऐहिकभयहेतोः व्याघ्रादेः परलोकभयहेतोः पापादेश्चेत्यर्थः। **इह चेदिति**। **इह**—अस्मिन् विद्याधिकारिणि मनुष्यादिदेहे सत्येव, प्रत्यग्ब्रह्मरूपमर्थं **अवेदीत्**—अवगतवान्, **चेत्**—यदि, **अथ**—तदा, **सत्यं** अवाप्तं **अस्ति**। **इह नावेदीच्चेत्**—न विदितवान् यदि, तदा **महती विनष्टिः**—जन्ममरणप्राप्तिलक्षणो विनाशः स्यात्। यतस्तस्मादवश्यं तद्विच्छेदाय ज्ञेय आत्मेत्यर्थः। **यदेति**। **चर्मवत्**—यथा चर्म **वेष्टयिष्यन्ति मानवाः** तद्वत् **आकाशं** वेष्टयिष्यन्ति **चेत्तदा देवं**—पूर्वोक्तं निष्कलत्वादिविशेषणविशिष्टं, **अविज्ञाय**—आत्मत्वेनाज्ञात्वा, **दुःखस्य**—संसारदुःखस्य,

---

* "राहोः" शिर इतिवत् षष्ठ्या अभेदाभिप्रायेण 'आनन्दं ब्रह्मणः' इत्यस्यार्थवर्णनमिदम्।

भाष्यम्

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (तै.आ. १०-१०)

"वेदान्तविज्ञानसुनिश्चितार्थाः
सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः
ते ब्रह्म[1]लोके तु परान्तकाले
[2]परामृतात्परिमुच्यन्ति सर्वे" (तै. आ. १०-१०)

इत्यादिश्रुतिभ्यश्च ॥

विवृतिः

**अन्तः**-नाशो भविष्यति। तस्मादेवमविज्ञाय दुःखसंसारनिवृत्तिः सर्वथा न सम्भाव्येत्यर्थः। **न कर्मणेति**। **न कर्मणा**—श्रौतेन स्मार्तेन वा, **न प्रजया**—पुत्रादिना, **धनेन**-दैवेन मानुषेण वा, नेति पूर्ववाक्यस्थमनुषज्यते। अमृतत्वमिति वक्ष्यमाणानुषङ्गः कर्मप्रजा[3]धनेष्ववगन्तव्यः। **त्यागेन**—निखिलश्रौतस्मार्तकर्मपरित्यागेन [4]परमहंसाश्रमरूपेण तत्पूर्वकज्ञानेन, **एके**—महात्मानः सम्प्रदायविदः, **अमृतत्वं**—अविद्यादिमरणभावराहित्यं, **आनशुः**—व्यानशिरे—प्राप्ता इत्यर्थः। **वेदान्तेति**। वेदान्ताः प्रसिद्धाः। तेभ्यो जातं विशिष्टं 'अहं ब्रह्मास्मि' इति ज्ञानं तस्मिन्नेव निश्चितं प्रयोजनं येषां ते, अथवा सुनिश्चितोऽयमित्थमेवेति सम्यगवधारितो ब्रह्मलक्षणार्थोऽभिधेयो यैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः, सम्यक् वान्तविष्ठादिवल्लोकद्वयभोगस्य न्यासः—त्यागः सन्न्यासः, तस्य योगः—अहं सन्न्यास्यस्मि इति बोधः तस्मात्, **यतयः**—यतनशीलाः, **शुद्धसत्त्वाः**-शुद्धं—रागादिकषायरहितं सत्त्वं-अन्तःकरणं येषां ते, एवम्भूता अपि कुतश्चित्प्रतिबन्धादस्मिन् शरीरे अनुत्पन्नसाक्षात्काराश्चेत्तदा **ते**—उक्ता यतयः, **ब्रह्मलोके**—ब्रह्मणः कार्यस्य लोके **परान्तकाले**—परस्य—कार्यब्रह्मणोऽन्तकाले—विनाशकाले,

---

[1] लोकेषु—**पा.** [2] परामृताः परि—**पा.** [3] धनपदेष्वव—**पा.** [4] पारमहंस्याश्रम—**पा.**

स्तोत्रम्

**वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात्॥१२३॥**

भाष्यम्

शूद्रः सुखमवाप्नुयात् श्रवणेनैव। न तु जपयज्ञेन। *"तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" (तै.सं. ७-१-१) इति श्रुतेः।

विवृतिः

द्विपरार्धावसानं परान्तकालः तस्मिन्, **परामृतात्**–उत्कृष्टामरणधर्मणः अव्याकृतात्, **परिमुच्यन्ति**–परिमुच्यन्ते, सर्वतो विमुक्ता भवन्ति। **सर्वे**–[1]अखिला इत्यर्थः। एवमुक्ताभिः श्रुतिस्मृतिभिः कर्मणां चित्तशुद्ध्यर्थत्वं, ज्ञानस्यैव मोक्षहेतुत्वमित्युक्तम् ॥

एवं "वेदान्तगो ब्राह्मणः स्यात्" इत्यस्य तात्पर्यमुक्त्वा "क्षत्रियो विजयी भवेत्" इत्यादिपादद्वयं स्पष्टार्थं मत्वा चतुर्थं पादं विशदयति—**शूद्र इति**। अत्र "य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्" इति च त्रैवर्णिकेषु यथायोगमुभयमपि सम्बध्यते। शूद्रे तु शृणुयादित्येव सम्बध्यते। न तु कीर्तयेदिति। कीर्तनस्योच्चोपांशुमानसरूपजपात्मकत्वेन जपस्य च यज्ञरूपत्वात्तत्र [2]शूद्रस्याधिकाराभावादित्यभिप्रेत्याह—**श्रवणेनैवेति**। तथा च ब्राह्मणः क्षत्रियो वैश्यश्च श्रवणकीर्तनाभ्यामन्यतरेण वा उक्तं फलं प्राप्नोति। शूद्राणां मध्ये यः शृणुयात् स सुखमवाप्नुयादिति सम्बन्धः। शूद्रस्य यज्ञाधिकाराभावे प्रमाणमाह—**तस्मादिति**। "पद्यु ह वा एतत् श्मशानं यच्छूद्रः" इति पूर्ववाक्ये पादयुक्तश्मशानरूपत्वेन निन्दित्वा तस्मादित्यनेन तदेव

* विवृतौ 'पद्यु ह वा' इत्यादिवाक्यस्यैतत्पूर्ववाक्यत्वोक्त्या तैत्तिरीयसंहितायां तददर्शनात् तत्पूर्वकैतद्वाक्यस्यान्य एवाकरो द्रष्टव्यः।

[1] निखिलाः–**पा.**　　[2] शूद्रस्यानधिकारादित्य–**पा.**

स्तोत्रम्

**धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।**
**कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाम्*** ॥ १२४ ॥

भाष्यम्

"श्रावयेच्चतुरो [1] वर्णान् कृत्वा ब्राह्मणमग्रतः"

इति महाभारते श्रवणमनुज्ञायते। "सुगतिमियाच्छ्रवणाच्च शूद्रयोनिः" इति हरिवंशे। यः शूद्रः शृणुयात् स सुखमवाप्नुयादिति व्यवहितेन सम्बन्धः। त्रैवर्णिकानां कीर्तयेदित्यनेन ॥ १२३ ॥

चक्षुरादीनामात्मयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यात् प्रवृत्तिः कामः। [2] प्रजायत इति प्रजा सन्ततिः ॥ १२४ ॥

विवृतिः

परामृश्यते। **तस्मात्**—अयुक्तश्मशानरूपत्वेन निन्दितत्वाद्धेतोः **शूद्रो यज्ञे अनवक्लृप्तः**—अनधिकारीत्यर्थः। शूद्रस्य जपयज्ञेऽनधिकारमुक्त्वा श्रवणाधिकारे प्रमाणमाह—**श्रावयेदिति**। तत्रैव हरिवंशवचनमाह—**सुगतिमिति**। तथा च स्त्रीशूद्राणामितिहासपुराणगतस्तवपठने नाधिकार इति भावः ॥ १२३ ॥

एवं ब्राह्मणादीनां चतुर्णां विशिष्य फलमुक्त्वा सामान्यतोऽपि धर्मार्थकामप्रजानां यो यदिच्छति स तदाप्नोतीत्याह मूले— **धर्मार्थीति**। **धर्मार्थी**—पापनाशकधर्मकामः, **धर्मं** प्राप्नुयात्—एतत्स्तवपाठेनैव कृतप्रायश्चित्तो भवेदित्यर्थः। यद्वा **धर्मार्थी**—विनैव दानादिकं तत्फलकामः, **धर्मं प्राप्नुयात्**—विनैव धर्मं दानादिरूपं तत्फलभाग्भवेत्। **अर्थं**—वित्तम्। **कामान्**—स्त्रीसुखरूपान् विषयेष्विन्द्रियाणामानुकूल्येन प्रवृत्तिरूपान् वा ॥ १२४ ॥

---

* प्रजाः इति पाठान्तरम्.

[1] वर्णानिति महाभारतेषु—पा. [2] प्रजा सन्ततिः—पा.

स्तोत्रम्

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२५॥

यशः प्राप्नोति विपुलं [1]ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः॥१२७॥

भाष्यम्

भक्तिमानित्यादिना भक्तिमतः शुचेः सततमेवमुद्युक्तस्यैकाग्रचित्तस्य श्रद्धालोर्विशिष्टाधिकारिणः फलविशेषं दर्शयति । ॥ १२५, १२६, १२७ ॥

विवृतिः

वक्ष्यमाणानि कानिचित्फलानि "भक्तिमान्" (वि.स. १२५) इत्यादिश्लोकोक्तविशेषणविशिष्टस्याधिकारिणो भवन्तीति "भक्तिमान्" इति श्लोकतात्पर्यमाह— **भक्तिमानित्यादिनेति** । भक्तिः–परमेश्वरे अनुरागः । शुचित्वं–पूर्वं भाष्योक्त[2]मानसस्नानादिना प्रयतत्वम् । "सदोत्थाय" इत्यनेन सततमुद्युक्तत्वं, तद्गतमानसत्वं–एकाग्रचित्तत्वं, तच्च वासुदेवगतान्तःकरणत्वं तत्तन्नामार्थानुसन्धानपरान्तःकरणत्वम् । एतादृशविशेषणवानधिकारीत्यर्थः ॥ १२५ ॥

---

[1] याति–**पा.** [2] मानसस्तवादिना–**पा.**

स्तोत्रम्

**रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।**
**भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥१२८॥**

विवृतिः

इत्थं "यशः प्राप्नोति" (वि. स. १२६) इत्यादीनां "नक्रोधो न च मात्सर्यं" (वि. स. १३३) इत्यतः प्राचीनानां श्लोकानां तात्पर्यमुक्तं भाष्ये । अत्र च पदशो व्याख्यायते । विपुलं सकलदिगन्तविश्रान्तं, यशः—कीर्तिं, ज्ञातिप्राधान्यं—ज्ञातिषु—स्वजनेषु, प्राधान्यं—श्रैष्ठ्यं, अचलां श्रियं—सम्पदं, अनुत्तमं श्रेयः—अपवर्गरूपम् । ॥ १२६ ॥

भयं—चोरव्याघ्रादिदर्शनजवृत्तिविशेषरूपं, क्वचित्—भयस्थानेऽपि नाप्नोति । वीर्यं—पराक्रमं, तेजः—प्रागल्भ्यं, श्रवणादीनां वीर्यं—परैरधृष्यत्वं श्रुताध्ययनजं तेजो वा, विन्दति—लभते । रोगः—ज्वरादिः, तद्रहितः अरोगः, अनुत्पन्नरोग इत्यर्थः । द्युतिः—शरीरकान्तिः, तद्विशिष्टः द्युतिमान् । बलं—शारीरं सामर्थ्यं, रूपं—सौन्दर्यं, गुणाः—"दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति" (गौ. ध. ८–२१) गौतमोक्ताः, एतैरन्वितश्च भवतीत्यर्थः ॥ १२७ ॥

रोगेण—[1]ज्वरादिना आर्तः—पीडित एतज्जपेन तस्मान्मुच्यते । "भवत्यरोगः" इत्यत्र रोगानुत्पत्तिः फलमुक्तम् । अत्र तु प्राप्तस्य रोगस्य निवृत्तिः फलमुच्यते । बद्धः कारागृहादौ तस्माद्बन्धनात् मुच्यते, **भीतः**—भययुक्तः तस्मान्मुच्यते । "न भयं क्वचित्" इत्यत्र तु भयाप्राप्तिरुक्तेति न पुनरुक्तता । **आपन्नः**—आपदं प्राप्तः ॥ १२८ ॥

---

[1] रोगादिना—**पा.**

स्तोत्रम्

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥१२९॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१३०॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥१३१॥

विवृतिः

उक्तेभ्योऽन्यान्यपि **दुर्गाणि**–दुस्तराणि यानि तान्यपि **आशु अतितरति**–निवर्तयति । क इत्याकाङ्क्षायामाह—**पुरुष** इति । **नित्यं**–सर्वदा, **भक्तिसमन्वितः**–भक्त्या तात्पर्येण युक्तः, **नामसहस्रेण स्तुवन्**–गुणान् कीर्तयन्नित्यर्थः ॥ १२९ ॥

[1]अनवच्छिन्नानन्दावाप्तिरनर्थनिवृत्तिश्चेति फलमिति क्रमेण श्लोकद्वयेनाह विशिष्टाधिकारिणं प्रति **वासुदेवाश्रय** इत्यादिना । **वासुदेवाश्रयः**–वासुदेवैकशरणः, **वासुदेवपरायणः**–वासुदेव एव परायणं प्राप्यं स्थानं यस्य स तथा । 'वासुदेवैकशरणोऽहं वासुदेवमेव प्राप्स्यामि' इत्यभिसन्धिमान् तदेव वासुदेवाख्यं **ब्रह्म याति**–प्राप्नोतीत्यर्थः ॥ १३० ॥

"न वासुदेवभक्तानाम्" इत्यादिना क्वचिन्नहुषययात्यादिवदमुत्रेह लोके चान्येषामपि वासुदेवभक्तानामशुभं न विद्यत इत्युक्त्वा जन्माद्यपि नेत्याह—**जन्ममृत्युजरेत्यादिना** ॥ १३१ ॥

---

[1] अविच्छिन्नानन्दावाप्ति–**पा.**

स्तोत्रम्

**इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।**
**युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः**
**॥ १३२ ॥**

भाष्यम्

**श्रद्धा–आस्तिक्यबुद्धिः । भक्तिः–भजनं तात्पर्यम् । आत्मनः सुखं आत्मसुखम्, तेन च क्षान्त्यादिभिश्च युज्यते । ॥ १३२ ॥**

विवृतिः

अन्यान्यपि फलानि दर्शयति—**इममिति । अधीयान इति ।** * पूर्वोक्तत्रिविधान्यतमपर इत्यर्थः । श्रद्धा–विश्वासः, जप्यमन्त्रे भक्तिः–जप्यमन्त्रार्थे भगवत्यनुरक्तिः, ताभ्यामन्वितः । आत्मा–अधिकारिभूतः, सुखं–ऐहिकमामुष्मिकं च सात्त्विकं, "यत्तदग्रे विषमिव" (भग. १८-३७) इत्यादिना भगवतोक्तम् । क्षान्तिः–क्षमा ।

"बाह्ये चाध्यात्मिके चैव दुःखे चौत्पत्तिके क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥"

इत्युक्तलक्षणा । श्रीः–ज्ञानोपकरणानि "उपकरणवेषरचनाविधासु च श्रीरिति प्रथिता" इति कोशात्, धृतिः–प्रयत्नविशेषः, "धृत्या यया धारयते" (भ ग. १८-३३) इति भगवदुक्ता । स्मृतिः–गुरुवेदान्तोक्तार्थाविस्मरणम् । कीर्तिः–चित्तप्रसादः, "कीर्तिः प्रसादयशसोः" इति कोशात् । एतैरुक्तैः फलैर्युज्यते–सम्बध्यत इत्यर्थः ॥ १३२ ॥

ननु "नक्रोधो न च मात्सर्यं" इत्यादिश्लोके क्रोधो लोभः अशुभा मतिश्च न भवतीति यद्यन्वयः तदा नञो वैयर्थ्यम् । क्रोधो

---

* उच्चोपांशुमानसरूपत्रिविधजपान्यतमपर इत्यर्थः ।

### स्तोत्रम्

## नक्रोधो न च मात्सर्यं नलोभो नाशुभा मतिः ।

### भाष्यम्

**नक्रोधः नलोभः नाशुभा मतिः इति ञकारानुबन्धरहितेन नकारेण समस्तं पदत्रयम् । क्रोधादयो न भवन्ति, मात्सर्यं च न भवतीत्यर्थः ॥ १३३ ॥**

### विवृतिः

न भवति लोभो न भवति अशुभा मतिश्च न भवतीति यद्यन्वयः तदा वाक्यभेदः । सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् पक्षद्वयेऽपि भवन्तीति बहुवचनानुपपत्तिश्चेत्याशङ्कयाह—**नक्रोध इत्यादि नाशुभेति** । द्वौ नञौ प्रकृतमर्थं गमयत इति शुभा मतिरित्यर्थः । ननु नक्रोधो नलोभो नाशुभेत्यत्र पदत्रयं नञा समस्तं चेन्नञ्समासे "नलोपो नञः" (पा. सू. ६-३-७३) इत्युत्तरपदे परतो नलोपे अक्रोधः अलोभः अनशुभा इति रूपं स्यादित्याशङ्कयाह—**ञकारानुबन्धरहितेति** । अयं भावः "नलोपो नञः" (पा. सू. ६-३७३) इति सूत्रे ञकारानुबन्धकस्यैव नलोपो विधीयते । नञ इति सानुबन्धकस्य ग्रहणात् । अयं तु "अमानोनाः प्रतिषेधे" इति प्रतिषेधार्थको नशब्द इति न लोपो भवति, "गमिकर्मीकृतनैकनीवृता" (नै. २-४०) इत्यादिवदिति । निष्कृष्टार्थमाह—**क्रोधादय इति** । अक्रोधः अलोभः अशुभा मतिरित्येते गुणा भवन्तीति समासपक्षे नकारवैयर्थ्यं वाक्यभेदो बहुवचनानुपपत्तिश्च नेत्यर्थः । न च मात्सर्यमिति वाक्ये तु चकारव्यवधानेन समासायोगाद्विभक्तिविपरिणामे [1] मात्सर्यं च न भवतीति भिन्नं निषेधवाक्यमित्याह—**मात्सर्यं च नेति** ।

[1] मात्सर्यं च नेति न भवतीति–**पा**.

स्तोत्रम्

**भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥**

**द्यौः सचन्द्रार्क[1]नक्षत्रा खं दिशो भूर्महोदधिः ।**

**वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३४॥**

भाष्यम्

**"द्यौः सचन्द्रार्कनक्षत्रा" इत्यादिना स्तुत्यस्य वासुदेवस्य महात्म्यकथनेनोक्तानां फलानां प्राप्तिवचनं [2]यथार्थकथनम्, नार्थवाद इति दर्शयति ॥ १३४-१३५-१३६ ॥**

विवृतिः

केषामेतानि फलानीत्याकाङ्क्षायामाह—**भक्तानामिति** । भक्तौ हेतुगर्भविशेषणं—**कृतपुण्यानामिति** ॥ १३३ ॥

द्यौः सचन्द्रेत्यादेस्तात्पर्यमाह—**द्यौरिति । नार्थवाद इति** । पूर्वोक्तानां फलवचनानामङ्गेषु फलवाक्यवन्नार्थ[3]वादतेत्यर्थः । द्यौरित्यादेरयमर्थः । **द्यौः**—द्युलोकः, सा च चन्द्रार्कनक्षत्रैः सहिता, खमित्यन्तरिक्षलोको भूलोकसूर्यमध्यवर्ती, दिश इति दिग्वर्तिनो लोकाः, भूरिति भूलोकः, तत्रत्यमहोदधिश्च सप्तसमुद्रा इत्येतानि भुवनानि ससमुद्राणि सान्तर्वर्तिभूतानि, **महात्मनः**—महान्—उत्कृष्टः आत्मा—धारणाख्यो यत्नोऽस्य स तथा, तादृशस्य **वासुदेवस्य वीर्येण**—शक्त्या विधृतानि—[4]आत्मन्येवावस्थापितानि । यद्वा द्यौरित्यण्डस्योत्तरकपालम्, भूरित्यधरकपालम्, खमिति तदन्तवर्त्याकाशगता लोकाः भूतानि च गृह्यन्ते ॥ १३४ ॥

---

[1] नक्षत्रं—पा. [2] यथार्थवादः—पा. [3] वादत्वमित्यर्थः—पा. [4] आत्मनैव—पा.

स्तोत्रम्

**ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।**
**जगद्वशे(ऽ)वर्ततेदं कृष्णस्य सचराचरम् ॥१३५॥**
**इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।**
**वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१३६॥**

विवृतिः

न केवलं वासुदेवेन ध्रियत एव सर्वम्, नियम्यतेऽपीत्याह — **ससुरेति**। किं शेषेण? नेत्याह–**सचराचरमिति**। **सचराचरं**–सर्वं **जगत्, कृष्णस्य वशे**–नियमनशक्तौ नियम्यतया वर्तते। "वश आयत्ततायां स्याद्वशश्शक्तिप्रभुत्वयोः" इति कोशादित्यर्थः। वर्ततेदमिति सन्धिरार्षः। अवर्ततेति वा छेदः। भूतकालो न विवक्षितः। सर्वदा वशवर्तीत्यर्थः ॥ १३५ ॥

धृतिं नियमनं चोक्त्वा जडानां तत्कार्यत्वाद्वासुदेवात्मकत्वं, जीवानां च बिम्बप्रतिबिम्बयोरिव घटाकाशमठाकाशयोरिवचाभेद इति जीवजडप्रपञ्चयोर्वासुदेवात्मकत्वमित्याह — **इन्द्रियाणीति**। ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति **इन्द्रियाणि** दश। **मनः**–सङ्कल्पविकल्पात्मकम्, **बुद्धिः**–अध्यवसायरूपा, **सत्त्वं**–तादृशवृत्तिपरिणाम्यन्तःकरणाख्यम्, **तेजः**–प्रभावः, **बलं**–[1]शारीरं सामर्थ्यम्, **धृतिः**—यया अवसादं प्राप्तानि कार्यकरणानि ध्रियन्ते सा, **क्षेत्रं**–व्यष्टिसमष्ट्यात्मकं शरीरम्. **क्षेत्रज्ञः**–तदभिमानी जीवः, इतीमानि **वासुदेवात्मकान्यहुः**–कथयन्ति श्रुत्यन्तविदः। "क्षेत्रज्ञं चापि मां विद्धि" (भ. गी. १३–२) "तत्त्वमसि" (छा. ६–८–७) "इदं सर्वं यदयमात्मा" (बृ. ४ ५-७) इत्यादि-श्रुतिस्मृतिभ्य इत्यर्थः ॥ १३६ ॥

---

[1] शरीरसामर्थ्यम्–**पा**.

स्तोत्रम्

## सर्वागमानामाचारः प्रथमं [1]परिकल्पते ।
## आचारः प्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥

भाष्यम्

"सर्वागमानामाचारः" इत्यन[3]नावान्तरवाक्येन सर्वधर्माणामाचारवत एवाधि[4]कार इति दर्शयति ॥ १३७ ॥

विवृतिः

भगवन्माहात्म्यकथनपरे ग्रन्थे वाक्यभेदेनाचारवानेवाधिकारी, नान्य इति दर्शयितुं सर्वागमानामित्यादिश्लोक इति तात्पर्यमाह— **सर्वेति**। **सर्वागमानां**—सर्वेषां वेदानामधीयमानानां तदर्थज्ञानतदनुष्ठानयोश्च **आचारः**–शौचाचमनस्नानसन्ध्यावन्दनादिरूपः, **प्रथमं**–अधिकारिविशेषणत्वेन पूर्वमेव विद्यमानः सन्, **परिकल्पते**–अधिकारसिद्धये समर्थो भवति।

"स्नात्वा कर्माणि कुर्वीत"

"शिरस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥"

"विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ।"

"आचारहीनं न पुनन्ति वेदाः
यद्यप्यधीताः सह षड्भिरङ्गैः" ।

इत्यादिवचनेभ्यः। अत **एव आचारः प्रथमो**ऽधिकारिविशेषणत्वेन हेतुरस्य तादृशो **धर्मो** भवति। धर्मत्वं ह्यधिकारिविशेषणं प्रयोजकम्। अन्यथा

[1] परिकल्प्यते- **पा.** [2] आचारप्रभवो ध–**पा.** [3] नार्थवादवाक्येन–**पा.** [4] कारं दर्श–**पा.**

स्तोत्रम्

**ऋषयः पितरो देवा महाभूतानि धातवः ।**
**जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८॥**

विवृतिः

अत्रैवर्णिककृतयज्ञादेरपि धर्मतापत्तेः । एतादृशस्यैव **धर्मस्य अच्युतः प्रभुः**–फलदाता, नाधिकारिविशेषणरहितस्येत्यर्थः । सहस्रनामस्तवजपे शुचित्वादिविशेषणवानधिक्रियते ।

चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् ।
नाशौचं कीर्तने तस्य स [1]पवित्रकरो यतः ॥

इत्यादिवचनानि मुक्तकनामविषयणीति भावः ॥ १३७ ॥

ननु पूर्वं जगतो वासुदेवात्मकत्वमुक्तम्, कथं तदुपपद्यते । तदकार्यत्वे सति सत्यस्य प्रपञ्चस्य तदात्मकत्वायोगात् । न हि घटपटयोरन्यतरस्यान्यतरात्मकत्वमित्याशङ्क्य जगतस्तदात्मकत्वसिद्धये तत्कार्यत्वमाह मूले—**ऋषय इत्यादि** । **ऋषयः**–मरीच्यादयः, **पितरः**–अग्निष्वात्तादयः, **देवाः**–ब्रह्मादयः, **महाभूतानि**–वियदादीनि, **धातवः**–इन्द्रियाणि, अत्र पञ्चीकृतान्यपि भूतानि द्रष्टव्यानि । "नामरूपे व्याकरवाणि" (छ. ६-३-२) इति श्रुतेः । **इदं**–प्रत्यक्षादिप्रमाणसिद्धम्, **जङ्गमाजङ्गमं**–चराचरात्मकं **जगत् नारायणोद्भवम्**–नारायण उद्भवः–निमित्तमुपादानं च यस्य तत्तथा, नारायणादुद्भवो यस्येति वा । तथा च तदुपादानत्वात्कार्यप्रपञ्चस्य तदात्मकत्वं, "सर्वं खल्विदं ब्रह्म तज्जलान्" छा. ३-१४-१) इति श्रुतेः । जीवानां तु [2]तत्तदुपाध्युत्पत्त्या तदुद्भवत्वं बोध्यम् ॥ १३८ ॥

---

[1] पवित्रतरो–**पा.**  [2] तत्तदुपादानादुत्पत्य–**पा.**

स्तोत्रम्

**योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादि कर्म च ।**
**वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्॥ १ ३ ९ ॥**
**एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।**
**त्रीन् लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १४० ॥**

विवृतिः

एवमर्थसृष्टिमुक्त्वा शब्दसृष्टिमप्याह—**योग इति । योगः**—योगशास्त्रम्, **ज्ञानमिति** तस्यैव विशेषणम् । प्रकृतिपुरुषविवेको जायतेऽनेनेति व्युत्पत्तेः । **साङ्ख्यं**—साङ्ख्यशास्त्रम् । [1]साङ्ख्यस्य वा विशेषणं ज्ञानमिति । **विद्याः**—शिक्षाकल्पादयः । अङ्गविद्याः—**शिल्पादि** । **वेदाः** चत्वारः । **शास्त्राणि**—न्यायवैशेषिकपूर्वोत्तरमीमांसात्मकानि । **विज्ञानं**—वेदोपबृंहकेतिहासपुराणधर्मशास्त्राद्यात्मकम् । इत्येतत्सर्वं **जनार्दनात्** उद्भूतमिति शेषः ॥ १३९ ॥

वासुदेवस्यैव ब्रह्मादिस्थावरान्तक्षेत्रज्ञरूपेणावस्थानमुक्तमुपपादयन् तत्तत्क्षेत्रज्ञरूपेण भोक्तृत्वमाह—**एक इति । महत्**—सर्वोत्कृष्टं,**भूतं**—परमार्थसत्यं, **एकः**—अद्वितीयः, यो विष्णुः सोऽ**नेकशः**—अनेकप्रकाराणि उपाधिभूतानि **भूतानि**—देवतिर्यङ्मनुष्यादिशरीराणि प्रति उपाधिभेदात् **पृथक्**—भिन्नरूपो भवति ।

"यथाह्ययं ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा" ॥

---

[1] साङ्ख्ये वा—**पा.**

स्तोत्रम्

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥१४१॥**

भाष्यम्

"इमं स्तवम्" इत्यादिना [1]सहस्रशाखाज्ञेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति [2]सर्वैरेव आर्थिभिः सादरं पठितव्यं सर्वफलसिद्ध्य इति दर्शयति ॥१४१॥

विवृतिः

इति श्रुतेः । अत एव भूतात्मा सन् त्रीन् लोकान् व्याप्य भुङ्क्ते देवादिरूपेण हव्यकव्यादिकम् । यद्वा त्रीन् लोकान्–स्थूलादि-विषयान्, व्याप्य–तैस्सम्बध्य, विश्वतैजसप्राज्ञरूपेण तानेव विषयान् स्थूलसू[3]क्ष्मानर्थान् भुङ्क्त इत्यर्थः । अत एव **विश्वभुक्**–विश्वतैजसाद्यात्मना स्थूलसूक्ष्मकारणरूपस्य विश्वस्य भोक्ता, **अव्ययः**–परमार्थतो भोक्तृत्वादिविकाररहित एवात्मा इत्यर्थः । अथवा **अनेकशः**–अनेकप्रकाराणि, **भूतानि**–दैवादिशरीराणि, **व्याप्य**–अहमभिमानेन तैस्सम्बध्य, **पृथक्**–उपाधिभेदाद्भिन्नः, **भूतात्मा**–क्षेत्रज्ञः सन् **त्रीन् लोकान्**–भोगान् स्थूलादिविषयान् **भुङ्क्त** इत्यर्थः ॥ १४० ॥

"कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुम्"

इत्यादिवचनैः प्रथितमाहात्म्येन द्वैपायनेन अनेकशाखाभेदभिन्नसकल-वेदाभिज्ञेन, प्रणीतमिति स्वप्रणेतरि गौरवादप्यतिश्रद्धालुना सहस्रनाम-स्तवः पठनीयः सकलपुरुषार्थसिद्ध्य इति श्लोकतात्पर्यमाह–**इममिति** । **श्रेयः**–मुक्तिः, **सुखानि**–अभ्युदयरूपाणि, एतेषां प्राप्तिं य इच्छेत् स

[1] सहस्रशाखाज्ञानेन–**पा.** [2] सर्वैरर्थिभिः–**पा;** [3] क्ष्मानन्दान्-**पा.**

स्तोत्रम्

**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्**
**॥ १४२ ॥**

***न ते यान्ति पराभवं ओं नम इति† ॥**

**इति श्रीमहाभारतेऽनुशासनपर्वणि भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं ‡नामैकोनपञ्चाशदधिकशततमोऽध्यायः**

भाष्यम्

**"विश्वेश्वरम्" इत्यादिना विश्वेश्वरोपासनादेव स्तोतारस्ते [1]धन्याः कृतार्थाः कृतकृत्या इति दर्शयति ।**

विवृतिः

भगवतो विष्णोर्व्यासेन कीर्तितं इमं स्तवं पठेदिति योजना । अत्र पुरुष इत्यनेन त्रैवर्णिकस्त्रीणामपि नाधिकार इति दर्शयति । स्त्रीशूद्रौ नाधीयाताम्" "स्त्रीशूद्राश्च सधर्माणः" इत्यादिवचनेभ्यः स्त्रीशूद्रयोः साधर्म्यावगमात् । वेदश्रवणं तु तासामनिषिद्धम् । श्रवणनिषेधानां शूद्रत्वपुरस्कारेणैव प्रवृत्तेरिति ॥ १४१ ॥

इदानीमुक्तं फलं न प्रकृतस्तवपाठस्यैव, किन्तु यथाकथञ्चिद्भगवद्भजनमात्रस्यापीत्याह— **विश्वेश्वरमिति ।** **अजं**—जन्मादिभाव-

* इदं केषुचित्कोशेषु नास्ति । अस्य भाष्यविवृती च नोपलभ्येते ।

† एतदनन्तरं दाक्षिणात्यसहस्रनामकोशेषु, कुम्भकोणस्थमध्वविलासपुस्तकालय-प्रकाशितभारतकोशे, चे-वा-रा. प्रकाशितभरतकोशे च "अर्जुन उवाच" इत्याद्यधिकः पाठो मूलटिप्पण्योरुपलभ्यते । स चात्रानुबन्धे स्तोत्रपाठे नियोजितः ।

‡ अत्र 'चतुश्चत्वारिंशदधिकशततमोऽध्यायः' इति चे-वा-रा. प्रकाशितभारत-कोशे । "चतुःपञ्चाशदधिकद्विशततमोऽध्यायः" इति म. वि. पु. प्रकाशितभारतकोशे । "एकोनपञ्चाशदधिकशततमोऽध्यायः" इति पूनास्थचित्रशालाप्रकाशितभारतकोशे ।

[1] कृतकृत्या इति–पा.

भाष्यम्

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव [1]तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

*[2]आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
[3]तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥

इति व्यासवचनम् ॥

विवृतिः

विकाररहितम् । **विश्वेश्वरं**–विश्वस्य जगतो नियन्तारम्, प्रभवति–उत्पद्यते अस्मादिति प्रभवः–उत्पत्तिकारणम्, अपियन्ति–लीयन्ते अस्मिन् भूतानीति अप्ययः । अनेन जगज्जनिलयकारणत्वमुक्तम् । विश्वेश्वरमित्यनेन नियमनाख्यं पालनमुक्तम् । तथा च जगज्जन्मस्थितिलयकारणत्वं ब्रह्मणो लक्षणं "यतः सर्वाणि भूतानि" (वि. स. ११) [4]इत्युपक्रान्तमुपसंहृतमिति बोध्यम् । एतादृशं **देवं**–द्योतमानं विष्णुं **ये भजन्ति** ते पुनः पुनः जन्ममरणप्राप्तिरूपं **पराभवं न यान्तीत्यनेन** भगवद्भजनस्य कृतकृत्यताहेतुत्वं दर्शितमित्यर्थः ॥

पापप्रायश्चित्तार्थेष्वपि यज्ञादिष्वङ्गलोपादिषु सत्सु विष्णुनामस्मरणं साद्गुण्यकारणं भवतीति प्रायश्चित्तानामपि [5]सर्वेषां प्रायश्चित्तत्वात्प्रथितमाहात्म्यं भगवन्नामेति दर्शयति—**प्रमादादिति** । स्वकृतां

---

* अयं श्लोको विवृत्यनारूढो ज्ञानवासिष्ठे १-१-१३-२४ समुपलभ्यते.

[1] तद्विद्धि स–**पा.** [2] अधनो हि यथा–**पा.** [3] एवं चेद्वि–**पा.** [4] इत्युपक्रम्योपसं–**पा.** [5] प्राय–**पा.**

भाष्यम्

सहस्रनामसम्बन्धिव्याख्या सर्वसुखावहा ।
श्रुतिस्मृतिन्याय[1]मूला रचिता हरिपादयोः*† ॥ १४२ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ विष्णुसहस्रनामस्तोत्रभाष्यं
सम्पूर्णम्

---

विवृतिः

नामव्याख्यां भगवते समर्पयति—सहस्रेति । सर्वेति । यथायोग्यं सर्वेषां व्याख्यातरीत्या अर्थज्ञानपूर्वकजपादिना सुखप्रदेत्यर्थः । श्रुतीति ॥ परस्मात्पुरुषान्न भिन्नमिदं विश्वं परमार्थतः । तेन विश्वमित्यभिधीयते ब्रह्मेति व्याख्या "ब्रह्मैवेदं विश्वम्"(मु.२-२-११) इत्यादिश्रुतिमूला, "सकलमिदमहं च वासुदेवः" इत्यादिस्मृतिमूला, "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र. सू. २-१-१४) इति न्यायमूला चेत्यर्थः । एवं व्याख्यानान्तरेष्वपि यथासम्भवं श्रुत्यादिमूलत्वं बोध्यम् ॥ १४२ ॥

---

* एतदनन्तरं केषुचित्कोशेषु

चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् ।
नाशौचं कीर्तने तस्य स [2]पवित्रतरो यतः ॥ इत्यधिकः पाठो दृश्यते । अस्य विवृतिर्नास्ति ।

† इतः परं कतिपयमातृकासु अधिको विवृतिरहितो ग्रन्थभागो दृश्यते । सोऽत्र ६४८ तमपुटे निवेशितोऽस्ति ।

[1] माला–पा. [2] पवित्रकरो–पा.

## विवृतिः

प्रक्षेपकालुष्यनिरासहेतोर्व्याख्या हरेर्नामसहस्रभाष्ये ।
या तारकब्रह्मयतिप्रणीता समर्पिता सा हरिपादयुग्मे ॥ १ ॥

श्रीगोपालसरस्वतीयतिवरान्तेवासिना तारक-
ब्रह्मानन्दसरस्वतीसुयतिना शक्त्यानुरूपा कृता ।
विष्णोर्नामसहस्रभाष्यविवृतिर्या तत्र विद्वज्जनैः
क्षन्तव्यं क्षतमुत्तमैर्भगवतो नामैकनिष्ठा यतः ॥ २ ॥

सम्पूर्णेयं विष्णुसहस्रनामभाष्यविवृतिः ।

श्रीकृष्णाय परस्मै ब्रह्मणे नमः ।

श्रीकृष्णार्पणमस्तु ।

———

[एतत्संस्थायां विद्यमानासु आसु हस्तलिखित मातृकासु (मातृकासंख्या १६५२, ११८, ३८२, १३३६, ३७८१, १९६८, २६६६. ०४३६.) भाष्ये "रचिता हरिपादयोः" इत्येतदनन्तरं अधोलिखितो ग्रन्थभागोऽधिको वर्तते। अस्य ग्रन्थभागस्यास्मदुपलब्धे तारकब्रह्मानन्दसरस्वतीविरचितविवृतिमातृकात्रयेऽपि विवृतिस्तु न दृश्यते। विवृत्यन्ते "प्रक्षेपकालुष्यनिरासहेतोः" इत्युक्त्या अस्य भागस्य प्रक्षिप्तत्वमभिप्रेत्य तैः विवृतिरुपेक्षितेति प्रतिभाति ॥]

भाष्येऽधिकः पाठः

एकैकनामस्तवनस्यापि फलविशेषसाधनत्वं सर्वफलसाधनत्वं च प्रतिपादयतः विष्णुधर्मेष्वध्यायैकदेशस्य सहस्रनामव्याख्याने पाठः। सहस्रनामसङ्कीर्तनाशक्तस्य कतिपयनामसङ्कीर्तनादपि समस्तपुरुषार्थः सिध्यतीति तद्दर्शयितुमाह—(वि. ध. अ. ४१)—

एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम!।
नाम्नां सहस्रं लोकानामुपकारकरं शृणु ॥ १० ॥

निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात्।
विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम! ॥ ११ ॥

यच्छक्तिनाम यत्तस्य तत्तस्मिन्नेव वस्तुनि।
साधकं पुरुषव्याघ्र! सौम्यक्रूरेषु वस्तुषु ॥ १२ ॥

वासुदेवाच्युतानन्तसत्याजपुरुषोत्तमैः।
परमात्मेश्वराद्यैश्च स्तुतो नामभिरच्युतः ॥ १३ ॥

निमित्तभावं भगवान्विमुक्तेर्यात्यधोक्षजः।
तथान्यकार्यसंसिद्धेर्यद्यत्तन्निशामय ॥ १४ ॥

धर्मगुब्धर्मकृद्धर्मी धर्मात्मा धर्मकृच्छुचिः ।
शुचिषद्विष्णुर्यज्ञाङ्गः पुष्कराक्ष अधोक्षजः ॥ १५ ॥
शुचिश्रवाः शिपिविष्टो यज्ञेशो यज्ञभावनः
नाम्नामित्येवमादीनां समुच्चारणतो नरः ॥ १६ ॥
धर्मं महान्तमाप्नोति पापबन्धक्षयं तथा ।
द्रविणप्राप्तये ब्रह्मन्! देवनामानि मे शृणु ॥ १७ ॥
एषां समुच्चारणतो वित्तमाप्नोति भक्तिमान् ।
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीनिकेतनः ॥ १८ ॥
श्रियः पतिः श्रीपरमः श्रीमान् श्रीवत्सलाञ्छनः ।
नृसिंहो दुष्प्रशमनो जयो विष्णुस्त्रिविक्रमः ॥ १९ ॥
स्तुतः प्रयच्छते चार्थमेवमादिभिरच्युतः ।
कामः कामप्रदः कान्तः कामपालस्तथा हरिः ॥ २० ॥
आनन्दो माधवश्चैव कामसंसिद्धये जपेत् ।
रामः परशुरामश्च नृसिंहो विष्णुरेव च ॥ २१ ॥
त्रिविक्रमश्चैवमादि जप्यं नाम जिगीषुभिः ।
विद्यामभ्यस्यता नित्यं जप्तव्यः पुरुषोत्तमः ॥ २२ ॥
दामोदरं बन्धगतो नित्यमेव जपेन्नरः ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥ २३ ॥
नेत्रबाधासु सर्वासु हृषीकेशं भयेषु च ।
(धन्वन्तरिं गरुत्मन्तं मणिराजं च कौस्तुभम् ॥)
अच्युतं चामृतं चैव स्मरेदौषधकर्मणि ॥ २४ ॥
भ्राजिष्णुमग्निं भानुं च जपेदालम्बनस्थितः ।
सङ्ग्रामाभिमुखो गच्छन् संस्मरेदपराजितम् ॥ २५ ॥

पाताले नरसिंहं च जले क्रोडतनुं स्मरेत् ।
चक्रिणं [1]गादिनं चैव शार्ङ्गिणं खड्गिनं तथा ॥ २६ ॥
[2]क्षेमार्थे च प्रयाणे च दिक्षु प्राच्यादिषु स्मरेत् ।
अजितं चाधिकं चैव सर्वं सर्वेश्वरं तथा ॥ २७ ॥
संस्मरेत्पुरुषो भक्त्या व्यवहारेषु सर्वदा ।
नारायणं सार्वकालं क्षुतप्रस्खलनादिषु ॥ २८ ॥
ग्रहनक्षत्रपीडासु देहबाधाटवीषु च ।
दस्युवैरिनिरोधेषु सिंहव्याघ्रादिसङ्कटे ॥ २९ ॥
अन्धकारेऽतितीव्रे च नरसिंहमनुस्मरेत् ।
तरत्यखिलदुःखानि तापार्तो जरुशायिनम् ॥ ३० ॥
गरुडध्वजानुस्मरणाद्विषवीर्यं प्रशाम्यति ।
स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ॥ ३१ ॥
कीर्तयेद्भगवन्नाम वासुदेवेति नित्यशः ।
स्थापने वित्तधान्यादेरवध्याने ज दुष्टजे ॥ ३२ ॥
कुर्वीत तन्मयो भूत्वा अनन्ताच्युतकीर्तनम् ।
नारायणं शार्ङ्गधरं श्रीधरं पुरुषोत्तमम् ॥ ३३ ॥
वामनं खड्गिनं विष्णुं दुस्स्वप्नेषु च संस्मरेत् ।
एकार्णवे हि पर्यङ्कशायिनं च हरिं स्मरेत् ॥ ३४ ॥
वाय्वग्निगृहदाहेषु प्रवृद्धिमुपलभ्य च ।
विद्यार्थी मोहविभ्रान्तिवेगघूर्णितमानसः ॥ ३५ ॥
मनुष्यो मुनिशार्दूल! तदाश्वशिरसं स्मरेत् ।
बलभद्रं समृद्ध्यर्थी सीरकर्मणि कीर्तयेत् ॥ ३६ ॥

---

[1] शङ्खिनं.  [2] क्षेमप्रवसने राजन्.

जगत्सूतिमपत्यार्थी स्तुवन् भक्त्या न सीदति ।
जपत्व्यस्सुप्रजार्थं तु देवदेवश्च सत्तम ! ॥ ३७ ॥

दम्पत्योरात्मसम्बन्धे विवाहार्थं पुनः पुनः ।
श्रीशं सर्वाभ्युदयिके कर्मण्येवं प्रकीर्तयेत् ॥ ३८ ॥

अभीष्टार्थेष्वशेषेषु विशोकं च सदा स्मरेत् ।
मरुत्प्रतापाग्निजलबन्धनादिषु मृत्युषु ॥ ३९ ॥

स्वतन्त्रपरतन्त्रेषु वासुदेवं जपेद्बुधः ।
सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ॥ ४० ॥

यद्वाभिरोचते नाम तत्सर्वार्थेषु कीर्तयेत् ।
सर्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः ॥ ४१ ॥

सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ! ।
एवमेतानि नामानि देवदेवस्य कीर्तयेत् ॥ ४२ ॥

यं यं काममभिध्यायन् तं तमाप्नोत्यसंशयम् ।
सर्वान् कामानवाप्नोति समाराध्य जगद्गुरुम् ॥ ४३ ॥

तन्मयत्वेन गोविन्दमित्येवं दाल्भ्य ! नान्यथा ।
तन्मयो वाञ्छितान् कामान् तथैवाप्नोति मानवः ॥ ४४ ॥

निमित्तशक्तिः सा तस्य सर्वशक्तेर्महात्मनः ।
वाङ्मनःकायिकं दोषं यच्च कुर्वन् प्रयात्यघः ॥ ४५ ॥

स्वरूपशक्तिभेदस्य मतिभेदकृतं तु तत् ।
स शान्तो निर्मलः शुद्धो ब्रह्मभूतो जगद्गुरुः ॥ ४६ ॥

कर्मभिर्नामभिर्जीवैर्दृश्यते दाल्भ्य ! नान्यथा ।
यथा हि गङ्गासलिलं शीतमत्यन्तनिर्मलम् ॥ ४७ ॥

एकं विज्ञायते नैकं लोकैः कर्मविभेदतः ।
एकस्वरूपमप्यात्मा पुण्यापुण्यविभेदिभिः ॥ ४८ ॥
भ्रान्तिज्ञानान्वितैर्मिश्रासितासितविचेष्टितैः ।
दृश्यते नैकधा दाल्भ्य ! प्राणिभिर्भिन्नबुद्धिभिः ॥ ४९ ॥
तापार्तैस्तापशमनं पीतं प्रीत्यातिशीतलम् ।
कफदोषान्वितेनातिप्रीतियुक्तै रिरंसुभिः ॥ ५० ॥
स्त्रीयोगाद्द्वेषमाप्नोति प्रीत्या प्रीतिसमन्वितः ।
मध्यस्थबुद्ध्या चैवात्र नातिशीतातितापिभिः ॥ ५१ ॥
पवित्रमेतदिति च पुण्यबुद्ध्या तथापरैः ।
गम्यबुद्ध्या तथाचान्यैर्लभ्यबुद्ध्या च जन्तुभिः ॥ ५२ ॥
गम्यते तत्परं ब्रह्म रिपुबुद्ध्या तथापरैः ।
आत्मपुत्रसुहृद्भ्रातृपरबुद्ध्या च नैकधा ॥ ५३ ॥
प्राणिभिः कर्मवैषम्यभिन्नबुद्धिभिरव्ययः ।
तद्ब्रह्म गृह्यते दाल्भ्य ! परमार्थं निबोध मे ॥ ५४ ॥
भूतेन्द्रियान्तःकरणप्रधानपुरुषात्मकम् ।
अपरं ब्रह्मणो रूपं परं दाल्भ्य ! निशामय ॥ ५५ ॥
अहेयमक्षरं शुद्धमनुभूतिनिरञ्जनम् ।
विष्ण्वाख्यं परमं ब्रह्म यद्वै पश्यन्ति सूरयः॥ ५६ ॥

इति विष्णुधर्मे (वि. ध. ४१) अध्यायैकदेशः । एवमेव नारायणाख्यं परं ब्रह्म ध्येयम् ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

—तज्ज्ञानान्मोक्ष इत्येतत्सर्वं ज्ञानार्थमेवेति सिद्धम् ।

श्लोकं वाप्यनुगृह्णाति जपन्तं मधुसूदनम् ।
अपि पादं पठेन्नित्यं न चान्यद्धारते भवेत् ॥

तस्मादेवमुक्तं भगवतैव—

अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।
भारताध्ययनात्पुण्यादपि पादमधीयतः ॥

श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ।
शमादिसम्पत्सुयुतैर्ध्येयो यः पुरुषोत्तमः ॥

तस्मै नमोऽस्तु कृष्णाय संसारक्लेशहारिणे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्येण
श्रीशङ्करभगवत्पादाचार्येण विरचितं श्रीविष्णोर्दिव्य-
सहस्रनामभाष्यं सम्पूर्णम्

॥ श्री कृष्णार्पणमस्तु ॥

॥ श्रीरस्तु ॥

# श्रीविष्णुसहस्रनामस्तोत्रम्

## पूर्वपीठिका

ॐ [1] शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥ २ ॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ३ ॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ४ ॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ५ ॥

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ६ ॥

[2] ॐ नमो विष्णवे प्रभविष्णवे ।

---

[1] "शुक्लाम्बरधरं" इत्यारभ्य "प्रभविष्णवे" इत्यन्तं कुम्भकोणस्थशारदाविलासादिमुद्रालयमुद्रितविष्णुसहस्रनामस्तोत्रपुस्तकेषु दृश्यते। भारतकोशेषु नोपलभ्यते. [2] इदं वाक्यं "प्रभविष्णवे" इत्यन्तं केषुचिद्भारतपुस्तकेषु एतत्पूर्वाध्यायस्यान्तिमवाक्यतयोपलभ्यते.

श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥

श्रीभीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ! ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥

[1] ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥

[2] विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य श्रीवेदव्यासो भगवान् ऋषिः । अनुष्टुप् छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमान्नारायणो देवता । अमृतांशूद्भवो भानुरिति

---

[1] "ऋषिर्नाम्नाम्" इत्यारभ्योत्तरत्र "कृष्णमाश्रये" इत्यन्तं कुम्भकोणस्थशारदाविलासादिमुद्रालयमुद्रितविष्णुसहस्रनामस्तोत्रपुस्तकेषु दृश्यते । चेन्नपुरीस्थवाविल्लरामस्वामिशास्त्रिप्रकाशितभारतपुस्तके "ऋषिर्नाम्नां" इत्यारभ्य "विनियुज्यते" इत्यन्तं वर्तते. [2] चेन्नपुरीस्थवाविल्लरामस्वामिशास्त्रिप्रकाशितभारतकोशे अयं श्लोकोऽधिक इति टिप्पण्यां लिखितम् । उत्तरत्र एतदीयपाठा एव "चे. वा. रा." इति संक्षेपेण सूचिताः.

बीजम्। देवकीनन्दनः स्रष्टेति शक्तिः। उद्भवः क्षोभणो देव इति परमो मन्त्रः। शङ्खभृन्नन्दकी चक्रीति कीलकम्। शार्ङ्गधन्वा गदाधर इत्यस्त्रम्। रथाङ्गपाणिरक्षोभ्य इति नेत्रम्। त्रिसामा सामगः सामेति कवचम्। आनन्दं परब्रह्मेति योनिः। ऋतुः सुदर्शनः काल इति दिग्बन्धः। श्रीविश्वरूप इति ध्यानम्। श्रीमहाविष्णुप्रीत्यर्थे जपे विनियोगः॥ ध्यानम्—

[1]क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतेमौंक्तिकानां
मालाक्लृप्तासनस्थस्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः॥

[2]भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः।
अन्तस्स्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि॥

[3]शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

---

[1] अयं श्लोकोऽधिक इति चे. वा. रा. प्रकाशितभारतकोशे टिप्पण्याम्.
[2] "भूः पादौ" इति श्लोकः चे. वा. रा. प्रकाशिते भारतकोशे नास्ति.
[3] अयं श्लोकः अधिक इति चे. वा. रा. प्रकाशितभारतकोशे टिप्पण्याम्.

मेघश्यामं पीतकौशेयवासं
श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम्।
पुण्योपेतं पुण्डरीकायताक्षं
विष्णुं वन्दे सर्वलोकैकनाथम्॥

सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम्।
सहारवक्षस्स्थलशोभिकौस्तुभं
नमामि विष्णुं शिरसा चतुर्भुजम्॥

छायायां पारिजातस्य हेमसिंहासनोपरि।
आसीनमम्बुदश्याममायताक्षमलङ्कृतम्॥

चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम्।
रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये॥

———

सहस्रनामस्तोत्रम्

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥ १४॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च॥ १५॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः॥ १६॥

सर्वश्शर्वश्शिवः स्थाणुर्भूतादिर्निधिरव्ययः।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः॥ १७॥

स्वयम्भूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ १९ ॥

अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककु[1]ब्धाम पवित्रं मङ्गलं परम् ॥ २० ॥

ईशानः प्राणदः प्राणो ज्येष्ठश्श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२ ॥

सुरेशश्शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ २३ ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ २४ ॥

वसुर्वसुमनास्सत्यः समात्माऽ[2]सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २५ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिश्शुचिश्रवाः ।
अमृतश्शाश्वतस्थाणुर्वरारोहो महातपाः ॥ २६ ॥

सर्वगस्सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ २७ ॥

---

[1] द्धाम–पा. [2] अकारप्रश्लेषरहितपाठे—सम्मितः.

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः [1] कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ २९ ॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ ३० ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ३१ ॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुश्श्रीमानमेयात्मा [2] महाद्रिधृत् ॥ ३२ ।

महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ ३३ ॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥

अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमांस्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ३५ ॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ३७ ॥

[1] कृताकृतिः–पा. [2] महाद्रिदृक्–पा.

आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥

सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता [1]सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ ३९ ॥

असङ्ख्येयोऽप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः [2]सिद्धिसाधनः ॥ ४० ॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१ ॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपश्शिपिविष्टः प्रकाशनः ॥ ४२ ॥

[3]ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४३ ॥

अमृतांशूद्भवो भानु[4]श्शशबिन्दुः सुरेश्वरः ।
औषधं जगतस्सेतुः सत्यधर्मपराक्रमः ॥ ४४ ॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ४५ ॥

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो [5]व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४६ ॥

---

[1] सत्कृतिः—पा. [2] सिद्धसाधनः—पा. [3] अत्र 'ओजः-तेजः-द्युतिधरः' इति नामत्रयपरत्वमपि भाष्ये दर्शितम्. [4] श्शशि—पा. [5] ऽव्यक्त—पा.

इष्टोऽ[1]विशिष्टश्शिष्टेष्टश्शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७ ॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥

स्कन्दः [2]स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥

अशोकस्तारणस्तारश्शूरश्शौरिर्जनेश्वरः ।
अनुकूलश्शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भश्शरीरभृत् ।
महर्द्धिरृद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५१ ॥

अतुलश्शरभो(ऽ)[3]भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ५२ ॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ५३ ॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५४ ॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्धिः परमस्पष्टस्तुष्टः पुष्टश्शुभेक्षणः ॥ ५५ ॥

---

[1] विशिष्ट–पा. [2] स्कन्धधर इति विवृत्त्यनुगुणं पाठान्तरम्.
[3] ऽभीमः–पा.

रामो विरामो [1] विरतो मार्गो नेयो नयोऽनयः ।
वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५६ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८ ॥

विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ५९ ॥

अनिर्विणः स्थविष्ठोऽ[2]भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥

यज्ञ इज्यो महेज्यश्च ऋतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३ ॥

धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४ ॥

---

[1] विरजो—पा. [2] अत्र भाष्यविवृत्यनुगुणो भूरित्यकारप्रश्लेषरहित-पाठोऽपि ।

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥६७॥

जीवो विनयि[1]ताऽसाक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोधधिशयोऽन्तकः ॥ ६८ ॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ६९ ॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७० ॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१ ॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७२ ॥

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥

सुधन्वा(ऽ)खण्डपरशु[2]र्दारुणो द्रविणप्रदः ।
दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७४ ॥

[1] ता साक्षी–पा. [2] र्दारुणो–पा.

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
सन्न्यासकृच्छमश्शान्तो निष्ठा शान्तिः परायणम् ॥७५॥

शुभाङ्गश्शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७६ ॥

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाश्श्रीवासश्श्रीपतिश्श्रीमतां वरः ॥ ७७ ॥

श्रीदश्श्रीशश्श्रीनिवासश्श्रीनिधिश्श्रीविभावनः ।
श्रीधरश्श्रीकरश्श्रेयश्श्रीमान् लोकत्रयाश्रयः ॥ ७८ ॥

स्वक्षः स्वङ्गश्शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजिता[1]त्माऽविधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ७९ ॥

उदीर्णः सर्वतश्चक्षुरनीशश्शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकश्शोकनाशनः ॥ ८० ॥

अर्चिष्मानार्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥

कालनेमिनिहा [2]वीरश्शौरिश्शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ८२ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७३ ॥

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४ ॥

---

[1] त्मा विधे–पा. [2] वीरः शूरः शूरजनेश्वरः. शौरिः शूरः शूरजनेश्वरः–पा.

महाक्रमो महाकर्मा महातेजा महोरगः।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ८५ ॥

स्तव्यः स्तवप्रियः स्तोत्रं [1] स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ८६ ॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७ ॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः [2] सत्परायणम् ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ८८ ॥

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ८९ ॥

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तश्शतमूर्तिश्शताननः ॥ ९० ॥

एको नैकः [3] सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९१ ॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमश्शून्यो [4] घृताशीरचलश्चलः ॥ ९२ ॥

अमानी मानदो मान्यो लोकस्वामी [5] त्रिलोकधृत् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ९३ ॥

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९४ ॥

---

[1] स्तुतः–पा. [2] सत्परायणः-पा. [3] सः वः–पा. [4] घृताचीर–पा.
[5] त्रिलोकधृक्–पा.

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ९५ ॥

समावर्तो(ऽ)निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ९६ ॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ९७ ॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ९८ ॥

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो [1] महानिधिः ॥ ९९ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः [2] पवनोऽ[3]निलः ।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०० ॥

सुलभः सुव्रतः सिद्धश्शत्रुजिच्छत्रुतापनः ।
[4] न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ १०१ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ १०२ ॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः [5] स्वास्यः प्राग्वंशो वंशवर्धनः ॥ १०३ ॥

---

[1] महाधनः—पा. [2] पावनः—पा. [3] ऽनलः—पा. [4] अत्र न्यग्रोधोदुम्बर इति सन्धिरार्षः. [5] स्वास्थ्यः—पा.

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ १०४ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता(ऽ)नियमो(ऽ)यमः ॥१०५॥

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ १०६ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रवि[1]र्विरोचनः सूर्यः सविता रविलोचनः ॥ १०७ ॥

अन[2]न्तो हुतभुग्भोक्ता(ऽ)सुखदो नैकजोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ १०८ ॥

सनात्सनातनतमः कपिलः कपिरप्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगश्शब्दसहश्शिशिरश्शर्वरीकरः ॥ ११० ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १११ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ११२ ॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
[3]चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ ११३ ॥

---

[1] र्विलोच-पा. [2] न्तहु-पा. [3] 'चतुरस्रः' इति विवृत्यनुगुणं पाठान्तरम्.

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥

आधारनिल[1]योऽधाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५ ॥

प्रमाणं प्राणनिलयः [2] प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६ ॥

भूर्भुवस्स्वस्तरुस्तारः [3] सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥

आत्मयोनिः स्वयं जातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९ ॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १२० ॥

सर्वप्रहरणायुध ॐ नम इति

*वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥

[1] यो धाता–पा. [2] प्राणधृक्–पा. [3] स पिता–पा. सपिता–पा.

* अयं श्लोकः कुम्भकोणस्थशारदाविलासमुद्रालये क्रि. श. 1915तम संवत्सरे सम्मुद्य प्रकाशिते विष्णुसहस्रनामादिस्तोत्रसङ्ग्रहे दृश्यते । अयमधिकः पाठ इति चे-वा-रा-प्रकाशितमहाभारतकोशटिप्पणी.

## उत्तरपीठिका (फलश्रुतिः)

इतीदं [1]कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १२१ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥ १२२ ॥

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात् ॥ १२३ ॥

धर्मार्थी प्राप्नुयाद्धर्मं अर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् [2]प्रजाः ॥१२४॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२५ ॥

यशः प्राप्नोति विपुलं [3]ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १२६ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥

रोगार्तो मुच्यते रोगात् बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १२८ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३० ॥

---

[1] कीर्तनं यस्य–पा. [2] प्रजाम्–पा. [3] याति प्रा–पा.

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं [1] नैवोपजायते ॥ १३१ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३२ ॥

नक्रोधो न च मात्सर्यं नलोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥

द्यौः सचन्द्रार्क[2]नक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३४ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे * वर्ततेदं कृष्णस्य सचराचरम् ॥ १३५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६ ॥

सर्वागमानामाचारः प्रथमं [3] परिकल्पते ।
[4] आचारः प्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३७ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥

योगो ज्ञानं तथा साङ्ख्यं विद्याश्शिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १६९ ॥

---

* अत्र सन्धिरार्षः. वर्तेते इदमित्यर्थः

[1] नाप्युप–पा. [2] नक्षत्रं–पा. [3] परिकल्प्यते–पा. [4] आचारप्रभवो–पा.

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥

विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥
न ते यान्ति पराभवं ॐ नम इति ।

* अर्जुन उवाच—

पद्मपत्रविशालाक्ष ! पद्मनाभ ! सुरोत्तम ! ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ! ॥

श्रीभगवानुवाच—

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ! ।
सोहमेकेन श्लोकेन स्तुत एव न संशयः ॥
स्तुत एव न संशय ॐ नम इति ।

व्यास उवाच—

वासनाद्वासुदेवस्य वासितं ते जगत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव ! नमोऽस्तु ते ॥
वासुदेव ! नमोऽस्तु त ॐ नम इति ।

---

* "अर्जुन उवाच" इत्यारभ्य "विमुक्तदुःखाः सुखिनो भवन्ति" इत्यन्तं कुम्भकोणस्थशारदाविलासादिमुद्रालयमुद्रितस्तोत्रसङ्ग्रहपुस्तकेषु दृश्यते । कुम्भकोणस्थमध्वविलासपुस्तकालयप्रकाशितमहाभारतकोशे, चेन्नपुरीस्थवाविल्ल-रामस्वामिशास्त्रिप्रकाशितमहाभारतकोशे चायं भागः किञ्चिदंशलोपेन मूल-टिप्पण्योर्दृश्यते ।

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ! ॥

ईश्वर उवाच—

श्रीराम राम रामेति रमे रामे मनोरमे ।
[1]सहस्रनामतत्तुल्यं रामनाम वरानने !* ॥
रामनाम वरानन ॐ नम इति ।

ब्रह्मोवाच—

नमोऽस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय [2]शाश्वते
[3]सहस्रकोटीयुगधारिणे नमः ॥
[3]सहस्रकोटीयुगधारिणे नम ॐ नम इति ।

सञ्जय उवाच—

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

---

* एतदनन्तरं—

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
इमं मन्त्रं महादेवि जपन्नेव दिवानिशम् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥

इति श्लोकद्वयमधिकः पाठ इति चे·वा·रा·प्रकाशितमहाभारतकोशटिप्पण्याम्.

[1] सहस्रनामतस्तुल्यं–पा. [2] अत्र शासते इति केचित्. [3] सहस्रकोटियुग–पा.

श्रीभगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

आर्ता विषण्णाः शिथिलाश्च भीताः
घोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥

ॐ तत्सत्

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
आनुशासनिकपर्वणि मोक्षधर्मे भीष्मयुधिष्ठिरसंवादे
विष्णोर्दिव्यसहस्रनामस्तोत्रं नामै[1]कत्रिंश-
दुत्तरद्विशततमोऽध्यायः ॥

॥ श्रीविष्णुसहस्रनामस्तोत्रं सम्पूर्णम् ॥

———

[1] इदं दाक्षिणात्यस्तोत्रपुस्तकानुरोधेन.

" चत्वारिंशदधिकशततमोऽध्यायः " इति चेन्नपुरीस्थवाविल्लरामस्वामिशास्त्रिप्रकाशितमहाभारते । " चतुःपञ्चाशदधिकद्विशततमोऽध्यायः " इति कुम्भकोणस्थमध्वविलासपुस्तकालयाधिपतिना निर्णयसागरमुद्रणालयमुद्रापितमहाभारते । " एकोनपञ्चाशदधिकशततमोऽध्यायः " इति पुण्यपत्तनस्थचित्रशालामुद्रणालयमुद्रितमहाभारते.

# श्रीविष्णुसहस्रनामावलिः



| क्रमाङ्कः | नामानि |
|---|---|
| १ | ओं * विश्वस्मै नमः |
| २ | ओं विष्णवे नमः |
| ३ | ओं वषट्काराय नमः |
| ४ | ओं भूतभव्यभवत्प्रभवे नमः |
| ५ | ओं भूतकृते नमः |
| ६ | ओं भूतभृते नमः |
| ७ | ओं भावाय नमः |
| ८ | ओं भूतात्मने नमः |
| ९ | ओं भूतभावनाय नमः |
| १० | ओं पूतात्मने नमः |
| ११ | ओं परमात्मने नमः |
| १२ | ओं मुक्तानां परमायै गतये नमः |
| १३ | ओं अव्ययाय नमः |
| १४ | ओं पुरुषाय नमः |
| १५ | ओं साक्षिणे नमः |

* विश्वशब्दस्य कारणपरत्वे गौणत्वेन सर्वनामसंज्ञाभावे—विश्वाय नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| १६ | ओं क्षेत्रज्ञाय नमः |
| १७ | ओं अक्षराय नमः |
| १८ | ओं योगाय नमः |
| १९ | ओं योगविदां नेत्रे नमः |
| २० | ओं प्रधानपुरुषेश्वराय नमः |
| २१ | ओं नारसिंहवपुषे नमः |
| २२ | ओं श्रीमते नमः |
| २३ | ओं केशवाय नमः |
| २४ | ओं पुरुषोत्तमाय नमः |
| २५ | ओं *सर्वस्मै नमः |
| २६ | ओं शर्वाय नमः |
| २७ | ओं शिवाय नमः |
| २८ | ओं स्थाणवे नमः |
| २९ | ओं भूतादये नमः |
| ३० | ओं निधयेऽव्ययाय नमः |
| ३१ | ओं सम्भवाय नमः |
| ३२ | ओं भावनाय नमः |
| ३३ | ओं भर्त्रे नमः |
| ३४ | ओं प्रभवाय नमः |

* सर्वशब्दस्य यौगिकतया गौणतया वा सर्वनामसंज्ञाभावे–सर्वाय नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| ३५ | ओं प्रभवे नमः |
| ३६ | ओं ईश्वराय नमः |
| ३७ | ओं स्वयम्भुवे नमः |
| ३८ | ओं शम्भवे नमः |
| ३९ | ओं आदित्याय नमः |
| ४० | ओं पुष्कराक्षाय नमः |
| ४१ | ओं महास्वनाय नमः |
| ४२ | ओं अनादिनिधनाय नमः |
| ४३ | ओं धात्रे नमः |
| ४४ | ओं त्रिधात्रे नमः |
| ४५ | ओं धातव उत्तमाय नमः |
| ४६ | ओं अप्रमेयाय नमः |
| ४७ | ओं हृषीकेशाय नमः |
| ४८ | ओं पद्मनाभाय नमः |
| ४९ | ओं अमरप्रभवे नमः |
| ५० | ओं विश्वकर्मणे नमः |
| ५१ | ओं मनवे नमः |
| ५२ | ओं त्वष्ट्रे नमः |
| ५३ | ओं स्थविष्ठाय नमः |
| ५४ | ओं स्थविराय ध्रुवाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| ५५ | ओं अग्राह्याय नमः |
| ५६ | ओं शाश्वताय नमः |
| ५७ | ओं कृष्णाय नमः |
| ५८ | ओं लोहिताक्षाय नमः |
| ५९ | ओं प्रतर्दनाय नमः |
| ६० | ओं प्रभूताय नमः |
| ६१ | ओं त्रिककुब्धाम्ने नमः |
| ६२ | ओं पवित्राय नमः |
| ६३ | ओं मङ्गलाय परस्मै नमः |
| ६४ | ओं ईशानाय नमः |
| ६५ | ओं प्राणदाय नमः |
| ६६ | ओं प्राणाय नमः |
| ६७ | ओं ज्येष्ठाय नमः |
| ६८ | ओं श्रेष्ठाय नमः |
| ६९ | ओं प्रजापतये नमः |
| ७० | ओं हिरण्यगर्भाय नमः |
| ७१ | ओं भूगर्भाय नमः |
| ७२ | ओं माधवाय नमः |
| ७३ | ओं मधुसूदनाय नमः |
| ७४ | ओं ईश्वराय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| ७५ | ओं विक्रमिणे नमः |
| ७६ | ओं धन्विने नमः |
| ७७ | ओं मेधाविने नमः |
| ७८ | ओं विक्रमाय नमः |
| ७९ | ओं क्रमाय नमः |
| ८० | ओं अनुत्तमाय नमः |
| ८१ | ओं दुराधर्षाय नमः |
| ८२ | ओं कृतज्ञाय नमः |
| ८३ | ओं कृतये नमः |
| ८४ | ओं आत्मवते नमः |
| ८५ | ओं सुरेशाय नमः |
| ८६ | ओं शरणाय नमः |
| ८७ | ओं शर्मणे नमः |
| ८८ | ओं विश्वरेतसे नमः |
| ८९ | ओं प्रजाभवाय नमः |
| ९० | ओं अह्ने नमः |
| ९१ | ओं संवत्सराय नमः |
| ९२ | ओं व्यालाय नमः |
| ९३ | ओं प्रत्ययाय नमः |
| ९४ | ओं सर्वदर्शनाय नमः |

| क्रमाङ्कः | नामानि |
| --- | --- |
| ९५ | ओं अजाय नमः |
| ९६ | ओं सर्वेश्वराय नमः |
| ९७ | ओं सिद्धाय नमः |
| ९८ | ओं सिद्धये नमः |
| ९९ | ओं सर्वादये नमः |
| १०० | ओं अच्युताय नमः |
| १०१ | ओं वृषाकपये नमः |
| १०२ | ओं अमेयात्मने नमः |
| १०३ | ओं सर्वयोगविनिस्सृताय नमः |
| १०४ | ओं वसवे नमः |
| १०५ | ओं वसुमनसे नमः |
| १०६ | ओं सत्याय नमः |
| १०७ | ओं समात्मने नमः |
| १०८ | ओं *असम्मिताय नमः |
| १०९ | ओं समाय नमः |
| ११० | ओं अमोघाय नमः |
| १११ | ओं पुण्डरीकाक्षाय नमः |
| ११२ | ओं वृषकर्मणे नमः |
| ११३ | ओं वृषाकृतये नमः |

* सम्मित इति छेदे—ओं सम्मिताय नमः।

| क्रमाङ्कः | नामानि |
|---|---|
| ११४ | ओं रुद्राय नमः |
| ११५ | ओं बहुशिरसे नमः |
| ११६ | ओं बभ्रवे नमः |
| ११७ | ओं विश्वयोनये नमः |
| ११८ | ओं शुचिश्रवसे नमः |
| ११९ | ओं अमृताय नमः |
| १२० | ओं शाश्वतस्थाणवे नमः |
| १२१ | ओं वरारोहाय नमः |
| १२२ | ओं महातपसे नमः |
| १२३ | ओं सर्वगाय नमः |
| १२४ | ओं सर्वविद्भानवे नमः |
| १२५ | ओं विष्वक्सेनाय नमः |
| १२६ | ओं जनार्दनाय नमः |
| १२७ | ओं वेदाय नमः |
| १२८ | ओं वेदविदे नमः |
| १२९ | ओं अव्यङ्गाय नमः |
| १३० | ओं वेदाङ्गाय नमः |
| १३१ | ओं वेदविदे नमः |
| १३२ | ओं कवये नमः |
| १३३ | ओं लोकाध्यक्षाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| १३४ | ओं सुराध्यक्षाय नमः |
| १३५ | ओं धर्माध्यक्षाय नमः |
| १३६ | ओं *कृताकृताय नमः |
| १३७ | ओं चतुरात्मने नमः |
| १३८ | ओं चतुर्व्यूहाय नमः |
| १३९ | ओं चतुर्दंष्ट्राय नमः |
| १४० | ओं चतुर्भुजाय नमः |
| १४१ | ओं भ्राजिष्णवे नमः |
| १४२ | ओं भोजनाय नमः |
| १४३ | ओं भोक्त्रे नमः |
| १४४ | ओं सहिष्णवे नमः |
| १४५ | ओं जगदादिजाय नमः |
| १४६ | ओं अनघाय नमः |
| १४७ | ओं विजयाय नमः |
| १४८ | ओं जेत्रे नमः |
| १४९ | ओं विश्वयोनये नमः |
| १५० | ओं पुनर्वसवे नमः |
| १५१ | ओं उपेन्द्राय नमः |
| १५२ | ओं वामनाय नमः |

* कृताकृतिरिति पाठे–ओं कृताकृतये नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| १५३ | ओं प्रांशवे नमः |
| १५४ | ओं अमोघाय नमः |
| १५५ | ओं शुचये नमः |
| १५६ | ओं ऊर्जिताय नमः |
| १५७ | ओं अतीन्द्राय नमः |
| १५८ | ओं सङ्ग्रहाय नमः |
| १५९ | ओं सर्गाय नमः |
| १६० | ओं धृतात्मने नमः |
| १६१ | ओं नियमाय नमः |
| १६२ | ओं यमाय नमः |
| १६३ | ओं वेद्याय नमः |
| १६४ | ओं वैद्याय नमः |
| १६५ | ओं सदायोगिने नमः |
| १६६ | ओं वीरघ्ने नमः |
| १६७ | ओं माधवाय नमः |
| १६८ | ओं मधवे नमः |
| १६९ | ओं अतीन्द्रियाय नमः |
| १७० | ओं महामायाय नमः |
| १७१ | ओं महोत्साहाय नमः |
| १७२ | ओं महाबलाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| १७३ | ओं महाबुद्धये नमः |
| १७४ | ओं महावीर्याय नमः |
| १७५ | ओं महाशक्तये नमः |
| १७६ | ओं महाद्युतये नमः |
| १७७ | ओं अनिर्देश्यवपुषे नमः |
| १७८ | ओं श्रीमते नमः |
| १७९ | ओं अमेयात्मने नमः |
| १८० | ओं महाद्रिधृते नमः |
| १८१ | ओं महेष्वासाय नमः |
| १८२ | ओं महीभर्त्रे नमः |
| १८३ | ओं श्रीनिवासाय नमः |
| १८४ | ओं सतां गतये नमः |
| १८५ | ओं अनिरुद्धाय नमः |
| १८६ | ओं सुरानन्दाय नमः |
| १८७ | ओं गोविन्दाय नमः |
| १८८ | ओं गोविदां पतये नमः |
| १८९ | ओं मरीचये नमः |
| १९० | ओं दमनाय नमः |
| १९१ | ओं हंसाय नमः |
| १९२ | ओं सुपर्णाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| १९३ | ओं भुजगोत्तमाय नमः |
| १९४ | ओं हिरण्यनाभाय नमः |
| १९५ | ओं सुतपसे नमः |
| १९६ | ओं पद्मनाभाय नमः |
| १९७ | ओं प्रजापतये नमः |
| १९८ | ओं अमृत्यवे नमः |
| १९९ | ओं सर्वदृशे नमः |
| २०० | ओं सिंहाय नमः |
| २०१ | ओं सन्धात्रे नमः |
| २०२ | ओं सन्धिमते नमः |
| २०३ | ओं स्थिराय नमः |
| २०४ | ओं अजाय नमः |
| २०५ | ओं दुर्मर्षणाय नमः |
| २०६ | ओं शास्त्रे नमः |
| २०७ | ओं विश्रुतात्मने नमः |
| २०८ | ओं सुरारिघ्ने नमः |
| २०९ | ओं गुरवे नमः |
| २१० | ओं गुरुतमाय नमः |
| २११ | ओं धाम्ने नमः |
| २१२ | ओं सत्याय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| २१३ | ओं सत्यपराक्रमाय नमः |
| २१४ | ओं निमिषाय नमः |
| २१५ | ओं अनिमिषाय नमः |
| २१६ | ओं स्रग्विणे नमः |
| २१७ | ओं वाचस्पतय उदारधिये नमः |
| २१८ | ओं अग्रण्ये नमः |
| २१९ | ओं ग्रामण्ये नमः |
| २२० | ओं श्रीमते नमः |
| २२१ | ओं न्यायाय नमः |
| २२२ | ओं नेत्रे नमः |
| २२३ | ओं समीरणाय नमः |
| २२४ | ओं सहस्रमूर्ध्ने नमः |
| २२५ | ओं विश्वात्मने नमः |
| २२६ | ओं सहस्राक्षाय नमः |
| २२७ | ओं सहस्रपदे नमः |
| २२८ | ओं आवर्तनाय नमः |
| २२९ | ओं निवृत्तात्मने नमः |
| २३० | ओं संवृताय नमः |
| २३१ | ओं सम्प्रमर्दनाय नमः |
| २३२ | ओं अहस्संवर्तकाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| २३३ | ओं वह्नये नमः |
| २३४ | ओं अनिलाय नमः |
| २३५ | ओं धरणीधराय नमः |
| २३६ | ओं सुप्रसादाय नमः |
| २३७ | ओं प्रसन्नात्मने नमः |
| २३८ | ओं *विश्वधृषे नमः |
| २३९ | ओं विश्वभुजे नमः |
| २४० | ओं विभवे नमः |
| २४१ | ओं सत्कर्त्रे नमः |
| २४२ | ओं †सत्कृताय नमः |
| २४३ | ओं साधवे नमः |
| २४४ | ओं जह्नवे नमः |
| २४५ | ओं नारायणाय नमः |
| २४६ | ओं नराय नमः |
| २४७ | ओं असङ्ख्येयाय नमः |
| २४८ | ओं अप्रमेयात्मने नमः |
| २४९ | ओं विशिष्टाय नमः |
| २५० | ओं शिष्टकृते नमः |
| २५१ | ओं शुचये नमः |

* विश्वसृडिति पाठे-ओं विश्वसृजे नमः. † सत्कृतिरिति पाठे-ओं सत्कृतये नमः.

| क्रमाङ्कः | नामानि |
|---|---|
| २५२ | ओं सिद्धार्थाय नमः |
| २५३ | ओं सिद्धसङ्कल्पाय नमः |
| २५४ | ओं सिद्धिदाय नमः |
| २५५ | ओं सिद्धिसाधनाय नमः |
| २५६ | ओं वृषाहिणे नमः |
| २५७ | ओं वृषभाय नमः |
| २५८ | ओं विष्णवे नमः |
| २५९ | ओं वृषपर्वणे नमः |
| २६० | ओं वृषोदराय नमः |
| २६१ | ओं वर्धनाय नमः |
| २६२ | ओं वर्धमानाय नमः |
| २६३ | ओं विविक्ताय नमः |
| २६४ | ओं श्रुतिसागराय नमः |
| २६५ | ओं सुभुजाय नमः |
| २६६ | ओं दुर्धराय नमः |
| २६७ | ओं वाग्मिने नमः |
| २६८ | ओं महेन्द्राय नमः |
| २६९ | ओं वसुदाय नमः |
| २७० | ओं वसवे नमः |
| २७१ | ओं नैकरूपाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| २७२ | ओं बृहद्रूपाय नमः |
| २७३ | ओं शिपिविष्टाय नमः |
| २७४ | ओं प्रकाशनाय नमः |
| २७५ | ओं ओजस्तेजोद्युतिधराय नमः |
| २७६ | ओं प्रकाशात्मने नमः |
| २७७ | ओं प्रतापनाय नमः |
| २७८ | ओं ऋद्धाय नमः |
| २७९ | ओं स्पष्टाक्षराय नमः |
| २८० | ओं मन्त्राय नमः |
| २८१ | ओं चन्द्रांशवे नमः |
| २८२ | ओं भास्करद्युतये नमः |
| २८३ | ओं अमृतांशूद्भवाय नमः |
| २८४ | ओं भानवे नमः |
| २८५ | ओं शशबिन्दवे नमः |
| २८६ | ओं सुरेश्वराय नमः |
| २८७ | ओं औषधाय नमः |
| २८८ | ओं जगतस्सेतवे नमः |
| २८९ | ओं सत्यधर्मपराक्रमाय नमः |
| २९० | ओं भूतभव्यभवन्नाथाय नमः |
| २९१ | ओं पवनाय नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| २९२ | ओं पावनाय नमः |
| २९३ | ओं अनलाय नमः |
| २९४ | ओं कामघ्ने नमः |
| २९५ | ओं कामकृते नमः |
| २९६ | ओं कान्ताय नमः |
| २९७ | ओं कामाय नमः |
| २९८ | ओं कामप्रदाय नमः |
| २९९ | ओं प्रभवे नमः |
| ३०० | ओं युगादिकृते नमः |
| ३०१ | ओं युगावर्ताय नमः |
| ३०२ | ओं नैकमायाय नमः |
| ३०३ | ओं महाशनाय नमः |
| ३०४ | ओं अदृश्याय नमः |
| ३०५ | ओं व्यक्तरूपाय नमः |
| ३०६ | ओं सहस्रजिते नमः |
| ३०७ | ओं अनन्तजिते नमः |
| ३०८ | ओं इष्टाय नमः |
| ३०९ | ओं [1]अविशिष्टाय नमः |
| ३१० | ओं शिष्टेष्टाय नमः |

[1] विशिष्ट इति पाठे—ओं विशिष्टाय नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| ३११ | ओं शिखण्डिने नमः |
| ३१२ | ओं नहुषाय नमः |
| ३१३ | ओं वृषाय नमः |
| ३१४ | ओं क्रोधघ्ने नमः |
| ३१५ | ओं क्रोधकृत्कर्त्रे नमः |
| ३१६ | ओं विश्वबाहवे नमः |
| ३१७ | ओं महीधराय नमः |
| ३१८ | ओं अच्युताय नमः |
| ३१९ | ओं प्रथिताय नमः |
| ३२० | ओं प्राणाय नमः |
| ३२१ | ओं प्राणदाय नमः |
| ३२२ | ओं वासवानुजाय नमः |
| ३२३ | ओं अपां निधये नमः |
| ३२४ | ओं अधिष्ठानाय नमः |
| ३२५ | ओं अप्रमत्ताय नमः |
| ३२६ | ओं प्रतिष्ठिताय नमः |
| ३२७ | ओं स्कन्दाय नमः |
| ३२८ | ओं *स्कन्दधराय नमः |
| ३२९ | ओं धुर्याय नमः |

* स्कन्धधर इति पाठे–ओं स्कन्धधराय नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| ३३० | ओं वरदाय नमः |
| ३३१ | ओं वायुवाहनाय नमः |
| ३३२ | ओं वासुदेवाय नमः |
| ३३३ | ओं बृहद्भानवे नमः |
| ३३४ | ओं आदिदेवाय नमः |
| ३३५ | ओं पुरन्दराय नमः |
| ३३६ | ओं अशोकाय नमः |
| ३३७ | ओं तारणाय नमः |
| ३३८ | ओं ताराय नमः |
| ३३९ | ओं शूराय नमः |
| ३४० | ओं शौरये नमः |
| ३४१ | ओं जनेश्वराय नमः |
| ३४२ | ओं अनुकूलाय नमः |
| ३४३ | ओं शतावर्ताय नमः |
| ३४४ | ओं पद्मिने नमः |
| ३४५ | ओं पद्मनिभेक्षणाय नमः |
| ३४६ | ओं पद्मनाभाय नमः |
| ३४७ | ओं अरविन्दाक्षाय नमः |
| ३४८ | ओं पद्मगर्भाय नमः |
| ३४९ | ओं शरीरभृते नमः |

| क्रमाङ्कः | नामानि |
|---|---|
| ३५० | ओं महर्द्धये नमः |
| ३५१ | ओं ऋद्धाय नमः |
| ३५२ | ओं वृद्धात्मने नमः |
| ३५३ | ओं महाक्षाय नमः |
| ३५४ | ओं गरुडध्वजाय नमः |
| ३५५ | ओं अतुलाय नमः |
| ३५६ | ओं शरभाय नमः |
| ३५७ | ओं *भीमाय नमः |
| ३५८ | ओं समयज्ञाय नमः |
| ३५९ | ओं हविर्हरये नमः |
| ३६० | ओं सर्वलक्षणलक्षण्याय नमः |
| ३६१ | ओं लक्ष्मीवते नमः |
| ३६२ | ओं समितिञ्जयाय नमः |
| ३६३ | ओं विक्षराय नमः |
| ३६४ | ओं रोहिताय नमः |
| ३६५ | ओं मार्गाय नमः |
| ३६६ | ओं हेतवे नमः |
| ३६७ | ओं दामोदराय नमः |
| ३६८ | ओं सहाय नमः |

* अभीम इति छेदे-ओं अभीमाय नमः ।

| क्रमाङ्कः | नामानि |
|---|---|
| ३६९ | ओं महीधराय नमः |
| ३७० | ओं महाभागाय नमः |
| ३७१ | ओं वेगवते नमः |
| ३७२ | ओं अमिताशनाय नमः |
| ३७३ | ओं उद्भवाय नमः |
| ३७४ | ओं क्षोभणाय नमः |
| ३७५ | ओं देवाय नमः |
| ३७६ | ओं श्रीगर्भाय नमः |
| ३७७ | ओं परमेश्वराय नमः |
| ३७८ | ओं करणाय नमः |
| ३७९ | ओं कारणाय नमः |
| ३८० | ओं कर्त्रे नमः |
| ३८१ | ओं विकर्त्रे नमः |
| ३८२ | ओं गहनाय नमः |
| ३८३ | ओं गुहाय नमः |
| ३८४ | ओं व्यवसायाय नमः |
| ३८५ | ओं व्यवस्थानाय नमः |
| ३८६ | ओं संस्थानाय नमः |
| ३८७ | ओं स्थानदाय नमः |
| ३८८ | ओं ध्रुवाय नमः |

५३३ भूमेर्भूदेवताया वा पालको **मेदिनीपतिः** ।
५३४ वामनस्त्रिपदन्यासात्**त्रिपदः** कथितो बुधैः ॥ २८८ ॥

५३५ साक्ष्यसौ **त्रिदशाध्यक्षो** जाग्रदादिदशात्रये ।
५३६ **महाशृङ्गो** मत्स्यरूपी नावा क्रीडन् लयाम्बुधौ ॥ २८९ ॥

५३७ संसारमथ मृत्युं वा संहरन् स **कृतान्तकृत्** ।
५३८ **महावराहो** वाराहबृहद्रूपी धरोद्धृतौ ॥ २९० ॥

५३९ स्तोत्रैर्वेदान्तवाक्यैर्वा वेद्यो **गोविन्द** ईरितः ।
५४० **सुषेणो** वसुरुद्रादिगणात्मकसुसैन्यवान् ॥ २९१ ॥

५४१ सौवर्णाङ्गदयुक्तत्वात्कीर्तितः **कनकाङ्गदी** ।
५४२ रहस्योपनिषद्वेद्यो **गुह्यो** यद्वा गुहाहितः ॥ २९२ ॥

५४३ **गभीरः** स हि दुर्ज्ञेयज्ञानैश्वर्यादिसंयुतः ।
५४४ दुष्प्रवेशो हि **गहनो**ऽज्ञानिभिर्वनदुर्गवत् ॥ २९३ ॥

साक्षी भावाभावयोर्वाप्यवस्थात्रयभाविनोः ।
५४५ वागाद्यगोचरो गूढ आत्मा **गुप्त** इतीरितः ॥ २९४ ॥

५४६ मनोधीचक्रगदयोर्धर्ता **चक्रगदाधरः** ।
५४७ **वेधा** विधाता जगतो रजोगुणसमाश्रितः ॥ २९५ ॥

५४८ **स्वाङ्गः** कार्यस्य करणे स्वयं सहकरोति हि ।
५४९ अवतारेषु केनापि न जितोऽतोऽ**जितो** मतः ॥ २९६ ॥

५५०–५५१ कृष्णद्वैपायनः **कृष्णः**, स्वरूपादच्युतो **दृढः** ।
५५२ न च्युतः संहरन्नन्ते प्रजाः **सङ्कर्षणोऽच्युतः** ॥ २९७ ॥

५५३ सायन्तनोंऽशुमान् रश्मिसंवृतेर्**वरुणो** मतः ।
५५४ **वारुणो** वरुणापत्यं वसिष्ठोऽगस्त्य एव वा ॥ २९८ ॥

५५५ वृक्षवच्चलनाभावात्स्थिरो **वृक्ष** इतीर्यते ।
५५६ **पुष्कराक्षो** हृत्सरोजे यमयन् व्याप्य संस्थितः ॥ २९९ ॥
चिन्तितो वापि तत्रैव स्वरूपेण प्रकाशते ।
५५७ मनसैव हि सृष्ट्यादि करोतीति **महामनाः** ॥ ३०० ॥
५५८ षड्विधैश्वर्यपूर्णोऽसौ **भगवानथ** वेत्ति वा ।
भूतानामुत्पत्तिलयौ विद्याविद्ये गतागते ॥ ३०१ ॥
५५९ ऐश्वर्यहन्ता संहारसमये **भगहा** मतः ।
५६० सुखस्वरूप **आनन्दी** समृद्धः सम्पदाथ वा ॥ ३०२ ॥
५६१ **वनमाली** वैजयन्त्या भूततन्मात्रमालया ।
५६२ बलभद्राकृतिर्देवो **हलायुध** उदीरितः ॥ ३०३ ॥
५६३ अदित्यां कश्यपाज्जात **आदित्यो** वामनाभिधः ।
५६४ सूर्यमण्डलमध्यस्थो **ज्योतिरादित्य** उच्यते ॥ ३०४ ॥
अथ वा **ज्योतिरादित्यो** ज्योतीरूपो रविर्मतः ।
५६५ शीतोष्णादिद्वन्द्वसहः **सहिष्णुरिति** कीर्तितः ॥ ३०५ ॥
५६६ गतिरभ्यर्हिताऽबाध्यं ज्ञानं वा **गतिसत्तमः** ।
५६७ **सुधन्वा** धारयन् शार्ङ्गमिन्द्रियादिमयं शुभम् ॥ ३०६ ॥
शत्रूणां खण्डनात् खण्डं कुठारं धृतवानिति ।
५६८ प्रोक्तोऽत्र **खण्डपरशुर्**जामदग्न्याकृतिर्विभुः ॥ ३०७ ॥
**अखण्डपरशुर्**वाऽयं पराभिन्नकुठारवान् ।
५६९ सन्मार्गरोधकान् दैत्यान् दारयन् **दारुणो** मतः ॥ ३०८ ॥
५७० भक्तेभ्यः प्रार्थितं वित्तं प्रददद्**द्रविणप्रदः** ।
५७१–५७२ **दिविस्पृक्** स्याद्दिवः स्पर्शात्, **सर्वदृग्व्यास** एव तु ॥

विस्तारयन् सर्वविद्याः सर्वज्ञानान्यपि प्रभुः ।
**सर्वदृक्** च ज्ञानरूपो दृष्टिर्वा प्राणिनामयम् ॥ ३१० ॥

विभागात्तननाद्वापि वेदानां **व्यास** ईरितः ।
५७३ विद्यापतिर्योन्यजन्मा **वाचस्पतिरयोनिजः** ॥ ३११ ॥

५७४ त्रिभिर्देवव्रताख्यातैस्**त्रिसामा** सामभिः स्तुतः ।
भक्तेभ्यः साधु गायेद्वा गायेत्सान्त्वं कुरून् प्रति ॥ ३१२ ॥

५७५-५७६ **सामगः** साम गायेद्वा, सामात्मा **साम** कीर्तितः ।
५७७ **निर्वाणं** सर्वदुःखोपशमाख्यानन्दरूपतः ॥ ३१३ ॥

५७८ संसाराख्यबृहद्रोगस्यौषधं **भेषजं** हरिः ।
५७९ संसाररोगनिर्मोक्षविद्यामुपदिशन् **भिषक्** ॥ ३१४ ॥

५८० **सन्न्यासकृत्**तुरीयं तमाश्रमं मुक्तयेऽकरोत् ।
५८१ **शमो** यतीनां मुख्यं तज्ज्ञानहेतुं शमं वदन् ॥ ३१५ ॥

प्रलये सर्वजन्तूनां हर्ता वा स **शमो** मतः ।
५८२ सुखेष्वयं वैषयिकेष्वसङ्गः **शान्त** उच्यते ॥ ३१६ ॥

५८३ **निष्ठा** भूतानि नितरां लये तिष्ठन्ति तत्र हि ।
५८४ निवृत्तिरूपोऽविद्यानां सर्वासां **शान्तिरुच्यते** ॥ ३१७ ॥

५८५ अनावृत्त्या तदुत्कृष्टं प्राप्यं स्थानं **परायणम्** ।
५८६ **शुभाङ्गो** भगवान् पूर्णां सुन्दरां धारयन् तनुम् ॥ ३१८ ॥

५८७ शान्तिं रागादिनिर्मोक्षलक्षणां **शान्तिदो** ददत् ।
५८८ **स्रष्टा** स्यात्सर्वभूतानि सर्गादौ सृजतीत्ययम् ॥ ३१९ ॥

५८९ **कुमुदो** मोदते भूम्यां रामकृष्णादिरूपतः ।
जले हयशिरोरूपः तक्षको बदरीफले ॥ ३२० ॥

५९० शेषोदरे विष्णुरूपः शेतेऽसौ **कुवलेशयः** ।
५९१ गृह्णन् देहं **गोहितो** भूभारावतरणेच्छया ॥ ३२१ ॥

यद्वा गोभ्यो हितो वृद्धयै गवां गोवर्धनं धरन् ।
५९२–५९३ भूम्याः पति**र्गोपतिः** स्यात्, **गोप्ता**सौ लोकपालकः ॥

यद्वा स्वमायया गोप्ता स्वात्मानं संवृणोति च ।
५९४ **वृषभाक्षो** धर्मदृष्टिः कामवर्षुकदृष्टिमान् ॥ ३२३ ॥

५९५ **वृषप्रियो** हि भगवान् यस्य धर्मः प्रियो मतः ।
५९६ **अनिवर्ती** हि सङ्ग्रामाद्धर्माच्च न निवर्तते ॥ ३२४ ॥

५९७ **निवृत्तात्मा** मनो यस्य विषयेभ्यो निवृत्तिमत् ।
५९८ **संक्षेप्ता** संक्षिपन् विश्वं प्रलये सूक्ष्मरूपतः ॥ ३२५ ॥

५९९ **क्षेमकृत्** स उपात्तस्य करोति परिरक्षणम् ।
६०० स्वनाम स्मरतः सर्वान् पावयन् **शिव** ईरितः ॥ ३२६ ॥

६०१ **श्रीवत्सवक्षाः** श्रीवत्सचिह्नमस्योरसि स्थितम् ।
६०२ **श्रीवासो**ऽयमुरस्यस्य श्रीर्वसत्यनपायिनी ॥ ३२७ ॥

६०३ **श्रीपति**र्ब्राह्मादिशक्तेर्वा श्रीदेव्या वा पतित्वतः ।
६०४ त्रयीमतो विरिञ्च्यादेः प्रधानः **श्रीमतां वरः** ॥ ३२८ ॥

६०५–६०६ श्रियं ददाति भक्तेभ्यः **श्रीदः**, **श्रीशः** श्रियः पतिः ।
६०७ श्रीमत्सु नित्यं वसति **श्रीनिवासो**ऽत उच्यते ॥ ३२९ ॥

६०८ निधीयन्ते श्रियो ह्यस्मिन्नखिलाः **श्रीनिधि**स्ततः ।
६०९ साधयन् सर्वभूतानां सम्पदं **श्रीविभावनः** ॥ ३३० ॥

६१० वहन् स्ववक्षसा सर्वजननीं **श्रीधरः** स्मृतः ।
६११ श्रियं करोति भक्तानामित्यतः **श्रीकरो** भवेत् ॥ ३३१ ॥

६१२ अनपायिसुखावाप्तिरूपोऽयं **श्रेय** उच्यते ।

६१३ **श्रीमान्** विभूतयः शोभा श्रियो वास्येत्यतो मतः ॥ ३३२ ॥

६१४ त्रिलोकाधारभूतत्वान्मतो **लोकत्रयाश्रयः** ।

६१५ **स्वक्षो**ऽसौ शोभने यस्य पुण्डरीकनिभाक्षिणी ॥ ३३३ ॥

६१६–६१७ **स्वङ्गो**ऽसौ शोभनाङ्गः स्यात् , **शतानन्द**स्तु कीर्त्यते ।
एक एव परानन्दः शतधोपहितोऽभवत् ॥ ३३४ ॥

६१८ **नन्दि**रेष विनिर्दिष्टः परमानन्दविग्रहः ।

६१९ ज्योतिर्गणानां सर्वेषामीशो **ज्योतिर्गणेश्वरः** ॥ ३३५ ॥

६२० **विजितात्मा** त्वसौ ज्ञेयः स्वेच्छया मनसो जयात् ।

६२१ अयं मतोऽ**विधेयात्मा** परप्रेष्यत्ववर्जनात् ॥ ३३६ ॥

६२२ यस्य ह्यवितथा कीर्तिः **सत्कीर्तिः** स मतो हरिः ।

६२३ कुत्रापि संशयाभावा**च्छिन्नसंशय** उच्यते ॥ ३३७ ॥

६२४ **उदीर्णः** सर्वभूतेभ्यः समुद्रिक्तोऽधिको मतः ।

६२५ सर्वं हि **सर्वतश्चक्षुः** स्वचैतन्येन पश्यति ॥ ३३८ ॥

६२६ नियन्त्रन्तरराहित्याद**नीशो** हरिरुच्यते ।

६२७ **शाश्वतस्थिर** एष स्याद्भवन् शश्वदविक्रियः ॥ ३३९ ॥

६२८ **भूशयो** भूमिशयनाल्लङ्कामार्गं गवेषयन् ।

६२९ स्वेच्छावतारैर्विविधैर्भूषयन् **भूषणो** भुवम् ॥ ३४० ॥

६३० ज्ञानैश्वर्यादिरूपोऽयं **भूतिः** सत्तात्मकोऽथ वा ।
कारणं वा समस्तानां विभूतीनां हरिर्मतः ॥ ३४१ ॥

६३१ परमानन्दरूपत्वाद्**विशोकः** समुदीरितः ।

६३२ स्मृतिमात्रेण भक्तानां शोकहा **शोकनाशनः** ॥ ३४२ ॥

६३३ **अर्चिष्मान्** सूर्यचन्द्रादेरपि दीप्तिप्रदानतः ।
६३४ ब्रह्माद्यैरर्चितैस्सर्वैः पूजनाद**र्चितो** मतः ॥ ३४३ ॥

६३५ **कुम्भः** कुम्भवदस्मिंस्तु सर्वमेतत्प्रतिष्ठितम् ।
६३६ गुणत्रयातीत आत्मा **विशुद्धात्मा** भवेदयम् ॥ ३४४ ॥

६३७ स्मृतिमात्रेण पापानां क्षपणात्स **विशोधनः** ।
६३८ व्यूहश्चतुर्थोऽ**निरुद्ध**श्चतुर्व्यूहेषु सम्मतः ॥ ३४५ ॥

६३९ प्रतिपक्षविहीनत्वान्मतोऽ**प्रतिरथो** हरिः ।
६४० प्रकृष्टं द्रविणं त्वस्य **प्रद्युम्नो** व्यूह एव वा ॥ ३४६ ॥

६४१ विक्रमोऽतुलितोऽस्येति हरिर्ह्य**मितविक्रमः** ।
६४२ **कालनेमिनिहा** हन्ता कालनेमेः सुरद्विषः ॥ ३४७ ॥

६४३ **वीरः** शूरोऽस्य विगते शत्रोः कम्पपलायने ।
६४४–६४५ शूरवंशसमुद्भूतः **शौरिः, शूरजनेश्वरः** ॥ ३४८ ॥

शूराणां वासवादीनामीष्ट उत्कृष्टशौर्यतः ।
६४६ **त्रिलोकात्मा** त्रिलोकानामात्माऽन्तर्यमयन् मतः ॥ ३४९ ॥

यद्वा नास्मात्त्रयो लोका भिद्यन्ते परमार्थतः ।
६४७ **त्रिलोकेशो** यदाज्ञप्ता वृत्ता लोकाः स्वकर्मसु ॥ ३५० ॥

त्रिमूर्तिशक्तिभिः केशसंज्ञिताभिर्युतोऽथ वा ।
६४८ **केशवो** रविसङ्क्रान्तकेशसंज्ञितरश्मिमान् ॥ ३५१ ॥

६४९ **केशिहा** केशिनामानमसुरं हतवानिति ।
६५० सहेतुकं हि संसारं हरतीति **हरि**र्मतः ॥ ३५२ ॥

६५१ **कामदेवः** काम्यमानः पुरुषार्थाभिकाङ्क्षिभिः ।
६५२ कामानभिकृतानां स **कामपालो** हि पालयन् ॥ ३५३ ॥

६५३–६५४ पूर्णकामस्वभावत्वात् **कामी, कान्त**स्तु सुन्दरः ।
६५५ **कृतागमः** कृता येनाऽऽगमाः श्रुत्यादिलक्षणाः ॥ ३५४ ॥

इदं तदीदृशं वेति निर्देशाशक्यरूपतः ।
६५६–६५७ **अनिर्देश्यवपुः, विष्णुः** कान्तिर्व्याप्तास्य रोदसी ॥

६५८ गतिप्रजनकान्त्यादिधर्मवान् **वीर** उच्यते ।
६५९ **अनन्त**स्त्वपरिच्छिन्नो देशकालाद्युपाधिभिः ॥ ३५६ ॥

यद्वा गुणानामत्यन्तं नैव गच्छन्ति देवताः ।
६६० दिग्जये धनजेतृत्वादर्जुनोऽसौ **धनञ्जयः** ॥ ३५७ ॥

६६१ वेदविप्रतपोज्ञानहितो **ब्रह्मण्य** उच्यते ।
६६२ तपो वेदान् ब्राह्मणांश्च कुर्वन् **ब्रह्मकृ**देष हि ॥ ३५८ ॥

६६३ ब्रह्मात्मना जगत्सर्वं सृजन् **ब्रह्मे**ति कथ्यते ।
६६४ बृहत्त्वाद्बृंहणत्वाच्च **ब्रह्म** सत्यादिलक्षणम् ॥ ३५९ ॥

६६५ विवर्धयन् तपोवेदानसौ **ब्रह्मविवर्धनः** ।
६६६ यथावद्वेदवेदार्थविज्ञोऽसौ **ब्रह्मवि**न्मतः ॥ ३६० ॥

६६७ वेदप्रवचनं कुर्वन् विप्रात्मा **ब्राह्मणो** मतः ।
६६८ तपोवेदब्राह्मणानां शेषी **ब्रह्मी**ति कथ्यते ॥ ३६१ ॥

६६९ जानन् लये स्वात्मभूतान् वेदान् **ब्रह्मज्ञ** उच्यते ।
६७० ब्राह्मणानां प्रियो ह्येष **ब्राह्मणप्रिय** ईरितः ॥ ३६२ ॥

६७१ विस्तीर्णपादविक्षेपान्**महाक्रम** इतीर्यते ।
६७२ **महाकर्मा** जगत्सृष्टिस्थितिसंहारकर्मकृत् ॥ ३६३ ॥

६७३ **महातेजा** यदीयेन तेजसा भास्करादयः ।
तेजस्विनोऽथवा धर्मैः शौर्याद्यैः समलङ्कृतः ॥ ३६४ ॥

६७४ सर्पराजस्वरूपोऽसौ वासुकिः स्यान्**महोरगः** ।
६७५ अश्वमेधस्वरूपोऽसौ **महाक्रतुरि**ति स्तुतः ॥ ३६५ ॥

६७६ **महायज्वा** लोकशिष्ट्यै महान् यज्ञप्रवर्तकः ।
६७७ जपयज्ञस्वरूपत्वान्**महायज्ञः** प्रकीर्तितः ॥ ३६६ ॥

६७८ **महाहवि**र्जगत्तस्मिंस्तदात्मत्वेन हूयते ।
६७९ **स्तव्यः** सर्वैः स्तूयतेऽसौ न स्तोता स तु **कस्याचित्** ॥

६८०–६८१ **स्तवप्रियो**ऽत एव स्यात्, **स्तोत्रं** तत्स्तवसाधनम् ।
६८२–६८३ **स्तुतिः** स्तुतिक्रियारूपः, **स्तोतासौ** स्तोतृरूपवान् ॥

६८४ लोकरक्षाविधानार्थं रणे प्रीत्या **रणप्रियः** ।
६८५ **पूर्णो** युतः सर्वकामैः सकलाभिश्च शक्तिभिः ॥ ३६९ ॥

६८६ प्रोक्तः **पूरयिता** देवः सम्पद्भिः सर्वपूरणात् ।
६८७ **पुण्यो**ऽसौ स्मृतिमात्रेण क्षपयन् कल्मषाणि नः ॥ ३७० ॥

६८८ **पुण्यकीर्ति**र्यस्य कीर्तिर्नृणां यत्पुण्यमावहेत् ।
बाह्यान्तरैर्व्याधिभिर्न पीड्यते कर्मजैरिति ॥ ३७१ ॥

६८९–६९० **अनामयः**, मनोवेगवद्वेगोऽस्य **मनोजवः** ।
६९१ प्रकीर्तितस्**तीर्थकरः** सर्वविद्याप्रकाशनात् ॥ ३७२ ॥

६९२ **वसुरेता** यस्य रेतः सौवर्णं स उदीरितः ।
६९३ अयं साक्षाद्धनाध्यक्षो धनदो हि **वसुप्रदः** ॥ ३७३ ॥

६९४ प्रकृष्टं वसु मोक्षाख्यं प्रददाति **वसुप्रदः** ।
६९५ अपत्यं वसुदेवस्य **वासुदेवः** प्रकीर्तितः ॥ ३७४ ॥

६९६ **वसुर्व**सन् हि भूतेषु भूतान्यत्र वसन्ति वा ।
६९७ हरिरुक्तो **वसुमना** वसुवन्मनसः स्थितेः ॥ ३७५ ॥

६९८ हवीरूपतया तिष्ठन् **हविः** प्रोक्तो जनार्दनः ।
६९९ प्राप्यो ब्रह्माऽस्तित्वाविद्भिः श्रेष्ठधीरपि **सद्गतिः** ॥ ३७६ ॥

७०० **सत्कृति**यस्य हि जगद्रक्षणाद्युत्तमा कृतिः ।
७०१ **सत्तानुभूति**र्भेदैस्तैर्विनिर्मुक्ता त्रिभिर्हरिः ॥ ३७७ ॥

७०२ **सद्भूतिः** परमात्मासौ सन्नेव हि चिदात्मकः ।
७०३ तत्त्ववित्परमप्राप्यरूपत्वात्**सत्परायणम्** ॥ ३७८ ॥

७०४ **शूरसेनो** वायुसूनुप्रमुखोपेतसेनया ।
७०५ **यदुश्रेष्ठो** यादवानां प्रधान इति कथ्यते ॥ ३७९ ॥

७०६-७०७ **सन्निवासो** हि विदुषामाश्रयोऽथ **सुयामुनः** ।
बान्धवैर्लोकपालैर्वा गोपवेषधरैरपि ॥ ३८० ॥

शोभनैर्यमुनातीरवासिभिः परिवेष्टितः ।
७०८ **भूतावासो** हि भूतानि वसन्त्यत्राभिमुख्यतः ॥ ३८१ ॥

७०९ **वासुदेवो** देव एव मायया छादयन् जगत् ।
७१० सर्वप्राणलयाधारः **सर्वासुनिलयो** मतः ॥ ३८२ ॥

७११ **अनलो** नास्य पर्याप्तिर्विद्यते शक्तिसम्पदाम् ।
७१२ **दर्पहा** दर्पहननादधर्मे पथि तिष्ठताम् ॥ ३८३ ॥

७१३ **दर्पदो** दर्पदानात्स धर्म्ये वर्त्मनि तिष्ठताम् ।
७१४ स्वात्मामृतरसास्वादमुदितो **दृप्त** उच्यते ॥ ३८४ ॥

७१५ दुःखेन धार्यते धर्तुमशक्यो हृदि **दुर्धरः** ।
७१६ अजितः शत्रुभिर्बाह्याभ्यन्तरैर**पराजितः** ॥ ३८५ ॥

७१७ **विश्वमूर्ति**र्मूर्तिरस्य विश्वं सर्वात्मकत्वतः ।
७१८ **महामूर्ति**र्मूर्तिरस्य महती शेषशायिनः ॥ ३८६ ॥

७१९ **दीप्तमूर्तिर्**ज्ञानदेहः स्वेच्छातैजसदेहवान् ।
७२० कर्मणा नास्ति देहोऽस्येत्युदितोऽयम**मूर्तिमान्** ॥ ३८७ ॥

७२१ **अनेकमूर्ति**रित्युक्तः स्वेच्छया बहुदेहवान् ।
७२२ अयमीदृश एवेति न व्यक्तोऽ**व्यक्त** ईरितः ॥ ३८८ ॥

७२३ **शतमूर्ति**र्यस्य नानामूर्तयः संविदाकृतेः ।
७२४ यतो विश्वादिमूर्तित्वमत एव **शताननः** ॥ ३८९ ॥

७२५ सर्वभेदविनिर्मोका**देको**ऽसौ परमार्थतः ।
७२६ मायया बहुरूपत्वा**न्नैको**ऽप्येष निगद्यते ॥ ३९० ॥

७२७ सोमाभिषवसंशोभियागात्मा **सव** उच्यते ।
७२८ सुखवाचिकशब्देन स्तूयमानः **क** ईरितः ॥ ३९१ ॥

७२९ पुरुषार्थस्वरूपेण विचार्यत्वात् **किमु**च्यते ।
७३० सिद्धवस्तुस्वरूपत्वा**द्यादि**त्येष प्रकीर्तितः ॥ ३९२ ॥

७३१ जगद्रूपतयाऽऽत्मानं तनोतीति **त**दुच्यते ।
७३२ ज्ञानिगम्यं समुत्कृष्टं पदं **पदमनुत्तमम्** ॥ ३९३ ॥

बध्यन्तेऽस्मिन्निमे लोका लोकानां जनकोऽथ वा ।
७३३ हिताहितोपदेष्टा वा **लोकबन्धु**रसौ मतः ॥ ३९४ ॥

७३४ **लोकनाथो** ह्युपतपेल्लोकान् लोकैश्च याच्यते ।
लोकानामीष्ट आशास्ते लोकेभ्य इति वा हरिः ॥ ३९५ ॥

७३५ हरिर्मधुकुलोत्पन्नो **माधवो** विदुषां मतः ।
७३६ **भक्तवत्सल** एष स्याद्भक्तेषु स्नेहवानिति ॥ ३९६ ॥

७३७ **सुवर्णवर्णः** सम्प्रोक्तः सुवर्णसमवर्णतः ।
७३८-७३९ **हेमाङ्गो** हेमतुल्याङ्गः, **वराङ्गः** शोभनाङ्गवान् ॥

७४० आह्लादनैस्तु केयूरैर्भूषितश्चन्दनाङ्गदी ।
७४१ वीरहाऽसुरमुख्यांस्तान् धर्मत्राणाय हन्त्यसौ ॥ ३९८ ॥

७४२–७४३ विषमो नास्त्यस्य समः, शून्योऽसावविशेषवान् ।
७४४ घृताशीः प्रार्थना अस्य सर्वा विगलिता इति ॥ ३९९ ॥

७४५ स्वरूपवीर्यज्ञानेभ्यश्चलनं नास्त्यतोऽचलः ।
७४६ चलत्ययं वायुरूपस्तत उक्तश्चलो बुधैः ॥ ४०० ॥

७४७ नाऽनात्मस्वभिमानोऽस्याऽमानी संवेदनाकृतेः ।
अनात्मस्वपि सर्वेषां माययात्माभिमानदः ॥ ४०१ ॥

सत्कारदो वा भक्तानामन्येषां मानखण्डनः ।
७४८ अनात्मस्वभिमानं वा खण्डयन् मानदो विदाम् ॥ ४०२ ॥

७४९ सर्वेश्वरः सर्वपूज्यो मान्य इत्यभिधीयते ।
७५० चतुर्दशानां लोकानां लोकस्वामीश्वरो मतः ॥ ४०३ ॥

७५१ त्रीन् लोकान् धारयन् देवो जगदीशास्त्रिलोकधृत् ।
७५२–७५३ शुभप्रज्ञः सुमेधाः स्यात्, मेधजो जायतेऽध्वरे ॥

७५४–७५५ धन्यः कृतार्थोऽस्य सत्यमेधा मेधेति सत्यतः ।
७५६ अंशैरशेषैः शेषाद्यैर्धरो भूमेर्धराधरः ॥ ४०५ ॥

७५७ तेजोवृषः सदा वारिवर्षणात्सूर्यरूपतः ।
७५८ स धारयन्नङ्गगतां कान्तिं द्युतिधरो मतः ॥ ४०६ ॥

७५९ शस्त्रधारिष्वग्रगण्यः सर्वशस्त्रभृतां वरः ।
७६० प्रग्रहः पत्रपुष्पादि प्रगृह्णन् भक्त्युपाहृतम् ॥ ४०७ ॥

यद्वा बध्नन् रश्मिनेव दुर्दान्तेन्द्रियवाजिनः ।
७६१ निगृह्णन् स्ववशे सर्वं निग्रहः कीर्तितो बुधैः ॥ ४०८ ॥

७६२ **व्यग्रो** भक्ताभीष्टदानासक्तो वा विगतान्तवान् ।
७६३–७६४ **नैकशृङ्गश्चतुश्शृङ्ग** उच्यतेऽथ **गदाग्रजः** ॥ ४०९ ॥

निगदेन स मन्त्रेण यदग्रे जायतेऽथवा ।
गदनाम्नो वासुदेवावरजात्पूर्वजो मतः ॥ ४१० ॥

७६५ **चतुर्मूर्तिर्विराडाद्याः** सिताद्या वाऽस्य मूर्तयः ।
७६६ चत्वारो बाहवोऽस्येति **चतुर्बाहुरसौ** मतः ॥ ४११ ॥

७६७ चतुर्भिर्व्यूहपुरुषैश्च**तुर्व्यूहस्तु** संयुतः ।
७६८ वर्णाश्रमाचारवतामाश्रयत्वा**च्चतुर्गतिः** ॥ ४१२ ॥

७६९ **चतुरात्मास्य** निपुण आत्मा रागाद्यदूषितः ।
यद्वा मनोबुद्धिचित्ताहङ्कारात्मा चतुर्विधः ॥ ४१३ ॥

७७० **चतुर्भावो** जायतेऽस्मात्पुरुषार्थचतुष्टयम् ।
७७१ **चतुर्वेदविदेष** स्याच्चतुर्वेदार्थवेदनात् ॥ ४१४ ॥

७७२ एकः पादोऽस्य विश्वानि भूतानीत्ये**कपाद्धरिः** ।
७७३ सम्यगावर्तयन् चक्रं **समावर्तस्तु** संस्तुतः ॥ ४१५ ॥

७७४ अनिवृत्तः कुतोऽप्येषो**ऽनिवृत्तात्मा** विभुत्वतः ।
**निवृत्तात्मा** मनो यस्य विषयेभ्यो निवर्तितम् ॥ ४१६ ॥

७७५ जेतुं न शक्यते यस्मादतोऽयं **दुर्जयो** मतः ।
७७६ नातिक्रामन्ति यस्याज्ञां सूर्याद्या **दुरतिक्रमः** ॥ ४१७ ॥

७७७ भक्त्या दुर्लभया लभ्य इत्यसौ **दुर्लभो** मतः ।
७७८ दुःखेन ज्ञायमानत्वा**द्दुर्गमो**ऽयं प्रकीर्तितः ॥ ४१८ ॥

७७९ अन्तरायप्रतिहतैर्दुर्गो दुःखादवाप्यते ।
७८० दुरावासो योगिजनैर्दुःखेनावास्यते हृदि ॥ ४१९ ॥

७८१ दुरारिहा दानवानां हन्ता दुर्मार्गगामिनाम् ।
७८२ ध्येयः शुभाङ्गोऽवयवैः शोभनैरेष कीर्तितः ॥ ४२० ॥

७८३ भृङ्गवल्लोकसारङ्गः सारं गृह्णन् जगत्यसौ ।
प्रणवो लोकसारत्वात्तेन गम्योऽथवा मतः ॥ ४२१ ॥

७८४ सुतन्तुर्यस्य विस्तीर्णः प्रपञ्चः शोभनो मतः ।
७८५ वर्धनाच्छेदनाद्वायं जगतस्तन्तुवर्धनः ॥ ४२२ ॥

७८६ इन्द्रस्येवास्य कर्मात इन्द्रकर्मेशनात्मकम् ।
७८७ वियदादिमहाकार्यैर्महाकर्मा हरिर्मतः ॥ ४२३ ॥

७८८ कृतकृत्यो धर्मकृद्वा कृतकर्मा मतो हरिः ।
७८९ वेदात्मकागमो येन कृतोऽतः स कृतागमः ॥ ४२४ ॥

७९० उद्भवो विगतं जन्म यस्य स्वेच्छाजनिश्च वा ।
७९१ विश्वातिशायिसौभाग्यशालित्वात् सुन्दरो मतः ॥ ४२५ ॥

७९२ भक्तेषु कृपया चित्तं स्वार्द्रयन् सुन्द उच्यते ।
७९३ रत्ननाभो नाभिरस्य रत्नवत्सुन्दरा यतः ॥ ४२६ ॥

७९४ सुलोचनोऽस्य नयनं ज्ञानं वा शोभनं यतः ।
७९५ अर्कः पूज्यतमैरर्च्यो ब्रह्मादिसुरपुङ्गवैः ॥ ४२७ ॥

७९६ अर्थिनामन्नदातृत्वात्प्रोक्तो वाजसनो हरिः ।
७९७ शृङ्गवान्मत्स्यरूपोऽयं शृङ्गी स्यात्प्रलयाम्भसि ॥ ४२८ ॥

७९८ जयहेतु**र्जयन्तो**ऽरीन् जयत्यतिशयेन वा ।
७९९ सर्वज्ञो दुर्जयानां च जेतासौ **सर्वविज्जयी** ॥ ४२९ ॥

८०० **सुवर्णबिन्दुः** स्वर्णाभदिव्यावयवसंयुतः ।
ओंकारबिन्दुसंयुक्तप्रणवात्माथवा मतः ॥ ४३० ॥

रागाद्यैर्वा शब्दमुख्यैर्विषयैरथवाऽसुरैः ।
८०१ क्षोभं न प्रापितो यस्मा**दक्षोभ्य**स्तेन सम्मतः ॥ ४३१ ॥

८०२ ब्रह्मादीनामीश्वरत्वात् **सर्ववागीश्वरेश्वरः** ।
८०३ ह्रदवद्योगिविश्रान्तिसौख्यदत्वा**न्महाह्रदः** ॥ ४३२ ॥

माया दुरत्यया यस्य गर्तवत्तरणाक्षमा ।
८०४ रथो वास्य महानस्मा**न्महागर्तो** महारथः ॥ ४३३ ॥

८०५ **महाभूतः** सिद्धरूपः सर्वकालेषु वर्तनात् ।
८०६ **महानिधिः** सर्वभूतनिधानं स महानपि ॥ ४३४ ॥

८०७ **कुमुदो** मोदयन् भूमिं भारावतरणान्मतः ।
८०८ **कुन्दरः** कुन्दपुष्पाभशुद्धकर्मफलप्रदः ॥ ४३५ ॥

आदत्ते वा फलं शुद्धमर्पितं तन्मुमुक्षुभिः ।
भूमेर्दारयिता वा स्याद्धिरण्याक्षजिघांसया ॥ ४३६ ॥

८०९ **कुन्दः** कुन्दनिभाङ्गोऽयं भूदाता कश्यपाय वा ।
पृथ्वीश्वरनिहन्ता वा भार्गवो राम उच्यते ॥ ४३७ ॥

८१० **पर्जन्यो** मेघवत्तापत्रयं शमयतीति हि ।
पर्जन्यवद्वा सर्वांस्तान् कामानप्यभिवर्षति ॥ ४३८ ॥

८११ [1]**पवनः** स्मृतिमात्रेण लोकान् सर्वान् पुनात्यसौ ।
८१२ भक्तेभ्यः सुलभो यद्वा प्रेरणारहितोऽ**निलः** ॥ ४३९ ॥

नित्यप्रबुद्धरूपत्वादज्ञेभ्यो वा विलक्षणः ।
अश्नन् स्वात्मामृतं देवान् पाययन् मथितां सुधाम् ॥ ४४० ॥

८१३ **अमृताशो**ऽथवा वाञ्छाऽविनश्वरफलाऽस्य हि ।
८१४ अविनाशिस्वरूपत्वात्प्रोक्तोऽ**मृतवपु**र्हरिः ॥ ४४१ ॥

८१५–८१६ **सर्वज्ञः** सर्वविज्ञानात्, विराट्त्वात्**सर्वतोमुखः** ।
८१७ **सुलभः** सुखलभ्यत्वात्पत्रपुष्पफलादिभिः ॥ ४४२ ॥

८१८ **सुव्रतो** नियतं भुङ्क्ते भोजनाद्वा निवर्तते ।
८१९ अनन्याधीनसिद्धित्वात् **सिद्ध** इत्युच्यते हरिः ॥ ४४३ ॥

८२० **शत्रुजित्** सुरशत्रूणां जयादेष प्रकीर्तितः ।
८२१ तापनात्सुरशत्रूणां प्रोच्यते **शत्रुतापनः** ॥ ४४४ ॥

जायतेऽर्वाक्प्रपञ्चात्मा सर्वेषामुपरि स्थितः ।
८२२ **न्यग्रोधो** मायया जन्तून्न्यक्कृत्य निरुणद्धि वा ॥ ४४५ ॥

८२३ आकाशादेः कारणत्वेनोद्गतोऽसावु**दुम्बरः** ।
पोषयन् वान्नरूपेण विश्वमन्नं ह्यु**दुम्बरः** ॥ ४४६ ॥

८२४ **अश्वत्थो** न स्थास्यति श्वो लोकात्माऽश्वत्थवच्च वा ।
८२५ चाणूरासुरहन्तृत्वाच्**चाणूरान्ध्रनिषूदनः** ॥ ४४७ ॥

---

[1] पावनः

८२६ **सहस्रार्चिः**रसौ यस्यानन्तान्यर्चींषि सन्ति हि ।
८२७ **सप्तजिह्वो** यस्य जिह्वाः सप्त काल्यादयो मताः ॥ ४४८ ॥

८२८ सप्तज्वालाग्निरूपोऽसौ **सप्तैधाः** परिकीर्तितः ।
८२९ सप्तनामैकाश्ववाहिसूर्यात्मा **सप्तवाहनः** ॥ ४४९ ॥

मूर्तिरन्नं घनीभावनिदानं तच्चराचरम् ।
८३० तया देहात्ममूर्त्या वा रहितोऽ**मूर्ति**रुच्यते ॥ ४५० ॥

८३१ दुःखपापविनिर्मुक्तस्वरूपो ह्य**नघो** मतः ।
८३२ साक्षिस्वरूपतो मानागोचरोऽ**चिन्त्य** उच्यते ॥ ४५१ ॥

अथवा चिन्तनाशक्यः सर्वलोकविलक्षणः ।
८३३ **भयकृद्**भीतितन्नाशकरणाद्दुष्टशिष्टयोः ॥ ४५२ ॥

८३४ वर्णाश्रमवतां भीतिं नाशयन् **भयनाशनः** ।
८३५ सौक्ष्म्यातिशयशालित्वा**दणु**रित्युच्यते हरिः ॥ ४५३ ॥

८३६ बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म तद्**बृहदु**च्यते ।
८३७-८३८ **कृशः** सूक्ष्मस्वरूपत्वात्, **स्थूलः** स्थूलस्वरूपतः ॥

८३९ **गुणभृ**त्स्याद्गुणान् सोऽधितिष्ठन् सृष्ट्यादिकर्मसु ।
८४० वस्तुतो गुणराहित्या**न्निर्गुणः** परिकीर्तितः ॥ ४५५ ॥

८४१ नित्यत्वादिगुणैर्योगाद्दोषाभावान्**महान्** स्मृतः ।
८४२ केनापि ध्रियते नायमित्यसाव**धृतो** मतः ॥ ४५६ ॥

८४३ आत्मधार्यस्वरूपत्वात्**स्वधृतः** परिकीर्तितः ।
८४४ पद्मोदरदलाताम्रमुखवान् **स्वास्य** उच्यते ॥ ४५७ ॥

वेदराशिसमुद्भूतिनिदानमुखवांश्च वा ।
८४५ सर्वप्राक्सिद्धवंशत्वात्**प्राग्वंश** इति कीर्तितः ॥ ४५८ ॥

८४६ वर्धयन् वा छेदयन् वा वंशं स्याद्**वंशवर्धनः** ।
८४७ **भारभृ**त्स्याद्भुवो भारं वहन् शेषादिरूपतः ॥ ४५९ ॥

एक एव परत्वेन वेदाद्यैः कथितो ह्ययम् ।
८४८ उक्तो वेद्यतया सर्वैर्वेदैर्वा **कथितो** मतः ॥ ४६० ॥

८४९ **योग्य**सौ योगगम्यो वा समाधत्ते स्वमात्मनि ।
८५० **योगीशो** योगिनामीशो निर्विघ्नं योगसाधनात् ॥ ४६१ ॥

८५१ तत्तत्कर्मानुरोधेन फलदः **सर्वकामदः** ।
८५२ भ्रमतां संसृतिवने विश्रान्तिस्थान**माश्रमः** ॥ ४६२ ॥

८५३ अविवेकिजनान् सम्यक् तापयन् **श्रमणो** मतः ।
८५४ अन्तकाले प्रजाः सर्वाः क्षीणयन् **क्षाम** उच्यते ॥ ४६३ ॥

८५५ छन्दःपर्णसमायुक्तः **सुपर्णः** संसृतेस्तरोः ।
८५६ वायुर्वहति लोकं यद्भीत्यासौ **वायुवाहनः** ॥ ४६४ ॥

८५७ **धनुर्धरो** रामनामा धारयन् धनुरुत्तमम् ।
८५८ धनुर्वेदविदेवासौ **धनुर्वेदः** प्रकीर्तितः ॥ ४६५ ॥

८५९ **दण्डो** हरिर्दमयतां नृपाणां दमनक्रिया ।
८६० दमयन् नृपरूपेण प्रजा **दमयिता** मतः ॥ ४६६ ॥

८६१ दमनस्य फलत्वेन **दमो**ऽयं परिकीर्त्यते ।
८६२ **अपराजित** एव स्याच्छत्रुभिर्न पराजितः ॥ ४६७ ॥

समर्थः सर्वकार्येषु शत्रून् वा सहतेऽखिलान् ।
८६३ प्रोक्तः **सर्वसहो** यद्वा पृथिव्यादिस्वरूपतः ॥ ४६८ ॥

८६४ **नियन्ता** स्वस्वकार्येषु व्यवस्थापयति प्रजाः ।
८६५ नियत्या रहितो देवोऽ**नियमः** परिकीर्तितः ॥ ४६९ ॥

**नियमो** वापि योगाङ्गनियमैर्गम्य उच्यते ।
८६६ अमृत्युर**यमो** यद्वा यमाद्गम्यो **यमो** मतः ॥ ४७० ॥

८६७ **सत्त्ववान्** शौर्यवीर्यादिसत्त्वोपेतः प्रकीर्तितः ।
८६८ प्राधान्यतः स्थितः सत्त्वे **सात्त्विकः** परिकीर्तितः ॥ ४७१ ॥

८६९ साधुत्वात्सज्जनेष्वेष **सत्य** इत्युच्यते बुधैः ।
८७० सत्ये धर्मे च नियतः **सत्यधर्मपरायणः** ॥ ४७२ ॥

८७१ **अभिप्रायः** पुमर्थेच्छुजनाभिप्रायगोचरः ।
लयेऽस्मिन्नाभिमुख्येन जगत्प्रैतीति वा मतः ॥ ४७३ ॥

८७२ प्रियवस्त्वर्पणे योग्यः **प्रियार्हः** परिकीर्तितः ।
८७३ स्वागताद्युपचारैस्तु पूजनीयोऽर्ह उच्यते ॥ ४७४ ॥

८७४ स्तोतृलोकप्रियं कुर्वन् **प्रियकृत्** परिकीर्तितः ।
८७५ वर्धयन् स्तोतृलोकस्य प्रीतिं वै **प्रीतिवर्धनः** ॥ ४७५ ॥

८७६ **रविर्विहायसगतिः** परव्योमाश्रितोऽथवा ।
८७७ **ज्योतिः** स्वयं द्योतमानस्वरूपत्वात् प्रकीर्त्यते ॥ ४७६ ॥

८७८ **सुरुचिर्देहकान्त्या** वा जगद्रक्षेच्छयापिवा ।
८७९ सर्वकर्मसु भुङ्क्तेऽसौ हुतं स **हुतभुङ्**मतः ॥ ४७७ ॥

८८० सर्वत्र वर्तमानत्वाद्विभुत्वाद्वा **विभुर्मतः** ।
८८१ आदित्यस्य स्वरूपेण रसं गृह्णन् **रविर्मतः** ॥ ४७८ ॥

८८२ **विरोचनः** शोभते यत्सूर्यचन्द्रादिरूपतः ।
८८३ सूते सर्वं श्रियं वापीत्यतः **सूर्य** उदीरितः ॥ ४७९ ॥

८८४ प्रसवात्सर्वलोकस्य **सविता** परिकीर्तितः ।
८८५ रविणा लोचनेनासौ **रविलोचन** ईरितः ॥ ४८० ॥

८८६ **अनन्त**स्त्वपरिच्छिन्नः शेषरूपोऽथवा मतः ।
८८७ स्मृत्योक्त्या वा स्वनाम्नोऽसौ **हुतभुग्**घुतपालनात् ॥ ४८१ ॥

८८८ **भोक्ता** प्रकृतिभोगाद्वा जगत्पालनतोऽपि वा ।
८८९ सुखदानाद्धि भक्तानां **सुखदो**ऽयं प्रकीर्तितः ॥ ४८२ ॥

अथवा भक्तदुःखानि छिन्दन्नसुखदो भवेत् ।
८९० असकृज्जायमानत्वा**न्नैकजो** धर्मगुप्तये ॥ ४८३ ॥

८९१ हिरण्यगर्भरूपेण जातोऽग्रेऽतो**ऽग्रजो** मतः ।
८९२ **अनिर्विण्णः** सर्वसिद्ध्या निर्वेदरहितत्वतः ॥ ४८४ ॥

८९३ **सदामर्षी** स साधून् यः क्षमते ह्याभिमुख्यतः ।
८९४ सर्वलोकाधारभूतो **लोकाधिष्ठान**मुच्यते ॥ ४८५ ॥

८९५ आश्चर्यवस्तुतुल्योऽसाव**द्भुतः** परिकीर्तितः ।
८९६ **सना**न्निगदितो देवश्चिरकालस्वरूपतः ॥ ४८६ ॥

८९७ पुरातनानामादित्वात्**सनातनतमो** मतः ।
८९८ बडबानलरूपोऽयं तद्वर्णः **कपिलो** मतः ॥ ४८७ ॥

८९९ **कपिर्**वराहः सूर्यो वा रश्मिभिर्हि जलं पिबन् ।
९०० **अप्ययो** यत्र लीयन्ते जगन्ति प्रलये सदा ॥ ४८८ ॥

९०१ **स्वस्तिदो** भगवान् प्रोक्तो भक्तानां मङ्गलं ददत् ।
९०२–९०३ **स्वस्तिकृन्मङ्गलकृत्, स्वस्ति** मङ्गलरूपवान् ॥४८९॥

९०४ **स्वस्तिभुङ्**मङ्गलं भुङ्क्ते भक्तानां तच्च पालयेत् ।
स्वस्त्यात्मना वर्धमानः स्वस्तिदानक्षमोऽथवा ॥ ४९० ॥

९०५ शीघ्रं स्वस्तिप्रदाता वा कीर्तितः **स्वस्तिदक्षिणः** ।
९०६ **अरौद्रो** यस्य नो रौद्रा रागः कोपश्च कर्म च ॥ ४९१ ॥

९०७ **कुण्डली** मकराकारसाङ्ख्ययोगविभूषितः ।
शेषरूपोऽथवा भास्वत्कर्णकुण्डलवानपि ॥ ४९२ ॥

९०८ **चक्री** सुदर्शनं बिभ्रन्मनस्तत्त्वात्मकं प्रभुः ।
९०९ **विक्रमी** पदविक्षेपाच्छौर्याल्लोकोत्तरादपि ॥ ४९३ ॥

९१० श्रुतिस्मृत्यादिबलवच्छास्त्या **तूर्जितशासनः** ।
९११ अशक्यत्वात्तु शब्देन वक्तुं **शब्दातिगो** भवेत् ॥ ४९४ ॥

९१२ सर्वैर्वेदैस्सारतया घुष्टः **शब्दसहो** मतः ।
९१३ तापत्रयोपतप्तानां **शिशिरस्**तापशान्तिकृत् ॥ ४९५ ॥

संसारिणां स्वमात्मानं ज्ञानिनां संसृतिं तथा ।
९१४ निशामिव तु यः कुर्यात्स प्रोक्तः **शर्वरीकरः** ॥ ४९६ ॥

९१५ कोपजन्यमनोवृत्तिरहितोऽ**क्रूर** उच्यते ।
९१६ वपुःकर्ममनोवाग्भिः शोभनः **पेशलो** मतः ॥ ४९७ ॥

९१७ वृद्धया शक्तया शीघ्रकृत्या सम्पन्नो दक्ष उच्यते ।
९१८ **दक्षिणो** वृद्धयादियुतो गच्छन् वा हिंसकोऽथवा ॥ ४९८ ॥

क्षमावतां योगिनां च भूम्यादेर्भारधारिणः ।
श्रेष्ठत्वादथवा सर्वब्रह्माण्डवहनादपि ॥ ४९९ ॥

नार्दितः पृथिवीवायं भरेण महताथवा ।
९१९ क्षमत्वात्करणे सर्वक्रियाणां **क्षमिणां वरः** ॥ ५०० ॥

९२० विदुषामुत्तमाज्ज्ञानात्स हि **विद्वत्तमो** मतः ।
९२१ भयसामान्यराहित्यादुक्तो **वीतभयो** ह्यसौ ॥ ५०१ ॥

श्रवणं कीर्तनं चास्य शुभकृल्लोकयोर्द्वयोः ।
९२२ ततोऽयं कीर्तितो देवः **पुण्यश्रवणकीर्तनः** ॥ ५०२ ॥

९२३ **उत्तारणो** भक्तजनान् तारयन् दुःखसागरात् ।
९२४ प्रकीर्तितो **दुष्कृतिहा** नाशयन् पापदुष्कृतीः ॥ ५०३ ॥

९२५ पुण्यकृत्स्मरतां **पुण्यो** वक्ता वा पुण्यकर्मणाम् ।
९२६ **दुःस्वप्ननाशनः** प्रोक्तो भाव्यनर्थप्रसूचकान् ॥ ५०४ ॥

दुस्स्वप्नान् नाशयन् भक्तैः स्मृतः पूजित एव वा ।
९२७ संसारिणां गतीर्निघ्नन् मुक्तिदो **वीरहा** मतः ॥ ५०५ ॥

९२८ रक्षन् **रक्षण** एष स्यात्सत्त्वस्थो जगतां त्रयम् ।
९२९ सन्मार्गवर्तिरूपेण स्थित्या **सन्त** इतीरितः ॥ ५०६ ॥

९३० जीवयन् प्राणरूपेण प्रजा **जीवन** उच्यते ।
९३१ विश्वं व्याप्यावस्थितत्वात् **पर्यवस्थित** ईरितः ॥ ५०७ ॥

९३२ **अनन्तरूप** एष स्यान्नानारूपधरत्वतः ।
९३३ **अनन्तश्री**रनेकात्ममायाशक्तिसमाश्रयः ॥ ५०८ ॥

९३४ **जितमन्युः** क्रोधशून्यो भृगुपादाहतावपि ।
९३५ **भयापहः** स्वभक्तानां नाशयन् संसृतेर्भयम् ॥ ५०९ ॥

९३६ **चतुरश्रो** हरिर्न्यायोपेतः कर्मफलप्रदः ।
९३७ **गभीरात्मा** त्वनिश्चेयस्वरूपाद्धृदयादुत ॥ ५१० ॥

९३८ यः फलान्यधिकारिभ्यो दिशेत्स **विदिशो** मतः ।
९३९ शक्रादेर्विविधामाज्ञां कुर्वन् वै **व्यादिशो** मतः ॥ ५११ ॥

९४० **दिशो** वेदात्मना सर्वकर्मणां फलदानतः ।
९४१ **अनादिः** कारणाभावात्सर्वकारणकारणम् ॥ ५१२ ॥

९४२ सर्वाश्रयाया भूमेस्स आधारो **भूर्भुवो** मतः ।
९४३ अपिचायं भुवो **लक्ष्मी**र्भूमेः शोभास्वरूपतः ॥ ५१३ ॥

* अथवा भूर्भुवोलक्ष्मीरेतत्त्रितयरूपवान् ।
अथवा भूर्भुवोलक्ष्मीः शोभात्वाद्भूर्भुवोर्मतः ॥ ५१४ ॥

९४४ श्रवणादिज्ञानवत्त्वात्**सुवीरः** परिकीर्तितः ।
अथवायं **सुवीरः** स्याच्छोभनध्येयधामभिः ॥ ५१५ ॥

---

* भूर्भुवो लक्ष्मीरित्यस्यैकनामत्वपक्षे श्रीमद्गम्भीरभारत्युक्तरीत्या सर्वप्रहरणायुध इत्यस्यावृत्त्या नाम्नां सहस्रत्वोपपत्तिरवगन्तव्या । वस्तुतस्तु " द्विर्वचनं समाप्तिं द्योतयति " इति भाष्योक्तया द्विर्वचनस्य समाप्तिद्योतकस्य पृथङ्नामपरत्वानुपपत्त्या अत्रैव नामद्वयमुचितमिति प्रतिभाति ।

यद्वा मत्स्यादिगतिभिः **सुवीरः** परिकीर्तितः ।
९४५ शोभनाभ्यामङ्गदाभ्यां युक्तत्वाद्**रुचिराङ्गदः** ॥ ५१६ ॥

९४६ जन्तूनां जनकत्वाद्वै **जननो** ह्येष कीर्तितः ।
९४७ कार्योत्पत्तिनिदानत्वाज्**जनजन्मादि**रुच्यते ॥ ५१७ ॥

९४८ स्वाङ्गोल्लङ्घिभयोत्पादाद्**भीमो**ऽयं परिकीर्तितः ।
९४९ असुरादिभयोत्पादिबलाद्**भीमपराक्रमः** ॥ ५१८ ॥

९५० **आधारनिलयो** भूतपञ्चकस्य विधारणात् ।
९५१ धारकान्तरराहित्याद्**धाता** परिकीर्तितः ॥ ५१९ ॥

९५२ **धाता** वा प्रलये सर्वाः प्रजास्ताः संहरन्नयम् ।
९५३ **पुष्पहासो** जगद्रूपहासात्कुसुमहासवत् ॥ ४२० ॥

९५४ नित्यप्रबुद्धरूपत्वाज्जाग्रदुक्तः **प्रजागरः** ।
९५५ सर्वेषामुपरि स्थित्या कीर्तितस्तू**र्ध्वगो** दिवि ॥ ५२१ ॥

९५६ कीर्तितः **सत्पथाचारः** साध्वाचारपरिग्रहात् ।
९५७ जीवयन् **प्राणदः** प्रोक्तः परीक्षित्प्रभृतीन् मृतान् ॥ ५२२ ॥

प्रणवस्याभिधेयत्वात्तदात्मा **प्रणवो** मतः ।
९५८ जीवरूपो व्यवहरन् नामरूपादिकं **पणः** ॥ ५२३ ॥

अथवा फलदः पुण्यं पणं गृह्णन् **पणो** मतः ।
९५९ प्रमित्यात्मस्वरूपेण **प्रमाणं** ब्रह्म सम्मतम् ॥ ५२४ ॥

प्राणादीनामिन्द्रियाणां जीवानां निलयोऽथवा ।
९६० प्रोक्तो वा **प्राणनिलयः** प्राणान् जीवांश्च संहरन् ॥ ५२५ ॥

९६१ पोषयन्नन्नरूपेण प्राणान् वै **प्राणभृन्**मतः ।
९६२ जीवयन् प्राणिनः प्राणैः कीर्तितः **प्राणजीवनः** ॥ ५२६ ॥

९६३ सत्यामृतादिपर्यायतत्त्वात्मा **तत्त्व**मुच्यते ।
९६४ यथावन्निजरूपज्ञ**स्तत्त्ववित्**परिकीर्तितः ॥ ५२७ ॥

९६५ अद्वयात्मस्वरूपत्वा**देकात्मा** श्रुतिसम्मतः ।
९६६ जन्ममृत्यादिराहित्या**ज्जन्ममृत्युजरातिगः** ॥ ५२८ ॥

९६७ **भूर्भुवस्स्वस्तरु**र्होमे व्याहृत्या दोषतारणात् ।
यद्वा भूरादिवृक्षात्मा तद्वद्वा व्याप्य सुस्थितः ॥ ५२९ ॥

९६८ स्वभक्तान् तारयन् **तारो** दुःखाब्धेः प्रणवोऽथवा ।
९६९ **सविता** सर्वलोकस्य जनकः परिकीर्तितः ॥ ५३० ॥

९७० ब्रह्मणोऽपि पितृत्वाद्वै **प्रपितामह** ईरितः ।
९७१ प्राणिनः सङ्गतान् कुर्वन् **यज्ञः** कर्मफलैर्मतः ॥ ५३१ ॥

९७२ भोक्ता **यज्ञपतिः** सर्वयज्ञानां प्रभुरेव वा ।
९७३ यजमानात्मना तिष्ठन् **यज्वा** स भगवान् मतः ॥ ५३२ ॥

९७४ **यज्ञाङ्गो**ऽसौ वराहात्मा यज्ञा अङ्गानि यस्य हि ।
९७५ प्रापयन् फलदान् यज्ञान् मुमुक्षून् **यज्ञवाहनः** ॥ ५३३ ॥

९७६ ब्रह्मात्मना स्थितो यज्ञं पालयन् **यज्ञभृन्**मतः ।
९७७ जगदादौ यजन् यज्ञैर्**यज्ञकृत्**क्रमबोधकः ॥ ५३४ ॥

अथवा प्रलये यज्ञान् छेदयन् **यज्ञकृद्**भवेत् ।
९७८ **यज्ञी** शेषी तु यज्ञानां तत्समाराधनात्मनाम् ॥ ५३५ ॥

९७९ यज्ञं भुङ्क्ते पालयेद्वा भगवान् **यज्ञभुङ्मतः**।
९८० स्वप्राप्तिसाधनत्वेन यज्ञवान् **यज्ञसाधनः** ॥ ५३६ ॥

९८१ फलेन योजयन् यज्ञं **यज्ञान्तकृ**दिति स्मृतः।
यद्वा समापयन् यज्ञं पूर्णाहुतिविधानतः ॥ ५३७ ॥

९८२ ज्ञानयज्ञो **यज्ञगुह्यं** फलेच्छारहितोऽथवा।
९८३ यज्ञात्मा, भगवान**न्नं** भूतान्यत्त्यद्यतेऽपि तैः ॥ ५३८ ॥

९८४ ब्रह्मक्षत्रादिरूपेण प्रोच्यतेऽ**न्नाद** इत्यसौ।
९८५ **आत्मयोनिः** कीर्तितोऽसौ सर्वोपादानरूपतः ॥ ५३९ ॥

९८६ **स्वयं जातो** हि जगतां निमित्तं कारणं भवेत्।
९८७ वराहात्मा विशेषेण **वैखानः** खननाद्भुवः ॥ ५४० ॥

९८८ गायन् सामानि सम्प्रोक्तो ऋषिभिः **सामगायनः**।
९८९ **देवकीनन्दनः** प्रोक्तो देवक्यास्तनयो भवन् ॥ ५४१ ॥

९९० सर्जनात्सर्वलोकस्य **स्रष्टा**ऽसौ परिकीर्तितः।
९९१ भूपतित्वात् **क्षितीशो**ऽयं दाशरथ्यात्मना मतः ॥ ५४२ ॥

९९२ ध्यानाद्यैः पापजालस्य नाशनात् **पापनाशनः**।
९९३ **शङ्खभृत्** पाञ्चजन्याख्यां बिभ्रद्भूताद्यहङ्कृतिम् ॥ ५४३ ॥

९९४ **नन्दकी** नन्दकाख्येन विद्यारूपमहासिना।
९९५ **चक्री** सुदर्शनाख्येन मनस्तत्त्वेन संयुतः ॥ ५४४ ॥

९९६ **शार्ङ्गधन्वा** धनुः शार्ङ्गमिन्द्रियादिमयं दधत्।
९९७ **गदाधरो** बुद्धिरूपां गदां कौमोदकीं वहन् ॥ ५४५ ॥

९९८ **रथाङ्गपाणि**रुक्तोऽयं पाणौ चक्रस्य धारणात् ।
९९९ **अक्षोभ्य**श्चालनाशक्यः शत्रुभिश्चक्रधारणात् ॥ ५४६ ॥

आयुधत्वेनाप्रसिद्धकरजादीनि यानि वै ।
१००० सर्वाण्यस्यायुधानीति **सर्वप्रहरणायुधः** ॥ ५४७ ॥

रामकृष्णतनूजेन विदुषा रामशर्मणा ।
भाष्योक्तिः सङ्गृहीतैवमनया प्रीयतां हरिः ॥

इति श्रीरामकृष्णतनूजेन रामशर्मणा विरचितः श्रीविष्णुसहस्रनाम-
शाङ्करभाष्यार्थसङ्ग्रहः
समाप्तः

———

श्रीकृष्णाय परस्मै ब्रह्मणे नमः । श्रीकृष्णार्पणमस्तु

———

॥ श्रीः ॥

# अकारादिक्रमेण विष्णुसहस्रनामपदसूची

# अकारादिक्रमेण विष्णुसहस्रनामशाङ्करभाष्यविवृत्युदाहृत-प्रमाणाकरसूची

---

पृष्ठम् प्रमाणानि

| पुटम् | प्रमाणानि |
| --- | --- |
| 82 | असन्नेव स भवति (तै. उ. २-६) |
| 500 | असम्भवस्तु सतोऽनुपपत्तेः (ब्र. सू. २-३-९) |
| 81 | असुर्या नाम ते लोकाः (ईशो. ३) |
| 194 | असौ वा आदित्यो देवमधु (छा. उ. ३-१-१) |
| 144 | अस्ति ब्रह्मेति चेद्वेद (तै. उ. २-६) |
| 460, 462 | ,, |
| 144 | अस्तीत्येवोपलब्धव्यः (कठो. ६-१३) |
| 526 | अस्थूलं (बृह. उ. ३-८-८) |
| 196 | अस्मायामेधास्रजो विनिः (पा. सू. ५-२-१२१) |
| 254 | ,, |
| 253 | अस्मिन् कामाः समाहिताः (छा. उ. ८-१-५) |
| 172 | अस्य महतो भूतस्य (बृह. उ. २-४-१०) |
| 352, 446, 499, 534 | ,, |
| 581 | अस्रः कोणे (मेदिनी) |
| 70 | अहङ्काराविवेकेन ( ? ) |
| 53 | अहमात्मा गुडाकेश (भ. गी. १०-२०) |
| 652 | अहेयमक्षरं (वि. ध. ४१-६६) |
| 604 | अहोरात्रेक्षणो दिव्यः (हरिवंशः ?) |
| 242 | अहं किलेन्द्रो देवानां (हरिवंशः ७६-४५ ?) |
| 452 | अहं क्रतुरहं यज्ञः (भ. गी.-९-१६) |
| 72 | अहं ब्रह्मास्मि (बृह. उ. १-४-१०) |
| 613 | अहं मनुरभवं सूर्यश्च (बृह. उ. १-४-१०) |
| 124 | अहं हरिः सर्वमिदं जनार्दनः (वि. पु. १-२२-८७) |
| 369 | अहं हि सर्वयज्ञानां (भ. गी. ९-२४) |
| 305 602 | ,, |
| 547 | अहिंसासत्यमस्तेय (यो. सू. २-३०) |
| 440 | अंशवो ये प्रकाशन्ते (भार. शा. ३५०-४८) |
| 229 | अंहोदुःखव्यसनेष्वघम् (नाम. ३-३-२७) |
| 523 | ,, |

| पुटम् | प्रमाणानि |
|---|---|
| 24 | कर्मण्यण् (पा. सू. ३-२-१) |
| 213, 285, 395, 403 476, 509, | ,, |
| 165 | कर्मण्यधिकरणे च (पा. सू. ३-३-९३) |
| 375 | ,, |
| 651 | कर्मभिर्नामभिर्जीवैः (वि. ध. ४-१-४७) |
| 287 | कलहं स राममहितः (भट्टिका. १०-२) |
| 34 | कलावत्रापि दोषाढ्ये ( ? ) |
| 34 | कलिकल्मषमत्युग्रं (वि. पु. ६-८-२१) |
| 127 | ,, |
| 315 | कलिलं गहनं समे (नाम. ३-१-८५) |
| 626 | कषायपक्तिः कर्माणि ( ? ) |
| 45 | कस्मै देवाय (तै. सं. ४-१-८) |
| 394 | कस्य चित्त्वथ कालस्य (वा. रा. उत्तर. ५७-७) |
| 136 | कस्य नूनं कतमस्य (ऋ. सं. १-२४-१) |
| 416 | कस्यैष कोनु खल्वेषः (भार. शान्ति. ३५७-६६) |
| 443 | कान्तिरभ्यधिका स्थिता (भार. शान्ति. ३५०-४३) |
| 16 | काम एष क्रोध एषः (भ. गी. ३-३७) |
| 75 | ,, |
| 436 | कालनेमिश्च दैत्येन्द्रः (हरिवंशः ? ) |
| 521 | काली कराली च (मुण्ड. उ. १-२-४) |
| 502 | काले यथोक्ते सञ्जाते (मत्स्य. पु. २-१७) |
| 336 | कालः कलयतामहम् (भ. गी. १०-३०) |
| 138 | किमित्ते विष्णो (ऋ. सं. ७-१००-६, तै. सं. २-२-१२) |
| 474 | किं तद्ब्रह्म (भ. गी. ८-१) |
| 650 | कीर्तयेद्भगवन्नाम (वि. ध. ४१-३२) |
| 262 | कुगतिप्रादयः (पा. सू. २-२-१८) |
| 215 | कुभ्रश्च (उणा. २२) |
| 650 | कुर्वीत तन्मयो भूत्वा (वि. ध. ४१-३३) |
| 252 | कृग्रोरुच्च (उणा. २४) |

| पृष्टम् | प्रमाणानि |
|---|---|
| 287 | केन च पूजायाम् (पा. सू. २-२-१२) |
| 225 | केन नञ्विशिष्टेन (पा. सू. २-१-६०) |
| 197 | क्रान्ते विष्णुं (मनु. १२-१२१) |
| 240 | क्रियार्थोपपदस्य च (पा. सू. २-३-१४) |
| 432 | कुधमण्डार्थेभ्यश्च (पा. सू. ३-२-१५१) |
| 571 | क्रोधाद्भवति सम्मोहः (भ. गी. २-६३) |
| 156 | क्लेशकर्मविपाकाशयैः (यो. सू. १-२४) |
| 469 | क्लेशोऽधिकतरस्तेषां (भ. गी. १२-५) |
| 240 | क्तिन्प्रत्ययस्य कुः (पा. सू. ८-२-६२) |
| 111 | क्विप् च (पा. सू. ३-२-७६) |
| 242, 248 | ,, |
| 579 | क्विब्वचिप्रच्छि (उणा. सू. २२५) |
| 317 | क्षत्रिया मागधं (याज्ञ. स्मृ. १-९४) |
| 346 | क्षमया पृथिवीसमः (वाल्मी. बा. १-१८) |
| 573 | ,, |
| 69 | क्षरात्मानावीशते देव एकः (श्वेता. उ. १-१०) |
| 346 | क्षायो मः (पा. सू. ८-२-५३) |
| 542 | ,, |
| 573 | क्षितिक्षान्त्योः (नाम. ३-३-१४२) |
| 321 | क्षीयन्ते चास्य कर्माणि (मुण्ड. उ. २-२-८) |
| 240 | क्षीरमध्ये भगवान् (वि. पु. १ ९-८८) |
| 69 | क्षेत्रज्ञं चापि मां विद्धि (भ. गी. १३-२) |
| 151, 639 | ,, |
| 151 | क्षेत्राख्यानि शरीराणि (ब्रह्म. पु. ३१-६७) |
| 650 | क्षेमार्थे च प्रयाणे च (वि. ध. ४१-२७) |

## ख

| पृष्टम् | प्रमाणानि |
|---|---|
| 446 | खलयव (पा. सू. ५-१-७) |
| 299 | खचि ह्रस्वः (पा. सू. ६-३-६९) |
| 497 | खश्च डित्त्वा वक्तव्यः (वा. २०११) |
| 22 | खलयव (पा. सू. ५-१-७) |

| पुटम् | प्रमाणानि |
|---|---|
| | **ग** |
| 180 | गङ्गादेः परा सप्तमी (वा. ^४२१) |
| 37 | गङ्गास्नानसहस्रेषु ( ? ) |
| 141 | गत्यर्थाकर्मक (पा. सू. ३-४-७२) |
| 204, 233, 275, 292, 302, 320, 333, 342, 346, 470 | |
| 480 | ,, |
| 637 | गमिकर्मीकृत (नैषधं २-४०) |
| 445 | गन्धर्वाप्सरसः सिद्धाः (वि. पु. २-५-२४) |
| 556 | ,, |
| 21 | गन्धः पुष्पं तथा धूपः (क्रमरत्नमाला) |
| 332 | गमहन (पा. सू. ६-४-९८) |
| 497 | गमेः सुपि वाच्यः (वा. २००९) |
| 652 | गम्यते तत्परं ब्रह्म (वि. ध. ४१-५३) |
| 650 | गरुडध्वजानुस्मरणात् (वि. ध. ४१-३१) |
| 313 | गर्भोऽपवरकेऽक्षेऽग्नौ ( ? ) |
| 241 | गवादिषु च विन्देः (वा. २९६९) |
| 385 | ,, |
| 8 | गवियुधिभ्यां स्थिरः (पा. सू. ८-३-५९) |
| 613 | गस्थकन् (पा. सू. ३-१-१४६) |
| 388 | गहनं वनदुर्गयोः (हैमः) |
| 408 | गापोष्टक् (पा. सू. ३-२-८) |
| 405 | गायन्त्यारण्यके विप्राः (महाभारतं) |
| 109 | गिरामस्म्येकमक्षरम् (भ. गी. १०-२५) |
| 310 | गिरिमूर्धनि कृष्णोऽपि (वि. पु. ५-११-४७) |
| 612 | गीतिषु सामाख्या (जै. सू. २-१-३६) |
| 185 | गुणवचनेभ्यो मतुपो लुक् (वा. ३१८५) |
| 125 | गुरोर्यत्र परीवादः (मनु. २-२००) |
| 483 | गुरोश्च हलः (पा. सू. ३-३-१०३) |
| 128 | गोकोटिदानं ग्रहणे ( ? ) |

| पुटम् | प्रमाणानि |
|---|---|
| 27 | जपस्तु सर्वधर्मेभ्यः (भारतम् ? ) |
| 85 | ,, |
| 27 | जप्येनैव तु संसिध्येत् (मनु. २-८७) |
| 85 | ,, |
| 264 | जहातेर्द्वे (उणा. सू. ३२३) |
| 250 | जायते अस्ति (निरुक्तं. १-१-२) |
| 596 | ,, |
| 503 | जिदृक्षि (पा. सू. ३-२-१५७) |
| 191 | ज्य च (पा. सू. ५-३-६१) |
| 238 | ज्योतिषां ज्योतिः (मुण्ड. उ. २-२-९) |
| 554 | ज्योतिषां रविरंशुमान् (भ. गी. १०-२१) |
| 98 | ज्योतिषां विष्णुः (वि. पु. २-१२-३८) |
| 274 | ,, |
| 614 | ज्योतींषि शुक्राणि (भार. अनु. १५८-३१) |
| 71 | ज्ञाते त्वात्मनि नास्त्येतत् ( ? ) |
| 33 | ज्ञानतोऽज्ञानतो वापि ( ? ) |
| 127 | ,, |
| 627 | ज्ञानमुत्पद्यते पुंसां (भार. शान्ति. २०४-८) |
| 590 | ज्ञानस्वरूपमत्यन्तनिर्मलं (वि. पु. १-२-६) |
| 404 | ,, |
| 84 | ज्ञानहृदे ध्यानजले ( ? ) |
| 628 | ज्ञानादेव तु कैवल्यं ( ? ) |
| 252 | ज्ञानी त्वात्मैव मे मतम् (भ. गी. ७-१८) |
| 152 | ज्ञानेन्द्रियाणि सर्वाणि ( ? ) |
| 56 | ज्ञानं विशुद्धं विमलं (वि. पु. २-१२-४४) |

झ

| पुटम् | प्रमाणानि |
|---|---|
| 502 | झोऽन्तः (पा. सू. ७-१-३) |

पुटम् प्रमाणानि

## ण

372 णेरनिटि (पा. सू. ६-४-५१)
373 ,,
613 ण्युट् च (पा. सू. ३-३-१४७)
153 ण्वुल्तृचौ (पा. सू. ३-१-१३३)
377 ,,

## त

77 ततो विवदमानः सन् (भार. उद्यो. १७-१२)
370 ततः पपुः सुरगणाः (वि. पु १-९-११०)
8 ततः पुनः स गाङ्गेयं (भार. राजधर्मे)
432 ततः सागरवेलायां (वाल्मी. रा. युद्ध. २१-१)
370 ततस्ते जगृहुर्दैत्याः (वि. पु. १-९-१०८)
394 तच्छापाच्च मित्रावरुणयोः (वि. पु. ४-५-११)
111 तज्जलान् (छा. उ. ३-१४-१)
446 तज्ज्ञानं ब्रह्मसंज्ञितम् (वि. पु. ६-७-५३)
224 तत्करोति तदाचष्टे (गण. सू. २०४)
338, 372, 373, 377, 411, 543, 576, 591
505 तत्ते पदं सङ्ग्रहेण (कठ. उ. १-२-१५)
544 तत्प्राण उत्क्रान्ते ( ? )
72 तत्र को मोहः (ईशो. ७)
431 तत्र भवः (पा. सू. ४-३-५३)
433, 216 ,,
170 तत्र विष्णुश्च शक्रश्च (वि. पु. १-१५-१३०)
306 तत्र साधुः (पा. सू. ४-४-९८)
387, 348 ,,
72 तत्त्वमसि (छा. उ. ६-८-७)
73, 152, 639 ,,
65 तत्त्वेव भयं (तै उ. २-७)

पृष्ठम् प्रमाणानि

195 तस्य तात वधादेव (भारतं ? )
512 तस्य त्रय आवसथाः (ऐ. आ. ३-१२)
374 तस्य भावः (पा. सू. ५-१-११९)
583 तस्य भासा सर्वमिदं (मुण्ड. उ. २-२-१०)
589 तस्य वाचकः प्रणवः (यो. सू. १-२७)
233 तस्य विक्रमतो भूमिं (हरिवंशः ? )
52 तस्य ह न देवाश्च (बृह. उ. १-४-१०)
342 तस्य ह वा एतस्यात्मनः (छा. उ. ५-१८-२)
496 ,,
264 तस्येदं (पा. सू. ४-३-१२०)
171, 267, 308, 325, 393, 448, 504, 612 ,,
275 तस्योपरि जलौघस्य (वि. पु. १-४-४३)
189 ताच्छील्यवयोवचन (पा. सू. ३-२-१२९)
376 तानि वा एतानि (तै. ब्रा. २-३-८)
116 तानेवाहं न पश्यामि (वि. पु. १-१९-३८)
498 तान्यभ्यतपत् (छा. उ. २-२३-३)
652 तापात्तैस्तापशमनं (वि. ध. ४१-५०)
522 ताभ्योऽमितह्माभ्यो मूर्तिः (ऐ. उ. ३-२)
345 तारामयं भगवतः (वि. पु. २-९-१)
268 तास्ववात्सीत् ( ? )
454 तितुत्र (पा. सु. ७-२-९)
485 तुलासूत्रेऽश्वादिरश्मौ (नाम. ३-३-२३८)
227 तृतीया कर्म कुरुते (मार्क. पु. ४-४९)
502 तॄभूवह्विवसि (उणा. सू. ४०८)
244 तेजस्तेजस्विनामहम् (भ. गी. १०-३६, ७-१०)
277 ,,
140 तेन केशवनामाहं (भार. शान्ति. ३५०-४९)
371 तेन सहेति तुल्ययोगे (पा. सू. २-२-२८)
77 तेनाभूद्धतचेताः सन् (भार. उद्यो. १७-१६)

पुटम् प्रमाणानि

308 दमाद्दामोदरो विभुः (भार. उद्यो. ६९-८)
651 दम्पत्योरात्मसम्बन्धे (वि. ध. ४१-३८)
302 दहरं पुण्डरीकं वेश्म (छा. उ. ८-१-१)
137 दाभाभ्यां नुः (उणा. सू. ११२)
218, 264 ,,
309 दामानि लोकनामानि (व्यासवचनं ? )
649 दामोदरं बन्धगतः (वि. ध. ४१-२३)
309 दाम्ना मध्ये (वि. पु. ५-६-१४)
454 दाम्नीशसयुयुज (पा. सू. ३- २-१२८)
372 दाम्यत दत्त दमध्वं (बृह. उ. ५-२-३)
439 दिक्सङ्ख्ये संज्ञायाम् (पा. सू. २-१-५०)
170 दित्यदित्यादित्य (पा. सू. ४-१-८५)
171, 399 ,,
471 दिवि सूर्यसहस्रस्य (भ. गी. ११-१२)
520 ,,
552 दिवीव चक्षुराततं (वि. पु. २-८-१०३)
422 दिव्यमाल्याम्बरधरा (वि. पु. १-९-१०५)
392 दृढः स्थूलबलयोः ( ? )
177 दृश्यते त्वग्र्यया बुद्ध्या (कठ. उ. १-३-१२)
262 दृष्टं साम (पा. सू. ४-२-७)
426 देवतिर्यङ्मनुष्येषु (वि. पु. १-८-३५)
423 देवात्मशक्तिं (श्वेता. उ. २-३)
299 देवो दानाद्वा (निरु. ७-१५)
457 देवः पूर्वमपः सृष्ट्वा (व्यासवचनम् ?)
117 देवा मनुष्याः पशवः (वि. पु. १-१९ ४७)
273 देशबन्धश्चित्तस्य धारणा (यो. सू. ३-१)
517 देहयोगाद्वा सोऽपि (ब्र. सू. ३-४-३)
293 द्यतिस्यति (पा. सू. ७-४-४०)
553 द्युतेरिसिन्नादेशश्च जः (उणा. सू. २६७)

| पुटम् | प्रमाणानि |
|---|---|
| 27 | ध्यायन् कृते (वि. पु. ६-२-१७) |
| 33, 128 | ,, |
| 36 | ध्यायेन्नारायणं देवं ( ? ) |
| 208 | ध्रुवो धर्मश्च सोमश्च ( ? ) |
| | **न** |
| 551 | न कर्तृत्वं न कर्माणि (भ. गी. ५-१४) |
| 630 | न कर्मणा न प्रजया (तै. आ. १०-१०) |
| 226 | न कालेन विना ब्रह्मा (वि. पु. १-२२-३६) |
| 344 | नक्षत्रतारकैः सार्धं ( ? ) |
| 346 | नक्षत्राणामहं शशी (भ. गी. १०-२१) |
| 344 | नक्षत्रे चाक्षिमध्ये च (शाश्व. ४-२०) |
| 11 | न च पुनरावर्तते (छा. उ. ८-१५-१) |
| 217 | ,, |
| 118 | न चलति निजवर्णधर्मतो यः (वि. पु. ३-७-२०) |
| 203 | न जातो न जनिष्यते (ऋ. सं. १-८१-५) |
| 597 | न जायते म्रियते (कठ. उ. २-१८) |
| 198 | नञोऽस्त्यर्थानां वा (वा. १३६१) |
| 28 | न तत्र सूर्यो भाति (मुण्ड. उ. २-२-१०) |
| 479 | न तत्समश्चाभ्यधिकश्च (श्वेता. उ. ६-८) |
| 431 | न तस्य कश्चित्पतिरस्ति (श्वेता. उ. ६-९) |
| 303 | न तस्य प्रतिमास्ति (श्वेता. उ. ४-१९) |
| 431 | न तस्येशे कश्चन (महानारा. उ. १-१०) |
| 547 | ,, |
| 70 | न तु तद्द्वितीयमस्ति (बृह. उ. ४-३-२३) |
| 303 | न त्वत्समोऽस्ति (भ. गी. ११-४३) |
| 198, 479 | ,, |
| 586 | नद्यृतश्च (पा. सू. ५-४-१५३) |
| 587, 601 | |
| 293 | न ध्याख्या (पा. सू. ८-२-५७) |

55*

पुटम् प्रमाणानि

## ब

| पुटम् | प्रमाणानि |
|---|---|
| 251 | भाषायां शासियुधि (वा. २२४३) |
| 10 | भिद्यते हृदयग्रन्थिः (मुण्ड. उ. २-२-८) |
| 11, 38, 321 | ,, |
| 15 | भियः षुग्वा (उणा. १४५) |
| 304, 585 | ,, |
| 410 | भिषक्तमं त्वा (ऋ. सं. २-३३-४) |
| 206 | भीत्रार्थानां (पा. सू. १-४-२५) |
| 304 | भीमादयोऽपादाने (३-४-७४) |
| 585 | ,, |
| 10 | भीषास्माद्वातः पवते (तै. उ. २-८) |
| 281, 337, 544 | ,, |
| 502 | भुजङ्गरज्वा मत्स्यस्य (मत्स्य. पु. २-१९) |
| 67 | भूतात्मा चेन्द्रियात्मा च ( ? ) |
| 97 | ,, |
| 119 | भूतादिमिन्द्रियादिं च (वि. पु. १-२२-७०) |
| 401, 616 | ,, |
| 453 | भूतार्कचन्द्रयज्वानः (स्मृतिः) |
| 603 | ,, |
| 432 | भूतिर्भस्मनि सम्पदि (नाम. ३-३-६९) |
| 652 | भूतेन्द्रियान्तःकरण (वि. ध. ४१-५५) |
| 25 | भूतं क्ष्मादौ पिशाचादौ (मेदिनी) |
| 363 | ,, |
| 502 | भूमनिन्दाप्रशंसासु ( ? ) |
| 621 | भूयिष्ठां ते (ईश. उ. १८) |
| 415 | भूयोऽप्यमितविक्रान्तं (भार. शान्ति. ३५७-६२) |
| 233 | भूः पादौ द्यौः (हरिवंशे) |
| 599 | भृमृशीतृ (उणा. सू. ७) |
| 70 | भेदोऽयमज्ञाननिबन्धनः ( ? ) |
| 341 | भोगः सुखे (नाम. ३-३-२३) |

| पृष्ठम् | प्रमाणानि |
|---|---|
| 138 | यस्माद्विष्टमिदं सर्वं (वि. पु. ३-१-४५) |
| 205 | यस्मान्न च्युतपूर्वोऽहं (भार. शान्ति. ३४३) |
| 83 | यस्मिन् देवाश्च वेदाश्च ( ? ) |
| 33 | यस्मिन् न्यस्तमतिर्न याति (वि. पु. ६-८-५७) |
| 132 | ,, |
| 552 | यस्मिन् प्रतिष्ठितो भास्वान् (वि. पु. २-८-१०४) |
| 476 | यस्मिन् लोका निहिताः (मुण्ड. उ. २-२-२) |
| 405 | यस्मिन् शाखा यजुर्वेदे (भारतं) |
| 49 | यस्मिन् सर्वाणि भूतानि (ईश. उ. ७) |
| 70 | ,, |
| 217 | यस्य ज्ञानमयं तपः (मुण्ड. उ. १-१-९) |
| 126 | यस्य देवे परा भक्तिः (श्वेता. उ. ६-२३) |
| 311 | यस्य ब्रह्म च क्षत्रं च (कठ. उ. १-२-२५) |
| 181 | यस्य नाभिसमुद्भूत (वि. पु. ५-५-१४) |
| 488 | यस्य निःश्वसितं वेदाः (ऋ. सं. सा. भा. श्लो. २) |
| 285 | यस्य ब्रह्म च क्षत्रं च (कठ. उ. २-२५) |
| 569 | या निशा सर्वभूतानां (भ. गी. २-६९) |
| 616 | यानीन्द्रियाण्यशेषाणि (वि. पु. १-२२-७३) |
| 522 | या वै सा मूर्तिः (ऐ. उ. ३-२) |
| 346 | युक्ते क्षमं शक्ते (नाम. ३-३-१४२) |
| 407 | युगान्तेऽन्तर्हितान् वेदान् (पुराणं) ? |
| 421 | युगान्ते प्रसुप्तः (भारतं) |
| 8 | युद्धे चाप्यपलायनं (भ. गी. १८-४३) |
| 287 | ये के चात्महनः (ईश. उ. ३) |
| 60 | ये च मूढा दुरात्मानः (भविष्यत्पुराणं) |
| 628 | येन केन च यजेत (श्रुतिः) |
| 28 | येन सूर्यस्तपति तेजसेद्धः (तै. ब्रा. ३-१२-९) |
| 360, 450 | ,, |
| 414 | येनाङ्गविकारः (पा. सू. २-३-२०) |

पुटम् प्रमाणानि

| पृष्ठम् | प्रमाणानि |
|---|---|
| 215 | रुद्रो रौतीति (निरुक्तं. १०-७-५) |
| 226 | रुद्रः कालोऽन्तकाद्याश्च (वि. पु. १-२२-३१ |
| 215 | रुर्दुःखं दुःखहेतुं वा ( ? ) |
| 37 | रूपमारोग्यमायुश्च ( ? ) |
| 214 | रोदेर्णिलुक् च (उणा. सू. १७९) |

## ल

| | |
|---|---|
| 12 | लक्षणहेत्वोः क्रियायाः (पा. सू. ३-२-१२६) |
| 313 | लक्ष्मीसरस्वती (व्याडिः ?) |
| 579 | ,, |
| 272 | लटः शतृशानचौ (पा. सू. ३-२-१२४) |
| 416 | लुक् तद्धितलुकि (पा. सू. १-२-४९) |
| 34 | लोकत्रयाधिपतिं ( ? ) |
| 622 | ,, |
| 501 | लोचनं नयनं नेत्रं (नाम. २-६-९३) |

## व

| | |
|---|---|
| 287 | वचिस्वपि (पा. सू. ६-१-१५) |
| 357 | वत्सः पुत्रादिवर्षयोः (मेदिनी) |
| 356 | वत्सांसाभ्यां कामबले (पा. सू. ५-२-९८) |
| 310 | वनानि विष्णुः (वि. पु. २-१२-३८) |
| 393 | वरुणस्तरुभेदेषु (कोशः ? ) |
| 525 | वर्णाश्रमाचारवता (वि. पु. ३-८-९) |
| 164 | वर्तमानसामीप्ये (पा. सू. ३-३-१३१) |
| 25 | वर्तमाने पृषद्बृहन्महत् (उणा. सू. २४१) |
| 256 | ,, |
| 188 | वर्तमाने लट् (पा. सू. ३-२-१२३) |
| 639 | वश अयत्ततायां स्यात् (कोशः ? ) |
| 486 | वशः शक्तिप्रभुत्वयोः (अभिधानकोशः) |

| पृष्ठम् | प्रमाणानि |
| --- | --- |
| 203 | विश्वाक्षं (तै. आ. १०-१३) |
| 366 | विश्वाधिकः (महाना. १०-३) |
| 430 | विश्वाधिको रुद्रः (श्वेता. उ. ४-१२) |
| 520 | विश्वं शतं सहस्रं (भारतं) |
| 137 | विषेः किच्च (उणा. सू. ३१९) |
| 493 | विष्टभ्याहमिदं (भ. गी. १०-४२) |
| 195 | विष्णुकर्णोद्भवं चापि (भारतं) |
| 138 | विष्णुर्गोपाः परमं (ऋ. सं. ३-५५-१०) |
| 225 | विष्णुर्मन्वादयः (वि. पु. २२-३२) |
| 345 | विष्णुर्हृदयं (तै. आ. २-१९) |
| 551 | ,, |
| 271 | विष्णुर्विक्रमणात् (भार. उद्यो. ७०-१३) |
| 133 | विष्णुः शक्तेषु युष्मासु (वि. पु. १-१७-३३) |
| 3 | विष्णोरन्यं तु पश्यन्ति (भविष्यपुराणं) |
| 59 | ,, |
| 138 | विष्णोः कर्माणि पश्यत (ऋ. सं. १-२२-१९) |
| 71 | विस्तारः सर्वभूतस्य (वि. पु. १७-८४) |
| 113 | ,, |
| 557 | विहायसोऽपि नाकोऽपि (नाम. व्योमवर्गः) |
| 395 | वृक्ष इव स्तब्ध. (याज्ञि. उ. १२) |
| 122 | वृथा तप्यं च तप्तं च (भारतं) |
| 191 | वृद्धस्य च (पा. सू. ५-३-६०) |
| 288 | वृषो हि भगवान् धर्मः (भार. शान्ति. ३४३-५८) |
| 244 | वृतॄवदिहनि (उणा. सू. ३४२) |
| 603 | वेदपादो यूपदंष्ट्रः (हरिवंशः) |
| 404 | वेदमेकं चतुर्भेदं (वि. पु. ३-२-५८) |
| 406 | वेदव्यासा व्यतीता वै (वि. पु. ३-३-१०) |
| 488 | वेदशब्देभ्य एवादौ (मनु. १-२१) |
| 22 | वेदस्तत्त्वं तपो ब्रह्म (नाम. ३-३-११४) |

| पुटम् | प्रमाणानि |
|---|---|
| 222 | शब्दमूर्तिधरस्यैतत् (वि. पु. १-२२-८५) |
| 33 | शमायालं जलं वह्नेः (वि. ध. ६६-७४) |
| 572 | शमित्यष्टाभ्यो घिनुण् (पा. सू. ३-२-१४१) |
| 415 | शयने नागभोगाढये (भार. शान्ति. ३५७-६३) |
| 415 | शयवासवासिष्वकालात् (पा. सू. ६-३-१८) |
| 416 | ,, |
| 488 | शरीरपुरुषश्छन्दःपुरुषः (ऐ. आ. ३-२-९) |
| 318 | शमो दमस्तपः (भ. गी. १८-४२) |
| 34 | शाठ्येनापि नमस्कारः ( ? ) |
| 308 | शान्तो दान्तः (सुबाल. उ. ९-१४, बृह. उ. ४-४-२३) |
| 419 | ,, |
| 115 | शारीरं मानसं वाग्जं (वि. पु. १-१९-८) |
| 184 | शाश्वतꣳ शिवमच्युतं (तै. आ. १०-१३) |
| 205 | ,, |
| 268 | शास इदङ्हलोः (पा. सू. ६-४-३४) |
| 640 | शिरस्नातश्च कुर्वीत ( ? ) |
| 421 | शिवं पुण्यं च पावनं (कोशः ? ) |
| 455 | ,, |
| 345 | शिंशुमाराकृति (वि. पु. २-९-४) |
| 484 | शुक्रं तेजस्स्वधा वारि (निरुक्तं १-१२) |
| 649 | शुचिश्रवाः शिपिविष्टः (वि. ध. ४१-१६) |
| 91 | शुचिषद्विष्णुरब्जाक्षः (वि. ध. ४१-१५) |
| 382 | शुद्धतत्त्वात्मविज्ञानं (व्यासस्मृतिः ) |
| 523 | शुद्धमपापविद्धं (ईशो ८) |
| 479 | शून्यं बिन्दौ च निर्जने (नामाभिधानम्) |
| 182 | शृस्वृस्निहि (उणा. सू. १०) |
| 208, 274, 296, 476 | ,, |
| 475 | शॄदृभसोऽदिः (उणा. सू. १२७) |
| 303 | शेषाद्विभाषा (पा. सू. ५-४-१५४) |

| पुटम् | प्रमाणानि |
|---|---|
| 379 | शेषाद्विभाषा (पा. सू. ५-४-१५४) |
| 278 | शेषे यजुश्शब्दः (जै. सू. २-१-३६) |
| 275 | शैत्याच्छयनयोगाच्च ( ? ) |
| 276 | ,, |
| 523 | शोकान्तरम् (बृह. उ. ४-३-२१) |
| 583 | शोभासम्पत्तिपद्मासु ( ? ) |
| 547 | शौचसन्तोष (यो. सू. २-३२) |
| 318 | शौर्यं तेजो धृतिर्दाक्ष्यं (भ. गी. १८-४३) |
| 450 | शं नो विष्णुरुरुक्रमः (तै. उ. १-१) |
| 603 | श्येनचितं चिन्वीत (तै. सं. ५-४-११) |
| 120 | श्रद्धया देयम् (तै. उ. १-११) |
| 495 | श्रवणायापि बहुभिर्यो न लभ्यः (कठ. उ. १-२-७) |
| 360 | ,, |
| 576 | श्रवणं कीर्तनं (भागवतं ७-५-२३) |
| 632 | श्रावयेच्चतुरो वर्णान् (भारतं ) |
| 649 | श्रियः पतिः (वि. ध. ४१-१९) |
| 425 | श्रीर्लक्ष्मीः सरस्वती (अभिधानकोशः) |
| 423 | श्रीर्वेषरचना शोभा (विश्व ? ) |
| 616 | श्रीवत्ससंस्थान (वि. पु. १-२२-६९) |
| 443 | श्रुतिस्मृती ममैवाज्ञे (भगवद्वचनम् ? ) |
| 567 | ,, |
| 112 | श्रूयतां धर्मसर्वस्वं ( ? ) |
| 609 | श्रेयान् द्रव्यमयाद्यज्ञात् (भ. गी. ४-३३) |
| 193 | श्रेष्ठ१ सर्वधातमम् (तै. आ. १-११-८) |
| 192 | श्रेष्ठश्च (ब्र. सू. २-४-८) |
| 653 | श्लोकं वाप्यनुगृह्णाति ( ? ) |

ष

| पुटम् | प्रमाणानि |
|---|---|
| 596 | षड्भावविकारा भवन्तीति (निरुक्तं १-१-२) |
| 151 | षढोः (पा. सू. ८-२-४१) |

| पुटम् | प्रमाणानि |
|---|---|
| 229 | सप्तम्यां जनेर्डः (पा. सू. ३-२-९७) |
| 334, 407, 486 | ,, |
| 587 | सप्तम्युपमानपूर्वपदस्य (वा. १३५८) |
| 522 | सप्ताश्वरूपाश्छन्दांसि (मत्स्य. पु. १२५-४६) |
| 217 | स प्रतापः प्रभावश्च (नाम. २-८-२०) |
| 446 | स प्राणमसृजत (प्रश्न. उ. ६-४) |
| 355 | स बभूवोपजीविनाम् (रघुवं. १-१६) |
| 434 | सब्रह्मकाः सरुद्राश्च (भार. मोक्षधर्मः ? ) |
| 164 | स ब्रह्म स शिवः (तै. आ. १०-१३) |
| 200 | स भगवः कस्मिन् (छा. उ. ७-२४-१) |
| 293, 533, 586 | ,, |
| 211 | सम आत्मेति विद्यात् (कौषी. ३-९) |
| 305 | समत्वमाराधनमच्युतस्य (वि. पु. १-११-९०) |
| 436 | स मनः सर्वभूतानां (भारतं ? ) |
| 219 | समन्ततस्तु परितः (नाम. ३-४-१४) |
| 367 | समर्थः पदविधिः (पा. सू. २-१-१) |
| 83 | स मानसीन आत्मा (तै. आ. ३-११) |
| 601 | समानस्य छन्दसि (पा. सू. ६-३-८४) |
| 185 | समावृषभो लोहिताक्षः (तै. आ. ४-४२) |
| 446 | स मुखतस्त्रिवृतं (तै. सं. ७-१-१) |
| 114 | समुत्सृज्यासुरं भावं (वि. पु. १-१७-८५) |
| 314 | समं सर्वेषु भूतेषु (भ. गी. १३-२७) |
| 337 | सम्पूर्वाच्चित (उणा. सू. ३५२) |
| 376 | सम्भक्ष्य सर्वभूतानि ( ? ) |
| 326 | स यत्पूर्वोऽस्मात् (बृह. उ. १-४-१) |
| 96 | स यत्र प्रस्वपिति (बृह. उ. ४-३-९) |
| 595 | ,, |
| 611 | स विश्वकृत् (श्वेता. उ. ६-१६) |
| 292 | सरसामस्मि सागरः (भ. गी. १०-२४) |

पुटम् प्रमाणानि

| पुटम् | प्रमाणानि |
|---|---|
| 613 | सुवर्णज्योतीः (तै. उ. ३-१०-६) |
| 479 | सुविनिर्दुर्भ्यः (पा. सू. ८-३-८८) |
| 386 | सुषमादिषु च (पा. सू. ८-३-९८) |
| 96 | सुषुप्तिकाले सकले विलीने (कैव. उ. १३) |
| 594 | ,, |
| 353 | सुहृद्दुर्हृदौ मित्रामित्रयोः (पा. सू. ५-४-१५०) |
| 318 | सूतानामश्वसारथ्यं (मनु. १०-४७) |
| 600 | सूते सर्वं जनयति (श्रुतिः ? ) |
| 180 | सूर्यरश्मिर्हरिकेशः (तै. सं. ४-६-३) |
| 180 | सूर्याचन्द्रमसोः (भार. शान्ति. ३५२-१) |
| 345 | सूर्याचन्द्रमसौ (वि. पु. २-९-३) |
| 46 | सूर्यो यथा सर्वलोकस्य (कठ. उ. २-२-११) |
| 185 | सूर्यो विपश्चिन्मनसा पुनातु (तै. आ. ४-४२) |
| 614 | सृजिदृशोः (पा. सू. ३-१-५८) |
| 55 | सृष्टिस्थित्यन्तकारिणी (वि. पु. १-२-६६) |
| 371 | ,, |
| 41 | सेयं देवतैक्षत (छा. उ. ६-२-३) |
| 127 | सेयं वदनवल्मीकवासिनी ( ? ) |
| 196 | सैनमीश्वरा (तै. सं. २-१-१) |
| 345 | सैष भ्रमन् भ्रामयति (वि. पु. २-९-२) |
| 88 | सोऽकामयत (तै. उ. २-६) |
| 537 | सोऽध्वनः पारमाप्नोति (कठ. उ. १-३-९) |
| 435 | सोऽनिरुद्धः स ईशानः (भारतं) |
| 330 | सोऽभिध्याय शरीरात् (मनु. १-८) |
| 115 | सोऽहं न पापमिच्छामि (वि. पु. १-१९-७) |
| 307 | संज्ञायां भृतॄ (पा. सू. ३-२-४६) |
| 445 | ,, |
| 202 | संवत्सरो वै प्रजापतिः (प्रश्न. उ. १-९) |
| 530 | संसारतापानखिलान् (वि. पु. ६-७-६२) |

